श्रीः

संस्कृतविद्यापीठग्रन्थमालायाः सप्तमं पुष्पम्

अध्वरमीमांसा-

# कुतूहलवृत्तिः




प्रस्तावनालेखक

माननीय श्री भक्तदर्शनः

भारत शिक्षा-राज्यमन्त्री

प्रधानसम्पादकः

डॉ० श्रीमण्डनमिश्रः

निदेशकः

श्री लालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य

सम्पादक

विद्यासागरः, शास्त्ररत्नाकरः, विद्यावाचस्पतिः

श्री पट्टाभिरामशास्त्री

साहित्यविभागाध्यक्षः

वा० सं० वि० विद्यालयः, वाराणसी

श्री लालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्

दिल्ली

१९६९-७०

श्रीः

संस्कृतविद्यापीठग्रन्थमालायाः सप्तमं पुष्पम्

# अध्वरमीमांसा-

# कुतूहलवृत्तिः




प्रस्तावनालेखक

ननीय श्री भक्तदर्शनः

भारत शिक्षा-राज्यमन्त्री

प्रधानसम्पादकः

डॉ० श्रीमण्डनमिश्रः

निदेशकः

श्री लालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य

सम्पादक.

विद्यासागरः, शास्त्ररत्नाकरः, विद्यावाचस्पतिः

श्री पट्टाभिरामशास्त्री

साहित्यविभागाध्यक्षः

वा० सं० वि० विद्यालयः, वाराणसी

श्री लबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्

दिल्ली

१९६९-७०

प्रकाशक.
डॉ० मण्डनमिश्रः
निदेशकः
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्
दिल्ली ।

प्रथमसंस्करणम् ११०० प्रतयः
मूल्यम् ३०-०० रू० ( त्रिंशन्मुद्राः )

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य तत्वावधाने सम्पादितम् ।

मुद्रक —
श्री घनश्याम उपाध्यायः
व्यवस्थापकः
वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालयः ।

पं० मदनमोहन मालवीयजी को प्राप्त हुआ था, क्योंकि उन्होंने काशी हिन्दू विश्वविद्यालय में ख्यातनामा विद्वान् श्रीचिन्न स्वामी शास्त्री को नियुक्त किया था। उन विद्वद्वर श्री चिन्न-स्वामी शास्त्री ने मीमासा परम्परा के जो बीज बोये थे, उनसे अनेक सुन्दर पुष्पों की सृष्टि हो चुकी है, और मुझे बडी प्रसन्नता है कि पं० श्रीपट्टाभिराम शास्त्री उन्हीं सुगन्धिपूर्ण पुष्पों में से एक हैं। "मीमासा" सरीखा विषय सामान्यतया विद्यार्थियों द्वारा नहीं अपनाया जाता है। क्योंकि वह एक तो जटिल माना जाता है तथा दूसरे अच्छे अध्यापकों एव विश्वसनीय पाठ्य-पुस्तकों का भी अभाव है। लेकिन अब यह कमी पं० श्रीपट्टाभिराम शास्त्री सरीखे सुप्रसिद्ध विद्वान् के प्रयत्नों से बहुत कुछ दूर हो जायेगी। मुझे पूरा विश्वास है कि इस दिशा में यह ग्रन्थ अत्यधिक लाभ-दायक सिद्ध होगा और विद्वत्समाज द्वारा इसका स्वागत किया जायेगा।

मैं यह अंकित करते हुये भी क्षमायोग्य गर्व का अनुभव कर रहा हूँ कि यह पुस्तक श्री लालबहादुर शास्त्रि राष्ट्रिय-सस्कृत-विद्यापीठ के तत्त्वावधान में प्रकाशित हो रही है और वह विद्यापीठ हमारे केन्द्रीय शिक्षामन्त्रालय ही का एक अग है। यह विद्यापीठ इस विषय में अभिरुचि ले रहा है और इस प्रकार की लाभदायक विद्वत्तापूर्ण सामग्री प्रकाशन कर रहा है, यह सब के लिए हर्ष और सन्तोष की बात है।

अत इस महत्वपूर्ण ग्रन्थ के प्रकाशन के अवसर पर मैं अपनी ओर से तथा अपने मन्त्रालय की ओर से हार्दिक शुभ कामनायें अंकित करता हूँ।

शिक्षामन्त्रालय
दिल्ली २६-११-७०

भक्तदर्शन
भारत शिक्षा राज्य-मन्त्री

* श्रीः *

# किञ्चिद्विवेदनम्

अध्वरमीमांसाकुतूहलवृत्तेरस्य द्वितीयो भागश्चतुर्थाध्यायादष्टमाध्यायान्तो विदुषां सम्मुखमानीयते। अद्य यावदप्रकाशितोऽयं ग्रन्थो मीमांसकानामन्येषाञ्च मीमांसाया प्रविविक्षूणां मोदाय कल्पेत इति विश्वसिमि। श्रीवासुदेवदीक्षितविदुषो ग्रन्थकारस्य वैशिष्ट्यं शैलीञ्च प्रथमभागस्य भूमिकायां सामान्यतः किञ्चिन्न्यरूपयम्। विशेषतश्चात्र तन्निरूपणमावश्यकम्, तथापि शीघ्रं ग्रन्थप्रकाशननिर्बन्धेन निर्बद्धोऽत्राधिकं निरूपयितुमनभिलषन् तृतीयभागस्य भूमिकायां सविशेषं तन्निरूपणाय व्यवसितमतिरस्मि। तदिदं मदीयमागो विद्वत्तल्लजा मर्षयेयुरिति सम्भावयामि। तृतीयभागे मीमांसाया उत्पत्तिः, तद्विकासः, तदवनतिश्चेति विषयं, ग्रन्थस्य ग्रन्थकर्तुश्च वैशिष्ट्यं, ग्रन्थगतकठिनस्थलविवेचनं, दीक्षितोदाहृतश्रौतस्मार्तवाक्यानामाकरसूचीञ्च सन्निवेश्य तं भागं प्रकाशयितुं वाञ्छामि। मदीयमिममुद्यमं सफलयितुं विद्वदपश्चिमानामाशिषमभ्यर्थये।

अस्य भागस्य संशोधनं पञ्चमातृका अवलम्ब्य निरवर्तयम्—मदीयैका मातृका तालपत्रमयी, मत्सुहृदा श्रीमदप्पय्यदीक्षितेन्द्राणां वंशजेन काशीहिन्दूविश्वविद्यालय संस्कृतमहाविद्यालयाध्यक्षेण प० श्री रामनाथदीक्षितेन कस्याश्चन मातृकातः प्रतिलिपीकृता मातृका द्वितीया, मदध्ययनावसरे पूज्यपादानां मातृकातस्सङ्गृहीता तृतीया, चेन्नपुरीराजकीयमातृकापुस्तकालयतस्सङ्गृहीता चतुर्थी, चेन्नपुरीस्थाड्यारपुस्तकालयस्थमातृका पञ्चमी, आसां मातृकाणां क्रमशः क, ख, ग, घ, ङ, इति सङ्केताक्षराणि सन्न्यवेशयम्। तत्र ग, घ, ङ, मातृकास्वशुद्धिबाहुल्यं ग्रन्थपातश्चोपलभ्येते। लेखकप्रमादजनितोऽयं दोषः। मूलमातृकायाः पठनपाटवाभावनिमित्तोऽयं प्रमादस्स्यात्। तालपत्रेषु प्राचीनाः प्रायश्शुद्धमेव लिखन्ति किन्तु यदि मध्ये काचन त्रुटिरापतेत् तर्हि पङ्क्तीनां मध्य एव चिह्नं विन्यस्य त्रुटिं पूरयन्ति। अथवा तालपत्रस्य पार्श्वभागे पङ्क्तेस्संख्यामुल्लिख्य त्रुटिं प्रदर्शयन्ति। क्वचिच्च विनैव चिह्नसंख्योल्लेखेन क्वापि पङ्क्तीस्सन्निवेशयन्ति। तदिदं सर्वं सावधानं पर्यवेक्ष्य प्रतिलिपिः कर्तव्या भवति। एकैव मातृका द्वाभ्यां त्रिभिर्वा लिख्यते। तत्राक्षरवैलक्षण्यपरिचयोऽपि नितान्तमावश्यकः। शृङ्खलाबद्धानि क्वचनाक्षराणि पदानि च भवेयुः, क्वचिच्चाक्षराणां पदानाञ्च नविभागं लेखनं भवेत्। तत्र शृङ्खलाबद्धानां तेषां वाचनं दुष्करम्। तत्रैवाशुद्धीनां ग्रन्थपातानाञ्चावसरः। पूज्यपादा मदध्ययनावसरे मातृकावाचनकलामपि ग्राहयामासुरिति तानहमिदानीं स्मरामि। तेषां शिक्षयैव सर्वमिदं समीक्ष्य यथामति भागमिमं समपादयम्।

इत पञ्चविंशतिवर्षेभ्यः पूर्वमेव पूज्यपादैरहमादिष्टोऽस्य ग्रन्थस्य सम्पादनाय, परं तेषा जीवदवस्थाया सम्पादनमस्य नाभवदिति नितरा खिद्ये। गभीरेषु श्रौतपदार्थेषु ग्रन्थकारेण तत्र तत्र सन्निवेशितेषु समुत्पन्नानां सशयानामपाकरणाय पूज्यपादाना सन्निधानमपेक्षितमासीत् किन्तु तादृशेषु स्थलेषु तानेव ध्यायन् कथमपि विषयान्निर्णीय ग्रन्थमिमं प्राकाशयम्। अत्रावश्य मानवमात्रसुलभा दोषा भवेयु । तानिमान् मदीयानित्यवगत्य मा मर्षयेयुस्तत्रभवन्तो विद्वन्मणय इति सम्भावयामि।

अस्य द्वितीयभागस्य मत्प्रार्थनामङ्गीकृत्य भारतसर्वकारस्य शिक्षाराज्यमन्त्रिणः सहृदयास्संस्कृतानुरागिणः श्रीभक्तदर्शनमहाभागा राजकीयकार्येषु सतत व्यापृता अपि सदयं प्रस्तावना विरचय्य मामन्वगृह्णन् ग्रन्थस्य गौरवञ्च समेधितवन्त इति तेषामह सर्वथाऽधमर्णोऽस्मि। अस्य ग्रन्थस्य सम्पादने सत्स्वपि बहुषु प्रेरकेषु विशेषत डा० वि० राघवन् महोदयाः प्राथम्यमावहन्ति। अडयारपुस्तकालयतो मातृकाप्रदापनपुरस्सर मामत्यन्त प्रोत्साहितवन्त इति तेषामुपकार नाह विस्मर्तुं शक्नोमि। अतस्तान् शतशो धन्यवादैः प्रपूरयामि। अत्युत्तमस्यास्य ग्रन्थस्य राष्ट्रियसंस्कृत-संस्थानान्तर्गतदिल्लीविद्यापीठद्वारा सम्पद्यमानमिद प्रकाशन न केवलं विद्यापीठस्य गौरवं पुष्णाति, किन्तु भारतशिक्षामन्त्रालयस्य विशेषतस्तदधिकारिणा श्रीभक्तदर्शनप्रभृतीनां महानुभावाना प्राचीनग्रन्थसमुद्धरणबद्धादरताञ्चाभिव्यनक्ति। अतस्तेभ्यस्साधुवादान् वितरामि। एव चेन्नपुरी राजकीयमातृकापुस्तकालयाध्यक्षाः श्री पार्थसारथिमहाभागाः पुस्तकालयमातृका प्रतिलिपीकृत्य मह्य प्रदत्तवन्त इति तानपि धन्यवादैस्सभाजयामि। सूचीपत्रादिनिर्माणे सशोधने च सुमहदुपकृतवन्तौ श्रीशिवजी उपाध्यायं श्रीवसन्तकुमारपण्डाभिधञ्च मदन्तेवासिनावाशिषा पूरयामि। अन्ते च भागस्यास्य यथासमयं प्रकाशने तदनुकूलसामग्रीसकलने च दत्तावधानाय संस्कृतविश्वविद्यालयमुद्रणालयव्यवस्थापकाय श्री घनश्यामोपाध्यायाय मदाशिषस्समर्पयन् विरमामि।

संस्कृतविश्वविद्यालय
वाराणसी
२६-११-७०

इति विदुषामाश्रव
**श्री पट्टाभिरामशास्त्री**

# अध्वरमीमांसा कुतूहलवृत्तिद्वितीयभागगतानाम्

# अधिकरणानां सूची

## चतुर्थस्य प्रथमः पादः


| | | | |
|---|---|---|---|
| १ प्रतिज्ञाधिकरणम् | ६११–६१३ | १२ पदकर्मन्यायाधि० | ६३१–६३२ |
| २ लिप्साधि० | ६१३–६१४ | १३ तुषोपवापाधि० | ६३३–६३४ |
| ३ गोदोहनाधि० | ६१४ | १४ लोहितशकृन्निरसनाधि० | ६३४–६३५ |
| ४ द्रव्यार्जनोपायनियमाधि० | ६१५–६१७ | १५ पुरोडाशस्य स्विष्टकृदप्रयुक्तताधि० | ६३५–६३७ |
| ५ प्रजापतिव्रताधि० | ६१७–६२० | १६ प्रयाजशेषाभिघारणाधि० | ६३७–६४१ |
| ६ स्फ्यकपालाधि० | ६२०–६२२ | १७ समानयनस्याज्यधर्मप्रयोजकताधि० | ६४१–६४४ |
| ७ पश्वेकत्वाधि० | ६२२–६२४ | १८ औपभृतजौहवयोर्व्यवस्थाधि० | ६४४-६४६ |
| ८ पशुगतलिङ्गविवक्षाधि० | ६२५ | १९ अष्टसङ्ख्यानियमाधि० | ६४६–६४९ |
| ९ आश्रय्यधि० | ६२६–६२७ | | |
| १० प्रयुक्तिप्रतिज्ञाधि० | ६२८ | | |
| ११ वाजिनाधि० | ६२८–६३१ | | |


## चतुर्थस्य द्वितीयः पादः


| | | | |
|---|---|---|---|
| १ स्वरोश्छेदनाद्यप्रयोजकताधि० | ६५०–६५२ | ८ अवभृथगमनस्य प्रतिपत्तिताधि० | ६६४–६६६ |
| २ शाखाहरणाधि० | ६५३–६५४ | ९ कर्तृदेशकालादिनियमाधि० | ६६६–६६८ |
| ३ छेदनादीना शाखाप्रयुक्तत्वाधि० | ६५५–६५६ | १० द्रव्यगुणाना नियमार्थताधि० | ६६८–६६९ |
| ४ शाखाप्रहरणस्य प्रतिपत्तिताधि० | ६५६–६५८ | ११ अवघातादीना नियमार्थताधि० | ६६७–६६७ |
| ५ निनयनप्रतिपत्त्यधि० | ६५९–६६० | १२ यागहोमलक्षणाधि० | ६६९–६७२ |
| ६ दण्डप्रदानस्यार्थकर्मताधि० | ६६०–६६३ | १३ आतिथ्याबर्हिरधि० | ६७२–६७५ |
| ७ कृष्णविषाणाप्रासनस्य प्रतिपत्तिताधि० | ६६३–६६४ | | |


## चतुर्थस्य तृतीयः पादः


| | | | |
|---|---|---|---|
| १ पर्णमय्यधि० | ६७६–६७८ | २ वार्हद्गिराधि० | [illegible] |

३ सयोगपृथक्त्वाधि० ६८१–६८२
४ पयोव्रताधि० ६८२–६८४
५ विश्वजित पुरुषार्थत्वाधि० ६८५–६८६
६ विश्वजिदादीनामेकफलत्र त्वाधि० ६८६–६८७
७ विश्वजिदधि० ६८७–६८८
८ रात्रिसत्राधि० ६८८–६९०
९ काम्यकर्मणा श्रुतफलार्थ त्वाधि० ६९०–६९२
१० सार्वकाम्याधि० ६९२–६९४
११ योगसिद्ध्यधि० ६९४–६९५
१२ पश्वादीनामामुष्मिकैहिक-फलत्वाधि० ६९५–६९६
१३ बृहस्पतिसवाधि० ६९६–६९८
१४ वैमृधाधिकरणम् ६९८–७०१
१५ अनूयाजानामाग्निमारुतो-त्तरकालताधि० ७०१–७०२
१६ सोमस्य दर्शपूर्णमासोत्तर-कालानुष्ठानाधि० ७०२–७०३
१७ जातेष्टेर्नैमित्तिकत्वाधि० ७०३–७०५
१८ जातेष्टेर्जातकर्मानन्तर्याधि० ७०५–७०६
१९ जातेष्टेराशौचापगमोर्ध्वमनु-ष्ठानाधि० ७०६–७०७
२० बृहस्पतिसवादीना स्व-कालानुष्ठेयताधि० ७०७–७०९

## चतुर्थस्य चतुर्थः पादः

१ विदेवनादीना राजसूया-ङ्गत्वाधि० ७१०–७११
२ विदेवनादीनामिष्टिपशु-सोमार्थताधि० ७१२–७१३
३ सौम्ययागस्य प्राधान्य निरूपणाधि० ७१३–७१५
४ आमनहोमाधि० ७१५–७१६
५ दधिग्रहाधि० ७१६–७१८
६ वैश्वानरेष्टेर्नैमित्तिकत्वा० ७१९–७२०
७ षट्चित्यधिकरणम् ७२०–७२२
८ पिण्डपितृयज्ञाधि० ७२२–७२५
९ त्रिवृद्रशनाया यूपाङ्ग-त्वाधि० ७२५–७२७
१० स्वरो पाश्वङ्गताधि० ७२७–७२८
११ आज्यभागादीनामङ्गत्वव्य-वस्थापनाधि० ७२९–७३३
१२ दीक्षणीयदीनामङ्गत्वाधि० ७३४–७३६

## पञ्चमस्य प्रथमः पादः

१ श्रुतिक्रमाधि० ७३७–७३९
२ अर्थक्रमाधि० ७३९
३ प्रयाजानुमन्त्रणमन्त्रैष्वनि-यमाधि० ७३९–७४०
४ पाठक्रमाधि० ७४०–७४२
५ प्रवृत्तिक्रमाधि० ७४२–७४५
६ स्थानक्रमाधि० ७४५
७ मुख्यक्रमाधि० ७४६–७४७
८ पाठक्रमबलीयस्त्वाधि० ७४७–७४८
९ मन्त्रक्रमबलीयस्त्वाधि० ७४८–७५०
१० प्रयोगवचनाच्चोदकस्य बलवत्त्वाधि० ७५०–७५२
११ विकृतीष्टीना सद्यस्काल-त्वाधि० ७५२–७५३

१२ तदाद्युत्कर्षतदन्तापकर्षाधि० ७५४–७५५
१३ प्रोक्षणादीना सौमिकपूर्व-
भावितायि० ७५५–७५७
१४ ज्योतिष्टोमे यूपच्छेदनमात्रा-
पकर्षाधि० ७५७–७५८
१५ सोमे दक्षिणाग्निकहोमानपक-
र्षाधि० ७५८–७५९
१६ दर्शपूर्णमासयो पुरोडाशाभि-
वासनान्तस्यानपकर्षाधि० ७५९–७६०
१७ सान्तपनीयाधि० ७६०–७६२
१८ ज्योतिष्टोमे षोडश्युत्क-
र्षाधि० ७६२–७६३

## पञ्चमस्य द्वितीयः पादः

१ पदार्थानुसमयाधि० ७६४–७६५
२ पदार्थानुगमयापवादाधि० ७६६
३ मुष्टिकपालाद्यनुसमयाधि० ७६६–७६८
४ द्रव्यवदानानुसमयाधि० ७६८-७६९
५ अञ्जनादीना पशुगणे काण्डानु
समयाधि० ७६९-७७१
६ प्राजापत्यपशुपु दैवताद्यवदानेपु
पदार्थानुसमयाधि० ७७१-७७२
७ नानाबीजेष्ट्यधि० ७७३-७७४
८ पाशुकप्रयाजानूयाजयो
पात्रभेदाधि० ७७५-७७६
९ नक्षत्रेष्टिपूपहोमाना नारिष्ठोत्तर-
भाविताधि० ७७६-७७८
१० विदेवनादीनामभिषेकपूर्व-
भावित्वाधि० ७७८-७७९
११ सावित्रहोमाना दीक्षणीया-
पूर्वभावित्वाधि० ७७९-७८०
१२ यजमानसस्काराणा रुक्मप्रति-
मोकपूर्वभाविताधि० ७८०-७८१

## पञ्चमस्य तृतीयः पादः

१ प्रयाजेष्वेकादशसख्यायास्सर्व-
सम्पाद्यत्वाधि० ७८२-७८४
२ स्वस्थानविवृध्यधि० ७८४-७८५
३ धाय्यानामन्तरालनिवेशाधि० ७८५-७८६
४ आगन्तूनामन्ते निवेशाधि० ७८६-७८७
५ त्रिवृद्धस्तोमकक्लृपु वहिष्पवमाने
आगन्तूना पर्यासोत्तरकाल-
ताधि० ७८७-७८८
६ आगन्तूना साम्ना गायत्र्यादिपु
निवेशाधि० ७८९
७ ग्रहेष्टकाधि० ७८९-७९०
८ अनारभ्येष्टकाना मध्यमचिति-
निवेशाधि० ७९०-७९२
९ अनारभ्येष्टकाना लोकम्पृणात
पूर्वमुपधानाधि० ७९२
१० यजमानहविरूर्ध्वमग्निहोत्रा-
नुष्ठानाधि० ७९२-७९४
११ अग्निचिद्व्रताधि० ७९४-७९६
१२ दीक्षानिमित्तप्रतिपादनाधि० ७९६ ७९८
१३ काम्यानामनियमेनानुष्ठा-
नाधि० ७९८-७९९
१४ सोमानामग्निष्टोम
पूर्वकत्वाधि० ८००-८०२

१५ विकृतिसोमानामग्निष्टोमोत्तर कालकत्वाधि० ८०२-८०४
१६ एकानेकस्तोमकानामग्निष्टोम-पूर्वकत्वाधि० ८०४-८०५

## पञ्चमस्य चतुर्थः पादः

१ पाठक्रमापेक्षया श्रुत्यर्थक्रम-योर्वलीयस्त्वाधि० ८०६
२ मुख्यक्रमप्राबल्याधि० ८०७-८०६
३ इष्टिसोमयोः पौर्वापर्य निर्णयाधि० ८०६-८१२
४ ब्राह्मणस्याग्नीषोमीयहवि-रुत्कर्षाधि० ८१३-८१७
५ अग्नीषोमीयपुरोडाशोत्क-र्षताधि० ८१७-८१८
६ विकृतीना सद्यस्कालताधि० ८१८-८२१
७ सान्नाय्यविकाराणा सोमोर्ध्वं-कालत्वाधि० ८२१-८२२
८ विकृतिसोमाना दर्शपूर्णमा-सोत्तरकालत्वाधि० ८२२-८२३

## षष्ठस्य प्रथमः पादः

१ स्वर्गकामाधि० ८२४-८२८
२ तिर्यगधि० ८२८-८३६
३ स्त्रीणामप्यधिकाराधि० ८३६-८४०
४ स्त्रीपुंसयोर्व्यासक्ताधि० ८४०-८४१
तृतीयाधिकरणशेषः ८४२-८४३
५ आधानस्य दम्पत्योस्सह प्रयोक्तृत्वाधि० ८४४-८४६
६ पत्न्या यावदुक्तकर्मस्वधि काराधि० ८४६-८४६
७ अपशूद्राधि० ८४६-८५४
८ अद्रव्यस्यापि क्रत्वधिकाराधि० ८५४-८५५
६ अङ्गहीनानामपि क्रत्वधि काराधि० ८५५-८५६
१० अप्रतिसमाधेयविकलाङ्गाना-मनधिकाराधि० ८५६-८५७
११ आर्षेयवरणाधि० ८५७-८५६
१२ रथकाराधि० ८५६-८६२
१३ निषादस्थपत्यधि० ८६२-८६४

## षष्ठस्य द्वितीयः पादः

१ सत्रेषु कर्तृबहुत्वाधि० ८६५-८६७
२ दर्शपूर्णमासादौ कर्त्रेकत्व-विवक्षाधि० ८६७-८७१
३ प्रक्रान्तकाम्यकर्मणा समा-पनीयत्वाधि० ८७२-८७३
४ प्रक्रान्तलौकिककर्मणा समा-प्तिनियमाभावाधि० ८७४-८७५
५ कलञ्जनक्षणवर्जनाधि० ८७५-८७८
६ स्मार्तविधिनिषेधनियमानामु-पनयनोत्तरकालताधि० ८७८-८७६
७ अग्निहोत्रादीना सायं प्रातरनु-ष्ठेयताधि० ८७६-८८१
८ अग्निहोत्रादीना यावज्जीव साय प्रातरनुष्ठेयत्वाधि० ८८१-८८२
६ निमित्तानुसारेण नैमित्तिका-वृत्त्यधि० ८८१-८८३

१० गुर्वनुगमनाद्याचाराणामस-
कृदनुष्ठानाधि० ८८३

११ सोमविद्याप्रजाधि० ८८४-८८५

## षष्ठस्य तृतीयः पादः

१ सर्वशक्त्यधि० ८८६-८८६
२ काम्येषु सर्वाङ्गोपसहाराधि० ८८६-८६०
३ द्रव्यभेदेऽपि कर्मैक्यप्रति-
पादनाधि० ८६०-८६२
४ श्रुतद्रव्यापचारे प्रतिनिध्यु-
पादानाधि० ८६२-८६४
५ देवताग्निशब्दक्रियाणा
प्रतिनिध्यभावाधि० ८६४-८६६
६ प्रतिषिद्धद्रव्याणा प्रतिनिध्य-
भावाधि० ८६६
७ अग्निहोत्रादिषु यजमानस्य
प्रतिनिध्यभावाधि० ८९६-८९८
८ सत्रे यजमानापचारे प्रतिनिध्यु-
पादानाधि० ८६८-८६६
६ सत्रे प्रतिनिधेः फलभागि-
त्वाभावाधि० ८६६-६००
१० सत्रे प्रतिनिहितस्य फलि-
संस्कारसत्ता० ६००
११ प्रतिनिधिद्रव्येषु मुख्यसदृश-
नियामकाधि० ६०१
१२ मुख्यद्रव्यापचारे तत्सदृशस्यैव
प्रतिनिधित्वाधि० ६०१-९०२
१३ सोमाभावे पूतीकाना
प्रतिनिधित्वाधि० ६०२-६०३
१४ प्रतिनिध्यपचारे श्रुतद्रव्यस्यैव
प्रतिनिध्युपादानाधि० ६०३-९०४
१५ पूतीकापचारे सोमसदृश
द्रव्यस्य प्रतिनिधित्वाधि० ६०४-६०५
१६ प्रतिनिधिसङ्कल्पानन्तर मुख्य
लाभे तस्यैवोपादेयत्वाधि० ९०५
१७ पशुनियोजनात्प्राङ्मुख्यलाभे
प्रतिनिधिहानाधि० ६०६
१८ द्रव्यसंस्कार विरोधे
द्रव्यप्राबल्याधि० ६०६-६०७
१६ अर्थद्रव्यविरोधेऽर्थप्राबल्याधि० ६०७-
२० द्रव्यदानक्षममुख्यद्रव्यलाभे
प्रतिनिध्यनुपादानाधि० ६०७-६१०

## षष्ठस्य चतुर्थः पादः

१ द्रव्यदाननाशे हविरन्तरो-
त्पत्त्यधि० ६११-६१३
२ स्विष्टकृदाद्यवत्तनाशे
शेषकार्याणा लोपाधि० ६१३-६१४
३ प्रकृतौ शयुवाकोत्तरशेषभक्ष-
णस्यर्त्विक्कर्तृकत्वाधि० ६१४-६१६
४ कपालैकदेशभेदस्यापि प्राय-
श्चित्तप्रयोजकत्वाधि० ६१६-६२०
५ पुरोडाशक्षामे सर्वदाहेऽपि
प्रायश्चित्तप्रयोजकत्वाधि० ६२०-६२१
६ हविरार्त्यधि० ६२२-९२५
७ होमाभि[illegible]-
कर्तृत्वाधि० ६२५-६२६
८ [illegible] प्रायश्चित्त-
प्रयोजकत्वाधि० ६२६-६२७

९ पञ्चशरावौदनस्य कर्मान्तत्वाधि० ६२८-६२६
१० पञ्चशरावौदनस्य दर्शाङ्गत्वाधि० ६२६-६३०
११ सङ्कल्पितसत्रकरणाशक्तौ विश्वजिदनुष्ठानाधि० ६३०-६३१
१२ बर्हिर्वत्साधि० ६३१-६३३
१३ व्रतस्य सन्नयदसन्नयद्विषयत्वाधि० ६३३-६३४
१४ शाखाप्रहरणस्य प्रतिपत्तित्वाधि० ६३५-६३६

## षष्ठस्य प : पादः

१ अभ्युदयेष्ट्यधि० ६३७-६४६
२ अभ्युदयेष्टावुपांशुयाजद्रव्यस्य देवताभ्योऽपनयाभावाधि० ६४७
३ अभ्युदयेष्टौ प्रायश्चित्तानुष्ठानकालनिरूणाधि० ६४७-६४८
४ अभ्युदयेष्टौ निर्वापस्य वैकृतदेवताकत्वाधि० ६४६
५ अभ्युदयेष्टौ सामिकृतनिर्वापस्य तूष्णीं कर्तव्यत्वाधि० ६४६-६५०
६ अभ्युदयेष्टौ सन्नयदसन्नयतोरधिकाराधि० ६५०-६५२
७ सत्रे साम्युत्थानेऽक्रीतराजकस्यापि विश्वजिदधिकाराधि० ६५२-६५३
८ ज्योतिष्टोमे दीक्षापरिमाणनिर्णयाधि० ६५३-६५७
९ एकाष्टकाधि० ६५७-६६०
१० दीक्षानिवृत्त्यनन्तर नित्यकर्मानुष्ठानाधि० ६६०-६६१
११ अवभृथोत्कर्षेऽपि प्रतिहोमानुष्ठानाभाधि० ६६१-६६२
१२ उदवसानीयेष्ट्युत्कर्षेऽपि प्रतिहोमानधिकाराधि० ६६२
१३ प्रतिहोमपक्षे तदनुष्ठाननियमनाधि० ६६२-६६३
१४ दर्शपूर्णमासाधिकृतस्यैव भेदनहोमाधिकाराधि० ६६३-६६४
( अपच्छेदपेटिकायां )
१५ द्वयोर्युगपदपच्छेदे प्रायश्चित्ताधिकारनिर्णयाधि० ६६४-६६५
१६ युगपदपच्छेदे प्रायश्चित्त विकल्पाधि० ६६५-६६७
१७ अपच्छेदाधि० ६६७-६७०
१८ पुनः प्रयोगे सर्वस्वदानाधिनकाराधि० ६७०-६७१
१९ अहर्गणेऽन्ह एव पुन प्रयोगाधि० ६७१-६७२

## षष्ठस्य षष्ठः पादः

१ सत्रेषु समानकल्पनामधिकाराधि० ६७३-६७६
२ कुलाये भिन्नकल्पानामधिकाराधि० ६७६-६७८
३ सत्रेषु ब्राह्मणाधिकाराधि० ६७८-६८०
४ सत्रेषु वैश्वामित्रकल्पाधिकाराधि० ६८०-६८१
५ सत्रे आहिताग्नीनामेवाधिकाराधि० ६८१-६८२

६ सत्रे पात्रसाधारण्याधि० ९८२-९८३
७ अध्वरकल्पादिषु त्रैवर्णिकाधिकाराधि० ९८३-९८५

## षष्ठस्य सप्तमः पादः

( विश्वजित्पेटिकायाम् )

१ विश्वजिति सर्वधनदानाधि० ९८६-९८७
२ विश्वजिति भूमिदानानधिकाराधि० ९८७-९८८
३ विश्वजित्यश्वदानानधिकाराधि० ९८८-९८९
४ विश्वजिति विद्यमानसर्वस्वदानाधि० ९८९
५ विश्वजिति शूद्रदानानधिकाराधि० ९८९-९९०
६. विश्वजिति दक्षिणाकालिक सर्वस्वदानाधि० ९९०
७. विश्वजिति दक्षिणार्थत्वेन विभक्तसर्वस्वदानाधि० ९९०-९९२
८. अहीनगतविश्वजित्यपि सर्वस्वदानाधि० ९९२-९९३
९. विश्वजित्यधिकदानाधि० ९९३-९९४
१०. आधानेऽपरिमितदानाधि० ९९४-९९५
११. आधाने सहस्राधिकदानाधि० ९९५
१२. परकृतिपुराकल्पानामर्थवादत्वाधि० ९९५-९९७
१३. सहस्रसंवत्सराधि० ९९७-१०००

## षष्ठस्याष्टमः पादः

१. चतुर्होतृहोमेष्वनाहिताग्न्यधिकाराधि० १००१-१००३
२. उपनयनहोमाना लौकिकाग्न्यधिकाराधि० १००३-१००६
३. स्थपतीष्टेलौकिकाग्न्यधिकाराधि० १००६-१००७
४. अवकीर्णिनो लौकिकाग्न्यधिकाराधि० १००७
५. श्रौतस्मार्तकर्मणामुदगयनादिकालनियमनाधि० १००७-१००८
६. पित्र्यकर्मणा कालनियमनाधि० १००८
७. याच्ञाक्रयस्य नित्यत्वाधि० १००८-१००९
८. पयोव्रतादीनानित्यताधि० १००९
९. पशुशब्दस्य छागपरत्वाधि० १०१०-१०१२

## सप्तमस्य प्रथमः पादः

१. विध्यन्ताधिकरणम् १०१३-१०१८
२. प्रत्यक्षवचनातिदेशाधि० १०१८-१०२०
३. पञ्चसञ्चराधि० १०२०-१०२१
४. ऐन्द्राग्नैककपालाधि० १०२२
५. साकमेधीयैककपाले वारुणप्रधासिकैककपाल धर्मातिदेशाधि० १०२२-१०२३

## सप्तमस्य द्वितीयः पादः


१. रथन्तरादिशब्दाना गीतिवाचित्वाधि० १०२४-१०३०


## सप्तमस्य तृतीयः पादः


१. नामातिदेशाधि० १०३१-१०३२
२. प्रायणीयनाम्नो धर्मानतिदेशाधि० १०३२ १०३३
३. विश्वजिति षाडहिकपृष्ठातिदेशाधि० १०३३-१०३४
४. वरुणप्रघासेषु सौमिकावभृथधर्मातिदेशाधि० १०३४-१०३५
५. वरुणप्रघासेष्ववभृथस्य तुषनिष्कासद्रव्यकत्वाधि० १०३५-१०३६
६. आतिथ्यागतवैष्णवशब्दस्य धर्मानतिदेशकत्वाधि० १०३६
७. निर्मन्थ्यादिशब्दाना धर्मानतिदेशकत्वाधि० १०३६-१०३७
८. चातुर्मास्येषु प्रणयनशब्दस्य सौमिकप्रणयन धर्मानतिदेशकत्वाधि० १०३७-१०३८
९. चातुर्मास्येषु प्रणयनस्य मध्यमपर्वनिवेशित्वाधि० १०३९-१०४०
वार्तिकमतेन पूर्वाधिकरणम् १०४१-१०४३
१०. स्वरसामादिशब्दाना धर्मातिदेशकत्वाधि० १०४३-१०४५
११. वास प्रभृतिशब्दाना जातिवाचित्वाधि० १०४५
१२. गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधि० १०४५-१०४६
१३. उपशये यूपधर्मानतिदेशाधि० १०४६-१०४७
१४. पृष्ठशब्दस्य मन्त्रवाचित्वाधि० १०४७-१०४९


## सप्तमस्य चतुर्थः पादः


१. सौर्यादिष्वितिकर्तव्यताया अतिदेशाधि० १०५०
२. सौर्यादौ वैदिकविध्यन्तातिदेशाधि० १०५१-१०५४
३. गावमयनिकज्योतिरादिष्वैकाहिकज्योतिरादिधर्मानुष्ठानाधि० १०५४-१०५८


## अष्टमस्य प्रथमः पादः


१. विशेषातिदेशप्रतिज्ञाधि० १०५९
२. सादृश्यविशेषेण नियत प्रकृतितो धर्मातिदेशाधि० १०५९-१०६०
३. सोमे ऐष्टिकधर्मानतिदेशाधि० १०६०-१०६१
४. इष्टिषु दर्शपूर्णमासविध्यन्तातिदेशाधि० १०६२

५. अग्नीषोमीयपशावैष्टिकविध्यन्तातिदेशाधि० १०६२

६. सवनीयादिपशुषु दैक्षविध्यन्तातिदेशाधि० १०६२-१०६३

७. ऐकादशिनेषु सवनीयविध्यन्तातिदेशाधि० १०६३

८. पशुगणेष्वैकादशिनविध्यन्तातिदेशाधि० १०६३

९. अव्यक्तयागेषु सौमिकविध्यन्तातिदेशाधि० १०६४

१०. अहर्गणेषु द्वादशाहिकविध्यन्तातिदेशाधि० १०६४

११. सत्रेषु गावामयनिकविध्यन्तातिदेशाधि० १०६४

१२. निकायिनामुत्तरेषु पूर्वनिकायविध्यन्तातिदेशाधि० १०६५

१३. फलादीनामनतिदेशाधि० १०६५-१०६६

१४. गुणकामाना विकृतावनतिदेशाधि० १०६६-१०६७

१५. सौर्ये विकल्पेनाग्नेयद्वयविध्यन्तातिदेशाधि० १०६८

१६. सौर्ये अग्नेयविध्यन्तातिदेशाधि० १०६९

१७. द्रव्यदेवताघटितसादृश्ययोर्द्रव्यघटितसादृश्यस्य प्राबल्याधि० १०७०-१०७१

१८. कृष्णलचरावौषधधर्मातिदेशाधि० १०७१-१०७२

१९. मधूदकाधिकरणम् १०७२-१०७३

## अष्टमस्य द्वितीयः पादः

१. वाजिनसुरयोरैष्टिकविध्यन्तातिदेशाधि० १०७४-१०७६

२. पशौ सान्नाय्यविकृतित्वाधि० १०७६-१०७७

३. पशो पयोविकृतित्वाधि० १०७७-१०७८

४. आमिक्षाया पयोविकृतित्वाधि० १०७८-१०७९

५. अहीनसत्रात्मकयागेषु द्वादशाहविध्यन्तातिदेशाधि० १०७९-१०८०

६. पञ्चदशरात्रकुण्डपायिनामयनयोस्सत्रविध्यन्तातिदेशाधि० १०८०-१०८१

## अष्टमस्य तृतीयः पादः

१. आग्नावैष्णवादौ देवतासामान्यादतिदेशाधि० १०८२

२. जनकसप्तरात्रे क्रमेण द्वादशाहिकविध्यन्तातिदेशाधि० १०८२-१०८३

म

| | |
|---|---|
| ३. षट्त्रिंशद्रात्रे षडहविध्यन्तातिदेशाधि० | १०८४ |
| ४. शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्मातिदेशाधि० | १०८४-१०८५ |
| ५. शतोक्थ्यादौ ज्योतिष्टोमिकोक्थ्यधर्मातिदेशाधि० | १०८६ |
| ६. बृहस्पतिसवादौ दाशतयीभ्य उत्पन्नाना गायत्रीणां समानयनाधि० | १०८६-१०९१ |


## अष्टमस्य चतुर्थः पादः


| | |
|---|---|
| १ दर्विहोमस्य कर्मनामधेयत्वाधि० | १०९२ |
| २. दर्विहोमशब्दस्य वैदिकलौकिकहोमनामत्वाधि० | १०९२-१०९३ |
| ३. दर्विहोमशब्दस्य जुहोत्युत्पन्नहोमनामत्वाधि० | १०९३-१०९५ |
| ४. दर्विहोमाधिकरणम् | १०९५-११०१ |




॥ श्रीः ॥

## अध्वरमीमांसा-

# कुतूहलवृत्तिः

## चतुर्थाध्यायस्य प्रथमः पादः ॥



१

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

हेतुहेतुमद्भावसङ्गत्या[१] [२]शेषशेषिभावविचारानन्तरं प्रयुक्तिविचार प्रविजानीते—

**अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥**

अथेत्यानन्तर्ये । अत इति हेतौ । पुरुषार्थेति प्रयोजकत्वं प्रवर्तकत्वानुष्ठापकत्वापरपर्यायं[३] लक्ष्यते । पुरुषार्थस्य प्रवर्तकीभूतेष्टसाधनताज्ञानमुखेन प्रवृत्तिहेतुत्वस्य लोकसिद्धत्वात् । क्रत्वर्थेति चाप्रयोजकत्वं लक्ष्यते । क्रत्वर्थानामवधातप्रयाजादीनां [४]क्रतुद्वारा तत्फलसाधनतयेष्टत्वेऽपि स्वत इष्टत्वाभावेन पुरुषार्थवत्स्वतः प्रवर्तकत्वाभावात् । अल्पाच्तरत्वात् क्रत्वर्थशब्दस्य पूर्वनिपातः । जिज्ञासेति विचारो लक्ष्यते । प्रस्तूयत इति सूत्रशेषः[५] । अथ शेषशेषिभावविचारानन्तरं क्रत्वर्थपुरुषार्थयोः प्रयोजकत्वाप्रयोजकत्वयो जिज्ञासा विचारः प्रस्तूयत इत्यन्वयः । ननु प्रयुक्तिविचारस्य शेषशेषिभावविचारानन्तर्ये को हेतुरित्यत आह—अत इति । शेषिणः प्रयोजकत्वादित्यर्थः । तथाच शेषशेषिभावविचारस्य फलभूतः प्रयुक्तिविचारः 'एकनिष्पत्तेस्सर्वं समं स्यात्' इत्यारभ्य [६]'क्रियमाणश्चतुर्थाध्यायस्यासाधारणो

---

१. प्रसङ्गात् . अ, ग.
२. शेषशेषिमद्भाव. क, ग.
३. अनुष्ठापकत्वपर्याय. अ, क, ग.
४. क्रत्वव्यभिचार अ, क.
५. इति शेष . क.
६. क्रियमाणचतुर्थाध्याय. अ.

प्रायम्। आधानाध्ययनगोदोहनादेः क्रतूपयोगित्वेऽपि कथम्भावाकाङ्क्षापूरणार्थतया [1]विधानाभावान्न क्रत्वर्थता। वक्ष्यमाणक्रत्वर्थपुरुषार्थविचारार्थमप्येतल्लक्षणकथनं, लक्षणानुक्तौ तयोर्मिथो भेदेन ज्ञानासम्भवे तद्विचारानुन्मेषात्॥

इति प्रथमं प्रतिज्ञाधिकरणम्॥ १ ॥

२

अथवा अधिकरणपरमेवेद सूत्रम्। फलस्याभ्यर्हितत्वात् तत्प्रयुक्तिरादौ चिन्त्यते--फलस्य विधि· प्रयोजको न वेति। प्रयोजक इति ब्रूमः। अज्ञातज्ञापनमेव हि विधिः। तथा च यथा यागस्य स्वरूपेण लोकसिद्धस्यापि फलसाधनताया [2]विध्येकगम्यतया विधेयत्वम्, एवं फलांशस्यापि यागसाध्यताया विध्येकगम्यतया विधेयत्वादंशत्रयविशिष्टगोचरो विधिः करणांशवत् फलांशस्यापि प्रयोजक इति प्राप्ते, सिद्धान्तयति—

**यस्मिन् ^तिः पुरुषस्य तल्लिप्सार्थलक्षणाविभक्तत्वात्॥ २॥**

यस्मिन् फलेऽनुभूयमाने पुरुषस्य प्रीतिः[3] तृप्तिर्भवति, तस्य फलस्य लिप्सा विषयताया षष्ठी। फलविषया प्रवृत्तिः अर्थलक्षणा—रागमूला, न तु विध्यधीना। अविभक्तत्वात्—फलस्य [4]रागाविनाभूतत्वात्। अय भावः—अप्रवृत्तप्रवर्तनमेव विधिः। स च विशिष्टगोचरो विशेषणे कल्प्यमानो यत्र विधिमन्तरेण विशेषणे प्रवृत्तिर्न लभ्यते तत्रैव कल्प्यते। फले च स्वतस्सुन्दरे विधिमनपेक्ष्य रागत एव [5]प्रवृत्तिसिद्धेः। अतो न तद्गोचरो विधिः। [6]यत्तु अज्ञातज्ञापनमेव विधिरिति अस्त्वेवं, तथापि—

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत्तत्सुख स्वःपदास्पदम्॥'

इत्यादिशास्त्रतो लोकतश्चावगतस्वरूपं स्वर्गपश्वादिकं प्रति "स्वर्गकामो यजेत" "पशुकामो यजेत" इत्येवं यागस्य साधनत्वेऽवगते तत्साध्यत्वमर्थादेव फलस्या-

---

१. साधनाभावात्. ग. २. विध्येकगम्यतया नास्ति. अ. ३. प्रतीतिः. अ.
४. अरागविनाभूतत्वात्. अ. ५. प्रवृत्तिस्सिद्धा. ग. ६. यत्र. क.

वगतमिति न विधिगम्यत्वमपि । अतो न फलांशस्य विधिः प्रयोजकः । प्रयोजनम्— पूर्वपक्षे श्येनविधिना वैरिवधस्यापि 'न हिंस्यात्' इति निषेधाविषयत्वम् । सिद्धान्ते तु तद्विषयत्वम् ॥

इति द्वितीयं लिप्साधिकरणम् ॥ २ ॥

३

द्वितीये 'फलश्चाकर्मसन्निधौ' इत्यत्र फलस्याविधेयत्वं विचारितमपि अधिकाशङ्कापरिहारार्थमिहापि [1]विचार्यते । अतएवाधिकरणान्तरमस्तु । दर्शपूर्णमासयोश्श्रूयते "अपः प्रणयति, गोदोहनेन पशुकामस्याप- प्रणयेत्" इति । यस्मिन् पात्रे [2]गोः पयो दुह्यते तद् गोदोहनम् । तत् किं क्रतुपुरुषोभयार्थम् ? उत पुरुषार्थमेव ? इति संशयः । तत्र 'फलश्रुतेस्तु कर्म स्यात्' इति द्वैतीयीकाधिकरणन्यायेन (क्षि) "दध्नेन्द्रियकामस्य" इत्यादौ दध्यादिद्रव्यस्य पुरुषार्थत्व सिद्धमेव । अप्प्रणयनद्वारा क्रतूपकारकगोदोहनस्य सर्वपदार्थग्राहिणा प्रयोगविधिना क्रतूपकारायावश्यं विधेयतया कथम्भावपूरणार्थविहितत्वरूपतल्लक्षणलक्षितत्वात् क्रत्वर्थत्वमपि । तथाच फलवत्क्रतुरपि गोदोहनस्य [3]प्रयोजक इति विकृतौ तदतिदेशस्सिध्यतीति प्राप्ते, सिद्धान्तयति—

**यस्मिन् प्रीतिः पुरुषस्य तल्लिप्सार्थल णा विभक्तत्वात् ॥ २ ॥**

यस्मिन्नुपात्ते[4] पुरुषस्य प्रीति –प्रियं पशुलक्षणफलं भवति तस्य गोदोहनस्य लिप्सा-अनुष्ठिति , अर्थलक्षणा-पशुलक्षणफलप्रयुक्ता, न तु क्रतुप्रयुक्ता । कुत ? विभक्तत्वात्—गोदोहनस्य प्रयोगविधिपरिग्रहाभावात् । प्रयोगविधिर्हि पुरुषार्थेनैव गोदोहनेन प्रसङ्गात् क्रतूपकारसिद्धिं दृष्ट्वा अन्यथासिद्धत्वान्न तत्र व्याप्रियते । अतो गोदोहनस्य क्रतूपकारकत्वे सत्यपि न क्रत्वर्थता । अतो न तस्य क्रतुः प्रयोजक इति न विकृतावतिदेश- ॥

इति तृतीय गोदोहनाधिकरणम् ॥ ३ ॥

---

१. विचारितम् । अत एव वा. अ, ग.    २. गोपय. अ.

३. प्रयोगविधिजनक इति मातृकासु पाठ । 'प्रयोजक' इति कल्पित पाठ ।

४ प्राप्ते. क, ख.

४

ननु गोदोहनस्य क्रत्वर्थत्वेऽपि न क्रतु प्रयोजकः किन्तु [1]पशुफलमेव, फलस्य पुरुषाभिलषितत्वेन फलप्रयुक्तेरशीघ्रकतया फलप्रयुक्तेनैव क्रतूपकारसिध्या क्रतोस्तत्प्रयुक्तावुदासीनत्वात्। ततश्च पूर्वोत्तरपक्षयोः फलप्रयुक्तमेव गोदोहनमिति विचारोऽयन्निष्फल इति चेत्—अतएवाधिकरणान्तरमस्तु। "याजनाध्यापनप्रतिग्रहैः ब्राह्मणो [2]धनमार्जयेत्" इति श्रूयते। आर्जयेत् प्राप्नुयादित्यर्थः। तदिदं द्रव्यार्जनं क्रत्वर्थम्? पुरुषार्थं वा? इति संशयः। तत्र पुरुषार्थत्वं नोक्तलक्षणम्। द्रव्यार्जनस्य[3] किं केनेत्यंशपूरणार्थत्वाभावात्, किन्तु पुरुषोपभोगक्षमत्वमेव। तत्र पुरुषार्थत्वे सति विधेरानर्थक्यं स्यात्। न हि द्रव्यार्जनं [4]पुरुषोपभोगार्थतया विधीयते' रागत एव तत्प्राप्तेः। नापि पुरुषोपभोगार्थद्रव्यार्जने याजनाद्युपायनियमो [5]विधेय इति शक्यं वक्तुम्। नियमो हि किं द्रव्यार्जनस्वरूपे उपयुज्यते? उत तत्कार्ये क्षुदुपघातादिलक्षणे भोगे? नाद्यः; याजनादिनियमं विनापि शिल्पक्रियादिना द्रव्यार्जनसम्भवात्। न द्वितीयः, नियमं विनापि [7]शिल्पाद्यार्जितद्रव्यात् क्षुदुपघातादिभोगसिद्धेः। न च 'स स्वर्गस्स्यात्' इति न्यायेन स्वर्गार्थतया द्रव्यार्जनविधिरिति वाच्यम्, फलान्तरकल्पनापत्तेः; द्रव्यार्जनेन स्वर्गं कुर्यात् याजनादिना द्रव्यार्जनमिति वाक्यभेदापत्तेः, विशिष्टविधौ च गौरवात्। ततश्चात्र द्रव्यार्जनोद्देशेन याजनाद्युपायनियमविधिरेव। स चानर्थक्यान्यथानुपपत्त्या क्रत्वर्थताविधिमपि [8]नियमस्यानुमापयति। तथाच (द्रव्यार्जनमनियतयाजनाद्युपायकमिति श्रौतो विधिः, तथाविधार्जनेन क्रतुमुपकुर्यादित्यार्थिको विधिः। प्रथमविधिना च ब्राह्मणस्य) द्रव्यार्जनसामान्ये उपायनियमविधानात् शिल्पाद्युपायान्तरं व्यावर्तते। न चैवं सति "दीक्षितो भृतिं वन्वीत" इति ज्योतिष्टोमे द्रव्यार्जनविधिरनर्थकस्स्यात्, सामान्यविधिनैवानेन सर्वक्रत्वर्थतया तत्सिद्धेरिति वाच्यम्। तस्य दीक्षोत्तरकालविधानार्थत्वात्। क्रत्वर्थत्वे च सति तत्फलेनैव

---

१. पशुफलस्य पुरुषा० अ　　२. यजनमर्जयेत्. अ, क.　　३. द्रव्यस्य. अ.

४. पुरुषोपभोगार्थतया. क.　　५. विधेय. ग.　　६. विधीयते. ग, घ.

७. शिल्पार्जित. ख.　　८. विधिनियमस्य. अ, क.

( ) कुण्डलान्तर्गतो भागस्त्रुटित अ पुस्तके.

फलवत्वान्न फलान्तरकल्पनं, विध्यन्तरकल्पनाच्च न वाक्यभेद । नापि विशिष्टविधिगौरवम्। तथाच सर्वस्यापि द्रव्यार्जनस्य क्रत्वर्थत्वात् गृहदाहहिरण्यनाशादिनिमित्ते विहितानां क्षामवत्यादीनां क्रत्वर्थद्रव्योपघात [1]कृतवैगुण्यपरिहारार्थतया "भिन्ने जुहोति" इत्यादिवत् न्तरन्न कल्पनीयमिति लाघवम्। पुरुषार्थत्वे तु द्रव्योपघातनिमित्ते सत्यनारभ्यविहितानां तासां क्रतुसम्बन्धे प्रमाणाभावात् फलान्तरं कल्पनीयं स्यादिति गौरवम्। न च सर्वस्यापि द्रव्यस्य क्रत्वर्थत्वे जीवनलोपश्शङ्क्यः। क्रतुरेव हि स्वसिध्यर्थं जीवनेऽपि द्रव्यविनियोगमनुमन्यते, जीवनलोपे क्रतुलोपप्रसङ्गात्। एवञ्च 'षण्णान्तु कर्मणां मध्ये त्रीणि कर्माणि जीविका। यज्ञार्थं पशवस्सृष्टाः' इत्यादिस्मृतयोऽप्यनुगृहीता भवन्तीति क्रत्वर्थमेव नियतोपायं द्रव्यार्जनमिति प्राप्ते, सिद्धान्तयति—

**यस्मिन् ्तिः पु तद्धि प्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥**

यस्मिन्-द्रव्ये पुरुषस्य प्रीतिः—[2]अभिलाषो भवति तस्य द्रव्यस्य लिप्सा आर्जना अर्थलक्षणा पुरुषभोगरूपप्रयोजननिबन्धना। पुरुषार्थेति यावत्। कुत ? अविभक्तत्वात्, तस्य पुरुषार्थतया इन्द्रियसन्निकृष्टत्वात्, प्रत्यक्षत्वादिति यावत्। [3]यागेनाविभक्तत्वादित्यप्यर्थं। नियमविधौ हि द्रव्यार्जनमुद्देश्यं, तच्च "भूतिं वन्वीत" इति शास्त्रीयन्न भवति। तस्य वननरूपोपायान्तरावरुद्धत्वेनैवोत्पत्त्या उपायान्तरप्रसक्त्यभावेन तत्र याजनाद्युपायनियमविध्यानर्थक्यात्। किन्तु रागतः प्राप्तमेवोद्देश्यम्। रागतश्चार्जितन्द्रव्य पुरुष प्रीणयत् पुरुषार्थमेव प्रत्यक्षमनुभूयते। ततश्चोद्देश्यतादशायामेव पुरुषार्थत्वावगमा (न्न तत्र क्रत्वर्थताकल्पकमनुमानमुदेतुमुत्सहते। न च पुरुषार्थत्वे द्रव्यस्य क्रतावविनियोज्यत्वात्[4] क्रतुनिर्वृत्तिरेव न स्या) दिति वाच्यम्। क्रतोरपि पुरुषभोग्यस्वर्गादिसाधनस्य पुरुषकार्यान्तर्भूतत्वेन तस्मिन् विनियुक्तस्यापि पुरुषार्थत्वानपायात्। दृष्टार्थत्वबलादपि नियतार्जनस्य पुरुषार्थत्वमेव स्वीकार्यम्। अन्यथा क्रत्वपूर्वलक्षणादृष्टार्थत्वापातात्। न चैवं सति नियमानर्थक्यम्, यथाकथञ्चिदार्जितेनापि क्षुत्प्रतिघातादिकार्यसिद्धेरिति वाच्यम्, प्रत्यवायपरिहारार्थत्वात्। न चैवमश्रुतप्रत्यवायपरिहाररूपादृष्टार्थत्वकल्पनापेक्षया

---

१. क्रतुवैगुण्य. अ. २. अभिलाषा. क. ३ रागेण. क, ख.

४. क्रतावविनियुक्तत्वात्. अ, क. ( ) कोष्ठान्तर्गतो भागस्त्रुटितः अपुस्तके.

'श्रुतक्रत्वपूर्वकवाक्यताकल्पनमेव न्याय इति वाच्यम्। क्रतोश्श्रुतत्वेऽपि तदपूर्वस्यापि कल्प्यत्वेनाश्रुतत्वाविशेषात्। किञ्च श्रुतमपि क्रत्वपूर्वन्नैतन्नियमकल्पनासमये उपस्थितम्, तदुपस्थापकप्रकरणाद्यभावात्। न चात्रानारभ्याधीतन्यायः(ञि),तस्य क्रत्वव्यभिचरितजुह्वादिसमभिव्याहारे सत्येव प्रवृत्तेः। धनस्य च क्रतुबहिरपि सत्वात् पुरुषगन्तृप्रत्यवायपरिहाररूपमदृष्टफलम् 'अन्याय्येनार्जयन्द्रव्यं प्रत्यवाये न युज्यते' इत्यादिस्मृतिमूलश्रुतिसिद्धमेवेति तदर्थत्वमेव नियमविधेरिति युक्तम्। एतेनात्र 'सस्वर्गस्स्यात्' इतिन्यायेन (टि) स्वर्गकल्पनं निरस्तम्। एवञ्च रागप्राप्तद्रव्यार्जनोपायनियमेन प्रत्यवायपरिहारं कुर्यादिति द्रव्यार्जनमाश्रित्य पुरुषगतादृष्टार्थतया नियमोऽत्र विधीयते। एतेन द्रव्यार्जनस्य नियमविध्युद्देश्यत्वात्तन्निर्वाहाय क्रत्वर्थत्वमेव वाच्यमिति निरस्तम। क्षामवत्यादीष्टीनां फलान्तरकल्पनन्तु प्रामाणिकत्वान्न दोषाय। ततश्च द्रव्यार्जनं पुरुषार्थम् उपायनियमस्त्वदृष्टार्थ इति स्थितम। प्रयोजनं पूर्वपक्षे—याजनादिनियतोपायार्जितस्यैव द्रव्यस्य क्रतौ जीवने चोपयोगः। तदितरस्मिन् पुरुषभोगे तु यथाकथञ्चिदार्जितस्य। सिद्धान्ते तु क्रतौ तदितरस्मिंश्च पुरुषकार्ये सर्वत्र यथाकथञ्चिदनिषिद्धोपायार्जितद्रव्यस्य विनियोगः। नियमलोपे च पुरुष एव प्रत्यवैति न तु क्रतुवैगुण्यमिति ॥

इति चतुर्थं द्रव्यार्जनोपायनियमाधिकरणम् ॥ ४ ॥

५

"नेक्षेतोद्यन्तमादित्यम्" इति क्रत्वर्थं पुरुषार्थं वेति संशयः। क्रत्वर्थमेव। अत्र हि नञ् अभावे वर्तते। तत्र चाख्यातवाच्यधात्वर्थेक्षणस्य कर्तव्यत्वं प्रतियोगितयान्वेति। तथाच आदित्यमीक्षेतेति यत् तन्नेत्येवमादित्येक्षणकर्तव्यत्वस्याभावलक्षणः प्रतिषेधो बोध्यते। स च प्रतिषेध. प्रतियोगिभूतप्रतिषेध्यस्य प्राप्तिमपेक्षमाणो वैदिकत्वसामान्याद्वैदिकीमेव तत्प्राप्तिं शीघ्रमवलम्बते। एवञ्च ज्योतिष्टोमादिक्रतौ यदादित्येक्षणं छान्दोग्ये बहिष्पवमानाङ्गं विहितमुद्यदवस्थाया प्रसक्तं तस्यायं प्रतिषेधः, न नु लौकिकस्य। 'ब्राह्मणो न हन्तव्यः' इत्यत्र तु वैदिकस्य ब्राह्मणवधस्याभावाल्लौकिकस्यैव प्रतिषेध इष्यते। ततश्च प्रतिषेध्यप्राप्तिद्वारा क्रतोरुपस्थितत्वात् प्रतिषेधोऽयं क्रत्वर्थ इति विज्ञायते। किञ्च कत्वर्थत्वे सति

---

१. त्वश्रुत. ग.

फलन्न कल्प्यमिति लाघवम्। पुरुषार्थत्वे तु फलं कल्प्यमिति गौरवम्। न हि द्रव्यार्जनवदस्य प्रतिषेधस्य पुरुषभोगार्थता प्रत्यक्षा, येन फलन्न कल्प्येत। तस्मात् क्रत्वर्थ एवायं प्रतिषेध इति प्राप्ते, सिद्धान्तयति—

**तदुत्सर्गे कर्माणि पुरुषार्थाय शास्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥**

पुरुषार्थानीति क्वचित्पाठः। "तस्य व्रतम्" इत्युपक्रमे व्रतशब्देन कर्मसामान्यमुक्त्वा तस्येति षष्ठ्या तस्य पुरुषार्थतामपि प्रतिपाद्य किं तत्कर्मेति विशेषाकाङ्क्षायां "नेक्षेतोद्यन्तम्" इत्यादिवाक्यं प्रवृत्तम्। तस्य च तदिदमस्य व्रतमित्येवं व्रतशब्देन कर्मसामान्यवाचिनान्वयो वाच्यः। स चेक्षणकर्तव्यत्वाभावलक्षणप्रतिषेधस्य न सङ्गच्छत इति तदन्यथानुपपत्त्या कश्चिद्भावपदार्थोऽत्र विधेय इति वक्तव्यम्। स चानीक्षणसङ्कल्परूपमानसव्यापार एव। अत्र हि नञो धातुनान्वयः, न तु प्रत्ययेन। भावनावाचिप्रत्ययान्वितो हि नञ् अभावे वर्तते। अप्रत्ययान्वितस्तु नञ् क्वचिद्वर्जने वर्तते। यथा—असन्देहः प्रयोजनमिति सन्देहनिवृत्तिरिति गम्यते। क्वचिद्विरोधिनि वर्तते। यथा—असुरा इति सुरविरोधिन इति गम्यते। प्रकृते च नञा धातुना चोभाभ्यामीक्षणविरोधी अनीक्षणसङ्कल्पो लक्ष्यते। ईक्षणनिवृत्त्यविनाभूतत्वाद्वा इदं करोमि अस्मान्निवर्ते इति सङ्कल्पपूर्वमेव सर्वत्र [1]प्रवृत्तिनिवृत्तिदर्शनात्। तथा च तदुत्सर्गे—तस्य प्रतिषेधलक्षणाभावस्य उत्सर्गेऽपि द्रव्यार्जनवत् प्रत्यक्षपुरुषप्रीतिविषयत्वाभावेऽपि नेक्षेतेत्येवञ्जातीयकेषु अनीक्षणसङ्कल्पादीनि कर्माणि पुरुषार्थाय—पुरुषकार्यमुद्दिश्य विहितानि प्रत्येतव्यानि। किञ्च तदुत्सर्गे—तस्मिन् अभावे प्रतिषेधलक्षण उत्सर्गे व्रतशब्दस्यान्वयासम्भवे सति नेक्षेतेत्यादिवाक्येषु अनीक्षणसङ्कल्पादीनि भावरूपाणि कर्माणि पुरुषकार्याय विहितानि प्रत्येतव्यानि। कुतः? शास्त्रस्य—पुरुषार्थताबोधकस्य, अनतिशङ्क्यत्वात्—शास्त्रेण पुरुषार्थत्वे बोध्यमाने प्रत्यक्षप्रीत्यभावप्रयुक्तशङ्कायाः[2] लक्षणाप्रयुक्तशङ्कायाश्चानवकाशादिति यावत्। नन्वेवं पुरुषार्थत्वे फलकल्पनागौरवमित्यत्राप्येतदेवोत्तरम्—शास्त्रस्यानतिशङ्क्यत्वादिति। शास्त्रस्य "एतावता हैनसायुक्तो भवति"

१. निवृत्ति. नास्ति. अ    २. लक्षणशङ्कायाः अ.

इति वाक्यशेषस्य एतावता—अनीक्षणसङ्कल्पादिना हेतुना एनसा—पापेन अयुक्तः वियुक्तो भवतीति पापक्षयलक्षणफलबोधकस्य वर्तमानापदेशतया अनतिशङ्क्यत्वात्-वर्तमानापदेशत्वेऽपि[1] रात्रिसत्रन्यायेन फलपरत्वादिति यावत्। यद्वा एतावता ईक्षणादिना हेतुना पापसंयुक्तो भवतीति ईक्षणादीनां पापहेतुत्वे सति अनीक्षणसङ्कल्पस्य पापक्षये हेतुत्वमार्थिकं बोध्यम्। नन्वनीक्षणस्य पुरुषार्थस्यैव सतः क्रत्वर्थत्वमप्यस्त्वित्यत आह—न चेति। नाप्येवञ्जातीयकैः कर्मभिरप्रकरणविहितैः क्रतुसम्बन्धि द्रव्यं संस्क्रियते, येन तद्द्वारा क्रतोरुपस्थिततया तदर्थतापि शङ्क्येत। ननु नेक्षेतेत्यत्र कर्तुराख्यातवाच्यत्वाभावेन पुरुषस्याप्यनुपस्थितत्वन्तुल्यमित्याशङ्कां[2] परिहरन्नुपसंहरति—तेनेति। यतः पुरुषार्थत्वं साधितं क्रत्वर्थत्वञ्च निराकृतं तेन हेतुना अर्थेन—पुरुषकार्येण अभिसम्बन्धात्—संयोगात्। क्रियायाम्—अनीक्षणादिभावनावाक्ये पुरुषस्यैव भावनाक्षिप्तस्य [3]शेषितया श्रुतिः उपक्रमे तस्येति श्रवणञ्च[4]। अतः पुरुषस्योपस्थितत्वात् पुरुषार्थतया अनीक्षणसङ्कल्पविधिरुपपद्यते॥

नन्‌ यदि क्रतूपस्थापकाभावान्न क्रत्वर्थता तर्हि "नानृतं वदेत्" इत्यादिष्वपि क्रत्वर्थत्वं न स्यादिति प्रत्यवतिष्ठते—

**अविशेषात्तु[5] शा स्य यथाश्रुति फलानि स्युः॥ ४॥**

तुः प्रत्यवस्थाने। अनृतवदनप्रतिषेधादिशास्त्रस्य क्रतूपस्थापकधीराहित्यविषये नेक्षेतेत्यादिशास्त्राद् अविशिष्टत्वात्। यथाश्रुति—शब्दशक्त्यनुसारेण फलानि भावनाक्षिप्तपुरुषभोग्यानि कल्प्यानि स्युः, न क्रतुगतानि। न क्रत्वर्थत्वं स्यादिति यावत्॥

परिहरति—

**अपिवा कारणाग्रहणेऽनदर्थमर्थस्यानभिसम्बन्धात्॥५॥**

अपिवेति शङ्काव्यावृत्तौ। "नेक्षेत" इत्यादौ कारणस्य क्रतूपस्थापकप्रमाणस्य अग्रहणे—अनुपलम्भे सति अनीक्षणादि अतदर्थं—क्रत्वर्थन्न भवतीति युक्तम्।

---

१. वेशितत्वेऽपि. क.　२. आशङ्कायां. अ, क.　३. हेतुशेषितया अ, क.
४ श्रवणान्न. अ.　५. अविशेषाच्छास्त्रस्य.

अर्थस्य-क्रतोः अनभिसम्बन्धात्-बुद्धावपरिवृत्तेः। "नानृतं वदेत्" इत्यत्र तु नैवं सम्भवति। प्रकरणस्य क्रतूपस्थापकस्य सत्वात्॥

ननु प्रकरणं नाम सन्निधिः। तद्वशात्क्रतोस्स्वरूपेणोपस्थितावपि अनृतवदन-प्रतिषेधे कथं तादर्थ्यावगम[1] इत्याशङ्कायामाह—

## तथा च लोकभूतेषु ॥६॥

लोकभूतेषु लोकसिद्धेषु कार्येषु भोजनादिकर्मसु फलवत्सु चिकीर्षितेषु फलासंयुक्तं पाकादिकमुच्यमानं सन्निधिसनाथं [2]परस्पराकाङ्क्षालक्षणप्रकरणवशात् फलवतो भोजनादिकर्मणोऽङ्गमिति ज्ञायते। तथा अनृतवदनप्रतिषेधस्यापि क्रत्वर्थ-तावगमस्सम्भवति। तृतीये 'असंयुक्तं प्रकरणात्' इत्यत्र प्रतिपादितमेवैतत् लोक-दृष्टान्तप्रदर्शनेन स्थिरीकृतम्॥

इति पञ्चमं प्रजापतिव्रताधिकरणम्॥५॥

६

दर्शपूर्णमासयोः "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूख मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि" इति श्रुतम्। किमत्र यज्ञायुधानीति प्रधानयागीयद्रव्यविधिः? उत "स्फ्येनोद्धन्ति" "कपालेषु श्रपयति" इत्यादिवाक्यप्राप्तानुवादः? इति संशये, पूर्वपक्षयति—

## द्रव्याणि त्वविशेषेणानर्थक्यात् प्रदीयेरन् ॥७॥

तुः प्रत्यवस्थाने। "नेक्षेतोद्यन्तम्" इत्यत्र क्रतूपस्थापकाभावात् क्रत्वर्थत्वा-सम्भवेऽपि इह यज्ञशब्दसंयुक्तवाक्ये स्फ्यादिद्रव्याणि प्रधानयागीयाग्न्यादिदेव-ताभ्यः प्रदीयेरन्। प्रधानयागीयहविष्टेन स्फ्यादीनि विधीयेरन्निति यावत्। अत्र हि यज्ञशब्देन आग्नेयादिप्रधानयागा उच्यन्ते। आयुधशब्देन प्रहरणसाधन-वाचिना साधनत्वमात्रं लक्ष्यते। तथा च स्फ्यादीनि यज्ञसाधनानि भवेयुरिति स्फ्याद्युद्देशेन यागसाधनताविधिः, [3]न तु यज्ञमुद्दिश्य स्फ्यादीनां साधनत्वविधिः; यज्ञशब्दस्य समासान्तर्गतत्वेनोद्देश्यसमर्पकत्वायोगात्। ननु विधिप्रत्ययस्याश्रवणा-द्विधित्वप्रतिबन्धकवैशब्द्योपबन्धाच्च न विधित्वाश्रयणं युक्तम्। अतो यज्ञार्थोद्धन-

---

१. इत्याशङ्क्याह. अ, क. २. परस्पराकाङ्क्षावशात् अ. ३. न च. अ.

नादिकर्मानुवाद इत्येव युक्तमित्यत आह—आनर्थक्यादिति। विधेयान्तराभावेनानुवादत्वे आनर्थक्यापत्या [1]विधित्वे च प्रवृत्तिविशेषकरत्वेन सार्थक्यात् "उपरि हि देवेभ्यो धारयति" इत्यत्रेव (ठि) विधिप्रत्ययाश्रवणेऽपि विधित्वप्रतिबन्धकश्रवणेऽपि विधित्वमेव युक्तम्। अनुवादत्वे यज्ञशब्दस्य लक्षणया यज्ञार्थोद्धननादिपरतया मुख्यार्थातिलङ्घनरूपानर्थक्यापातादित्यप्यर्थ.[2]। ननु विधित्वेऽप्यायुधशब्दस्य साधनत्वलक्षणा दोष इत्यत आह—अविशेषेणेति। अनुवादत्वेऽपि तस्याविशिष्टत्वादित्यर्थ.। ननु यज्ञशब्दस्य प्रयाजादिसाधारण्यात् कथं प्रधानयागमात्रपरतेत्यत्राप्येतदेवोत्तरम्—अविशेषेणेति। यज्ञशब्दस्य अविशेषेण श्रुतस्य प्रकरणेन प्रधानपरत्वादित्यर्थः। तथाच प्रधानयागेषु पुरोडाशादीनां [3]स्फ्यादीनाञ्च समुच्चयो विकल्पो वेति प्राप्ते, सिद्धान्तयति—

**स्वेन त्वर्थेन न्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथाश्रुति स्यु ः ॥**

तुः पूर्वपक्षव्यावृत्तौ। द्रव्याणां-स्फ्यादीनां स्वेनार्थेन-स्वीयेन [4]कार्येण साधनतया सम्बन्ध. अनूद्यते यज्ञायुधानीत्यनेन। कुतः? पृथगर्थत्वात्। "स्फ्येनोद्धन्ति, कपालेषु श्रपयति" इत्यादिना स्फ्यादीनामुद्धननादिरूपभिन्नभिन्नकार्यसयुक्ततया विहितत्वात्। नन्वेव सति यज्ञशब्दस्य यज्ञियोद्धननादिलक्षणादोष इत्यत आह—[5]तस्मादिति। तस्मात्—अनुवादत्वात् यथाश्रुति स्युः स्फ्येनोद्धन्तीत्यादिविध्यनुसारेणैव [6]च स्फ्यादीनि यज्ञायुधशब्दानुवाद्यानि स्युः। अनुवादस्य यथाप्राप्तार्थकतया तत्र लक्षणा न दोषायेति यावत्॥

इतोऽप्येवमित्याह—

**चोद्यन्ते चार्थकर्मसु ॥ ९ ॥**

अर्थकर्मसु-फलाय विहितेष्वाग्नेयादिप्रधानयागेषु "यदाग्नेयोऽष्टाकपालः" इत्याद्युत्पत्तिवाक्यैः पुरोडाशादिद्रव्याणि विधीयन्ते। ततश्चोत्पत्तिशिष्टैस्तैरुत्पन्नशिष्टानामेषा स्फ्यादिद्रव्याणां प्रधानयागेषु समुच्चयविकल्पौ न सम्भवतः। अतोऽपि न तेषु तेषा प्रदेयतया विधिरित्यर्थ.॥

---

१. विधित्वेऽपि. अ, क.
२. इत्यर्थ. अ.
३. स्पयादीना नास्ति. अ.
४. कर्मणा अ.
५. कपुस्तके पदद्वयमिद नास्ति.
६. च नास्ति. अ.

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ १० ॥**

लिङ्गमप्यत्र दृश्यते—"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते । त्रयोदशामावास्यायाम्" इति वाक्यशेषः । प्रयाजाः द्वावाज्यभागौ, स्विष्टकृत्, त्रयोऽनूयाजाः, आग्नेयोपांशुयाजाग्नीषोमीययागीयास्तिस्र प्रधानाहुतयश्चेति पौर्णमास्याञ्चतुर्दश । अमावास्यायान्त्वाग्नेयसान्नाय्यानां प्रधानानां द्वे आहुती इति त्रयोदशाहुतय, दधिपयसोस्सहावदानात् । तदेतत्प्रधानेषु स्फ्यादिद्रव्यविधौ तदाहुतयश्चेत्यतिरेकाद्विरुध्येत । ततोऽपि न स्फ्यादीनां प्रदेयतया प्रधानेषु विधिः । यज्ञायुधानीति त्वनुवाद एव, "यज्ञायुधानि सम्भरति" इत्यव्यवहितसम्भरणविधिस्तुत्यर्थः ॥

इति षष्ठ स्फ्यकपालाधिकरणम् ॥ ६ ॥

७

"पशुना यजेत" इत्यत्र पशुगतमेकत्व यज्ञाङ्ग न वेति सशये, पूर्वपक्षयति—

**तत्रैकत्वमयज्ञाङ्गमर्थस्य णभूतत्वात् ॥११॥**

तत्र पशौ एकत्वं यज्ञाङ्गं न भवति । कुत ? अर्थस्य गुणभूतत्वात्-अर्थस्य पशोरेव याग प्रति गुणभूतत्वात्तदेकत्वस्य च गुणत्वाभावात् । प्रत्ययगम्या ह्येकत्वसङ्ख्या प्रकृत्यर्थे पशावेकपदश्रुत्या अन्वेति, न तु यागक्रियायां, तस्या भिन्नपदस्थत्वात् । पदान्तरसमभिव्याहारलक्षणाद्वाक्यप्रमाणादेव हि यागक्रियायां तस्यान्वयो वाच्य । स च न सम्भवति, वाक्याच्छ्रुतेर्बलीयस्त्वात् । तथाचैकत्वं यागविध्यसंस्पर्शान्न यज्ञाङ्गम् । अत एव ग्रहैकत्ववदविवक्षितम् । तद्विवक्षायां पशुसाधनको याग स च पशुरेक इति वाक्यभेदात् ॥

इतोऽप्येवमित्याह—

**अश्रुतत्वाच्च[१] ॥ १२ ॥**

यत्र सङ्ख्या विवक्षिता तत्र प्रत्ययादन्यस्सङ्ख्याशब्दश्श्रूयते "एकाङ्गां दक्षिणा [२]दद्यात्" इत्यादौ । नैवमत्र श्रूयते । अतोऽपि प्रत्ययगम्यमेकत्वमविवक्षितमित्यर्थः ॥

---

१ एकश्रुतित्वाच्च. २. ददाति. अ.

अत्राशङ्क्य परिहरति—

**प्रतीयत इति चेन्नाशब्दं तत्प्र णत्वात् पूर्ववत् ॥१३॥**

ननु लोके पशुमानय पशू आनयेत्यादावेकत्वादिसङ्ख्या क्रियान्विता विवक्षिता दृश्यते। [1]तथेहाप्यस्त्विति [2]चेत्तन्न, लोके हि तावत् वक्तृतात्पर्यानुसारेण यथाकथञ्चिदेकत्वादि प्रतीयमान विवक्षितमित्युपपद्यते। वेदे त्विह पश्वेक [ त्वम् ] अशब्द प्रत्ययगम्यमपि क्रियानन्वयाद्विवक्षितं न भवति। कुतः? तत्प्रमाणत्वात्-वाक्यार्थावधारणस्य न्यायानुपेतशब्दैकप्रमाणकत्वात्। प्रकृते च [3]शब्दमर्यादया गम्यस्याप्युक्तरीत्या अविवक्षावधारणा न्याय्या। पूर्ववत्-लोकवत्। लोके हि पूर्वो धावतीत्युक्ते अपरः कश्चित् प्रतीयमानोऽपि तस्मिन् धावनसम्बन्धो न विवक्ष्यते। एवमिहापि पश्वेकत्व प्रतीयत एव केवलम्, न तु यज्ञे विधीयते॥

अथ सिद्धान्तयति—

**शब्दस्तूपलभ्यते तदागमे हि[4] दृश्यते तस्य ज्ञानं[5] यथान्येषाम्॥**

तु॰ पूर्वपक्षव्यावृत्तौ। पश्वेकत्वं क्रियान्वितमेव प्रतीयते। कुतः? तदागमे हि दृश्यते तस्य ज्ञानम्—तेषाम् एकद्विबहुवचनानाम् आगमे सति-प्रयोगे सति तस्य एकत्वाद्यन्वितक्रियाबोधः नियमेन दृश्यते लोके। न चैतदन्यथयितुं शक्यते। अतो वेदेऽपि प्रयोजकत्व क्रियान्वितं प्रतीयत इति युक्तम्। यथान्येषाम्—यथा पशुमानय पुरुषमानयेत्यादौ पशुपुरुषादिशब्दार्थत्वेनावधारितानामानयनाद्यन्वयज्ञानं सार्वलौकिक दृश्यत इति वेदेऽपि पशुनेति प्रातिपदिकार्थस्य क्रियान्वयोऽभ्युपगम्यते। तद्वत् प्रातिपदिकार्थवदेकत्वस्यापि क्रियान्वयो न्याय्य इत्युक्तं भवति। तथाहि—पशुनेत्यत्र प्रातिपदिकेन पशुः, प्रत्ययेनैकत्व करणकारकञ्च युगपदभिधीयते, पदस्य युगपत्त प्रसरत्वात्। ततश्च एकपदोपात्तप्रातिपदिकार्थापेक्षया एकप्रत्ययोपात्तकारकस्य सन्निहिततरत्वात् प्रधानत्वाच्च एकत्वं कारकेऽन्वेति, न तु प्रातिपदिकार्थे। सोऽपि तदानीमेव कारकेऽन्वेति। युगपदन्वयाच्चारुणैकहायन्यादिवन्न वाक्यभेदः। न चैवं

---

१. तद्वदिहापि. अ. २. चेन्न. अ. ३. शब्द. क.
४. तद्दृश्यते. ५. ज्ञान हि.

प्रत्ययश्रुत्या सङ्ख्यावरुद्धे कारके कथं दुर्बलया पदश्रुत्या पशोरन्वय इति वाच्यम्। एकत्व [ युक्ते ] न कारकेण यष्टव्यमित्युक्ते किञ्जातीयं तदिति विशेषाकाङ्क्षापूरकत्वेन दुर्बलप्रमाणकस्यापि पशोरन्वयाविरोधात्। न चैकत्वस्य कारकान्वयेऽपि कथं यज्ञाङ्गत्वमिति वाच्यम्। कारकस्य क्रियानिर्वर्त्यैकस्वभावतया तदन्वयेन सामान्यतः क्रियाङ्गत्वे सिद्धे सति यजिसमभिव्याहारेण क्रियायास्तस्या यागरूपक्रियात्वावगमात्। न चैकत्वस्य कारकायोग्यत्वात् कथं यागक्रियान्वय इति वाच्यम्। अरुणैकहायनीन्यायेन (ङि) पशुपरिच्छेदद्वारा तदुपपत्तेः। एतेनैकत्वस्य क्रियान्वये प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तिविरोध इति निरस्तम्। पार्ष्ठिकसम्बन्धेन तदुपपत्तेः। अत. पश्वेकत्वं यज्ञाङ्गम्॥

इतोऽप्येवमित्याह—

## तद्वच्च लिङ्गदर्शनम्॥ १५॥

तद्वदुक्तन्यायवत् लिङ्गदर्शनमप्यत्र साधकं भवति। श्रूयते हि—"कर्णा याम्या., अवलिप्ता रौद्रा., नभोरूपाः पार्जन्या ऐन्द्राग्नो दशमः" इति। अत्र कर्णा याम्या इति बहुवचनेन त्रित्वमुच्यते 'प्रथम वा नियम्येत कारणादतिक्रमस्स्यात्' इति (ढि) न्यायात। तथा अवलिप्ता रौद्रा इत्यत्रापि त्रित्वमवगतम्। एवन्नभोरूपाः पार्जन्या इत्यत्रापि। तथाच नव पशवः। ऐन्द्राग्न पशुर्दशम इत्यर्थः। यद्येकत्वन्न विवक्ष्येत तर्हि तन्न्यायेन त्रित्वाविवक्षायामैन्द्राग्नो दशम इति नोपपद्येत। अतोऽपि विज्ञायते सङ्ख्या विवक्षितेति॥

इतोऽप्येवमित्याह—

## तथा लिङ्गम्॥ १६॥

एव सत्येव पशुनेति तुल्यश्रुतिक लिङ्गमपि विवक्षितं भवति। अन्यथा तदप्यविवक्षित स्यात्। तथा च "वसन्ते प्रातराग्नेयीं कृष्णग्रीवीमालभेत। ग्रीष्मे मध्यंदिने संहितामैन्द्रीं शरद्यपराह्णे श्वेता बार्हस्पत्याम्" इति विहितपश्वनुवादेन "गर्भिण्यो भवन्ति" इति नित्यवद्विधानमनुपपन्न स्यात्। अतोऽप्येकत्वं विवक्षितम्। एका गामित्यादौ त्वेकादिशब्दोऽनुवाद। नन्वेकत्वस्याविवक्षितत्वेऽपि 'प्रथम वा नियम्येत' इति न्यायेन द्व्यादीनान्निवृत्तिसिद्धेरफलोऽय विचार इति चेत्, "अनड्वाहावालभेत कपिञ्जलानालभेत" इत्यादिविषये विचारस्सफल इत्यदोषः॥

इति सप्तमं पश्वेकत्वाधिकरणम्॥ ७॥

वाक्येन दृष्टार्थतया विशिष्टरूपो यागो न विधीयते, येनादृष्टकल्पना न सम्भवेत्। "समिधो अग्न आज्यस्य वियन्तु" इत्यादितदीययाज्यासु हि तदीया एव द्रव्यदेवतास्सङ्कीर्त्यन्ते, न तु परकीयाः। स्वीयद्रव्यदेवतास्मरणञ्च तद्विशिष्टयागस्वरूपनिष्पत्तावुपयुज्यमानं न तस्य प्रयोजनं भवितुमर्हति। ततश्च तत्राचोदितस्यापि त्यागांशस्य दृष्टासम्भवादगत्या[1] अदृष्टार्थता कल्प्यते। इह तु विशिष्टस्य याज्यया परकीयदेवतास्मरणलक्षणप्रयोजनलाभान्न त्यागांशस्यापूर्वार्थता ॥

अथ याज्याकरणकदेवतोद्देश्यकप्रक्षिप्यमाणद्रव्यत्यागो यज्यर्थ इत्यभ्युपेत्यैव सिद्धान्ती निराचष्टे—

**स्याद्वा द्रव्यचिकीर्षायां भावेऽर्थे गुणभूतताश्रयाद्धि गुणभावः[2] ॥१९॥**

द्रव्यग्रहणमुपलक्षणम्। चिकीर्षायामित्यनन्तरं सत्यामपीति शेषः। स्यादेव त्यागांशस्यापूर्वम्, अवयवस्य स्वरूपेणाचोदितत्वेऽपि अवयविचोदनायास्सर्वावयवगोचरतया एकावयवानर्थ[क्येऽ]पि सार्थक्यासम्भवेन त्यागांशस्यापि प्रयोजनाकाङ्क्षतया तत्रादृष्टप्रयोजनकल्पनाया आवश्यकतत्वात्। ततश्च सत्यामपि द्रव्यदेवताचिकीर्षाया मन्त्रांशेन द्रव्यदेवतासंस्कारे सत्यपि भावेऽर्थे-भाव्ये अपूर्वे त्यागांशस्य गुणभूतता साधनता। ननु स्विष्टकृदादौ द्रव्यदेवतयोस्संस्कार्यत्वेन शेषितया ताभ्यां यागस्य कथमुत्पत्तिः। कथन्तरं तत्रापूर्वकल्पनमित्यत आह—आश्रयादिति। हि यतः मन्त्रांशं प्रक्षेपांशञ्च प्रत्येव तयोस्संस्कार्यत्वेन शेषित्वाश्रयण[म्] त्यागांशं प्रति तयोश्शेषभावो न विरुद्ध इत्यर्थः। पूर्वपक्षे उत्तमप्रयाजस्य दृष्टार्थत्वादवान्तरापूर्वाभावादभिक्रमणादिकं न तदङ्गम्। सिद्धान्ते त्ववान्तरापूर्वाङ्गम्। तथा पशुपुरोडाशस्यापूर्वाभावे तत्र तत्प्रयुक्तदार्शपूर्णमासिकधर्माननतिदेशः। तदपूर्वसद्भावे तु तदतिदेशः। स्विष्टकृति त्वपूर्वाभावे स्विष्टकृदर्थावदाननाशे सति 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्' इति वक्ष्यमाणन्यायेन द्रव्यस्य पुनरुत्पादनाभावाल्लोप एव। अपूर्वसत्वे तु तदर्थं "यस्य सर्वाणि हवींषि नश्येयुराज्येन देवताः प्रतिसङ्ख्याय यजेत" इत्याज्येन स्विष्टकृत्कर्तव्य इति ॥

इति नवममाश्रय्यधिकरणम् ॥ ९ ॥

---

१ अगम्या इति मातृकासु पाठः। २. गुणभूतत्वादाश्रयाद्धिगुणीभाव.

९

दर्शपूर्णमासयोरुत्तमप्रयाजे "स्वाहाग्निं स्वाहा सोमम्" इत्यादि याज्यानिगदे[1] इष्टा यक्ष्यमाणाश्च देवतास्सङ्कीर्त्यन्ते। तस्य च कृताकृतप्रत्यवेक्षणं दृष्टं प्रयोजनमिति मन्त्रांशे तस्योत्तमप्रयाजस्य इष्टयक्ष्यमाणदेवतास्मरणरूपदृष्टार्थत्वमविवादम्। त्यागांशे तस्यादृष्टार्थत्वमस्ति न वेति संशयः। तथा स्विष्टकृद्यागे "अयाडग्नेः प्रिया धामानि" इत्यादियाज्यानिगदेऽपि इष्टा यक्ष्यमाणाश्च देवतास्सङ्कीर्त्यन्ते कृताकृतप्रत्यवेक्षणाय। होमश्च तस्यास्ति प्रक्षेपात्मा। स च यज्ञदेशरिक्तीकरणरूपदृष्टार्थश्शेषहविस्संस्कारः। त्यागांशस्यादृष्टार्थत्वमस्ति न वेति चिन्त्यते। तथा पशुपुरोडाशयागेऽपि "इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहि" इत्यादिमन्त्रमुखेन पशुदेवतास्मरणरूपदृष्टार्थ एव। त्यागांशस्य त्वदृष्टार्थत्वमस्ति न वेति चिन्त्यते। तत्र सिद्धान्तेनोपक्रमते—

**आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १७ ॥**

परकीयद्रव्य देवतां तदुभयं वा ये आश्रयन्ति संस्कुर्वन्ति, तेष्वाश्रयिषूत्तमप्रयाजादिषु भावोऽर्थः-भाव्यमपूर्वं प्रतीयेत। कुतः ? अविशेषेण—"समिधो यजति" इत्यादिभिरदृष्टार्थैरविशेषात् ॥

अथ पूर्वपक्षी याज्याकरणकदेवतोद्देश्यकप्रक्षिप्यमाणद्रव्यत्यागो यज्यर्थ इति मत्वा प्रत्यवतिष्ठते—

**चोदनायान्त्वनारम्भोऽविभक्तत्वान्न ह्यन्येन विधीयते ॥१८॥**

तुः प्रत्यवस्थाने। चोदनाया उत्तमप्रयाजादिविधौ। अनारम्भः-त्यागांशा-(पूर्वस्यानुत्पत्तिः। कुत. ? अविभक्तत्वात्। त्यागांशस्य यागैकदेशत्वादित्यर्थः। यागो हि याज्याकरणकदेवतोद्देश्यकप्रक्षिप्यमाणद्रव्यत्यागात्मको विशिष्टरूपश्चोदितः। न तु तदेकदेश ) स्त्यागांशः, विशिष्टरूपस्यैव यज्यर्थत्वात्। विशिष्टरूपस्य च तस्य विहितस्य फलाकाङ्क्षस्य याज्यासमर्पितदेवतास्मरणादिदृष्टप्रयोजनेनैव निराकाङ्क्षतय तदेकदेशस्य त्यागांशस्याचोदितस्य पृथक् फलाकाङ्क्षाविरहान्नादृष्टार्थता। नन्वेवं सति समिदादियागानामपि याज्यादिविशिष्टरूपेणैव चोदितत्वाददृष्टार्थता न स्यादित्यत आह—नहीति। विषमोऽयमुपन्यासः। हि यस्मात् अन्येन-समिदादि-

१. निगमे क ( ) चिन्हान्तर्गतो भाग अपुस्तके त्रुटित ।

वाक्येन दृष्टार्थतया विशिष्टरूपो यागो न विधीयते, येनादृष्टकल्पना न सम्भवेत् । "समिधो अग्न आज्यस्य वियन्तु" इत्यादितदीययाज्यासु हि तदीया एव द्रव्यदेवतास्सङ्कीर्त्यन्ते, न तु परकीयाः । स्वीयद्रव्यदेवतास्मरणञ्च तद्विशिष्टयागस्वरूपनिष्पत्तावुपयुज्यमानं न तस्य प्रयोजनं भवितुमर्हति । ततश्च तत्राचोदितस्यापि त्यागांशस्य दृष्टासम्भवादगत्या[1] अदृष्टार्थता कल्प्यते । इह तु विशिष्टस्य याज्यया परकीयदेवतास्मरणलक्षणप्रयोजनलाभान्न त्यागांशस्यापूर्वार्थता ॥

अथ याज्याकरणकदेवतोद्देश्यकप्रक्षिप्यमाणद्रव्यत्यागो यज्यर्थ इत्यभ्युपेत्यैव सिद्धान्ती निराचष्टे—

**स्याद्वा द्रव्यचिकीर्षायां भावेऽर्थे गुणभूतताश्रयाद्धि गुणभावः ॥१९॥**

द्रव्यग्रहणमुपलक्षणम् । चिकीर्षायामित्यनन्तरं सत्यामपीति शेषः । स्यादेव त्यागांशस्यापूर्वम्, अवयवस्य स्वरूपेणाचोदितत्वेऽपि अवयविचोदनायास्सर्वावयवगोचरतया एकावयवानर्थ[क्येऽ]पि सार्थक्यासम्भवेन त्यागांशस्यापि प्रयोजनाकाङ्क्षतया तत्रादृष्टप्रयोजनकल्पनाया आवश्यकतत्वात् । ततश्च सत्यामपि द्रव्यदेवताचिकीर्षायां मन्त्रांशेन द्रव्यदेवतासंस्कारे सत्यपि भावेऽर्थ-भाव्ये अपूर्वे त्यागांशस्य गुणभूतता साधनता । ननु स्विष्टकृदादौ द्रव्यदेवतयोस्संस्कार्यत्वेन शेषितया ताभ्यां यागस्य कथमुत्पत्तिः । कथन्तरं तत्रापूर्वकल्पनमित्यत आह—आश्रयादिति । हि यत मन्त्रांशं प्रक्षेपांशञ्च प्रत्येव तयोस्संस्कार्यत्वेन शेषित्वाश्रयण[म्] त्यागांशं प्रति तयोश्शेषभावो न विरुद्ध इत्यर्थः । पूर्वपक्षे उत्तमप्रयाजस्य दृष्टार्थत्वादवान्तरापूर्वाभावादभिक्रमणादिकं न तदङ्गम् । सिद्धान्ते त्ववान्तरापूर्वाङ्गम् । तथा पशुपुरोडाशस्यापूर्वाभावे तत्र तत्प्रयुक्तदार्शपूर्णमासिकधर्मानतिदेशः । तदपूर्वसद्भावे तु तदतिदेशः । स्विष्टकृति त्वपूर्वाभावे स्विष्टकृदर्थावदाननाशे सति 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्' इति वक्ष्यमाणन्यायेन द्रव्यस्य पुनरुत्पादनाभावाल्लोप एव । अपूर्वसत्वे तु तदर्थं "यस्य सर्वाणि हवींषि नश्येयुराज्येन देवता· प्रतिसङ्ख्याय यजेत" इत्याज्येन स्विष्टकृत्कर्तव्य इति ॥

इति नवममाश्रय्यधिकरणम् ॥ ९ ॥

---

१. अगत्या इति मातृकासु पाठः । २. गुणभूतत्वादाश्रयाद्धिगुणीभाव.

१०

प्रयुक्तिविचारं प्रतिज्ञाय गोदोहनादीनां शेषित्वविचारमुखेन प्रयुक्तिविचारोऽनुक्रान्तः। इदानीं साक्षादेव प्रयुक्तिर्विचार्यत इति प्रतिजानीते—

**अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥२०॥**

अतः प्रभृति दध्यादिद्रव्याणामानयनादिकर्मणाञ्च अर्थे-प्रयुक्तिविषये समवैषम्यं विचार्यते। समविषमयोर्भावस्समवैषम्यम्। "गुणवचनब्राह्मणादिभ्यः" इति ष्यञ् प्रत्यया[दु]त्तरपदवृद्धि। "मैत्रावरुणाय दीक्षितदण्डं प्रयच्छति" इत्यत्र दीक्षितसस्कारः, मैत्रावरुणाय दानञ्च दण्डस्य प्रयोजकतायां समम्। "तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र तु आमिक्षा दध्यानयनस्य प्रयोजिका, न तु वाजिनमिति वैषम्यमित्येवं साक्षादेव प्रयुक्तिविचारः प्रस्तूयत इति यावत् ॥

इति दशमं प्रयुक्तिप्रतिज्ञाधिकरणम् ॥ १० ॥

११

किमामिक्षा वाजिनञ्चेत्युभयमपि तप्ते पयसि दध्यानयनस्य प्रयोजकम्? उतामिक्षैव तत्प्रयोजिका? इति संशये, पूर्वपक्षयति—

**एकनिष्पत्तेस्सर्वं स्यात् ॥ २१ ॥**

सर्वं आमिक्षा वाजिनञ्चेत्युभयमपि तत्प्रयोजकत्वे समम्। कुतः? एकनिष्पत्तेः। एकस्मिन् दध्यानयने कृते सति एकदैव आमिक्षा वाजिनञ्च निष्पद्यते। साध्यञ्च साधनमनुष्ठापयतीत्युक्तम्। दध्यानयनसाध्यत्वञ्चोभयोरप्यविशिष्टमित्युभयमपि तत्प्रयोजकम् ॥

अथ सिद्धान्तयति—

**संसर्गरसनिष्पत्तेरामिक्षा प्रधानं स्यात् ॥२२॥**

आमिक्षैव दध्यानयनस्य प्रयोजिका, न तु वाजिनम्। कुतः? यतः तप्तं पय एवानयन प्रति प्रधानं कर्म। तथाहि—आनयतिर्द्विकर्मक.। यथा ग्राममजां नयतीति। इह च दधि तावच्छब्दत' प्रधान कर्म, आनयन[1]क्रियया व्याप्यमानत्वात्।

१. क्रियाव्याप्य. अ.

यत् पय प्रति दध्यानीयते तत् द्वितीयं कर्म। तदेव चानयनकर्मीभूतेनापि दध्ना व्याप्यमानत्वादर्थतः प्रधानम्। न च पयसः कर्मत्वे सप्तम्यनुपपत्तिरिति वाच्यम्, 'अगारे गावो वास्यन्ताम्' इत्यादिवत्तदुपपत्तेः। तथा हि—सप्तमीनिर्दिष्टस्य हि द्वे रूपे—अधिकरणत्वात् गुणभूतत्वम्, आधेयेन व्याप्यमानत्वेन कर्मतया प्रधानत्वञ्च। तत्र यस्सप्तमीनिर्दिष्टाधिकरणताबलादाधेयेन व्याप्यमानत्वरूपोऽर्थ, स एव प्रकृते गृह्यते, द्विकर्मकस्यानयतेर्द्वितीयकर्मापेक्षत्वात्। न तु शाब्दोऽपि गुणभावः, अनपेक्षितत्वात्। सप्तम्या चानयनकर्मणा व्याप्यमानस्य कर्मणः पयसस्ततोऽपि प्रधानभूतस्यापि नान्तरीयकाधिकरणभावोऽप्यस्तीति द्वितीयकर्मप्राधान्यसिध्यर्थं गुणभावोऽनूद्यते, न तु स विवक्ष्यते। यदि च तप्तं पयो दध्यानयनीति द्वितीययैव प्रधान कर्म [1]निर्दिश्येत, तदा विनिगमनाविरहान्नैकमपि प्रधानतया निर्णीयेत। सप्तम्या तन्निर्देशे तु आधारभूत कर्म प्रति द्वितीयानिर्दिष्टं कर्म आधेयभूतन्निर्णीयत इति द्वितीयानिर्दिष्टकर्मणापि व्याप्यमानत्वात् सप्तमीनिर्दिष्ट कर्म प्रधानतया निर्णीयत इति सप्तमीनिर्देशो नानुपपन्न.। तथा च तप्तं पयो दध्यानयनेन सस्कुर्यादिति [2]पूर्ववाक्यस्यार्थ.। उत्तरवाक्ये च 'सा' इति तच्छब्दः पूर्ववाक्यस्थ दध्यानयनसस्कृत पय. परामृशति, सर्वनाम्नां प्रधानपरामर्शित्वात्। स्त्रीलिङ्गन्तु समानाधिकरणामिक्षापदापेक्षया द्रष्टव्यम्। आमिक्षापद हि पयसि घनीभावनिबन्धनम्। तप्ते पयसि च दध्यानयने कृते पयोऽवश्य घनीभवतीत्यामिक्षापदन्नित्यानुवादः। दध्यानयनसंस्कृतं पयो विश्वदेवताकमित्येव विवक्षितम्। ततश्च दध्यानयनस्य घनीभवत् पयोविशेषात्मकामिक्षार्थत्वादामिक्षैव तत्प्रयोजिका, न तु वाजिनम्। ननु वाजिनमपि पयः किन्न स्यादित्यत आह—ससर्गरसनिष्पत्तेरिति। ससर्गेति कर्मणि घञ्। संसृष्टयोः तिक्तकटुकरसयोर्वाजिने निष्पत्तेः, पयसश्च मधुरत्वात्। नन्वामिक्षा न पय., अम्लमधुरोभयरसत्वेन तद्विलक्षणत्वात्। किन्तु पयोपेक्षया अर्थान्तरमेवामिक्षा। सा इति तच्छब्दश्च "अथैष विश्वज्योति" इत्यादिवत् [[5]प्रास्य]मानपरः। दध्यानयने कृते उभयस्यापि निष्पत्त्यविशेषात् पयस्संयोगाभावेन तत्सस्कारार्थतया

---

१. निर्दिश्यते. अ.
२. पूर्ववाक्यार्थं क.
३. वाक्ये सेति. अ.
४. आम्ल. अ.
५. प्रध्वस्यमानपर अ, प्रक्रस्यमानपर क.

दध्यानयनस्य विनियोगाभावाच्च सामर्थ्यादुभयप्रयोज्यदध्यानयनमित्यत्राप्येत-देवोत्तरम्—संसर्गरसनिष्पत्तेरिति। ससर्जकदधिगतरसस्यैव पयस्युपलब्धेरित्यर्थः। एवञ्चाम्लमधुरोभयरसत्वमसिद्धमिति केवलमधुररसविशेषवत्वान्न [1]पयसोऽर्थान्तर-मामिक्षेति भाव.। ससर्गः अवयवसंश्लेषविशेषः काठिन्यम्। रसेत्यर्श आद्यच्। 'गुणवचनेभ्यो मतुपो लुगिष्ट' इति लुप्तो वा मतुप्। काठिन्यस्य माधुर्यविशेषवति केवले पयसि अतितापेन निष्पत्तेरित्यर्थः। अतितापेन [2]सान्द्रीभूतेऽपि पयसि केवलमाधुर्यविशेषेण पयस्त्वप्रतीतेः काठिन्यन्न पयस्त्वविरोधीति भावः। नन्वम्ल-रसबलाद्दध्येवामिक्षा, मधुररसस्तु तत्ससृष्टपयस इति वैपरीत्यं किं न स्यात्। सा इति तच्छब्दस्य शाब्दप्राधान्यानुसारेण दधिपरत्वस्य सम्भवात्, राज्ञ पुरुष तमानये-त्यत्र शब्दतः प्रधानस्यैव तच्छब्देन परामर्शादित्यत्राप्येतदेवोत्तरम्—संसर्गरस-निष्पत्तेरिति। काञ्जिकादिद्रव्यान्तरसंसर्गादपि रसस्य रसवत. माधुर्यविशेषवत. [पयस. घनीभावनिष्पत्ते। काञ्जिकादिनापि घनीभूते आमिक्षापदप्रयोगदर्शनान्न दध्यामिक्षेति यावत्।] ननु पयस आमिक्षात्वे इदं पयः इयम् आमिक्षेति कथं लोके भेदव्यपदेश'। कथञ्च वेदे "तस्यै शृतं तस्या आमिक्षा" इति शृतशब्दवाच्या-त्पयस आमिक्षाभेदेन व्यपदिश्यत इत्यत्राप्येतदेवोत्तरम्—संसर्गरसनिष्पत्तेरिति। संसर्गेति कर्मणि घञ्। ससृष्टाम्लमधुरोभयरसवत्वनिमित्तभेदेन व्यवहारभेदस्य निष्पत्तेरित्यर्थ'। अवस्थाभेदनिबन्धनो भेदव्यवहार इति यावत्। अत पय एव घनीभूतमामिक्षा॥

इतोऽप्येवमित्याह—

## मुख्यशब्दाभिसंस्तवाच्च ॥ २३ ॥

"तप्ते पयसि दध्यानयति" इति वाक्ये [3]प्रथमोपात्तो यः पयश्शब्दः तेनैव शब्देन एतद्यागीयपुरोनुवाक्यामन्त्रे आमिक्षाया परामर्शो दृश्यते "जुषन्तां युज्यं पयः" इति। युज्यं दधियुक्तं पय विश्वेदेवा प्राप्नुवन्त्वित्यर्थः। अतोऽपि पय एवामिक्षा। किञ्च "मिथुन वै शृतञ्च दधि च यत् संसृष्टम्" इति प्रस्तुत्य "गर्भ इवामिक्षा, आप इव वाजिनम्" इति गर्भत्वेनामिक्षा स्तूयते। वाजिनन्त्वा गर्भोदकत्वेन।

१. पयसोऽप्यर्थान्तर, अ.
२ सार्द्रीभूते. अ, क.
[ ] अनुम्नके ग्रन्थपात
३. प्रथमोपात्त पय. पयश्शब्द. अ, क.

सप्तमपदं कस्येत्यपेक्षायां प्रकृतैकहायन्या पदेनावश्यमन्वयो वाच्यः। अन्यथा वाक्यस्यापरिपूरणात्। तस्मादेकहायन्या उभयार्थत्वात्तन्नयनमप्युभयार्थमिति चेन्न; "एकहायन्या क्रीणाति" इति क्रयार्थतयैव निर्ज्ञाताया एकहायन्या प्रसङ्गात् पदपांसुग्रहणोपकारकतया सम्बन्धमात्रेण सप्तमपदवाक्यस्य निराकाङ्क्षतया तदर्थत्वा[वेदक] प्रमाणाभावेन एकहायन्याः क्रयमात्रार्थत्वात्। तस्मात् सोमक्रयणमेवैकहायनीनयनस्य प्रयोजकम्, न तु पदपांसुसाध्याक्षाञ्जनमपि। प्रयोजनम्–सप्तमपदस्य ग्रावणि प्रक्षेपे तत्पांसूनां विनाशे च पुनरेकहायनी नेतव्या। सिद्धान्ते तु पांस्वन्तरेणाक्षाञ्जनं कार्यम्। न च पदपांसूना परद्रव्योपजीवित्वात् तन्नाशे तत्कार्यस्याक्षाञ्जनस्य लोप एव युक्त इति वाच्यम्। पांसुद्रव्यं हि न परप्रयुक्तम्। किन्तु तस्य यस्संस्कार एकहायनीसप्तमपदनिधानात्मकस्स एव परप्रयुक्त। तथा च संस्कारस्य 'परप्रयुक्तत्वलाभेऽपि[1] असंस्कृतैरेवाक्षाञ्जनं कार्यम्। अन्यथा तद्वैगुण्यप्रसङ्गात्॥

इति द्वादश पदकर्मन्यायाधिकरणम्॥ १२॥

१३

दर्शपूर्णमासयोश्श्रूयते—"कपालेषु श्रपयति" इति "पुरोडाशकपालेन तुषानुपवपति" इति च। तत्र किं पुरोडाशश्रपणं तुषोपवपनञ्चेत्युभयं कपालस्य प्रयोजकम्? उत पुरोडाशश्रपणमेव? इति संशयः। तत्र तृतीयासप्तमीनिर्देशाभ्यां कपालस्योभयशेषत्वावगमादुभय कपालस्य प्रयोजकम्। न च पुरोडाशकपालेनेति पुरोडाशार्थकपालत्वेन रूपेण तुपोपवपनेऽन्वयदर्शनात् कपालं प्रत्यनन्यथासिद्धशेषित्व श्रपणस्यैवेति तदेव कपालस्य प्रयोजकमिति वाच्यम्। न ह्यत्र पुरोडाशार्थं सदेव कपालन्तुषोपवपने विनियुज्यते। अन्यार्थत्वेनावगतस्य तुषोपवपनायोगात्, किन्तु पुरोडाशमतन्त्रीकृत्य कपालत्वेनैव रूपेण पुरोडाश इव तुपोपवपनेऽपि विनियुज्यते। तथा विनियुक्तञ्च कपालं लाघवात् प्रयोगदशायामेकमेवोभयार्थमुपादीयत इति पुरोडाशग्रहणमनुवाद। कपालेनेत्येतावदेव विधिः। तस्मा[दुभयं]कपालस्य प्रयोजकमिति प्राप्ते, सिद्धान्तयति—

---

१. परप्रयुक्तस्याभावेऽपि अ, क

**अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥२५॥**

अभिधानेति कर्मणि ल्युट्। अर्थेन-पुरोडाशलक्षणप्रयोजनेन सहाभिधीयमानं यत्पुरोडाशकपालन्तस्य यच्छेषिभूत कर्म तुषोपवपनं तत् कपालस्य प्रयोजकञ्च भवति। नयनस्य पदकर्मेव। कुतः ? तदर्थो हि विधीयते—हि यस्मात् तदर्थः पुरोडाशार्थ एव कपालविशेष तुषोपवपने विधीयते। ननु कपालस्य कथ पुरोडाशसम्बन्धः, तुषोपवपनकाले तदभावादित्यत आह—भविष्यतेति। भविष्यता पुरोडाशेन संयोगस्य तस्मिन् पुरोडाशार्थत्वे निमित्तत्वात्।

अयमाशयः—तुषोपवपने तावत् कपालत्वेन कपालञ्च विधीयते। पुरोडाशकपालस्य निरर्थकानुवादत्वापातात्। नापि पुरोडाशसम्बन्धित्वेन रूपेण तद्विधिः। तेन वेषेण तस्य निराकाङ्क्षतया अन्यसम्बन्धायोग्यत्वात्। किन्तु गङ्गापदेन वस्तुतो गङ्गातीरस्यैव तीरत्वेनाकारेण प्रतीतिवत् पुरोडाशकपालपदेनापि पुरोडाशार्थत्वाधिष्ठानलक्षणया पुरोडाशप्रयुक्तकपालस्यैव केवलकपालत्वेन रूपेण प्रतीतस्यान्यत्रापि तुषोपवपने विनियोगो निर्बाधः। ततश्च पुरोडाशार्थत्वरूपेण कपालस्य विनियोगाभावेऽपि पुरोडाशार्थत्वरूपमुख्यार्थानुसन्धानानन्तरन्तदधिष्ठानस्य लक्षणीयतया तुषोपवापे विनियोगात्पूर्वमेव पुरोडाशार्थत्वरूपेण विनियोगस्यावगतत्वेन पुरोडाशप्रयुक्तमेव कपालन्तुषोपवापमुपजीवति, न तु स्वयं प्रयुङ्क्ते; प्रयुक्तस्य पुनः प्रयोगायोगात्। नन्वेवमपि भविष्यता पुरोडाशेन सयुक्त कपालं न तुषोपवापे चोद्यते। येन तुषोपवापेन प्रयोजयेत्। किन्तु भूतेन पुरोडाशेन पूर्वस्मिन् प्रयोगे यत् पुरोडाशसंयुक्तमासीत्तेन कपालेन तुषानुपवपेदिति। तथाचास्मिन् प्रयोगे प्रयोगान्तरीयपुरोडाशार्थस्य कपालस्य तुषोपवपनं प्रयोजक स्यादिति चेन्न; तथा सति पुरोडाशकपालपदस्य लक्षणाप्रसङ्गात्। न हि पूर्वं श्यामे इदानीं पाकरक्तघटे श्यामशब्दो मुख्यो भवति। न च भविष्यता संयोगेऽपि लक्षणा तुल्या। वर्तमानसंयोग एव शब्दस्य मुख्यत्वात्। न हि पाकाद्रक्तीभविष्यति घटे रक्तशब्दो मुख्यो भवतीति वाच्यम्। पुरोडाशस्य भविष्यत्वेऽपि आद्यपरिस्पन्दप्रभृति फलनिष्पत्तिपर्यन्तकालस्य वर्तमानकालत्वेन पात्रासादनकाल एव पुरोडाशात्मकप्रयोजनं मनसि निधाय

तन्निर्वृत्तीच्छया सम्पाद्यासादितस्य कपालस्य वर्तमानपुरोडाशार्थत्वसम्बन्धोपपत्तेः। तस्मात्तुषोपवापो न कपालं प्रयोजयति ॥

प्रयोजनम्-पूर्वपक्षे-सौर्यचरौ कपालमुपादातव्यम्। सिद्धान्ते-न, किन्तु "हस्तेन तुषानुपवपति" इति बह्वृचब्राह्मणोक्त एव पक्ष आश्रयणीय इति ॥

इति त्रयोदशं तुषोपवापाधिकरणम् ॥ १३ ॥

१४

अग्नीषोमीये पशौ "हृदयस्याऽग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इत्यादि श्रुतम्। "शकृत् सम्प्रविध्यति लोहितन्निरस्यति" इति च। तत्र हृदयादि शकृल्लोहितञ्चेत्युभयं पश्वालम्भस्य प्रयोजकम्? उत हृदयाद्येव, न तु शकृल्लोहितम्? इति संशय। उभय प्रयोजकमिति ब्रूमः। दध्यानयनस्य तावत् पयस्सम्बन्धित्वेन श्रुतत्वात् पयोरूपामिक्षामात्रार्थत्वमिति युज्यते। पशोस्तु हृदयादिसंयुक्तत्वेनाश्रवणान्न तन्मात्रार्थत्वम्। तथा कपालस्य पुरोडाशसंयुक्तत्वेन श्रुतस्य तुषोपवापे विनियोगाद्युक्तं पुरोडाशमात्रप्रयुक्तत्वम्। पशोस्तु न हृदयादिमात्रप्रयुक्तत्वम्। तत्सम्बन्धेन श्रुतस्यान्यत्र शकृल्लोहिते विनियोगाभावात्। तथा एकहायनीनयनस्य सोमक्रयपदकर्मोभयसम्बन्धित्वेनाश्रवणेऽपि एकहायन्याः क्रयार्थत्वेन श्रवणान्नयनस्यापि तत्संस्कारकतया तादर्थ्यम्। प्रकृते तु न तथा किञ्चिन्नियामकमस्ति। हृदयादीनां सम्बन्ध्यपेक्षायां सन्निधानादग्नीषोमवाक्यगतपशुसम्बन्धीत्येतत्[1] शकृल्लोहितयोरपि तुल्यम्। तस्मादुभयं प्रयोजकमिति प्राप्ते, सिद्धान्तयति—

**पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २६ ॥**

पशौ विषये लोहितशकृतोः अप्रयोजकत्वं तदर्थतया पश्वनालम्भात्। पशोर्हि स्वरूप विशसनादिना नष्टमिति न तस्य साक्षाद्यज्ञसाधनता। किन्तु हृदयादिहविः प्रकृतितया। हविष्ट्वञ्च हृदयादीनामेव न तु लोहितशकृतोः। तेषामेव हविस्संस्कारकावदानसंयोगादिति दशमे वक्ष्यते 'पशोरेकहविष्ट्वं समस्तचोदितत्वात्' इत्यत्र। तथा च हृदयादिद्वारा यागार्थस्यैव पशोश्शकृल्लोहिताभ्यां सम्बन्धात्तयोः पुरोडाशकपालवन्न प्रयोजकत्वम्। ननु शकृत्प्रव्यथनं लोहितनिरसनञ्चार्थकर्मैव, न तु

1. सम्बन्धित्वे तत्. अ.

संस्कारकर्म, तयोर्भूतभाव्युपयोगाभावात्। ततश्च तयोरपि प्राणिसम्बन्धत्वात् प्राण्यपेक्षायां सन्निहितपशोरेव तत्सम्बन्धित्वेनान्वयात्तद्द्वारा तयोर्यागसाधनत्व-मवर्जनीयम्। एवञ्च शकृल्लोहितयोरवदानसयोगाभावेन हविष्ट्वासम्भवेऽपि तत्कर्मणोरर्थकर्मतया प्रयोजकत्वं दुर्वारमिति चेन्न; तयोर्भूतभाव्युपयोगविधुर-त्वेऽपि आकीर्णकरत्वेन पिष्टलेपफलीकरणादिवदनुनिष्पन्नस्यापि प्रतिपाद्यत्वा-विरोधात्। तस्माच्छकृल्लोहितन्न प्रयोजकम्। प्रयोजनम् पूर्वपक्षे—शकृल्लो-हितयोरपचारे पुनः पशुरुत्पाद्यः। सिद्धान्ते तु-तत्कर्मलोपः॥

इति चतुर्दश लोहितशकृन्निरसनाधिकरणम्॥१४॥

१५

दर्शपूर्णमासयोश्श्रूयते "उत्तरार्धात् स्विष्टकृते समवद्यति" इति। तत्र पुरो-डाशस्य अग्न्यादियागः स्विष्टकृद्यागश्चेत्युभयं प्रयोजकम्? उताग्न्यादियाग एव प्रयोजकः, न तु स्विष्टकृद्यागः? इति संशयः। तत्रोभयस्यापि पुरोडाशसाध्यत्वा-विशेषात् "एकनिष्पत्तेस्सर्वं सम स्यात्" इति न्यायादुभय प्रयोजकमिति प्राप्ते, सिद्धान्तयति—

**एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्॥ २७॥**

पुरोडाशैकदेशद्रव्यकं स्विष्टकृत्कर्मापि लोहितशकृदिव न प्रयोजकम्। कुतः? उत्पत्तौ विद्यमानसंयोगात्। "यदाग्नेयोऽष्टाकपालः" इत्युत्पत्तिदशायामग्न्यादि-यागार्थतया विद्यमानेन-विद ज्ञाने, अवगम्यमानेन [1]पुरोडाशेन एकदेशद्रव्यकस्विष्ट-कृतस्संयोगात् कस्योत्तरार्धादित्याकाङ्क्षायामग्न्यादियागार्थपुरोडाशस्येति हि लभ्यते, प्रकृतत्वात्; न तु द्रव्यान्तरस्येति प्रकृतेनैव तदाकाङ्क्षाशान्तेः। तथाच परप्रयुक्तो-पजीवित्वान्न स्विष्टकृत् प्रयोजकः।

अत्र पूर्वपक्षी प्रत्यवतिष्ठते, निराचष्टे च सिद्धान्ती—

**निर्देशात्तस्यान्यदर्थादिति चेन्न शेषसन्निधानात्॥ २८॥**

[2]तस्य-पुरोडाशस्य आग्नेय इत्येवं तद्धितश्रुत्या कार्त्स्न्येनाग्न्यादिदेवताकस्य निर्देशात्। दिश अतिसर्जने, निश्शेषमग्न्यादिदेवतयैक्यज्ञानात्पक्वान्नस्य च पुनर्दे-

---

१. पुरोडाशेन नास्ति. ग २. यत्तस्य अ, एतस्य. क.

वतान्तराय त्यागायोगात् अर्थात्—स्विष्टकृल्लक्षणकार्यवशादन्यत् द्रव्यं पुरोडाशान्तरमुत्पाद्यम् । "शेषात्स्विष्टकृते समवद्यति" इति शेषशब्दस्त्वन्यपर्यायः । पात्नीवते "आज्येन शेषम्" इत्यत्र यथेति चेत्तन्न; कुतः ? शेषसन्निधानात् । शेषस्य अग्न्यादिपरार्थपुरोडाशस्य सन्निधानात्—प्रकृतत्वात् । यस्मिन् अनुत्पादिते शेषकार्यन्न सिध्यति तदेव कार्यवशादुत्पाद्यम् । प्रकृते च परार्थपुरोडाशस्यैव सन्निहितस्योत्तराधात् स्विष्टकृद्यागे सम्भवति सति न पुरोडाशान्तरमुत्पादयितव्यम् । न च त्यक्तस्य कथ पुनस्त्याग इति वाच्यम् । एकस्मै त्यक्तस्यापि पुनस्स्वीकृत्यान्यस्मै त्यक्तुं शक्यत्वात् । "दत्तं न पुनराददयात्" इति स्मृतिस्तु श्रुतिविरोधाद् बाध्या । तदेवं कृत्स्नः पुरोडाश आग्नेय इत्यभ्युपगम्य शेषसन्निधानादित्येतदेवं भाष्ये व्याख्यातम् । द्व्यवदानमेवाग्नेयमिति सर्वप्रदानाधिकरणस्थभाष्यानुमतप्रामाणिकपक्षे त्वयमर्थः— आग्नेयवाक्यस्य शेषे द्व्यवदाने "द्विर्हविषोऽवद्यति" "अङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि" इत्यादिविशेषवाक्ये सन्निधानात्—समन्वयात्, उपसहृतत्वादिति यावत् । यथाचैतत्तथा सर्वप्रदानाधिकरणेऽवोचाम । तथाच त्यक्तस्य पुनस्त्यागायोगात् पुरोडाशान्तरं स्विष्टकृते उत्पाद्यमित्येतदसिद्धम् ॥

इतोऽप्येवमित्याह —

## कर्मकार्याच्च ॥ २९ ॥

भृत्यर्थं परस्मै यः कर्म करोति स कर्मकर. । 'कर्मणि भृतौ' इति कृञः टप्रत्ययः । ततो भावे ष्यञ् । आर्षत्वादुत्तरपदवृद्धि. । "देवा वै स्विष्टकृतमब्रुवन् हव्यन्नो वहेति । सोऽब्रवीत् वरं वृणै भागोऽस्त्विति । वृणीष्वेत्यब्रुवन् । उत्तरार्धादेव मह्यं समवद्यत" इति हविर्वहनरूपकर्मकरत्वं स्विष्टकृतोऽग्नेरवगम्यते । कर्मकरस्य च परद्रव्योपजीवित्वं लोकसिद्धमिति न स्विष्टकृद्यागः पुरोडाशान्तरस्य प्रयोजक । यद्वा कर्मनिमित्तं कार्यं कर्मकार्यम् । स्विष्टकृद्यागस्य हविर्वहनकर्मनिमित्तकभृतिदानार्थककार्यत्वादित्यर्थः ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ३० ॥

"शेषात् स्विष्टकृते समवद्यति" इति परार्थद्रव्यवचनशेषशब्दादपि लिङ्गान्न स्विष्टकृद्यागः पुरोडाशान्तरस्य प्रयोजक । न चात्र शेषशब्दोऽन्यपर्यायो भविष्यतीति

वाच्यम्। "यावतीभ्यो देवताभ्यो हवींषि गृहीतान्यभूवन् सर्वाणि तानि हुतानि कथमस्मा आहुतिं कल्पयेम" इत्युपक्रम्य "स यथापूर्वं हवींष्याघारयत्तेनायातयामान्यकरोत् तत एकैकमवदानमवाद्यत्" इति वाक्यशेषानुसारेण शेषशब्दस्योपयुक्तद्रव्यावयवपरताया एवोचितत्वात्। तस्मादप्रयोजकः स्विष्टकृद्यागः॥

इति पञ्चदश पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणम्॥ १५॥

१६

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते—"तान् पर्यग्निकृतानुत्सृजति। ब्रह्मसाम्न्यालभते" इति। सन्ति च तत्र क्रतुपशवः "आग्नेयं पशुमालभते। ऐन्द्राग्नेनोक्थ्यं, ऐन्द्रेण षोडशिनस्स्तोत्र, सारस्वत्यातिरात्र मारुत्या बृहत्स्तोत्रम्" इति। त एते सर्वे पशवः प्रातस्सवने तन्त्रेणोपक्रम्यन्ते। पर्यग्निकरणानन्तरं प्राजापत्याः पशवो न संज्ञप्यन्ते, किन्तु माध्यन्दिनसवने ब्रह्मसाम्नि प्रस्तुते सञ्ज्ञप्यन्ते। तदानीमेव तेषां वपाप्रचारः। आग्नेयादयस्तु पशवः प्रातस्सवन एव दश प्रयाजेषु कृतेषु कृते च पर्यग्निकरणे संज्ञप्यन्ते। तत उत्तमप्रयाजः आज्यभागौ वपाप्रचारश्चेति स्थितिः। दर्शपूर्णमासयोश्च श्रुतम्—"प्रयाजशेषेण हवींष्यभिघारयति" इति। तदप्येषु पशुषु चोदकपरम्परया प्राप्तम्। तत्र किं माध्यन्दिनसवनीयाः प्राजापत्यवपा अभिघारयितुं प्रयाजशेषधारणार्थं पात्रान्तरमुत्पाद्यम्, आज्यभागादिकर्मसु जुह्वा व्यापृतत्वात्? उत न प्रयाजशेषो धारयितव्यः[1], नैव तेन प्राजापत्यवपा अभिघारयितव्याः? इति संशये पूर्वपक्षयति—

## अभिघारणे विप्रकर्षादनूयाजवत् पात्रभेदस्स्यात्॥२१॥

प्राजापत्यवपाभिघारणे विषये तदभिघारणार्थं प्रयाजशेषधारणाय पात्रभेदस्स्यात्—पात्रान्तरमुत्पाद्यं स्यात्। कुतः? विप्रकर्षात्। प्राजापत्यवपाप्रचारस्य "ब्रह्मसाम्न्यालभते" इत्युत्कर्षविधानात्। अभिघारणं ह्येतेन 'हवींषी'ति द्वितीयाश्रुत्या हविरर्थमवगतम्। ततश्च माध्यन्दिनसवनीयाः प्राजापत्यवपा अपि प्रयाजशेषेणाभिघारयितव्याः। तच्च प्रातस्सवनीयप्रयाजशेषस्य धारणं विना न सम्भवतीति स धारयितव्यः। जुह्वा व्यापृतत्वात्तदर्थं पात्रान्तरञ्चोत्पाद्यमनूयाजवत्। यथा

---

१. न धारयितव्य अ.

"पृषदाज्येनानूयाजान्यजति" इति पाशुकानूयाजपृषदाज्यधारणाय पात्रान्तरमुत्पाद्यते, तद्वत्। ततश्च प्राजापत्यवपास्वभिघारणाय प्रयाजशेषस्य धारणं तदर्थञ्च पात्रान्तरं प्रयोजयति ॥

अथ सिद्धान्तयति—

**न वाऽपात्रत्वादपात्रतैकदेशत्वात् ॥ ३२ ॥**

नैव प्राजापत्यवपाः प्रयाजशेषेणाभिघारयितव्याः। कुत ? अपात्रत्वात्। प्रयाजशेषस्य धारणे पात्राभावात्, जुह्वा व्यापृतत्वात्। ननु पात्रान्तरमुत्पाद्यमित्यत आह—अपात्रतैकदेशत्वादिति। यदि हि अभिघारणमिदं हविरर्थं स्यात्तदा प्राजापत्यवपाः स्वाभिघारणाय प्रयाजशेषस्य धारणं तदर्थञ्च पात्रान्तरं प्रयोजयेयुः। नैवमस्ति; द्वितीयादिविभक्तयो हि न साक्षाच्छेषशेषित्वाभिधायिकाः, किन्तु साध्यसाधनत्वमात्रमभिधाय विध्यपेक्षितं समोहितं समर्पयन्ति। प्रकृते च प्रयाजशेषः कृतकार्यद्रव्यैकदेशः। स च आकोर्णकरः प्रतिपत्तिमपेक्षते। अभिघारणञ्च प्रयाजशेपस्य हविष्षु क्षारण प्रतिपत्ति। करिष्यमाणाज्यभागार्थं जुहूरिक्तताकरणञ्च दृष्टं प्रयोजन भवति। हवींषि तु नाभिघारणसंस्कारमपेक्षन्ते, उपस्तरणाभिघारणाभ्यामेव हविषा पात्रासंसर्गार्थस्नेहसिद्धेः। अतो हविषामभिघारणमनपेक्षितमदृष्टार्थञ्च। अतो दृष्टार्थलाभात् "सक्तूञ्जुहोति" इत्यत्रेव विभक्तिव्यत्ययेन प्रयाजशेपं हविष्षु क्षारयेदिति वचनव्यक्तिरापद्यते। प्रयाजशेषप्रतिपत्तेश्च सन्निहिताग्नेयादिपशुवपामात्रेणापि सिद्ध्या धारणं विनानुपपत्त्यभावान्न प्राजापत्यवपाः प्रयाजशेपस्य[1] धारणं प्रयुञ्जते। नतरान्तदर्थं पात्रान्तरम्। नन्वेवं प्रयाजशेषस्यैकस्मिन् हविषि क्षारणेन प्रतिपत्तिसिद्धेस्सर्वेषा हविषामभिघारणन्न स्यात्। न च हविषा गुणत्वेन तद्गतबहुत्वस्य विवक्षितत्वात् सर्वेषामभिघारण सिध्यतीति वाच्यम्। प्रधानयागशरीरभूताना हविषामङ्गभूतप्रयाजशेष प्रति गुणभावस्यात्यन्तमयुक्तत्वात्। न च हविषामप्युद्देश्यत्वसम्भवः, वाक्यभेदापातादिति चेन्न; अभिघारणस्य प्रतिपत्तिरूपस्यैव [2]'सततस्तद्गतहविराधारतानियमस्य प्रयोजनाकाङ्क्षाया हविर्गतसस्कार एव प्रयोजन कल्प्यत इति हविषा सस्कार्यतैव, न तु गुणता। हविर्गतसस्कार्यतायाश्चार्थिकत्वान्नैकस्मिन्वाक्ये उद्देश्यद्वयसमावेशदोषः। अस्तु

१ शेषधारण. ग. २. ततस्तदागत. अ, ततदागत. क.

वा[1] हविषां संस्कार्यता शाब्दी, तथापि न दोषः । निरपेक्षमेव ह्युद्देश्यद्वयमेकत्र न समवैति । साकाङ्क्षन्तु निमित्तफलवदुद्देश्यद्वयन्न वाक्य भिनत्ति । अस्ति च प्रयाजशेषार्थमभिघारयेदित्युक्ते किमभिघारयेदित्यपेक्षा । तत्र हवींषीति [2]सम्बध्यमानन्न वाक्यं भिनत्ति । न चैवं हविषां संस्कार्यत्वे विप्रकृष्टानां प्राजापत्यवपानामपि संस्कारो मा विलोपीति प्रयाजशेषधारणं स्यादिति वाच्यम्, हविषामभिघारणगतहविराधारकत्वनियमाविषयत्वात् । [3]यस्य हि प्राग्विषयेऽनियमेन प्राप्तिस्स नियमस्य विषयः । प्रातस्सवने कृतेषु प्रयाजेषु तच्छेषस्य जुहूगतस्य यक्ष्यमाणाज्यभागादिद्रव्यसंस्कारार्थं सन्निहिते यत्र क्वचित् प्रतिपादनं प्राप्तं, न त्वसन्निहिते । अतोऽसन्निहितानां प्राजपत्यवपानां प्राप्तिरेव नास्तीति नियमविध्यगोचरत्वान्न नियमफलं संस्कारभागित्वमिति तत्संस्कारार्थन्न प्रयाजशेषधारणम् । तथा च यथा स्विष्टकृद्यागो मन्त्रांशेनेष्टयक्ष्यमाणदेवतास्मरणार्थः प्रक्षेपांशेन हविःप्रतिपत्त्यर्थश्च, तथाभिघारणमपि स्वरूपेण प्रयाजशेषप्रतिपत्त्यर्थं नियमांशेन तु हविस्संस्कारार्थञ्च ॥

इतोऽप्येवमित्याह—

**हेतुत्वाच्च सह प्रयोगस्य ॥३३॥**

"तीर्थं वै प्रातस्सवनं यत् प्रातस्सवने इतरैः पशुभिस्सह प्राजापत्याः पशव आलभ्यन्ते तीर्थ एवैनानालभते सयोनित्वाय अथो वपानामभिघृतत्वाय" इति प्राजापत्यपशूनां प्रातस्सवन एवाग्नेयादिपशुभिस्सहालम्भविधौ प्रयाजशेषेण प्राजापत्यवपाभिघारणलाभस्य हेतुत्वेन सत्त्वाद्विप्रकर्षपक्षे अभिघारणाभावाभ्यनुज्ञानादपि न प्रयाजशेषस्य धारणम् , न तदर्थं पात्रान्तरमुत्पाद्यम् ॥

इतोऽप्येवमित्याह—

**अभावदर्शनाच्च ॥ ३४ ॥**

विप्रकृष्टप्राजापत्यवपानां प्रयाजशेषेणाभिघारणस्याभाववाक्यशेषं दर्शयति— "शल्या वा एतर्हि वपा [4]यर्ह्यनभिघृता । [5]ब्रह्मैव ब्रह्मसाम यद् ब्रह्मसाम्न्यालभते तेनाशल्यास्तेनाभिघृता" इति । यर्हि यदा अनभिघृता , एतर्हि-एतस्मिन् ब्रह्मसाम-

१. च. क.	२. सम्बन्ध्यमान वाक्य न. अ.	३. यस्मिन् हि प्राग्विषये न नियमेन. ग.
४. यद्यनभि. क.	५. ब्रह्म वै अ, ग

काले। वपाः शव्याः-रूक्षाः अस्निग्धाः। ब्रह्मसाम्ना च तत्कालका वपा अभिघृताः। अशव्याः अरूक्षाः स्निग्धाश्च भवन्तीति ब्रह्मसामकालकालम्भनार्थवा-[दार्थः]। अत्रानभिघारणप्रयुक्तमस्निग्धत्वमनूद्यमानं प्रयाजशेषेणाभिघारणस्याभाव विप्रकृष्टप्राजापत्यवपानामवगमयति॥

ननु [1]"उपस्तृणात्यभिघारयति" इत्यवदानकालाभिघारणस्य सत्त्वादनभिघारणप्रयुक्तरूक्षत्ववचनमविवक्षितस्वार्थम् ब्रह्मसामकालालम्भप्रशंसामात्रपरमिति न प्रयाजशेषेण तदभिघारणाभावे लिङ्गं स्यात् इत्याशङ्क्य निराकरोति--

## [2]सति च शव्यवचनम् ॥३५॥

अवदानकालाभिघारणे सत्यपि "शव्या वा" इत्यादिवचन प्रयाजशेषेणाभिघारणाभावकृतमस्निग्धत्वमादायोपपन्न[म्।]स्निग्धत्वकारण ह्यभिघारणमभावप्रतियोगित्वेनोच्यते। तत्र प्रथममेवाभिघारणं मुख्यं स्निग्धत्वकारणम्, अवदानकालकृताभिघारणन्न तथा स्निग्धत्वकारणम्। पूर्वेणैवाभिघारणेन स्निग्धत्वस्य कृतत्वात्। लोके च कान्तारवासिभिरस्निग्धमन्नं भुक्तवद्भि ग्रामं प्रविश्य देवदत्तगृहे स्निग्धमन्नं प्रथम भुक्तवद्भिर्गृहान्तरेषु स्निग्धमेवान्नं भुञ्जानैरुच्यते-देवदत्तगृहे स्निग्धमन्नं भुक्त तेन वयमरूक्षा इति। तथा च प्रथममेव प्रयाजशेषाभिघारणं स्नेहनमात्राभावप्रतियोगितयानूद्यत इति लिङ्गम्॥

अत्राशङ्क्य परिहरति--

## न तस्येति चेत् स्यात्तस्य मुख्यत्वात् ॥ ३६ ॥

तस्य-प्रयाजशेषाभिघारणाभावस्य नेद लिङ्गम्। "त्वामुते दधिरे हव्यवाहम्" इति श्रप्यमाणवपाभिघारणस्य "यत्तु आत्मा" इति श्रृताभिघारणस्य उद्वासिताभिघारणस्य च प्रयाजशेषाभिघारणापेक्षयापि प्रथमस्य विद्यमानत्वेन तस्यैवात्राभावप्रतियोगित्वेनानुवाद्यत्वादिति चेत्तन्न; कुतः? तस्य मुख्यत्वात्। प्रयाजशेषाभिघारणस्यैव स्नेहने मुख्यत्वात्, श्रप्यमाणायाश्शृतायाश्च वपायाः कृतेऽप्यभिघारणे अग्नेरर्चिभिर्दाहान्न समीचीनं स्निग्धत्वम्। उद्वासितायाश्च (?) शव्यावयवै रूक्षावयवैश्चाविनाशान्न समीचीन स्निग्धत्वम्[3]। प्रयाजशेषाभिघारणन्तु श्रृतायां क्रियमाण

---

१. उपस्तृणन्त्यभिघारयन्ति अ. २ इदं सूत्र तद्वृत्तिश्च अपुस्तके नास्ति।

३ प्रयुज्यत इत्यधिक. अ पुस्तके.

मुख्यं स्नेहनं भवति। तदभिघारणाभावकृतमेव रूक्षत्वमिहानूद्यत इति भवति लिङ्गं विप्रकृष्टप्राजापत्यवपानां प्रयाजशेषाभिघारणन्नास्तीत्यत्र। अतः प्राजापत्यवपाः प्रयाजशेषधारणं तदर्थपात्रान्तरञ्च न प्रयोजयन्ति ॥

इति षोडश प्रयाजशेषाभिघारणाधिकरणम् ॥ १६ ॥

१७

दर्शपूर्णमासयोराज्यग्रहणं प्रकृत्य श्रूयते—"चतुर्जुह्वां गृह्णात्यष्टावुपभृति" इति। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानूयाजेभ्यस्तत्" इति च। उपभृति एकञ्चतुर्गृहीतं प्रयाजार्थम्, अन्यदनूयाजार्थमित्यर्थ। अन्यच्च श्रुतम् "अतिहायेडो बर्हि· प्रति समानयते जुह्वामौपभृतम्" इति। इड इति बहुत्वमविवक्षितम्। अतिहाय-अतिक्रम्य, इडभिधानतृतीयप्रयाजानन्तर बर्हिराख्यचतुर्थप्रयाजोपक्रमे औपभृतमाज्य जुह्वां समानयत इत्यर्थः। तदिदं समानयन किमौपभृतस्य प्रयाजार्थचतुर्गृहीताज्यस्य न प्रयोजकम्? उत प्रयोजकम्? इति संशय। न प्रयोजकमिति ब्रूमः। शेषी हि शेषस्य प्रयोजकः। समानय [नञ्चै] तत् "औपभृतम्" इति द्वितीयाश्रुत्या औपभृताज्यस्य संस्कारकं गुणभूतं कथ तस्य प्रयोजकं भवेत्। न चौपभृतस्य जुह्वां समानयनद्वारा स्वकार्यार्थत्वात् द्वारभूतस्य च तस्य शेषित्वात् प्रयोजकत्वं सम्भवतीति वाच्यम्। औपभृतस्य हि समानयनमिदं किं प्रयाजार्थस्य चतुर्गृहीतस्य प्रयोजकमुतानूयाजार्थस्य? आद्येऽपि औपभृतेष्वष्टगृहीतेषु यदेतत् प्रयाजार्थञ्चतुर्गृहीतन्तत् किं सर्वप्रयाजार्थमुत चतुर्थपञ्चमप्रयाजार्थमिति? न द्वितीय.; "यदुपभृति प्रयाजानूयाजेभ्यस्तत्" इत्यविशेषश्रवणेन सर्वप्रयाजार्थतावगमात्। किञ्च समस्यमानप्रयाजशब्दाद्विभक्तिर्लुप्ता। सा च बहुवचनरूपैव कल्प्यते, न तु द्विवचनरूपा। तस्या अत्यन्ताश्रुतत्वेन श्रुतबहुवचनात्मकविभक्तिकल्पनस्यैव युक्तत्वात्। न चौपभृतस्य चतुर्गृहीतस्य सर्वप्रयाजार्थत्वे 'यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तत्" इति विरोध इति वाच्यम्। अत एव जौहवौपभृतचतुर्गृहीतयोर्विकल्पेन सर्वप्रयाजार्थत्वोपपत्तेः। अथास्तु सर्वप्रयाजार्थमेवौपभृतञ्चतुर्गृहीतं समस्यैव च समानयनमित्याद्यः पक्ष इति चेन्न; व्याघातात्। न ह्येतद्युज्यते—सर्वप्रयाजार्थस्यौपभृतचतुर्गृहीताज्यस्य प्रयाजत्रयानन्तरं समानयनमिति। बर्हिरुपक्रमे समानीय तेनाद्यानान्त्रयाणा प्राचीनानां प्रयाजानां कर्तुमशक्यत्वात्। नन्वत एव सामार्थ्यादेकमौपभृतञ्चतुर्गृहीतं सर्वादौ

जुह्वां समानीय पञ्चापि प्रयाजाः कार्याः। बर्हिरुपक्रमे चावशिष्टमौपभृतं समानेयमिति चेन्न; एवं सति बर्हिरुपक्रमे प्रयाजार्थस्यौपभृतस्य समानयनमित्यसिद्धेः प्रयाजार्थौपभृतस्य सर्वप्रयाजादौ समानीतत्वेन तस्य तदानीमुपभृत्यभावात् परिशिष्टस्य च चतुर्गृहीतस्यानूयाजार्थत्वात्। नन्वौपभृतमेकञ्चतुर्गृहीतमर्थात् प्रयाजादौ समानीय प्रयाजत्रये कृते बर्हिरुपक्रमे अनूयाजार्थस्य परिशिष्टौपभृतचतुर्गृहीतस्येदं समानयनं प्रयोजकमिति मुख्यद्वितीयपक्षोऽस्त्विति चेन्न; अनूयाजार्थचतुर्गृहीतसमानयनस्य परप्रयुक्तद्रव्यसंस्कारत्वेन तदप्रयोजकत्वात्। तथाच उपभृति यत् प्रयाजार्थञ्चतुर्गृहीतं तत् सर्वप्रयाजादौ समानीय तेन पञ्च प्रयाजाः क्रियन्ते। यदन्यदनूयाजार्थञ्चतुर्गृहीतं तस्यैकदेशो बर्हिरुपक्रमे जुह्वां क्षार्यते, न तु सर्वं समानीयते। सम्प्रत्यनूयाजानामनुष्ठानाभावात् तेषां प्रधानयागोत्तरमेवानुष्ठानात् जुह्वाश्चान्यत्राज्यभागादिकर्मसु व्यापृतत्वात्। यदा तु कदाचिज्जौहवेनैव पञ्चापि प्रयाजाः, तदापि बर्हिरुपक्रमे औपभृतस्यानूयाजार्थस्य किञ्चित् क्षार्यते। अननूयाजे प्रायणीयादौ तु उपभृति अनूयाजार्थचतुर्गृहीतस्याभावाल्लुप्यते समानयनम्। समानयनस्य च परप्रयुक्तद्रव्यसंस्कारत्वान्न चतुर्गृहीतान्तरमुत्पाद्यमिति फलतीति प्राप्ते, सिद्धान्तयति—

## समानयनन्तु रूयं स्याद्धि ङ्गदर्शनात् ॥ ३७ ॥

तुर्वैषम्ये। विप्रकृष्टाः प्राजापत्यवपाः प्रयाजशेषस्य धारणन्न प्रयोजयन्तु समानयनन्तु औपभृतचतुर्गृहीतस्य प्रयाजार्थस्य प्रयोजकं स्यादेव। कुतः? लिङ्गदर्शनात् दृश्यतेऽनेनेति [दर्शनं] न्याय। लिङ्गञ्च दर्शनञ्चेति समाहारद्वन्द्वः। लिङ्गान्न्यायाच्चेत्यर्थः। न्यायस्तावत् प्रदर्श्यते—यदुपभृति प्रयाजार्थञ्चतुर्गृहीतं तस्य होमसमये जुह्वा समानयनं "जुह्वा जुहोति" इति वचनसामर्थ्यात् प्राप्तम्। तदनूद्य कालमात्रमिह विधीयते—"अतिहायेडो बर्हिः प्रति" इति। होमरूपदृष्टार्थमेव च समानयनमनूद्यते। तच्च चतुर्थपञ्चमप्रयाजार्थस्यैव[1]। न हि तृतीयचतुर्थप्रयाजान्तरालकालेऽनूद्यमानमिदं समानयनं सर्वप्रयाजार्थस्य भवितुमर्हति। आद्यप्रयाजत्रयस्य समानेष्यमाणाज्येन कर्तुमशक्यत्वात् कालविधिबलादेव प्रयाजेभ्य इत्यविशेषवचनमुपरितनप्र-

---

१. प्रयाजस्यैव, क.

याजद्वये उपसंह्रियते। श्रुतमपि बहुवचनन्न प्रयाजप्रातिपदिकेऽनुपद्यते, किन्तु प्रयाजौ चानूयाजाश्चेति द्विवचनमेव। एवञ्च "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इत्यविशेषश्रवणमप्याद्यप्रयाजत्रये उपसहृतं भवति। कालविधिबलेन औपभृतचतुर्गृहीतस्योपरितनप्रयाजद्वयमात्रार्थत्वात्। ततश्च जौहवौपभृतचतुर्गृहीतयोर्विषयभेदात् प्रयाजेषु समुच्चय इत्यष्टदोषदुष्टविकल्पोऽपि न प्रसज्यते। उपरितनप्रयाजद्वयमात्रार्थञ्चेदं समानयनमर्थादौपभृतस्यैव भवति। जौहवस्याद्यप्रयाजत्रये विनियुक्तत्वादित्यौपभृतमित्यप्यनुवाद। ततश्चोत्तमप्रयाजद्वयार्थमौपभृतञ्चतुर्गृहीतञ्जुह्वां समानयत इति यत् तत् अतिहायेडो बर्हिः प्रतीति कालमात्रविधानं दृष्टार्थञ्च समानयनं भवति। अनूयाजार्थस्य तु क्षारणमत्यन्ताप्राप्तमदृष्टार्थञ्च विधीयते। तस्य च काल इत्यनेकार्थविधानमदृष्टकल्पना जौहवौपभृतचतुर्गृहीतयोस्सर्वप्रयाजेष्वष्टदोषदुष्टविकल्पश्च स्यात्। समानयनञ्च तदार्थिकत्वान्नौपभृतस्य संस्कारः। किन्तु औपभृतचतुर्गृहीतेन उपरितनप्रयाजद्वये कर्तव्ये द्वारभूतमेव समानयनम्। ततश्चोत्तमप्रयाजौ स्वकीयमौपभृतमाज्यं प्रयुञ्जानौ समानयनद्वारा प्रयोजयतः। समानयनस्य द्वारभूतत्वेनौपभृतमाज्यं प्रति शेषिभूतत्वात्। ततश्च जौहवेन त्रीन् प्रयाजानिष्ट्वा औपभृतार्थेन उत्तमौ प्रयाजौ यजतीति [फलितम्]। आतिथ्यायां "चतुर्गृहीतान्याज्यानि, न ह्यत्रानूयाजान् यक्ष्यन् भवति" इति चतुर्गृहीतबहुत्वञ्चोक्तार्थे लिङ्गम्। तद्धि जौहवौपभृतयो प्रयाजेषु समुच्चये घटते। अन्यथा जुहूपभृतोरन्यतरत्र सर्वप्रयाजार्थञ्चतुर्गृहीतमेकं, ध्रुवायाश्चापरमिति चतुर्गृहीतद्वयमेव स्यात्, अनूयाजाभावेन तच्चतुर्गृहीतस्याभावात्। अत आतिथ्यायाञ्चतुर्गृहीत'बहुवचनानुसारेण जौहवौपभृतयोः प्रयाजेषु समुच्चये सति समानयनस्योपरितनप्रयाजद्वयार्थत्वादौपभृताज्यप्रयोजकत्वम्॥

ननु जौहवौपभृतचतुर्गृहीतयो· प्रयाजेषु विकल्पे सत्यपि आतिथ्यायाञ्चतुर्गृहीतबहुत्व वचनात् भविष्यतीत्यत आह—

## वचने हि हेत्वसामर्थ्यम्[२] ॥३८॥

यदि जौहवौपभृतचतुर्गृहीतयोस्सर्वप्रयाजार्थयो· विकल्पः, आतिथ्या[यान्तु]

१. बहुत्वानुसारेण. अ, म.  २. हेत्वसामर्थ्ये

वचनात् ( चतुर्गृहीतबहुत्वमिति, 'तर्हि "न ह्यत्रानूयाजान् यक्ष्यन् भवति" इति हेतुवादस्यासङ्गतार्थकत्व स्यात्। आतिथ्याया बहूनि ) चतुर्गृहीतानि, अनूयाजाभावादित्यत्र दृष्टान्ताभावात्। न चानूयाजाः प्रायणीये दृष्टान्तो भवितुमर्हति। प्रकृतौ हि जौहवौपभृतयो· विकल्पेन सर्वप्रयाजार्थत्वे जुहूपभृतोरन्यतरत्र सर्वप्रयाजार्थमेकञ्चतुर्गृहीतं, उपभृत्यनूयाजार्थमन्यत्, ध्रुवाया सर्वार्थमन्यदिति स्थितम्। अननूयाजे प्रायणीये चानूयाजार्थचतुर्गृहीतस्यार्थाभावान्निवृत्तौ चतुर्गृहीतद्वयमेव चोदकत प्राप्तमिति चतुर्गृहीतबहुत्वस्याभावात् कथं स दृष्टान्तस्स्यात्। उक्तरीत्या विषयभेदेन जौहवौपभृतयो· प्रयाजेषु समुच्चये त्वननूयाजेऽपि प्रायणीये प्रयाजार्थे द्वे ध्रुवायामन्यदिति चतुर्गृहीतबहुत्वस्य सम्भवात्तस्य दृष्टान्तत्वं युज्यत इति हेतुवादत्वमुपपन्नं भवति। तस्मात् समानयनमौपभृतस्य उपरितनप्रयाजार्थस्य प्रयोजकमिति ॥

इति सप्तदशं समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ॥१७॥

१८

दर्शपूर्णमासयोश्श्रूयते—"चतुर्जुह्वां गृह्णाति। अष्टावुपभृति। चतुर्ध्रुवायाम्" इति। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्। यदुपभृति प्रयाजानूयाजेभ्यस्तत्। सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति च। "यदुपभृत्यनूयाजेभ्यस्तत्" इति शाखान्तरम्। तत्र किं जौहवादीनि सर्वाण्याज्यानि अविशेषेण सर्वाज्यकार्यार्थानि? उत जौहवं प्रयाजार्थं, औपभृतं कचित् केवलानूयाजार्थं, कचित् प्रयाजानूयाजार्थम्? अथवा जौहवं प्रयाजार्थम्, औपभृतं प्रयाजानूयाजार्थम्, तदतिरिक्तयजतिचोदितसर्वाज्यकार्यविषय ध्रौवम्? इति संशये, पूर्वपक्षयति—

**तत्रोत्पत्तिरविभक्ता स्यात् ॥ ३९ ॥**

तत्र-जौहवाद्याज्यविषये उत्पत्ति अविभक्ता-कार्यविशेषासंयुक्ता। [2]अतस्सा सर्वाज्यकार्यार्था स्यात्। न च कथं सर्वार्थता, वाक्यान्तरेभ्यो [3]विनियोगविशेषप्रतीतेरिति वाच्यम्। असंयुक्तोत्पन्नानि हि प्रकरणेन गृह्यन्ते प्रधानाकाङ्क्षाप्रकरणे। अतो जौहवादीनि प्रधानैर्गृहीतानि। प्रधानानाञ्चाग्नेयादियागानामुत्पत्तिशिष्टपुरोडाशाद्य·

() अपुस्तकेऽत्र ग्रन्थपात ।
१. तत्र हि इति कपुस्तक पाठ ।
२. अतस्सर्वाज्य. क.
३. विनियोगि. अ, क.

वरुद्धत्वादानर्थक्यतदङ्गन्यायेन () तदङ्गेषु द्रव्याकाङ्क्षिषु प्रयाजादिषु सर्वेष्वेव तान्यविशेषेण निविशन्ते। ततश्चोत्पत्तावेव जौहवादीनां सर्वाज्यकार्यार्थतावगमेन प्रयोजनाकाङ्क्षाशान्ते. "प्रयाजेभ्यस्तत्" इत्यादिवाक्यान्तराणान्न विनियोजकता। किन्त्वेकदेशानुवादकतैवेति भावः॥

अथ तृतीयपक्षं परिगृह्य सिद्धान्तयति--

## तत्र जौहवमनूयाजप्रतिषेधार्थम् ॥४०॥

तत्र-जौहवादिषु मध्ये "प्रयाजेभ्यस्तत्" इति जौहवविषय वचनम् अनूयाजप्रतिषेधार्थम्। अनूयाजग्रहणमुपलक्षणम्। प्रयाजेतरानूयाजा[1]द्याज्यकार्यपरिसङ्ख्यानार्थम्। "चतुर्जुह्वा गृह्णाति" इति ह्युत्पद्यमानजौहवं प्रयोजनमभिलषति। प्रयाजाश्चोत्पद्यमाना एव द्रव्यमभिलषन्ति। तत्र यावत् प्रकरणेन सर्वार्थतावचन कल्प्यते, ततः प्रागेव "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इति प्रत्यक्षवाक्येन[2] जौहवस्य प्रयाजलक्षणाज्यकार्यसम्बन्धेऽभिहिते सति जौहवस्य प्रयोजनान्तरेण प्रयाजानाञ्च द्रव्यान्तरेण न सम्बन्धकल्पनमुन्मिषतीति जौहवन्न सर्वार्थम्, किन्तु प्रयाजार्थमेवेति फलति। एवञ्च सम्भवति विधित्वे नैकदेशानुवादत्वमगतिकत्वाङ्गकार्यम्। फलतः परिसङ्ख्यानाच्च न त्रैदोष्यदोषावकाशः। सूत्रे जौहवग्रहणमुपलक्षणम्। अनयैव रीत्या "प्रयाजानूयाजेभ्यस्तत्" इति वाक्यादौपभृतमपि न सर्वार्थम्। किन्तु प्रयाजानूयाजार्थम्। "अनूयाजेभ्यस्तत्" इति शाखान्तरवचनन्तूभयार्थवाक्यप्राप्तैकदेशानुवाद। ध्रौवमपि "सर्वस्मै वा एतद्यज्ञाय" इति वचनात् प्रयाजानूयाजव्यतिरिक्तयजतिचोदितसर्वाज्यकार्यार्थम्, न तु पार्वणहोमाद्यर्थम्।

अथ द्वितीयपक्षमुत्थाप्य निराकरोति--

## औपभृतन्तथेति चेत् स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४१ ॥

जौहवध्रौवविषये यदुक्तन्तदभ्युपगम्यते। औपभृतमपि "प्रयाजानूयाजेभ्यस्तत्" इति (वचनाद्यथोभयार्थं तथा "अनूयाजेभ्यस्तत्" इति वचनात् केवलानूयाजार्थमपि कदाचित् स्यात्। न च "अनूयाजेभ्यस्तत्" इति) वाक्यमुभयार्थ-

१. द्यन्यकार्य. क. २ वचनेन. ख, घ.

३. उद्भाव्य. अ, ख, घ. () अपुस्तके ग्रन्थपात.।

वाक्यप्राप्तैकदेशानुवाद इति वाच्यम्। उभयार्थवाक्येनौपभृतस्योभयार्थत्वप्राप्तावपि केवलानूयाजार्थत्वस्याप्राप्त्या "अनूयाजेभ्यस्तत्" इति वाक्यस्य केवलानूयाजार्थताविधित्वसम्भवेन तदनुवादत्वासम्भवात्। तथा चौपभृतं कदाचिदुभयार्थं कदाचिदनूयाजार्थमिति विकल्प इति चेद् ब्रूषे, तत्रेदमुत्तरं शृणु—"अनूयाजेभ्यस्तत्" इति वाक्यं नित्यानुवादस्स्यात्। कुतः ? जुहूप्रतिषेधात्—औपभृतस्य पाक्षिकोभयार्थत्वे जौहवस्य कदाचिदुत्तमप्रयाजयोः प्रतिषेधाद् अभावप्रसङ्गात्। विकल्पप्रसङ्गादिति यावत्। यदि ह्यौपभृतस्योभयार्थत्वं पाक्षिकं स्यात्, तदा कदाचिज्जौहवेनैव पञ्चापि प्रयाजा यष्टव्याः स्युरिति जौहवञ्चतुर्थोत्तमयोर्विकल्पितं स्यात्। तथा च "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इति वाक्यं त्रिष्वाद्यप्रयाजेषु नित्यं जौहव विधत्ते, अन्ययोस्तु विकल्पेनेति वैरूप्यं स्यात्। तस्मादौपभृतस्य नित्यमेवोभयार्थत्व वाच्यमिति "अनूयाजेभ्यस्तत्" इति वाक्यस्य केवलानूयाजार्थतापरत्वासम्भवादगत्योभयार्थवाक्यप्राप्तैकदेशानुवादत्वमेव। तस्मान्न द्वितीयः पक्षो युज्यते। तृतीय एव पक्षो युक्त' ॥

इत्यष्टादशमौपभृतजौहवयोर्व्यवस्थाधिकरणम् ॥ १८ ॥

१९

औपभृतमाज्यं प्रयाजानूयाजोभयार्थमिति स्थितम्। तत्र "अष्टावुपभृति गृह्णाति" इति अष्टग्रहणसंस्कृतमेकं हविः उत्तमप्रयाजद्वयार्थतयानूयाजार्थतया च विधीयते ? उत चतुर्ग्रहणद्वयसंस्कृतं हविर्द्वयम् ? इति संशये, पूर्वपक्षयति—

**तदष्टसङ्ख्यं श्रवणात् ॥४२॥**

तत्-औपभृतमाज्यमेकं हविः अष्टग्रहणसंस्कृत प्रयाजार्थमनूयाजार्थञ्च विधीयते। न तु चतुर्गृहीतहविर्द्वयम्। कुत ? श्रवणात्-ग्रहणे अष्टत्वसङ्ख्याया एव श्रवणात् चतुष्टद्वयस्य चाष्टत्वाविनाभूतत्वेन लक्षणीयत्वात्। न हि सम्भवन्त्यां श्रुतौ लक्षणा युक्ता। नन्वष्टग्रहणसंस्कृतमेकं हविर्न्न कार्त्स्न्येन चरमप्रयाजद्वयार्थमनूयाजार्थञ्च सम्भवति। अष्टगृहीतस्य कृत्स्नस्योत्तमप्रयाजार्थत्वे अनूयाजार्थत्वासम्भवात्। किन्त्ववयवश एवाष्टगृहीतस्य तदुभयार्थत्व वाच्यम्। तथाच 'सम स्यादश्रुतत्वात्' इति न्यायेन अष्टगृहीतस्यार्धमेकञ्चतुर्गृहीतस्यार्धमुत्तमप्रयाजार्थमन्यदनूयाजार्थमिति हविर्द्वयमेव पर्यवस्यतीत्यत आह—

## अनुग्रहाच्च जौहवस्य ॥ ४३ ॥

सत्यमष्टगृहीतस्यावयवश प्रयाजानूयाजार्थत्वमिति, तथापि न स्वातन्त्र्येण[1] तस्यावयवशश्चरमप्रयाजद्वयार्थतया[2], किन्तु जौहवाज्यसंस्काररूपसमानयनमुखेनैव। एवं हि श्रूयते—"चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रीनितः प्राचीनान् प्रयाजान् यजति। समानयते च जुह्वामौपभृतं चतुर्गृहीतत्वाय" इति। "प्रयाजेभ्यस्तत्" इति समस्त [? दितिजार्थं] प्रयाजार्थम् यज्जुह्वाश्चतुर्गृहीतमाज्यमासीत् तेनाघारे आद्यप्रयाजत्रये च कृते औपभृत समानयते जुह्वाम्। किमर्थम्? चतुर्गृहीतत्वाय–प्रभूतत्वाय। आघारे प्रयाजत्रये च कृते स्वल्पीभूतजौहवाज्यस्यावशिष्टप्रयाजहोमद्वये करिष्यमाणे जुहूमुखतो निस्सरणाक्षमस्य तदुपयोगुपबृंहणायेति यावत्। इदमेव दृष्टार्थं समानयनमनूद्य "अतिहायेडो बर्हिः प्रति समानयते" इति कालमात्र विधीयते। अतो न पूर्वतराधिकरणविरोध। जौहवोपबृंहणार्थञ्च समानयनमौपभृतस्य यत्किञ्चित् क्षारणेनापि सम्भवतीति न नियोगतश्चतुर्गृहीतस्य कृत्स्नस्य समानयनमित्यष्टगृहीतमेकमेव हविः। तस्य च कश्चिदेकदेशश्चरमप्रयाजद्वयार्थञ्जुह्वा समानेतव्यः। अननूयाजेऽवभृथे तु अष्टगृहीतं कृत्स्नं चरमप्रयाजार्थं समानेतव्यम्। तत्रानूयाजाभावेन तद्विशेषणस्य निष्फलत्वादिति प्राप्ते, सिद्धान्तयति—

## द्वयोस्तु हेतुसामर्थ्य श्रवणाच्च समानयने ॥ ४४ ॥

तुः पूर्वपक्षव्यावृत्तौ। अष्टगृहीतमिति द्वयोश्चतुर्गृहीतयोर्हविपोर्वादः। न त्वष्टगृहीतमेकं हवि। कुतः? यत. चतुस्संख्याद्वयविधावेव इडान्तायामातिथ्याया "चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजा इज्यन्त' इत्युपभृति चतुर्गृहीतान्तराभावे अनूयाजाभावलक्षणहेतुकथनपरवाक्यविशेषस्य सङ्गतार्थकत्वमस्ति, नान्यथा। यदि ह्यष्टगृहीतमेकमेव हवि प्रयाजार्थमनूयाजार्थञ्च स्यात्, तदा आतिथ्यायामनूयाजाभावे सत्यपि प्रयाजार्थमष्टगृहीतस्यावश्यकत्वेन तस्योपभृति चतुर्गृहीतान्तरनिवृत्तौ हेतुत्वकथनञ्चतुर्गृहीतानीति बहुत्वानुवदनञ्च[3] असङ्गत स्यात्। न च चतुर्गृहीतबहुत्ववचनात् तत्रोपभृति चतुर्गृहीतान्तरनिवृत्तिरिति

---

१. स्वतन्त्रेण. क २. चर्यार्थतया. अ, क ३ अनुवादनञ्च. अ.

वाच्यम्। एवमपि "न ह्यत्रानूयाजान्" इति हेतुवादस्यानुपपत्तेः आतिथ्यायामुपभृति न चतुर्गृहीतान्तरम् अनूयाजाभावादित्यत्र दृष्टान्ताभावात् अननूयाजप्रायणीयादेश्च पक्षसमत्वात्। न च "प्रयाजानूयाजेभ्यस्तत्" इत्यविशेषवचनाच्चतुर्गृहीतद्वयस्यापि प्रत्येकं प्रयाजानूयाजार्थत्वावगमादनूयाजाभावेऽपि प्रयाजार्थश्चतुर्गृहीतद्वयात्मकमष्टगृहीतमनिवार्यमिति वाच्यम्। अष्टावुपभृतीत्यनेन हि चतुर्गृहीतद्वयन्न विधीयते। "चतुर्गृहीतञ्जुहोति" इत्यनारभ्यविधिनैव [1]चतुष्ट्वप्राप्तेः। तथा ग्रहणमपि न विधेयम्। "आज्यं गृह्णाति" इति वचनादेव तत्प्राप्तेः, ग्रहणं विना चतुष्ट्वसङ्ख्याया होमाङ्गत्वानुपपत्त्या तत एवार्थात्तत्प्राप्तेश्च। किन्तु अष्टशब्देन चतुस्संख्याद्वयं लक्षयित्वा यच्चतुर्गृहीतद्वयन्तदुपभृतीति चतुर्गृहीतद्वयस्याप्येकपात्रतामात्रं विधीयते। चतुस्सङ्ख्यायाश्चानारभ्यविधितो निरपेक्षमेव होमाङ्गत्वमवगतम्। अनुवादस्य च यथाप्राप्तविषयत्वादत्रानूद्यमानमपि चतुर्गृहीतद्वयं परस्परनिरपेक्षमेव होमार्थमवगम्यते। ततश्चाष्टावुपभृतीत्यत्रैवौपभृतचतुर्गृहीतद्वयस्य प्रत्येकं प्रयाजानूयाजहोमद्वयार्थत्वावगमात्तदनुसारेणैव यदुपभृतीति वाक्यं प्रयाजार्थमेकञ्चतुर्गृहीतमनूयाजार्थमपरमिति व्यवस्थयैव विधत्ते। नन्वष्टग्रहणविधिना निरवकाशेन "चतुर्गृहीतञ्जुहोति" इत्यनारभ्यविधिर्बाधितो होमान्तरविषयो भविष्यतीति चेन्न; चतुष्ट्वसङ्ख्या हि होमाङ्गम्। अष्टत्वसङ्ख्या तु होमाङ्गभूतग्रहणाङ्गम्। ततश्चाङ्गगुणविरोधाधिकरणन्यायेन प्रधानभूतहोमाङ्गचतुष्ट्वसङ्ख्याया होमाङ्गभूतग्रहणाङ्गाष्टत्वसङ्ख्यया बाधो न युज्यत इत्यष्टत्वसङ्ख्येय ग्रहणद्वारा न होमपर्यन्तयाचनक्षमा, निष्फलत्वाच्च (न ग्रहणमात्रे पर्यवसानमर्हति। अतश्चतुस्सङ्ख्याद्वयलक्षणार्थो विज्ञायते। एवञ्चौपभृतचतुर्गृहीतस्यैव [2]चतुर्थपञ्चमप्रयाज) द्वयार्थं समानयनम्। अथ यदुक्तमनुग्रहाच्च जौहवस्येति, तत्राह–श्रवणाच्चेति। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इति जौहवस्य चतुर्गृहीतस्याविशेषेण सर्वप्रयाजार्थत्वे प्राप्ते "चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य त्रीनितः प्राचीनान् प्रयाजान्यजति" इति तस्य आद्यप्रयाजत्रये व्यवस्थाविधि। ततश्च "समानयते" "चतुर्जुह्वामौपभृतम्" इति समानयनेन रिक्ताया जुह्वा एव श्रवण, न तु जौहवस्य। अतो नात्र तद्ग्रहणार्थं

१. चतुष्ट्व प्राप्त. अ.
२. चरमप्रयाज ग.
() अपुस्तके ग्रन्थपात.

समानयनमुच्यते। किन्तु पूर्वतराधिकरणसिद्धं बर्हिर्योगोपक्रमकालकर्मार्थिकम् जुह्वा-मौपभृतस्य चरमप्रयाजद्वयार्थसमानयनमनूद्य ''चतुर्गृहीतत्वाय'' इति तस्य प्रयोजन-मभिधीयते। अनारभ्यविधिसिद्धचतुर्ग्रहणसम्पत्तय इत्यर्थः। उक्तन्यायोपोद्बलन-मेतत्। तस्माज्जुह्वामौपभृतस्य समानयनञ्चतुर्गृहीतस्य न तु कस्यचित्तदेकदेशस्य। अननूयाजेऽवभृथे उपभृति एकमेव चतुर्गृहीतम्। यद्यप्यवभृथे "अपबर्हिपावनूयाजौ यजति" इति तैत्तिरीयके श्रुतन्तथापि "अग्नीपरिणौ? स्विष्टकृतौ यजति नोत्तरं क्रियते" इति शाखान्तरमनुसृत्येदमुक्तमिति निरवद्यम्॥

इत्येकोनविंशमष्टसङ्ख्यानियमनाधिकरणम्॥ १९॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ चतुर्थाध्यायस्य प्रथमः पादः॥



# अथ चतुर्थाध्यायस्य द्वितीयः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पादे साक्षाद्यागसाधनानामामिक्षादिहविषां तत्सम्बन्धिनां तुषोपवापादीनाञ्च प्रयोजकत्वाप्रयोजकत्वचिन्ता वृत्ता । 'इह तु परम्परया तत्साधनानां स्वरुशाखादीनां प्रयोजकत्वाप्रयोजकत्वे चिन्त्येते ।

अग्नीषोमीये पशौ श्रूयते—"यूपस्य स्वरुं करोति" इति । स्वरुशब्दो लोकेऽवज्ञवाची? वेदे तु "स्वरुणा पशुं समनक्ति यः प्रथमश्शकल परापतेत् स स्वरुः कार्य." इत्यादिवाक्यपर्यालोचनया अञ्जनसाधनशकलविशेषे वर्तते । तत्र किं प्रकृतौ यूपाहुतिजोषणच्छेदनादिधर्मेण यूपमुत्पाद्य पुनर्यूपाहुत्यादिधर्मेण खादिरादिवृक्षस्य (शकलः स्वरुरुत्पादयितव्य इति विधीयते, ततश्च चातुर्मास्यसोमेषु "परिधौ पशुन्नियुञ्जीत" इति यूपाभावेऽपि यूपधर्मेण खादिरादिवृक्षस्य स्वरुरुत्पाद्यत इति स्वरुर्यूपधर्माणा प्रयोजकः? उत प्रकृतौ पशुसमञ्जनेनार्थप्राप्त स्वरोरादानं करोतिनानूद्य "यूपस्य" इत्येव यूपं च्छिद्यमानमनुनिष्पन्नश्शकल एव स्वरुर्ग्राह्य इति विधीयते, ततश्च परप्रयुक्तत्वाद्यूपाभावे य कश्चिच्छकल स्वरुर्गृह्येत? इति संशये, पूर्वपक्षयति—

**स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥**

तु पादभेदद्योतनार्थं । स्वरु. अनेकनिष्पत्तिः यूपेन सहैकयत्ननिष्पत्तिको न भवति—"यूपमुत्पाद्य पुनर्यूपधर्मेण स्वरुरुत्पाद्य इति यावत् । कुतः? स्वकर्मशब्दत्वात् "यूपस्य स्वरुं करोति" इति स्वरोःस्वोत्पादनक्रियाविधायकशब्दवत्वात् । स्वरुं करोतीति हि भावना विधीयते । कृञ्धातोरुत्पादनापर्यायभावनार्थकत्वात् । तस्याश्च

१. किन्नु. ग. () अपुस्तके ग्रन्थपात.

करणेतिकर्तव्यताकाङ्क्षायां यूपशब्दो लक्षणया करणमितिकर्तव्यताञ्च समर्पयति। यूपशब्देन खादिरादिवृक्षप्रकृतिकयूपाहुतिजोषणच्छेदनादिदृष्टादृष्टसंस्कारगणविशेष-वचनेन स्वार्थसम्बन्धितया, खादिरादिवृक्षस्य यूपाहुतिजोषणच्छेदनादीनाञ्चोपस्थितौ सत्यां योग्यतानुसारेण खादिरादिवृक्षस्य करणतया, यूपाहुतिजोषणच्छेदनादिक्रियाणा-मितिकर्तव्यतया च तत्रान्वयलाभात्। स्वरुशब्दश्च कृञ्धात्वर्थभावनासामान्यस्या-वच्छेदकसमर्पणेन विशेषावगतिमात्रे निमित्तम्, न तु तेन विधेयान्तरं किञ्चित् समर्प्यत इति धात्वर्थभावनैव एकपदश्रुत्या विधीयते। तस्याञ्च स्वरुभावनायां यूपशब्देन स्ववाक्यगतेन यूपवृक्षतद्धर्माणां शेषतया समर्पितत्वात् स्वरुस्तेषां प्रयोजकः॥

इतोऽप्येवमित्याह—

## जात्यन्तराच्च शङ्क्यते ॥ २ ॥

"यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्योऽस्य लोकमभ्यारोहेद्यूपस्य स्वरुं करोति" इति यूपवृक्षादन्यवृक्षतस्स्वरुकरणन्निन्द्यते। तदेतत् स्वरोर्यूपानुनिष्पन्नत्वेऽनुपपन्नं स्यात्। अतोऽपि यूपाद् भेदेन स्वरुरुत्पादयितव्यः॥

अथ सिद्धान्तयति—

## तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥

तदेकदेशः—यूपाच्छिद्यमानमनुनिष्पन्नश्शकल एव स्वरुः प्रत्येतव्यः। कुतः? स्वरुत्वस्य तन्निमित्तत्वात्। स्वरुत्वस्य-स्वरुस्वरूपस्य सिद्धस्यैव पशुसमञ्जनार्थ-मादातव्यतयार्थात्प्राप्तस्य तस्मिन् "यूपस्य स्वरुं करोति" इति विधाने उद्देश्य-तया निमित्तत्वात्। यूपस्येति हि सम्बन्धसामान्ये षष्ठी। कृञ्धातुरादाने लक्षणया वर्तते। तथा च पशुसमञ्जनार्थं यस्स्वरुरादातव्यः, स यूपप्रकृतिवृक्षैक-देश इति विधि पर्यवस्यति। एवंविधश्च स्वरुः परप्रयुक्तत्वान्न यूपधर्माणां प्रयोजकः। एवञ्च यूपस्येत्येतावदेव विधेयमिति लाघवम्। यूपशब्दस्य च न लक्षणा। करणेतिकर्तव्यताविशिष्टस्वरुभावनाविधौ तु बह्वर्थविधानाद् गौरवम्। यूपशब्दस्य च लक्षणा स्यात्। तस्मात् सति यूपे तस्य स्वरुरादातव्यः। "परिधौ पशुं नियुञ्जीत" इत्यत्र तु यस्य 'कस्यचिच्छकल. पशुसमञ्जनार्थमादातव्यः॥

---

१. कस्यचित्त् विकल . अ.

इतोऽप्येवमित्याह—

शाकलश्रुतेः ॥ ४ ॥

यदि स्वरुर्यूपधर्माणां प्रयोजकस्स्यात् तर्हि "यः प्रथमश्शकलः परापतेत् स स्वरुः कार्यः" इति शकलस्य [1]सिद्धवच्छ्रवणमनुपपन्नम्। योऽयमग्नीषोमीयपशुनियोजनार्थे यूपे छिद्यमाने प्रथमश्शकलः परापतति त पशुसमञ्जनार्थतया परिगृह्णीयादित्यर्थः प्रकरणात्। ततश्च परप्रयुक्तद्रव्योपजीवित्वेनैवानुवादान्न स्वरु प्रयोजकः। जात्यन्तराशङ्कावचनन्तु नित्यानुवादो यूपशकलस्तुत्यर्थम् ॥

इतोऽप्येवमित्याह—

प्रतियूपञ्च दर्शनात् ॥ ५ ॥

"यथानुपूर्व्यं स्वरुभिः पशून् समज्य मध्यमे रशनागुणे स्वे स्वे स्वं स्वं यूपशकलमुपगूहति[2]" इत्येवं यूपैकादशिन्यां स्वरुभिरिति स्वरूणां बहुत्वं स्वं स्वमिति [3]तत्तद्यूपानुनिष्पन्नत्वञ्च दर्शयति। यूपात्पृथगेव यूपधर्मेण चेत् स्वरुरुत्पाद्यस्स्यात् तर्हि एकादशिन्यामपि तथानिष्पादितस्यैकस्यैव स्वरोस्तन्त्रेण सर्वपशुसमञ्जनस्य कर्तुं शक्यत्वात्तदनुपपन्नं स्यात्। तस्मादप्यप्रयोजकस्स्वरुः ॥

ननु करोतेरादाने लक्षणा स्यादित्यत आह—

आदाने करोतिशब्दः ॥ ६ ॥

लक्षणया वर्तत इति शेषः। प्रथमश्रुतयूपशब्दे लक्षणाश्रयणापेक्षया जघन्यश्रुतकरोतावेव लक्षणा आश्रयितुमुचिता। न च सर्वेषामपि भावनान्वयित्वेन भावनावाचिकरोते· प्राधान्यात् जघन्येऽपि तस्मिन् लक्षणा न युक्तेति वाच्यम्। भावना हि प्रत्ययवाच्यैव सती कारकैस्सम्बध्यते। न तु कृञ्धातुवाच्या धात्वर्थस्य कारकान्वयायोग्यताया भावार्थाधिकरणे प्रपञ्चितत्वात्। तथा च करोतेः प्राधान्याभावाज्जघन्यस्य तस्यैव लक्षणा युक्तेति भावः। अतः प्राप्तस्वर्वादानानुवादेन यूपशकलोपादानान्न स्वरु प्रयोजकः ॥

इति प्रथम स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥

---

१. सिद्धश्रवण. अ.

२. अपिगूहति. अ, क.

३. तत्रेति मातृकापाठ, तत्तदिति प्रतिपत.

२

'शाखामाच्छिनत्ति'' इति प्रकृत्य ''प्राचीमाहरति'' इति श्रुतम्। किमत्र प्राचीशब्दो दिग्विशेषवाची प्राच्यां दिशि या शाखा तामाहरतीति ? उत शाखा-वाची प्राचीं शाखामाहरति ? इति संशय'। दिग्वाद इति ब्रूमः। प्राचीशब्दो हि मुख्यवृत्या दिग्विशेपे वर्तते। दिशश्चाहरणकर्मत्वासम्भवात् प्राचीमिति द्वितीया सप्तम्यर्थे व्याख्येया—प्राच्यान्दिशि या शाखा तामाहरतीति। यूपस्य स्वरुं करोतीत्यत्र यूपशब्दवत् प्राचीमिति प्रातिपदिकार्थस्य मुख्यत्वाय जघन्यश्रुतद्वितीयाया लाक्षणिकत्वस्य युक्तत्वात् । दिशश्चाहरणाधिकरणत्वन्तद्देशावच्छेदकत्वादुपपन्नम् । यद्वा प्राचीदिशं प्रत्याहरतीत्यर्थ । न च प्रतिशब्दाध्याहारदोपश्शङ्क्यः। हरतेर्द्वि-कर्मकतया प्राच्या अप्रधानकर्मत्वेन प्रतिशब्द विनापि तल्लाभात्। यथा ग्राममजां हरतीति। प्राचीन्दिशं प्रति किमाहरति किमपेक्ष्या प्राचीमित्याकाङ्क्षायां शाखा-माहरतीति प्रकृता शाखा प्रधानकर्मतयान्वेति। प्राच्यान्दिशि राजानं क्रीणातीति-वद्विहारदेश एवावधित्वेनान्वेति। एवञ्च विहारस्य प्राच्यान्दिशि शाखामाहरतीत्येवं प्राच्या दिश आहरणाङ्गत्वात् सा तत्प्रयुक्तेति प्राप्ते, सिद्धान्तयति—

## शाखायां तत्प्रधानत्वात् ॥ ७ ॥

प्राचीशब्दश्शाखायां स्यात्। प्राची शाखामाहरतीति। कुतः ? तत्प्रधानत्वा-च्छाखाप्रधानत्वात्। शाखां प्रकृत्य श्रुतत्वादिति यावत्। [१]आहरणक्रियाया हि प्रथम प्रधानकर्मापेक्षायां स्ववाक्यगतपदात् प्रधानकर्मलाभे सम्भवति वाक्यान्तर-गतपदोपात्ततद्ग्रहणायोगात् प्राचीपदमेव द्वितीयान्त पूर्ववाक्यप्रकृतं समान-विभक्तिकशाखापदसामानाधिकरण्यलब्धविशेष्यकं[२] सत् प्रधानं कर्म समर्पयति। ततश्च प्राचीशाखामाहरतीति वाक्यार्थस्सम्पद्यते। तथा च द्वितीयाविभक्तेर्न लक्षणा। न च द्विग्विशेपवाचिप्राचीशब्दस्य शाखापदसामानाधिकरण्याय तद्दिग्गतशाखाया लक्षणा दुर्वारेति वाच्यम्। विभक्तेस्सप्तम्यर्थलक्षणापक्षेऽपि प्रातिपदिकलक्षणाया-स्तुल्यत्वात् प्राच्या दिशस्साक्षादाहरणाधारत्वासम्भवेन तदवच्छिन्नदेशस्यैव प्राति-पदिकेन लक्षणीयत्वात् प्राचीन्दिश प्रतीत्यर्थेऽपि स्ववाक्यगतं प्रधानकर्म न लभ्येत,

---

१. आहरणादि. अ, ग, व. २. विशेषक. क. ३. धारणत्वासम्भवे अ.ग.

वाक्यान्तरगतमेव च प्रधानकर्म गृह्येत, प्रतिशब्दश्चाध्याह्रियेत । हरतेर्द्विकर्मकत्वेऽपि स्वारसिकप्रधानकर्मत्वप्रतीतिव्यावृत्त्यर्थं प्रतिशब्दाध्याहारस्यावश्यकत्वात् । अश्रुतश्च विहारदेशोऽवधिः कल्प्येत । प्राचीं शाखामित्यर्थे तु शाखाशब्दो वृक्षावयववाची वृक्षमपेक्ष्य प्रवर्तते । अत प्राचीशब्दोऽपि तां विशिंषन् वृक्षमपेक्ष्यैव प्रवर्तत इति वृक्षस्यैव तदवधित्वलाभान्नाश्रुतावधिकल्पनम् । एवञ्च प्राच्यादिशब्दाः शाखाविशेषणत्वाच्छाखाप्रयुक्तैव प्राची दिक् । ततश्च वृक्षस्य या प्राची शाखा सा आहर्तव्या, न तु वृक्षस्य दक्षिणादिपार्श्वसम्भूता । विहारस्य प्राग्देशे आहर्तव्या इति फलति । इदन्तु न पृथक्सूत्रम् । किन्तु अग्रिमसूत्रावयव एवाधिकरणान्तरपरत्वेन भाष्ये व्याख्यातमिति केचित् ॥

इति द्वितीय शाखाहरणाधिकरणम् ॥ २ ॥

३

"शाखामाच्छिनत्ति, शाखामाहरति, शाखया वत्सानपाकरोति, शाखया गान्दोग्धि, मूलतश्शाखा परिवास्योपवेषं करोति, उपवेषेण कपालान्युपदधाति" इति श्रुतम् । अपाकरोति मातृतः पृथक्करोति । परिवास्य छित्वा । तत्र छेदनाहरणपरिवासनाना वत्सापाकरणं दोहनं कपालोपधानञ्चेत्येतत्सर्वं यथायथं प्रयोजकम् ? उत वत्सापाकरणं दोहनञ्चैव प्रयोजकम् , न तु कपालोपधानम् ? इति संशयः । सर्वमपि प्रयोजकं, सर्वस्यापि छेदनादिसाध्यत्वात् । न हि शाखायाः छेदनमाहरणञ्च विना तया वत्सा अपाकार्तुं शक्या । नापि गावः दोग्धुं शक्याः । "कुम्भ्यां शाखापवित्रमत्याधाय पय आसिञ्चति" इति विधानात् । नापि "मूलतश्शाखां परिवास्योपवेप करोति" इति शाखापरिवासनेनोपवेपमनुत्पाद्य उपवेषेणाङ्गारान्निरूह्य तेपु कुम्भीमधिश्रित्य तस्या शाखापवित्रमत्याधाय पयो दुग्धमासिञ्चतीत्येवंविधदोहनम्,उपवेपेणाङ्गारान्निरूह्य कपालान्युपदधातीत्येव कपालोपधानञ्च कर्तुं शक्यम् । ततश्च परिवासनात्पूर्वं वत्सापाकरणादिकं समग्रया शाखया साध्यते । परिवासनानन्तरन्त्वङ्गारनिरूहण शाखाया मूलभागेन क्रियते । अग्रभागेन तु शाखापवित्रमत्याधाय पयस्सिञ्चतीत्यादि क्रियते । ततश्च शाखाच्छेदनाहरणपरिवासनाना वत्सापकरणदोहनकपालोपधानानि यथायथ प्रयोजकानीति प्राप्ते सिद्धान्तयति—

## श्रुत्यपायाच्च ॥ ९ ॥

श्रुते· शाखाशब्दश्रवणस्य परिवासनतदुत्तरवाक्यगतस्य मूलात् अपायात्—शाखां परिवास्य शाखया गान्दोग्धीत्यादौ परिवासितेऽपि मूले शाखाशब्दव्यवहारदर्शनादिति यावत्। परिवासनात्प्राक् समूलाग्रवचनश्शाखाशब्दः। (कृते तु परिवासनेऽग्रमात्रवचनः। यथा—अङ्गुल्यादिकिञ्चिदवयवच्छेदे च्छिन्नावशिष्टवचनो देवदत्तशब्द) स्तद्वदिति भावः। यद्वा परिवासनात्पूर्वं तदुत्तरमपि शाखाशब्दश्रवणमग्रान्नापैति, मूलात्तु परिवासनोत्तरं मूलादपैति। अतश्शाखाशब्दश्छेदनादिवाक्येषु परिवासनात्पूर्वमप्यग्रमात्रवचन एव, न तु समूलवचनः। अतश्छेदनादयस्सर्वे धर्मा अग्रार्था एव, न तु मूलार्था इति न तेषामुपवेषः प्रयोजकः। शाखैव तत्प्रयोजिका छेदनाहरणयोर्मूलस्य सहभावस्तु मूलात् परिवासनं शाखाया यथा स्यादित्येवमर्थः। न हि मूलं विना च्छिन्ने आहृते च मूलाच्छेदनं शाखाया लभ्यते। अतश्शाखानुनिष्पन्नोपवेपकार्यं[1] कपालोपधानं न शाखाधर्माणां प्रयोजकम् ॥

प्रयोजनं पूर्वपक्षे—पौर्णमास्यां वत्सापाकरणाद्यभावेऽपि कपालोपधानार्थोपवेषाय शाखा उत्पाद्या। सिद्धान्ते तु-काष्ठान्तरेण तदुपधानम्। तच्च काष्ठान्तरं वारणमेव, 'वारणान्यहोमार्थानि' इति वचनादित्यन्यदेतत् ॥

इति तृतीय छेदनादीना शाखाप्रयुक्तत्वाधिकरणम् ॥ ३ ॥

४

"सह शाखया प्रस्तरं प्रहरति" इत्यत्र किमिद शाखाप्रहरणमर्थकर्म ? उत प्रतिपत्तिः ? इति संशये, पूर्वपक्षयति—

## हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणाञ्चार्थशेषत्वात् ॥ १० ॥

सिद्धान्तसूत्रे प्रतिपत्तिशब्दादत्र तत्प्रतिभटमर्थकर्मेत्यध्याहार्यम्। पौर्णमास्यां शाखा नाहर्तव्येति पूर्वाधिकरणप्रयोजनमुक्तमनुपपन्नम्। तत्र कपालोपधानार्थं तदनाहरणेऽपि प्रहरणार्थन्तदाहरणावश्यम्भावादित्याक्षेपिकीं सङ्गतिं तुशब्दो द्योतयति। हरणे'—शाखाप्रहरणाख्ये सूक्तवाकेन प्रस्तरं प्रहरति" इति वाक्ये

( ) ग्रन्थपातः क पुस्तके. १. हरणे नास्ति. अ.

विहितप्रस्तरप्रहरणानुवादेन 'सह शाखया' इत्येव विधीयते। प्रस्तरप्रहरणस्य सूक्तवाकवाक्यत एव प्राप्तत्वात्। सूक्तवाकवाक्ये च द्रव्यदेवतासम्बन्धबलात् प्रहरतिर्यागयुक्तप्रक्षेपपरः। तत्र यागांशे प्रस्तरस्य गुणभावः। अग्न्यादिदेवताकप्रस्तरद्रव्यकयागेन क्रतुमुपकुर्यादिति। प्रक्षेपांशे तु प्रस्तरस्य प्राधान्यम्। प्रहरणेन प्रस्तरं प्रतिपादयेदिति। तदेव प्रस्तरप्रहरणमर्थकर्म प्रतिपत्तिश्चेति तृतीयस्य द्वितीये 'सूक्तवाके च कालविधिः' इत्यत्र स्थितम्। यथावगतश्चानुवाद इति सहशाखयेति वाक्येऽपि प्रहरतिर्यागयुक्तप्रक्षेप एवाश्रयितव्यः। अनुवादत्वाच्च लक्षणा न दोषाय। तत्र च शाखा यागांशं प्रति गुणतयान्वेति। कुतः? योगसामान्यात्। प्रस्तरतुल्ययोगित्वादित्यर्थः। प्रस्तरस्य यागांशे साधनत्वेन गुणतया शाखाया अपि तत्सहभूताया गुणत्वौचित्यादिति यावत्। प्रक्षेपांशस्तु शाखाया न प्रस्तरवत् प्रतिपत्तिः, प्रस्तरमितिवत् द्वितीयाश्रवणाभावात्। तथा चाहवनीयेऽग्न्यादिदेवताकप्रस्तरद्रव्यकयागपूर्वकप्रक्षेपे क्रियमाणेऽग्न्यादिदेवताकशाखाद्रव्यकयागपूर्वकप्रक्षेपेण क्रतुमुपकुर्यादिति वचनव्यक्तिः पर्यवस्यति। ननु दोहनादिकर्मणि विनियुक्तायाश्शाखायाः प्रतिपत्त्यपेक्षत्वात् द्वितीयाश्रुत्यभावेऽपि प्रक्षेपः प्रतिपत्तिरस्तु। तत्राह—द्रव्याणाञ्चेति। अन्यत्र विनियुक्तानामप्येवञ्जातीयकानां द्रव्याणां "भूतं भव्यायोपदिश्यत" इति न्यायेन अर्थयोगक्रियात्मकं प्रति शेषत्वस्यैवोचितत्वात्। तस्माद्यागांशे शाखाप्रहरणमर्थकर्मेति प्राप्ते, सिद्धान्तयति—

## प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥

प्रतिपत्तिरेव शाखाप्रहरणम्। कुतः? शब्दस्य तत्प्रधानत्वात्। प्रहरतिशब्दस्य मुख्यया वृत्त्या प्रक्षेपमात्रपरत्वात्। प्रक्षेपे च प्रस्तरस्य प्रतिपाद्यतया तत्सहयोगिन्याश्शाखाया अपि प्रतिपाद्यत्वौचित्यात्। यद्यपि सूक्तवाकवाक्ये प्रहरतिर्यागसहित[1]प्रक्षेपलक्षकः, तथापि मुख्यप्रक्षेपमात्रानुवादेन शाखासहभावमात्रं सह शाखयेति वाक्ये विधीयते। न च सूक्तवाकमुच्चार्य प्रह्रियमाणयोः प्रस्तरशाखयोः मान्त्रवर्णिकद्रव्यदेवतान्वयाविशेषाच्छाखाप्रहरणमपि होमस्स्यादिति वाच्यम्। सूक्तवाकमन्त्रो हि न शाखाप्रहरणे साधनम्। "सूक्तवाकेन प्रस्तरं प्रहरति" इति प्रस्तरप्रहरणमात्रे तस्य साधनत्वेन विनियोगात्। किन्त्वार्थ[ सहभाव ]-

१. प्रक्षेपे. अ, क.

मात्रम्। ततश्च सूक्तवाके "यदनेन हविषाऽऽशास्ते" इति प्रस्तरस्यैव निर्देशान्न शाखाया देवतासम्बन्ध इति केवलप्रक्षेप एव शाखाप्रहरणं, न तु होमरूपम्। नन्वस्तु यागविनिर्मुक्तकेवलप्रस्तरप्रक्षेपानुवादेन सहशाखयेति विधि, तथापि द्रव्यकर्मसंयोगन्यायेन प्रस्तरप्रक्षेपे शाखाया गुणभाव एव स्यात्, यत्प्रस्तरं प्रक्षिपति तत् सहशाखयेतीत्यत्राप्येतदेव उत्तरम्—शब्दस्य तत्प्रधानत्वादिति। सहशाखयेति वाक्ये प्रस्तरमिति द्वितीयान्तस्य संस्कार्यत्वलक्षणप्राधान्यपरत्वादित्यर्थः। प्रक्षेपणात्मिका हि कृतप्रयोजनशाखायाः प्रतिपत्तिरपेक्षिता। प्रक्षेपणेन च वेदिदेशरिक्तीकरणात् सुखप्रचारो दृष्टं कार्यम्, न तु शाखासाधनकप्रहरणतः किञ्चिदपि दृष्टं कार्यमस्ति। तस्माच्छाखाप्रहरणं केवलप्रक्षेपात्मकं प्रतिपत्तिकर्मेति सिद्धम्। ननु प्रस्तरमिति द्वितीयाश्रुत्या प्रहरणे प्रस्तरस्य प्रतिपाद्यत्वलाभेऽपि शाखायां कथं प्रतिपाद्यत्वलाभः। सहभावस्तु न प्राधान्यसाधकः। 'ऋत्विग्भिस्सह यजमानो यजते' इत्यादावतुल्यभावेऽपि सत्वादिति चेत्—प्रतिपत्तेरपेक्षितत्वात् प्रहरणाङ्गत्वेनादृष्टार्थत्वापातात्। उत्सर्गतस्तुल्यरूपयोरेव सहभावे सहशब्दस्वारस्याच्च शाखाप्रहरणं प्रतिपत्तिरिति षष्ठे समर्थयिष्यते।

ननु प्रस्तरमिति द्वितीयया प्रस्तरस्य प्रहरणे प्राधान्यावगमात् तत्सहभावावगततुल्ययोगायाश्शाखाया अपि तत्र प्राधान्यमिति यदुक्तं तदयुक्तमित्याक्षिप्य समाधत्ते—

**अर्थेऽपीति चेन्न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १२ ॥**

अर्थेऽपि—गुणभावेऽपि द्वितीया दृश्यते "सक्तूञ्जुहोति" "मारुताञ्जुहोति" इत्यादौ। तद्वत् सहशाखया प्रस्तरस्य प्रहरणे गुणभावो न विरुध्यत इति चेत्—नैषा शाखा सक्त्वादिद्रव्येण तुल्या। कुतः ? तस्य—सक्त्वादिद्रव्यस्य संस्कृतस्य अनधिकारात्—भूतभाव्युपयोगाभावात्। इह च शाखया संस्कृतया अर्थस्य वत्सापाकरणादिकार्यस्य कृतत्वात्। अतश्शाखाप्रहरणं शाखाया प्रतिपत्तिरेवेति न तत् प्रयोजकम्। प्रयोजनन्तु—यदि शाखाप्रहरणमर्थकर्म तदा पौर्णमास्यामपि शाखोत्पाद्या। प्रतिपत्तिश्चेन्नोत्पाद्येति ॥

इति चतुर्थं शाखाप्रहरणस्य प्रतिपत्तिताधिकरणम् ॥ ४ ॥

५

दर्शपूर्णमासयोश्श्रूयते—"अप: प्रणयति, प्रणीताभिर्हवींषि सयौति, अन्तर्वेदि प्रणीता निनयति" इति । तत्र किं संयवननिनयनोभयार्था प्रणीता आप., अत उभय-प्रयुक्ताः ? उत संयवनार्था एव, अतस्तत्प्रयुक्ता एव, निनयनन्तु प्रतिपत्तिः ? इति संशये, पूर्वपक्षयति—

**उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद्विभागस्स्यात् ॥ १३ ॥**

यदि संयवनसंयोगेन प्रणीता उत्पद्येरन् तदा तेनैव प्रयोजनेन निराकाङ्क्षतया निनयनरूपप्रयोजनान्वयायोगान्निनयनं प्रतिपत्तिरेव स्यात् । न चेह संयवनसंयोगे-नोत्पत्तिरस्ति । अत प्रणीतानामपां ध्रौवाज्यवद् विभागः—विभज्यानेकत्र सयवने निनयने च विनियोगस्स्यात् । तस्मादुभयप्रयुक्ताः प्रणीता इति प्राप्ते, सिद्धान्तयति—

**संयवनार्थानां वा प्रतिपत्तिरितरा तत्प्रधानत्वात् ॥ १४ ॥**

संयवनार्थानामेव प्रणीतानामपाम् इतरा[1]निनयनक्रिया प्रतिपत्तिः, न तूभयार्थाः प्रणीताः । कुत. ? तत्प्रधानत्वात् । "प्रणीताभिस्संयौति" इति तृतीयाश्रुत्या अपां संयवनं (प्रति गुणभावावगमेन संयवनप्रधानकत्वावगमात्, "प्रणीता निनयति" इति द्वितीयाश्रुत्या तस्मिन्निनयने अपां प्राधान्यावगमाच्च । एवञ्चोत्पत्तौ प्रयोजना-संयुक्तानामपि प्रणीतानां कैमर्थ्याकाङ्क्षायां[2] तृतीयया संयवनार्थत्वं गम्यते । निनय-नन्तु द्वितीयासंयोगात् प्रतिपत्तिरिति । ननु कार्यान्तरोपयुक्तस्य प्रतिपत्तिर्भवति । इह तु यास्संयवन उपयुक्ताः न तासान्निनयनम्, ) किन्तु ताभिस्सह गृहीतानां [3]तदितरासामेव । ततश्च संयवनोपयुक्तावशिष्टानामपां कार्यान्तरोपयोज्यत्वाभावेन प्रतिपत्त्यनर्हत्वात् सक्तुवद्विभक्तिव्यत्ययेनार्थकमेव निनयनम् । किञ्चापां केवलसंयव-नार्थत्वे यावतीभिस्सयवन सम्भवति तावतीनामेवापां ग्रहणं स्यात् नाधिकानामिति निनयनविधिरयुक्तस्स्यात् । उभयार्थत्वे तु युक्तमधिकग्रहणमित्युभयप्रयुक्ता एव प्रणीता इति चेदुच्यते -अत्यन्तकौशले सत्यपि यत्किञ्चिन्न्यूनाधिकभावस्यावर्जनीयतया संयवनमात्रपर्याप्तानामपां ग्रहणं कर्तुन्न शक्यम् । अल्पग्रहणे च सयवनानिष्पत्तेः

---

१. नयनक्रिया. क, ग.  () गपुस्तके ग्रन्थपात.

२. कैमर्थ्याकाङ्क्षाणा. अ, क.  ३. तदितरार्थमेव. ग.

पुनर्मध्ये प्रणीतानां संस्कारः कार्य इति पात्रासादनानन्तरं विहितस्य तत्संस्कारस्य संयवनकाले पुनरनुष्ठाने क्रमभ्रंशापत्तेरधिकानां ग्रहणमवर्जनीयमिति न निनयनविध्य[युक्तत्व]दोषः। अधिकानाञ्च स्वयमन्यत्रोपयुक्तत्वाभावेऽप्युपयुक्तानुनिष्प या लोहितशकृदादिवत् प्रतिपत्त्यर्हत्वमस्त्येवेति सक्तुवैषम्यान्न विभक्तिव्यत्ययः।

प्रयोजनं पूर्वपक्षे-संयवनान्तरं प्रणीतानाशे पुनस्ता उत्पाद्याः। "आदित्यः पयसि चरुः प्रायणीयः" इत्यादावपि निनयनार्थमापः प्रणेतव्या इति। सिद्धान्ते तु-नेति ॥

इति पञ्चमं निनयनप्रतिपत्त्यधिकरणम् ॥ ५ ॥

६

ज्योतिष्टोमे श्रूयते—"दण्डेन यजमानं दीक्षयति" इति। "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इति च। तदिदं प्रदानं 'दीक्षायामुपयुक्तस्य दण्डस्य प्रतिपत्तिरूपम्? उत उपयोक्ष्यमाणमैत्रावरुणसंस्काररूपम्? इति संशये पूर्वपक्षयति—

**प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १५ ॥**

मैत्रावरुणाय दण्डप्रदानमुपयुक्तदण्डप्रतिपत्तिः[२]। कुतः? कृतार्थत्वात्-कृतकार्यत्वात्। "दण्डेन दीक्षयति" इति तृतीयया हि दण्डो दीक्षणे शेषत्वेन विनियुक्तः। तस्य च कृतकार्यस्य मैत्रावरुणहस्ते प्रक्षेपः प्रतिपत्तिरिति न्याय्यम्। अपेक्षितविधानात् प्रासनवत्। यथा "कृष्णविषाणया कण्डूयते" इति कण्डूयने उपयुक्तायाः कृष्णविषाणायाः "चात्वाले कृष्णविषाणां प्रास्यति" इति प्रासनं प्रतिपत्तिः तद्वत्। दण्डप्रतिपत्तिकर्मत्वे सत्येव दण्डमिति द्वितीयायाः कृतार्थत्वात्। लब्धस्वाभिधेयकत्वादित्यप्यर्थः[३]। द्वितीया हि कर्मणि विहिता। "कर्तुरीप्सिततमं कर्म" इति च कर्मलक्षणम्। तच्च साध्यत्वप्राधान्यनियतम्। दण्डप्रदानेन मैत्रावरुणमुपकुर्यादित्यर्थे च दण्डस्य गुणभूतत्वाद्द्वितीयागम्यं प्राधान्यं विरुध्येत। तस्माद्दण्डस्य प्रतिपत्तिः प्रदानमिति ॥

---

१. दीक्षणे. अ, क, ग.
२. प्रतिपत्तिकर्म. अ, क.
३. इत्यर्थं. अ, क.

अथ सिद्धान्तयति—

**अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ॥ १६ ॥**

अर्थार्थं कर्म अर्थकर्म, अर्थः मैत्रावरुणोपकारलक्षणं कार्यम्। तदर्थमेवेदं प्रदानलक्षणं कर्म। कुतः? कर्तृसयोगात्। कर्तृशब्देन पुरुषो विवक्षितः। कर्त्रर्थस्सयोगः कर्तृसंयोगः। दण्डो हि तिमिरावृतविषमतलसञ्चारादावालम्बनं भवितुं सर्पमृगादि च निवारयितुं समर्थः। ततश्च पुरुषं परिष्कुर्वन्तं[1] दण्डं प्रति सामर्थ्यादेव पुरुषश्शेषित्वलक्षणं प्राधान्यमश्नुते, स्रग्वत्। यथा 'हिरण्यमालिन· ऋत्विज· प्रचरन्ति" इति स्रजां पुरुषं परिष्कुर्वन्तीनां[2] पुरुषप्रधानकत्व तद्वत्। ततश्च दण्डं प्रति मैत्रावरुणस्य प्राधान्ये सति दण्डस्यापि न[3] प्राधान्यं युक्तम्। ननु दण्डमिति द्वितीयाश्रुत्या दण्डस्यैव प्राधान्यमुचितम्, लिङ्गाच्छ्रुतेर्बलीयस्त्वादित्यत्राप्येतदेवोत्तरम्–कर्तृसंयोगादिति। प्रैषादिकर्तुर्मैत्रावरुणस्य चतुर्थ्या प्रदीयमानदण्डापेक्षया प्रधानतया सम्बन्धावगमात्। सम्प्रदाने हि चतुर्थी विहिता। 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति च सम्प्रदानलक्षणम्। ततश्च ददातिक्रियाकर्मणा दण्डेनाभिप्रेयमाणस्य मैत्रावरुणस्य[4] दण्डापेक्षयापि प्राधान्यावगमात्तत्प्रधानमेव दण्डस्य प्रदानम्। न च दण्डस्य प्राधान्याभावे तस्येप्सिततमत्वाभावेन कर्मत्वाभावाद्दण्डमिति द्वितीयानुपपत्ति·। अकर्मणा दण्डेनाभिप्रेयमाणत्वान्मैत्रावरुणस्य सम्प्रदानत्वानुपपत्तिश्चेति वाच्यम्। दण्डस्येप्सिततमत्वाभावेऽपि 'तथा युक्तं चानीप्सितम्' इति सूत्रेण द्वितीयोपपत्ते। येन प्रकारेण साध्यत्वात्मनाम् ईप्सिततमं क्रियया युक्तं कर्मसंज्ञं भवति तथा तेन प्रकारेण क्रियया युक्तमनीप्सितमपि कर्मसंज्ञं भवतीति हि तदर्थः। 'कर्मणा यमभिप्रैति' इति सूत्रे च कर्मशब्दः अनीप्सितकर्मपर एव '[illegible] पय-निष्पत्तये' इति ( ) न्यायेन ईप्सिततमेनान्यस्याभिप्रेयमाणत्वायोगात्। न चैवं सति द्वितीयाया अनेकार्थत्वं शङ्क्यम्। ईप्सितानीप्सितसाधारणं साध्यत्वमेव द्वितीयार्थं इति [5]द्वितीये व्यवस्थापितत्वात्। तत्र च शेष्यभावे दण्ड एव साध्यश्शेषी भवेत्। अस्ति चात्र मैत्रावरुणश्शेषी। स एव हि दण्डापेक्षयापि प्रधानत्वात् शेषी भवति,

---

१. प्रत्युपकुर्वन्त. ख. २. उपकुर्वन्तीना. ख, परिष्कृत कुर्वन्तीनां. क.

३. न नास्ति. अ. ४. मैत्रावरुणस्य नास्ति अ.

५. द्विधा. अ, विधेर्व्यवस्थापितत्वात्. क.

न तु साध्यत्वेनावगम्यमानोऽपि दण्डः, शेषत्वानाक्रान्तसाध्यत्वस्यैव शेषित्वप्राधान्याभ्युपगमात्। दण्डप्रदानेन मैत्रावरुणमुपकुर्यादिति शेषभूतप्रदानगुणभूतस्य दण्डस्य सुतरां शेषत्वात्। न चैवं सति "सक्तूञ्जुहोति" इत्यत्रापि त्यागविशिष्टप्रक्षेपात्मकहोमक्रियाव्याप्यमानत्वादनीप्सितकर्मणि द्वितीयैव सम्भवतीति किमिति विभक्तिव्यत्यय आश्रीयत इति वाच्यम्। सक्तूनां हि भूतभाव्युपयोगाभावेन होमस्य तदर्थत्वानुपपत्त्या सक्तुसाधनकेन होमेनेत्येव साधनत्वेनैवान्वयस्य वक्तव्यतया तत्र साधनत्व[1]प्रत्ययार्थं तृतीयार्थे द्वितीयाया व्यत्यय आश्रयणीयः। इह तु 'कर्मणा यमभिप्रैति' इति सूत्रस्वारस्यानुसारेण प्रदानक्रियाकर्मणा दण्डेन मैत्रावरुणमुपकुर्यादित्येव दानकर्मकेनैव दण्डस्य बोधनान्न द्वितीयाया व्यत्यय इति वैषम्यम्॥

ननु प्रतिपत्तित्वे विहारप्रदेशरिक्तीकरणेन दृष्टार्थत्वन्दण्डप्रदानस्य लभ्यते। मैत्रावरुणार्थत्वे त्वदृष्टार्थत्व स्यादित्यत आह—

## [2]कर्मसंयुक्ते च दर्शनात्॥ १७॥

"दण्डी प्रैषानन्वाह। पुरोनुवाक्याश्च प्रह्वोऽवस्थाय वेद्यान्दण्डमवष्टभ्य ब्रूयात्" इत्येव [3]प्रैषपुरोनुवाक्यानुवचनलक्षणकर्मसंयुक्ते मैत्रावरुणे आलम्बनत्वेन दण्डस्य विनियोगो दृश्यते। अतो मैत्रावरुणार्थत्वेऽपि प्रदानस्य दृष्टार्थत्वान्न दोषः। ननु प्रदानस्य दण्डार्थत्वे मैत्रावरुणार्थत्वे च दृष्टार्थत्वस्याविशिष्टत्वाद्विनिगमनाविरह इति चेन्न; उपयुक्तदण्डसंस्कारापेक्षया उपयोक्ष्यमाणमैत्रावरुणसंस्कारस्याभ्यर्हितत्वात्। उपयोक्ष्यमाणसंस्कारो हि कार्यनिष्पत्त्युपयोगितयाभ्यर्हितः, उपयुक्तसंस्कारस्तु नैवम्। तस्योत्पन्ने कार्येऽतिशयाधानमात्रार्थत्वात्। दण्डप्रतिपत्तित्वे प्रथमश्रुतचतुर्थीगम्य[4]मैत्रावरुणप्राधान्यभङ्गापत्तेश्च[5]। किञ्च प्रतिपत्तित्वे मैत्रावरुणहस्ते प्रक्षेपमात्रेण शास्त्रार्थस्य कृतार्थत्वात् "दण्डी प्रैषानन्वाह पुरोनुवाक्याश्च" इत्यत्यन्तमप्राप्तदण्डविधिस्स्यात्। मैत्रावरुणसंस्कारत्वे तु प्रकरणाविशेषान्मैत्रावरुणकर्तव्यसर्वकर्मार्थं दण्डदानं स्यात्। [6]तस्यैव [7]प्रैषानुवचनमात्रे उपसंहारार्थं "दण्डी प्रैषानन्वाह" इत्यादिवचनमिति विधिलाघवं लभ्यते। तस्माद्दण्डप्रदानं मैत्रावरुणार्थम्। अनुक्त-

---

१. प्रतीत्यर्थं. ज. २. कर्मयुक्ते. ३. अनुवाक्यानुवचन. अ.
४. गम्ये अ. ५. पत्तो क. ६. तस्य च. ग.
७. प्रैषानुवाक्यानुवचन ज, क, ख.

तच्छङ्कापरिहारार्थश्चकारः। प्रयोजनम् पूर्वपक्षे—अग्नीषोमीयविकारे निरूढपशौ दण्डदीक्षाया अभावान्न मैत्रावरुणाय दण्डप्रदानम्। मैत्रावरुणस्तु यत्किञ्चिदवष्टभ्य प्रैषानुवचने कुर्यात्। सिद्धान्ते तु मैत्रावरुणार्थमेव तत्रापि दण्डान्तरमुत्पाद्यमित्याद्यूह्यम्॥

इति षष्ठं दण्डप्रदानस्यार्थकर्मताधिकरणम्॥ ६॥

७

ज्योतिष्टोमे "कृष्णविषाणया कण्डूयते" इति विधाय श्रूयते "नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति" इति। तत्र कृष्णविषाणाप्रासनेन क्रतुमुपकुर्यादित्येव कृष्णविषाणाप्रासनमर्थकर्म? उत कृष्णविषाणायाः प्रतिपत्तिः? इति संशय। न प्रतिपत्तिरिति ब्रूमः। कुतः? कृतकार्यस्य द्रव्यस्य हि संस्कारः प्रतिपत्तिः। कार्ययोग्यतापादनमेव च सस्कारः। निष्पन्ने च कार्ये कार्ययोग्यतापादनायोगान्न संस्कारेण प्रयोजनमस्ति। कृष्णविषाणामिति 'द्वितीया त्वगत्यानीप्सितकर्मणि नेया। तस्मात् प्रासनमर्थकर्मैवेति प्राप्ते, सिद्धान्तयति—

**उत्पत्तौ येन संयुक्तन्तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिस्स्यात्॥ १८॥**

उत्पत्तौ विधौ यद् येन कार्येण संयुक्तं–यत्कार्यार्थतया श्रुतं तत्तदर्थम्। कुतः? श्रुतिहेतुत्वात्—तादर्थ्यस्य विधिमूलकत्वात्। तस्य चान्यार्थतयोत्पन्नस्य कृतकार्यस्यार्थान्तरगमने–कार्यान्तरसम्बन्धे सति तत्कार्यान्तरं प्रतिपत्तिः–सत्काराख्यसंस्कारस्स्यात्। कुतः? शेषत्वात् कृष्णविषाणामिति [1]द्वितीयाश्रुत्या प्रासनस्य कृष्णविषाणार्थत्वावगमात्। प्रतिपत्तिर्नाम सत्कार। यथा राजभृतनिर्माल्यस्रगादीनां [illegible] शिरसा धारणरूपसत्कारे कृते राजा प्रसीदति, अन्यथा कुप्यति। [illegible] [2]निष्पन्नकार्याया अपि कृष्णविषाणायास्तदुचितचात्वालदेशप्रापणं सत्कारः। [illegible] विशेषः—लोके राजकीयपुरुषकृतराजनिर्माल्यस्रगादिसत्कारो [illegible] दृष्टार्थः, इह तु चात्वालप्रासनरूपसत्कारः कृष्णविषाणाया [illegible] कञ्चिदतिशयञ्जनयति। स चातिशयः कण्डूयनापूर्वं कञ्चिदतिशयमाधत्ते। स च [3]प्रासनो-

१. द्वितीयावगमात् अ.  २. निष्पन्नकार्यार्थाया. क.  ३. प्रासनोत्पन्नं. ग.

त्तरभाविप्रधानयागाभ्यासेषूत्पत्त्यपूर्वजननयोग्यतामतिशयविशेषात्मिकामाधत्ते। प्रातस्सवनपूर्वकालीनप्रधान[1]यज्ञ्यभ्यासेषु तदुत्पत्त्यपूर्वाणां परमापूर्वजननयोग्यतामाधत्ते। ततश्च न कार्ययोग्यत्वाधानसंस्कारत्वक्षतिः कृष्णविषाणायाः। प्रतिपत्तिलोपे च कण्डूयनलक्षणन्तत्कार्यमुत्पन्नमपि उक्तविधकार्यजननायोग्यं भवतीति द्वितीयाबलादेव कल्प्यते। न चैवं प्रकारेणादृष्टार्थत्वाश्रयणापेक्षया कृष्णविषाणाप्रासनेनापूर्वं कुर्यादित्यर्थकर्मत्वमेव कुतो नाश्रीयत इति वाच्यम्, कृतकार्यस्य विषाणाद्रव्यस्य प्रचारदेशरिक्तीकरणाय प्रतिपत्तेरपेक्षितत्वात्। न चोर्ध्वभाविकण्डूयनेषु उपयोक्ष्यमाणविषाणासंस्कार एव प्रासनम्, न तु प्रतिपत्तिरिति वाच्यम्। तथासति प्रासनादूर्ध्वं तत्संस्कृतया विषाणया [2]कण्डूयनं ततः प्राक्तु तदसंस्कृतयेति कण्डूयनविधिवैरूप्यप्रसङ्गात्। अतो द्वितीयाबलात् प्रतिपत्तिरेव प्रासनम्। तद्बलाच्च प्रासनात् प्राचीनेष्वेव कण्डूयनेषु विषाणाविनियोग पर्यवस्यतीति न कण्डूयनविधिवैरूप्यप्रसक्तिः। सूत्रे येन संयुक्तमिति सामान्यनिर्देशात् "इडा भक्षयति" इत्याद्यपि सर्वं प्रतिपत्तिवाक्यमितीहोदाहरणं[3] बोध्यम्। कृतकार्यस्य द्रव्यस्य संस्कार प्रतिपत्तिरिति प्रतिपत्तिलक्षणमप्यत्र निर्दिष्टं वेदितव्यम्। सूत्रे[4] चोत्पत्तावित्यविवक्षितम्। अन्यथा प्रणीतानिनयनस्य प्रतिपत्तित्वानापत्तेः "अप प्रणयति" इत्युत्पत्तौ तस्य कार्यसंयोगाभावादुत्पन्नानामेव तासां "प्रणीताभिस्संयौति" इति वाक्यान्तरेण कार्यसंयोगात्। प्रयोजनम् पूर्वपक्षे—प्रतिपत्तेः पूर्वं प्रतिपाद्यद्रव्यस्य नाशे पुनरुत्पादनम्। सिद्धान्ते तु[5] नेत्याद्यूह्यम्॥

इति सप्तमं कृष्णविषाणाप्रासनस्य प्रतिपत्तिताधिकरणम्॥ ७॥

८

अस्ति ज्योतिष्टोमेऽवभृथः—"वारुणेनैककपालेनावभृथमवयन्ति" इति। तत्र श्रुतम्—"यत्किञ्चित् सोमलिप्तं द्रव्यं तेनावभृथं यन्ति" इति। तत्र संशयः—किं सोमलिप्तेन द्रव्येण सोमर्जीषग्रावाभिषवणफलकादिना अवभृथकर्म कुर्यादित्येवमवभृथे सोमलिप्तं साधनम्? उत अवभृथदेशयानेन सोमलिप्तद्रव्यं प्रतिपादयेदिति सोमलिप्तद्रव्यस्यावभृथदेशनयनं प्रतिपत्तिः? इति। तत्र सिद्धान्तेनोपक्रमते—

१. यज्ञाभ्यासेषु. क.
२. कण्डूयनेऽन्तत प्राक्तु तः सस्कृतया. अ, कण्डूयन ततः प्रकृत सस्कृतया. क.
३. उदाहरणमिति बोध्यम्. क.
४. च नास्ति ग
५. नोत्पाद्यमित्यूह्यम्. अ. क.

## सौमिके च कृतार्थत्वात् ॥ १९ ॥

सोमप्रकरणाम्नाते सोमलिप्तवाक्येऽपि कृष्णविषाणाप्रासनादिवत् प्रतिपत्तिः प्रत्येतव्या । कुतः ? कृतार्थत्वात्—सोमलिप्तद्रव्यस्य कृतकार्यत्वात् । कृतकार्यस्य च द्रव्यस्य प्रतिपत्तेरपेक्षितत्वात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

## अर्थकर्म वाभिधानसंयोगात् ॥ २० ॥

सोमलिप्तद्रव्यस्य अर्थरूपं प्रयोजनरूपमेवेदम्[1] अवभृथाख्यं कर्म । सोमलिप्तं द्रव्यमवभृथाख्ये कर्मणि हविष्ट्वेन चोद्यत इति यावत् । न त्ववभृथदेशगमनेन सोमलिप्तं द्रव्यं प्रतिपादयेदिति वचनव्यक्तिः । कुत ? अभिधानसंयोगात् । अभिधानं मुख्या शब्दवृत्तिः, तत्संयोगात् । अवभृथशब्दो हि इष्टिविशेषे मुख्यः । तेनेति तृतीया साधनत्वे मुख्या । तदुभयमप्रतिपत्तित्वे सत्येव युज्यते । अन्यथा अवभृथशब्दो देश लक्षयेत्, तृतीया च द्वितीयार्थम् । न चावभृथे नामार्थे कथं सोमलिप्तस्य साधनतयान्वयः, कारकयोर्मिथस्सम्बन्धायोगादिति वाच्यम्, कारकयोरपि यन्तीत्याख्यातोपात्तक्रियाद्वारा तदुपपत्तेः । न च सोमलिप्तस्य हविष्ट्वेऽपि तस्य कृतकार्यतया च[2] स्विष्टकृद्वत् प्रतिपत्तिताप्यवभृथस्यात्विति वाच्यम्, सोमलिप्तेन द्रव्येण हविषा अवभृथं कुर्यादित्यवभृथस्य प्रधानता, अवभृथेन सोमलिप्तं प्रतिपादयेदिति तस्य गुणभूततेति वैरूप्यप्रसङ्गात् । स्विष्टकृद्यागस्य तु शेषद्रव्यं प्रति प्राधान्यमेव । तदीयहोमांशप्रक्षेपस्य पर शेषद्रव्यसंस्कारार्थत्वात् तद्गुणभूततेति वैषम्यम् । अवभृथीयहोमेन सोमलिप्तं प्रतिपादयेदित्याश्रयणे च लक्षणाप्रसङ्गः । तस्मात् सोमलिप्तेन द्रव्येण हविषा अवभृथं कुर्यादित्येव वचनव्यक्तिरिति न प्रतिपत्तिकर्म ॥

अथ सिद्धान्ती प्रत्याचष्टे—

## प्रतिपत्तिर्वा तन्न्याय्यत्वाद्देशार्थावभृथश्रुतिः ॥ २१ ॥

अवभृथयानं सोमलिप्तस्य प्रतिपत्तिरेव । न त्ववभृथेष्टौ सोमलिप्तं हविष्ट्वेन विधीयते । कुतः ? तन्न्याय्यत्वात्—तस्य प्रतिपत्तित्वस्य न्याय्यत्वात् । "वारुणेनैककपालेनावभृथमवयन्ति" इत्युत्पत्तिशिष्टपुरोडाशावरुद्धेऽवभृथकर्मणि हि न

---

१. इद नास्ति. अ, क　　२. च नास्ति. अ, क.

सोमलिप्तद्रव्यं साधनतया निवेशमर्हति, उत्पत्त्युत्पन्नशिष्टयोर्विकल्पस्यान्याय्यत्वात्। न च वचनबलाद्विकल्पश्शङ्क्यः, सोमलिप्तवचनस्य प्रतिपत्तिविधानेन सावकाशात्[1]। किञ्च यन्तीति प्रत्ययेन भिन्नपदस्थयोस्सोमलिप्तावभृथयोस्सम्बन्धविधाने समानपदोपात्तधात्वर्थस्य विधेयताया अलाभेन [2]श्रुत्यनुग्रहाभावाद्वाक्यप्रमाणमेवानुसृतं[3] स्यात्। अवभृथयानेन प्रतिपादयेदिति विधौ तु समानपदोपात्तयानस्य विधेयत्वलाभाच्छ्रुतिरनुगृह्यते। श्रुतिवाक्यविरोधे च श्रुत्यनुग्रह एव न्याय्यः। न च प्रतिपत्तित्वे सोमलिप्तेनेति तृतीयाविरोधश्शङ्क्यः, सहार्थे तृतीयासम्भवात्। कथन्तर्ह्यवभृथशब्दस्यान्वयः। अवभृथकर्मणस्तदानीमनिष्पत्तेरित्यत आह—देशार्थेति। अवभृथशब्दः "अप्स्ववभृथेन चरन्ति" इति भविष्यदवभृथदेशं लक्षयतीत्यर्थः। न चैवं [4]लक्षणैव दोष इति वाच्यम्। पूर्वपक्षे हि सोमार्थतया प्रतीतस्य सोमलिप्तद्रव्यस्यावभृथशेषत्वेन विध्यनुपपत्त्या पुरोडाशकपालपद इवाधिष्ठानलक्षणावश्यम्भावान्मुख्ये लक्षणा। प्रतिपत्तित्वे तु जघन्येऽवभृथशब्दे लक्षणेति न दोषः। सोमलिप्तेन सहावभृथगमनञ्च यज्ञदेशात् सोमलिप्तस्य देशान्तरप्रापणद्वारा भवति प्रतिपत्तिः॥

इत्यष्टममवभृथगमनस्य प्रतिपत्तिताधिकरणम्॥ ८॥

९

दर्शपूर्णमासयोश्चत्वार ऋत्विजः—अध्वर्युर्ब्रह्मा होताग्नीध्रश्च। "समे दर्शपूर्णमासाभ्यां यजेत" "पौर्णमास्यां पौर्णमास्या यजेत" "व्रीहिभिर्यजेत" इत्यादिकमनुवादमात्रम्? उत विधिः? इति संशये, पूर्वपक्षयति—

**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात्॥ २२॥**

कर्तृदेशकालानामिति द्रव्यस्याप्युपलक्षणम्। तेषामचोदनं-न विधिः। कुतः? प्रयोगे नित्यसमवायात्-प्रयोगे विहिते सति तदाक्षेपादेव तेषां नित्यं प्राप्तेः। प्रयोगो हि क्रियात्मकः कारकं विनाऽनुपपद्यमानः कर्त्रादीनाक्षिपति। तत एव तेषां प्राप्तत्वान्न विधिः। 'समे यजेत न विषमे' इत्येव परिसङ्ख्यायान्तु स्वार्थहान्यादि-

१. सावकाशत्वात्. अ, क.
२. श्रुत्यनुग्रहाभावाच्च वाक्य. अ क.
३. अनुगृहीत अ क.
४. लक्षणा दोषः. क. २. कपालवत्. ग.

दोषत्रयं प्रसज्येत। सम एव यजेतेति नियमविधिरित्यपि[1] विविच्यमानः परिसङ्ख्यायामेवान्तर्भवति, तस्यापीतरपरिवर्जनार्थत्वाद् एवकारेण तथा फलविवरणाच्च। तस्मात् पाक्षिकानुवादमात्रमेतदिति प्राप्ते, सिद्धान्तयति--

नियमार्था वा श्रुतिरुच्यते ॥ २३ ॥

श्रुतिः--कर्त्रादिविधि नियमार्थं एवाम्नायते। यद्यपि नियमपरिसङ्ख्ययोरितरपरिवर्जनं गम्यते, तथापि नियमविधावस्ति कश्चिद्विशेषः। तथाहि—दर्शपूर्णमासविध्याक्षेपात् क्वचित्प्रयोगे समादि क्वचिद्विषमादि च प्राप्तम्। यत्र च प्रयोगे विषमादि प्राप्तं तत्र न समादि प्राप्नोति। तत्र दर्शपूर्णमासयागत्वावच्छेदेन समादिविधौ[2] सर्वतत्प्रयोगेषु समादिप्राप्तिः। एवञ्च यत्र प्रयोगे समादि न प्राप्तं तत्रापि तत्प्रापणं शास्त्रेण क्रियते। तस्मिंश्च प्रापिते सति तत्र विध्याक्षेपलक्षणमूलानुत्थानाद्विषमादिवर्जनं लभ्यते। तत्र च प्रथमोपस्थितत्वाद्विधेयसमादिगतत्वेन प्रत्यासन्नत्वाद् भावरूपत्वेन लघुत्वाच्चाप्राप्तांशपूरणमेव विधिफलम्। विषमादिनिवृत्तिस्तु तद्वैपरीत्यादप्राप्तांशपूरणरूपनियमानुनिष्पादित्वाच्च न फलम्। "इत्यश्वाभिधानीमादत्ते" इति परिसङ्ख्यायान्तु अश्वगर्दभरशनादानयोरुभयोरपि "इमामगृभ्णन्" इति मन्त्रस्य लिङ्गवशेन नित्यप्राप्त्या अप्राप्तांशपूरणस्य फलत्वासम्भवादितरपरिवर्जनमेव फलम्। एवेत्येवकारोऽप्ययोगस्य व्यवच्छेदार्थः, न तु परिसङ्ख्यायामिवान्ययोगव्यवच्छेदार्थः। तदेवं नियमपरिसङ्ख्ययोः फलभेदादवर्जनीयो नियमविधिप्रकारः॥

इति नवमं कर्तृदेशकालादिनियमाधिकरणम्॥ ९ ॥

१०

"श्वेतमालभेत, कृष्णानां व्रीहीणाञ्चरुन्निर्वपति" इत्यादौ श्वेतादिगुणश्रवणं किमनुवादमात्रम्? उत नियमविधिः? इति संशय। तत्र युक्तः कर्तृदेशकालाना तत्त्वेन[3] क्रियान्वययोग्यतया क्रियार्थत्वेन नियमविधिः। श्वेतादिगुणविषये तु नियमविधिर्न सम्भवति। यत्र हि पाक्षिकी प्राप्तिस्तत्र नियमविधिर्भवति, यथा "व्रीहिभिर्यजेत"

१. अपिर्नास्ति अ, नियमविधिरपि. ग. २. विधि. अ, क.

३. कालानागमूर्तत्वेन. अ, क.

इत्यादौ। व्रीह्यादिद्रव्यस्य मूर्ततया क्रियायाः साधनत्वेनाक्षेपसम्भवेन पक्षप्राप्तिसम्भवात्। श्वेतादिगुणानान्त्वमूर्तानां न क्रियासाधनत्वेनाक्षेपस्सम्भवति, लोके मूर्तस्यैव साधनत्वावगमात्। किञ्च कृष्णानामित्यत्र षष्ठ्या गुणस्य चरुविशेषणत्वेनैव श्रवणान्न शब्दतोऽपि क्रियासम्बन्ध इति सुतरान्न क्रियार्थतया नियमविधिसम्भवः। तस्माद् गुणश्रवणमनुवादमात्रम्। न च क्रियानाक्षेपे प्राप्तेरेवाभावात् कथमनुवाद इति वाच्यम्। द्रव्ये उपादीयमाने गुणोपादानस्यानुषङ्गिकप्राप्तिसत्वादिति प्राप्ते, सिद्धान्तयति—

**तथा द्रव्ये गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २४ ॥**

गुणश्रुतिरपि तथा-कर्त्रादिश्रुतिवन्नियमार्था। कुतः? उत्पत्तिसंयोगात्। उत्पद्यते कर्म अनेनेति बाहुलकः करणे क्तिन्। क्रियोत्पादकद्रव्येण गुणानां तत्परिच्छेदकतया संयोगात् अमूर्ततया गुणानां साक्षात् क्रियासाधनत्वाभावेऽपि द्रव्यपरिच्छेदद्वारा तत्साधनत्वस्य लोकसिद्धतया क्रियया स्वसाधनद्रव्यपरिच्छेदार्थं गुणस्याक्षेपात् सम्भवति पक्षे तत्प्राप्तिरिति तन्नियमविधिर्युज्यते। कृष्णानामित्यत्र च [1]कृष्णविशिष्टचरु क्रियार्थतया विधीयते। ततश्च विशेषणस्यापि क्रियासम्बन्धावगमात् सम्भवति तत्रापि नियमविधिः, कृष्णत्वस्य [2]स्वद्रव्यस्वरूपार्थत्वे आनर्थक्यापातात्॥

इति दशमं द्रव्यगुणाना नियमार्थताधिकरणम्॥ १० ॥

११

"व्रीहीनवहन्ति" "तण्डुलान् पिनष्टि" इत्यादि किमनुवादमात्रम्? उत नियमविधि? इति संशय। नात्र नियमविधिस्सम्भवति। स हि द्रव्यस्वरूपे वा स्यात्? यागे वा? नाद्य.; द्रव्यस्वरूपे नियमस्यानर्थक्यात्। नान्त्य.; अवघातपेषणादेः द्रव्यनिष्ठतयैव श्रवणेन कर्तृदेशादिवद्याग[3] सम्बन्धित्वानवगमात्। न च "कृष्णानाञ्चरुम्" इत्यादौ कृष्णादिगुणस्य साक्षाद्याग[4]सम्बन्धानवगमेऽपि तद्विशिष्टचरुद्रव्यस्य यागान्वयादर्थाद्विशेषणस्यापि यागान्वय, तथात्र भवितुमर्हति। तत्र गुणविशिष्टद्रव्यस्येव प्रकृतेऽवहननादिविशिष्टद्रव्यस्य यागसम्बन्धाश्रवणाद् "व्रीहिभिर्यजेत" इति द्रव्यस्वरूपमात्रस्यैव तथा श्रवणात्। तस्मात् पुरोडाशविध्याक्षिप्तपक्षप्राप्तानुवादमात्रमेतदिति प्राप्ते, सिद्धान्तयति—

१. विधिशिष्ट. ग. २. द्रव्यस्वरूपार्थत्वे. अ, क.
३. सम्बन्धित्वेनानवगमात्. ख, घ. ४. सम्बन्धस्य. क.

**संस्कारे च तत्प्रधानत्वात् ॥ २५ ॥**

अवहननादिसंस्कारवाक्येऽपि कर्त्रादिवन्नियमविधिः । कुतः ? तत्प्रधानत्वात्—अवहननादिनियमस्य यागप्रधानत्वात् । अवहननादिविधौ यागवाचकशब्दाभावेऽपि प्रकरणबलेन यागार्थत्वावगमादिति यावत् ॥

इत्येकादशमवघातादीना नियमार्थताधिकरणम् ॥ ११ ॥

१२

[1]यागाद्यङ्गभूतानां कर्तृदेशादीनां नियमविधिरिति स्थितम् । तत्प्रसङ्गाद्यागादिलक्षणमनुक्रमिष्यन् यागलक्षण तावदाह—

**यजतिचोदनाद्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २६ ॥**

यजतिचोदना यजधातु, द्रव्यदेवताक्रियं--द्रव्यञ्च देवता च क्रिया च-'न ममेदम्' इत्यभिधानविशिष्टमानसव्यापाररूपत्यागात्मिका तत्समाहारः द्रव्यदेवताक्रियम् । समाहारद्वन्द्वे[2] 'सनपुंसकम्' इति नपुसकत्वम् । अभिधत्त[3] इति सूत्रशेष. । समुदाये द्रव्यदेवतात्यागानां समूहे विषये, कृतार्थत्वात्—कृतकार्यकत्वात् । लोके तत्समुदाये प्रत्यायनस्य यजधातुना कृतत्वात् ॥

अथ होमं लक्षयति—

**तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकस्स्यात् ॥ २७ ॥**

षिच क्षरणे ल्युट् । उपसर्गवशादिह प्रक्षेपण विवक्षितम् । आसेचनं प्रक्षेपणम् अधिकं यस्मात् स आसेचनाधिको याग' जुहोतिर्होमस्स्यात् । कुतः ? तदुक्ते श्रवणात् । "सङ्ग्रामे[4] सयत्ते राजानश्चतुर्होत्रा याजयेच्चतुर्गृहीतेनाज्येन" इति यजधातूक्ते कर्मणि "अर्धं वा पूर्वेण ग्रहेण जुहुयादर्धमुत्तरेण" इति प्रक्षेपाधिक्येन जुहोतेश्श्रवणात् । यागहोमलक्षणकथन स्वीयद्रव्यस्य प्रतिगृहीतृसात्करणं दानमिति दानलक्षणस्याप्युपलक्षणम् । देशाद्यङ्गकत्वस्य दानेऽपि तुल्यतया प्रसङ्गस्याविशेषात् । न च स्वतन्त्रजपा-

---

१. यागाङ्ग. क. २. द्वन्द्व.. ग.
३. अभिधीयत इति. क. ४. सम्पन्ने. क.

देरपि लक्षणं वाच्यमिति शङ्क्यम् । तस्य त्यागात्मकत्वाभावेनाभेदशङ्कानुदयादिति भाष्यानुसारी पन्थाः ।

स्यादेतत्; एवं सति प्रथमसूत्रे चोदनाग्रहणं व्यर्थम्, यागस्यैव लक्षणकथनात् । किञ्च किं द्रव्यादिसमुदायो यजिवाच्यः ? उत समुदित द्रव्यादि ? उत देवतोद्देशेन स्वद्रव्यत्याग ? नाद्यः; यागेन 'करणेन इत्यादिसामानाधिकरण्यव्यवहारविरोधात् समुदायस्य क्रियात्वाभावात् । न द्वितीय ; एकस्य शब्दस्य युगपदनेकार्थाभिधानदोषप्रसङ्गात् पुष्पवन्तपदेन सूर्याचन्द्रमसोरिव द्रव्यस्य देवतायास्त्यागस्य च स्वातन्त्र्येण प्रत्ययापातात् । न तृतीयः; द्रव्यदेवताक्रियमिति समाहारद्वन्द्वविरोधात् । द्रव्यस्य [2]देवतायै क्रिया इति समासस्य क्लिष्टत्वान्नपुसकत्वानुपपत्तेश्च । तदेवं यागलक्षणस्य दुष्टत्वादेव [तद्घ]टित होमलक्षणमप्यनुपपन्नम् । वृद्धव्यवहारेण गवादिशब्दानां गवादिष्विव पूर्वपूर्वयाज्ञिकव्यवहारेण देवतोद्देश्यकद्रव्यत्यागे यजेः तदधिकप्रक्षेपे हुधातोश्च व्युत्पत्तिसम्भवाल्लोकप्रसिद्धपदार्थव्यवहारिण्यां मीमांसायां तल्लक्षणकथन मयुक्तञ्चेति चेत्-मैवम्, देवतोद्देशेन द्रव्यत्याग इत्येवंरूपेण द्रव्यादित्रय यजधातुरभिधत्त इति सूत्रयोजनाया उपपत्तेः, मन्त्रब्राह्मणादीनामिव यागादीनामपि लक्षणकथनस्य युक्तत्वाच्च । किञ्च 'दर्विहोमा· पूर्णमासधर्मा जुहोत्यविशेषात्' इत्येव कात्यायनादयः कल्पसूत्रकृतो जुहोत्यविशेषं यजतेर्मन्यन्ते । तन्निराकरणार्थन्तद्भेदनिरूपणाय [4]तल्लक्षणकथनमुचितमेव । देवतोद्देश्यकद्रव्यत्याग इत्येवंविशिष्टरूपेण द्रव्यादित्रितयं यजधातुरभिधत्ते, न तु प्रक्षेपमपि । कुतः ? समुदाये प्रक्षेपविनिर्मुक्ते द्रव्यादित्रितय एव प्रत्यायनरूपकार्यस्य यजिना कृतत्वात् । तद्यथा पात्नीवते कर्मणि । तत्र हि देवतोद्देशेन द्रव्यत्यागमात्र न तु प्रक्षेपोऽपि । "पर्यग्निकृतं पात्नीवतमुत्सृजति" इति तस्य पर्यग्निकरणान्तत्वात् । तत्र च "इन्द्रः पत्नियामनुयाजयत्" इत्युपक्रमे "यज्ञस्य वा अप्रतिष्ठिताद्यज्ञः पराभवति" इत्युपसंहारे च यजिश्श्रूयते । अत प्रक्षेपांशविनिर्मुक्तो द्रव्यदेवतात्याग एव यजेरर्थ इति विज्ञायत इति प्रथमसूत्रार्थ ।

प्रक्षेपाधिक्रो यागो होम' न तु यागमात्रम, नापि प्रक्षेपमात्रम् । "चतुर्होत्रा याजयेत्" इति यज्यभिहिते कर्मणि प्रक्षेपाधिक्येन जुहोतिश्रवणादिति द्वितीयसूत्रार्थः ।

१. कर्मणा ग.
२. द्रव्यदेवतयो .
३. द्रव्यगन. ग.
४. तत् नास्ति. ग.

मग्नीध आदधाति" इत्यादावतिप्रसङ्गवारणाय त्यज्यमानेति। ननु यदाग्नेयादिवाक्येषु होमविधिरित्येव युक्तं न तु यागविधिरिति। "चतुरवत्तञ्जुहोति" इति यदाग्नेयादिवाक्यप्राप्तस्य कर्मणो जुहोतिना अनुवादादित्यत आह—तदुक्ते श्रवणादिति। तदुक्ते-आग्नेयवाक्योत्पन्ने "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति यजिसंशब्दिते कर्मणि यागात्मक एव "चतुरवत्तञ्जुहोति" इति जुहोतिश्रवणस्योपपत्तेः। तत्र हि होमानुवादेन चतुरवत्तं न विधीयते, येन यागचोदनया होमस्याप्राप्तेर्जुहोतीत्यनुवादासम्भव [1]स्यात्। किन्तु आज्यस्योपस्तृणाति, द्विर्हविषोऽवद्यति, आज्यस्याभिघारयतीति प्राप्तचतुरवत्तानुवादेन तत्संस्कारः प्रक्षेपे विधीयते। अतो यदाग्नेयादिवाक्येषु यागचोदनेति नानुपपन्नम्।

ननु तत्र प्रक्षेपमात्रविधौ जुहोतिर्लाक्षणिकस्स्यात्, तस्य प्रक्षेपाधिकयागवाचित्वादित्य आह—जुहोतिरासेनाधिकस्स्यादिति। प्रक्षेपाधिको याग एवात्र जुहोतिनाभिधीयत इति स्वार्थवृत्तित्वाज्जुहोतिरुपपन्नस्स्यात्। प्रक्षेपाधिकयागस्य [2]शाब्दमर्यादया प्रतीयमानत्वेऽपि विधेरप्राप्तांशपक्षपातित्वादप्राप्त [3]प्रक्षेपमात्रमिह विधीयते। यागांशस्तु प्राप्तत्वादनूद्यते। अत प्रक्षेपमात्रविधावपि न लाक्षणिकत्वञ्जुहोते। तस्मादाग्नेयादिवाक्य यागविधिपरम्। इतोऽपि यद्वक्तव्यं तत्तृतीये सर्वप्रदानाधिकरणे निरूपितम्॥

इति द्वादश यागहोमलक्षणाधिकरणम्॥ १२॥

१३

"यदातिथ्यायां बर्हिस्तदुपसदामग्नीषोमीयस्य च" इति श्रुतम्। किमिह [4]आतिथ्यार्थं यद्बर्हिर्लवनादिना सम्पादितं तत् तदीयहविरासादनादौ नोपयोज्यम्। किन्तु आतिथ्याया आच्छिद्य उपसदामग्नीषोमीयस्य च ( पशोर्हविरासादनादावुपयोज्यमित्येवमाच्छिद्य विधिः ? उत आतिथ्याया यद्विनियुक्त तदुपसदामग्नीषोमीयस्य चे ) त्येवन्निरिष्टकोपदेश. १ निष्क्रान्तमिष्ट इच्छा विनियोगाकाङ्क्षा यस्मात् तन्निरिष्टकम्। उपयुक्तमिति यावत्। एकत्रोपयुक्तस्यान्यत्रोपयोगविधिरित्यर्थं। अथवा

१. अनुवादोऽसम्भव, अ. २. शब्दमर्यादया अ.
३. अप्राप्तप्रक्षेप क. ४. आतिथ्यायै. क, आतिथ्यार्थं. ग.
( ) चिन्हान्तगतो भागस्त्रुटित अपुस्तके.

आतिथ्यायाः यादृशं बर्हिः "आश्ववाल प्रस्तरः" इत्यादि तादृशमुपसदग्नीषोमीयेष्विति धर्मातिदेश ? किं वा आतिथ्यायां यद् बर्हिस्सम्पाद्यते तदेतदातिथ्यार्थम् उपसदग्नीषोमीयार्थञ्चेत्येवं बर्हिषस्त्रिविधकर्मसाधारण्यविधिः ? इति संशये, पूर्वपक्षयति—

**विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशस्स्यात् ॥ ३८ ॥**

आतिथ्यायां सम्पादितस्य बर्हिषः न तत्र विनियोग। किन्तु अर्थान्तरे कर्मान्तरे उपसत्सु अग्नीषोमीये च विधिप्रदेशः—विधिः विधान उपयोगः तस्य प्रदेश. नियमनं स्यात्। कुतः ? यदातिथ्यायामिति विधेः कर्मापवर्गित्वात्। [1]आतिथ्याकर्मणस्सकाशादपवर्गित्वात्। अपवर्ग –अपवर्जनम् [2]अपच्छेदनं तद्वत्वात् तत्परत्वात्। यथा या देवदत्तस्य गौस्सा यज्ञदत्ताय दीयतामित्यत्र देवदत्तादाच्छिद्य यज्ञदत्ताय दीयते तद्वदिहाप्याच्छिद्य विधिः। आतिथ्यायां बर्हिस्सम्पादन त्वदृष्टार्थमिति भावः।

द्वितीयपक्षपरमप्येतत्सूत्रम्। तद्यथा—अर्थान्तरे-कर्मान्तरे विधिप्रदेशस्स्यात् विधीयत उपयुज्यत इति विधि। तस्य आतिथ्योपयुक्तबर्हिषःप्रदेशः विनियोगस्स्यात्। कुतः ? एवं सत्येव विधेः विधानस्य आतिथ्यायां बर्हिस्सम्पादनस्य कर्मापवर्गित्वात्-दृष्टकार्यपर्यवसायित्वलाभात्। आच्छिद्य विधाने च तस्यादृष्टार्थत्वापातात्। न चैकत्र विनियुक्तस्यान्यत्रोपयोगश्शिष्टाचारविरुद्ध इति वाच्यम्। वचनबलेनाचारस्य बाध्यत्वादिति भावः।

तृतीयपक्षपरञ्चैतत्सूत्रम्। तद्यथा—अर्थान्तरे-कर्मान्तरे उपसत्सु अग्नीषोमीये च, विधिप्रदेशस्स्यात्—विधीयत इति विधि अतिथ्यावर्हिर्धर्मः "आश्ववालः प्रस्तरः" इत्यादिः, तस्य प्रदेशः। यादृशमातिथ्यावर्हिस्तादृशमुपसदग्नीषोमीयेष्वित्यतिदेशस्स्यात, न तु निरिष्टकोपदेशः। कुत ? विधेयस्यातिथ्यासम्बन्धिबर्हिष. आतिथ्याकर्मणा सह अपवर्गित्वात् समाप्तत्वात्। आतिथ्यायां ह्यपवृत्तायां तत्सम्बन्धस्य विशेषणस्यापवृत्तत्वादातिथ्याबर्हिरपवृज्यते। ततश्चातिथ्याबर्हिरुपसदग्नीषोमीयेषु कथ [3]विधीयेत। तदानीं बर्हिषि आतिथ्यासम्बन्धाभावात्। आतिथ्यायामुपयुक्तं बर्हिरित्येवं भूतपूर्वगत्याश्रयणे तु लक्षणाप्रसङ्गः। तस्मान्न निरिष्टकविधिर्युज्यते। यद्यपि यद्धर्मकमा-

---

१. कपुस्तके इदं वाक्यं नास्ति.  २. अपच्छेदक. क.

३. विधीयते. ग.

तिथ्याबर्हिस्तद्धर्मकमुपसग्नीषोमीयेष्वित्येवं धर्मातिदेशेऽपि यत्तच्छब्दयोर्लक्षणा तुल्या, तथापि शिष्टाचाराविरोधादियन्न दुष्यति। भूतपूर्वगत्याश्रयणेन निरिष्टकोपदेशस्तु शिष्टाचारविरोधात् चोदकप्राप्तलवनादीनामुपसदग्नीषोमीयेषु बाधप्रसङ्गाच्च दुष्यतीति भावः॥

अथ सिद्धान्तयति—

**अपिवोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुस्स्यात्॥ २९॥**

अपिवेति पक्षान्तरपरिग्रहे। [1]आतिथ्याप्रकरणे "यदातिथ्यायां बर्हिस्तदुपसदामग्नीषोमीयस्य च" इति प्रकृत्य "आश्ववालः प्रस्तर" इत्याम्नातम्। तत्राश्ववालत्वादिरूपो योऽयमर्थ. धर्मः तत्सम्बन्धः नातिथ्याया एव बर्हिषः, किन्तु अविशिष्टानामाश्ववालत्वादिविधौ विशिष्यानुपात्तानामातिथ्योपसदग्नीषोमीयाणां [2]बर्हिषो धर्मः न त्वातिथ्यामात्रस्य तत्र विशिष्यानुपादानात्। अतो यद्धर्मकमातिथ्याबर्हिस्तद्धर्मकमुपसदग्नीषोमीयबर्हिरित्येवं धर्मातिदेशो न सम्भवति। ननु प्रकरणादातिथ्याबर्हिष एवायमाश्ववालत्वादिधर्म इत्यत आह—उत्पत्तिसयोगादिति। "यदातिथ्यायां बर्हिः" इत्यादिवाक्ये बर्हिष उत्पत्तेस्सम्पादितस्य[3] आतिथ्योपसदग्नीषोमीयसाधारण्येन सयोगावगमात्, यदातिथ्यायां बर्हिस्सम्पाद्यते असिदादानादिना तन्न केवलमातिथ्यार्थत्वेन, किन्तु उपसदग्नीषोमीयार्थतयापीति तदर्थः। ततश्चातिथ्याप्रकरणपठितोऽप्याश्ववालत्वादिधर्मो बर्हिर्द्वारा आतिथ्योपसदग्नीषोमीयार्थ एव, प्रकरणाद्वाक्यस्य बलीयस्त्वात्। एवञ्च आतिथ्याया बर्हिरित्यपि न भूतपूर्वगत्या सम्बन्धाश्रयणम्, नापि निरिष्टकत्वदोषः, बर्हिषस्साधारणत्वात्। नापि यत्तच्छब्दयोर्लक्षणा। तत्र प्रथमपक्षे आच्छिद्यविधौ असिदादानादिविधिना बर्हिस्सम्पादनमदृष्टार्थतया आतिथ्या प्रयुङ्क्ते तावदेवातिथ्यायामनुष्ठेयम्। तदीयहविरासादनादिकन्तु तद्बर्हिषि न कार्यम्। निरिष्टकोपदेशपक्षे तु—आतिथ्यायामकृतहविरासादनकस्यापि बर्हिष उपसदग्नीषोमीयार्थं धारण प्रयुज्यते। तेषु ( च लवनादिविधिना बर्हिषस्सम्पादन न भवति असम्भवात्। प्रोक्षणादयस्तु सस्कारा ) स्तेषु पुनः कर्तव्या। पूर्वक्त-

---

१. आतिथ्याया उपसत्प्रकरणे. अ, आतिथ्योपसत्प्रकरणे. क. २. बर्हिर्धर्म.. ख.
३. सम्पादनस्य. क ( ) चिन्हान्तर्गतो भागो नास्ति अपुस्तके.

संस्काराणामातिथ्यापवर्गेणापवृक्तत्वात्। धर्मातिदेशपक्षे तु--आतिथ्योपसदग्नीपोमीयाः पृथगेव लवनादिधर्मकमाश्ववालत्वादिधर्मकञ्च बर्हिः प्रयुञ्जते। सिद्धान्ते तु-आतिथ्यं त्रिष्वप्येकमेव बर्हिरिति प्रयोजनभेदः लक्षणसङ्गतिश्च। ननु निरिष्टकोपदेशपक्षात् सिद्धान्ते कोऽयमनुष्ठानभेद इत्यत आह--प्रयोगैकत्वहेतुस्स्यादिति। फलमिह हेतुः। अध्ययनेन वसतीति यथा। आतिथ्योपसदग्नीपोमीय 'साधारण्यविधिः[1] प्रोक्षणादिसंस्कारैकत्वफलकस्स्यात्। प्रोक्षणादिसंस्कारैकत्वे साधकस्स्यादिति वार्थः। आतिथ्यायामपवृक्तायामपि तत्कालकाः प्रोक्षणादिसंस्कारा नापवृज्यन्ते, तेषां बर्हिरर्थत्वात्। बर्हिषश्च साधारणतया आतिथ्यापवर्गेऽप्यपवर्गाभावात्। तदेतत्प्रयोजनं द्वादशस्य प्रथमे प्रपञ्चयिष्यते 'यज्ञोत्पत्त्युपदेशे परिनिष्ठितकर्मप्रयोगभेदात्' इत्यत्र॥

इति त्रयोदशमातिथ्याबर्हिरधिकरणम्॥ १३॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ[2]
चतुर्थाध्यायस्य द्वितीयः पादः॥



१. साधारणविधिः अ.    २. कौतूहलवृत्तौ. अ, क.

# अथ चतुर्थाध्यायस्य तृतीयः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रे क्रत्वर्थपदसूचिता क्रतुप्रयुक्तिः पादद्वयेन विचारिता । अथास्मिन् पादे पुरुषार्थपदसूचिता फलप्रयुक्तिश्चिन्त्यते । इदमनारभ्यामनन्ति "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यादि*, तथा ज्योतिष्टोमे श्रूयते "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्यादि, तथा "यत्प्रयाजानूयाजा इज्यन्ते" "वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै" इत्यादि । किमेते फलविधयः ? उतार्थवादा ? इति संशयः । फलविधय इति ब्रूमः । यद्यपि कमिपद न श्रूयते नापि विधिप्रत्यय, तथाप्येवञ्जातीयके 'य इदमौषधं पिबति स नीरोगो भवति' इत्यादिलौकिकप्रयोगे, "प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इत्यादिवैदिकप्रयोगे च फलपरत्वदर्शनादिहापि तथाश्रयणीयम । एवञ्च यो नीरोगो भवितुमिच्छति तेनेदमौषधं पातव्यम् । ये प्रतितिष्ठासन्ति ते एता रात्रीरुपेयुरित्यादिवत् यः पाप श्लोकं न शुश्रूषते स पर्णमयीञ्जुहूं कुर्यादित्येवं विपरिणामेनापापश्लोकश्रवणादिकं फलमाश्रीयत इति प्राप्ते, सिद्धान्तयति—

**द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादस्स्यात् ॥ १ ॥**

'यस्य पर्णमयी' इति द्रव्ये, 'यदाङ्क्ते' इति संस्कारे, 'यत्प्रयाजानूयाजा इज्यन्ते' इत्यसंस्कारकर्मणि च फलश्रुतिः—अपापश्लोकश्रवणादिश्रुतिः अर्थवादः । कुतः ? परार्थत्वात् पर्णमयीत्वादीनां क्रत्वर्थत्वात् । फलविधित्वं हि वदन् प्रष्टव्यः कि पर्णमयीत्वादिकं स्वातन्त्र्येण फलार्थम् ? उत क्रत्वर्थमेव सत् फलार्थम् ? उत

* इत्यादिवाक्य. फ.

गोदोहनादिवदाश्रित्य फलविधिः ? इति। नाद्यः; 'अदृष्ट ? प्रकरणपाठात्यन्त [वा] धापत्तेः। अञ्जनप्रयाजादीनां प्रकरणोपस्थितक्रत्वर्थतया पर्णमयीत्वस्य च स्ववाक्यस्थाव्यभिचरितक्रतुसम्बन्धकजुहूपस्थितक्रत्वर्थतया क्रतूपकारलक्षणफलेनैव शान्ताकाङ्क्षत्वाच्च पर्णमयीत्वस्याक्रियारूपत्वेन काञ्चित् क्रियामनाश्रित्य स्वतः फलभावनाकरणत्वासम्भवाच्च। अत एव न द्वितीय; न तृतीयः; गोदोहनं हि प्रणयनमाश्रित्य फलाय विधीयते। न ह्यत्र काचित् क्रिया सन्निहितास्ति, येन तामाश्रित्य पर्णमयीत्वादि विधीयेत[2]। ननु पर्णमयीवाक्ये (जुहूपदादाञ्जनादिवाक्ये च प्रकरणात् क्रतूपस्थितिरानुमानिकी। अपापश्लोकश्रवणादि तु स्ववाक्ये प्रत्यक्ष श्रुतम्। अतः पर्णमयीत्वादीनां स्वानन्त्र्येणैव फलार्थत्वम्, प्रत्यक्षेणानुमानस्य बाधात्। यद्यपि पर्णमयीत्वमक्रियारूपं तथापि जुह्वाः परिच्छेदापेक्षाया पर्णमयीत्वं परिच्छेदकं सत फलार्थतामश्नुते। अन्यथा 'अरुणया क्रीणाति') इत्यादौ का गतिरित्यत आह—

## उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥

अपापश्लोकश्रवणादि हि यदि फलतया प्रत्यक्षश्रुत स्यात् तदा पर्णमयीत्वादिकं तदर्थं स्यात्। नैवदस्ति, फलवाचक[3]कर्मिपदाभावेन उत्पत्तेः–पर्णमयीति विधेः फलपरत्वाभावात्। न च विपरिणामेन फलपरं कल्प्यत इति वाच्यम्। यावद्यथाश्रुतशब्दस्वरूपबाधेन फलपरत्वं कल्प्यते, ततः प्रागेव तद्बाधेन क्वचित् प्रथमश्रुतजुह्वादिपदात्, क्वचित् प्रकरणाच्चोपस्थितक्रत्वर्थता[4]निश्चये सति शान्ताकाङ्क्षतया विपरिणामेन फलपरत्वकल्पनस्यानुन्मेषात्। लोके तु–औषधपानादिवाक्ये तथानिश्चितवक्तृतात्पर्यवशात्तथा बोध।

नन्वेवं सति रात्रिसत्रवाक्यस्यापि फलपरत्वं न स्यादित्यत आह—

## आनर्थक्यमक्रियार्थत्वात् ॥ ३ ॥

प्रतितिष्ठन्तीत्यस्य विपरिणामेन फलपरत्वाभावे रात्रिसत्रविधेरानर्थक्यमेव स्यात्। कुतः ? अक्रियार्थत्वात् क्रतूपस्थापकपदाभावेन क्रत्वर्थत्वाभावात्। क्रतूप-

---

१. आनृण्यत्वत्र 'अञ्जनादिष्टु प्रकरण' इत्यादि पाठो दृश्यते।

२ विधीयते. ग.    ३. कर्मीनि ग    () अपुस्तके ग्रन्थपात

४. क्रत्वर्थतया निश्चये. अ.

कारेण फलाकाङ्क्षाशान्तेरभावादिति यावत् । ततश्चागत्या तत्र विपरिणामेन फलपरत्वमिति भावः ।

ननु न दापं श्लोकं शृणोतीत्यादेरर्थवादत्वेऽपि विपरिणामदोषस्तदवस्थः, शृणोतीत्यादेः श्रोष्यतीत्येवं विपरिणामस्यार्थवादत्वेऽप्यावश्यकत्वात् । यदा जुहूः पर्णमयी भवति तदा अपापश्लोकं न शृणोतीति वर्तमानापदेशासम्भवात् इत्यत्राप्येतदेवोत्तरम्—आनर्थक्यमक्रियार्थत्वादिति । अर्थवादत्वे सति आनर्थक्यं मुख्यवृत्त्या स्वार्थकत्वाभावः, लक्षणेति यावत् । न दुष्यतीति शेषः । कुतः ? अक्रियार्थत्वात् । विध्यर्थकत्वाभावात् । विधावेव हि लक्षणा दुष्यतीति भाव । यद्वा अर्थवादत्वे सति [1]नानर्थक्यं, न लटो लक्षणा । कुत. ? अक्रि र्थत्वात्-भविष्यत्क्रियापरत्वाभावात् । भविष्यन्त्यामपि वर्तमानत्वारोपेण लट उपपत्तेः । [2]स्तुतौ वर्तमानत्वारोपस्यालङ्कारत्वात् 'नहि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने' । ननु तर्हि "खादिर वीर्यकामस्य" इत्यप्यर्थवादोऽस्त्वित्यत आह—

**फलन्तु तत्प्रधानायाम् ॥ ४ ॥**

तुर्वैषम्ये । कमिपदात् तत्प्रधानायां फलपरत्वेन निर्धारितायां[3] "खादिरं वीर्यकामस्य" इति चोदनायां वीर्यादिक फलत्वेनान्वेति । अपापश्लोकश्रवणादिकन्तु कमिपदाभावान्न तथेत्यर्थः ।

इति प्रथम पर्णमय्यधिकरणम् ॥ १ ॥

२

अस्ति ज्योतिष्टोमे ब्रह्मसामनाम माध्यन्दिनसवने तृतीय पृष्ठस्तोत्रम् । तच्च चोदकतो द्वादशाह गतम् । तदधिकृत्य द्वादशाहे श्रूयते—"बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्" इति बार्हद्गिराख्यसामसाधनक ब्रह्मसामस्तोत्रं कुर्यादित्यर्थः । यदेतन्नैमित्तिक बार्हद्गिरं तदेव नित्यार्थे ? उत नित्यार्थेऽभिवर्तसाम ? इति संशय. । नैमित्तिकमेवैतन्नित्यार्थमपि भवितुमर्हति, सन्निहितत्वात् । नित्येऽपि हि प्रयोगे ब्रह्मसामाख्य-

१. नानर्थक्यफलदा लक्षणा. क, ख.

२ वस्तुत इति मातृकासु पाठ । 'स्तुतौ' इति कल्पित. ।

३. निर्धारिततया. क.

स्तोत्रस्य साधनापेक्षायामश्रुतसाधनान्तरकल्पनापेक्षया निमित्ते श्रुतस्यापि सन्निहितस्य नित्यार्थेऽपि लाघवादुपादानं युज्यते। तथा च ब्राह्मणकर्तृके द्वादशाहप्रयोगे बार्हद्गिरं नैमित्तिकमुपरागस्नानादिवत् पुरुषार्थं भवति। 'यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्' इति द्वैतीयीकाधिकरणोक्तरीत्या नित्यकर्मवन्नैमित्तिकस्यापि प्रत्यवाय-परिहारोपात्तदुरितक्षयार्थत्वात्। ब्राह्मणप्रयोग एव च तस्मिन् पुरुषार्थमपि बार्हद्गिरं क्रत्वर्थमपि भवति। द्वादशाहे "अभिवर्तो ब्रह्मसाम भवति" इति तु सामान्यविधिः 'ब्राह्मणस्य बार्हद्गिरम्' इति विशेषविधिना बाध्यते। 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र 'तक्रेण दधिवत्[1]। ततश्च विकृतौ बार्हद्गिरादीनामतिदेश फलति। केवलपुरुपार्थत्वे तु नातिदेशस्स्यात्। पुरुषार्थानतिदेशस्य वक्ष्यमाणत्वादिति प्राप्ते, सिद्धान्तयति—

**नैमित्तिके विकारत्वात् क्रतुसाधनमन्यत् स्यात् ॥ ५ ॥**

नैमित्तिके बार्हद्गिरादिसामनि विहिते सति अन्यत्—अभिवर्तसामैव ब्रह्म-सामाख्यस्तोत्रनिर्वर्तनद्वारा क्रतुसाधनं स्यात्, न तु बार्हद्गिरादि। कुतः? विकारत्वात् विकृतत्वाद् विलक्षणत्वादन्यत्वादित्यर्थः। अभिवर्तसाम हि प्रकरणात् द्वादशाहिक-ब्रह्मसामस्तोत्रसाधनमवगतम। न च 'तत्कार्यं[2] क्रतूपकारविशेपलक्षण बार्हद्गिरादिना सम्भवति[3], अन्यत्वात्। ननु "शरमयं बर्हिः" इत्यत्र शराणा बर्हिरन्यत्वेऽपि यथा बर्हिःकार्यकरत्वं तथाभिवर्तादन्यस्यापि तत्कार्यकरत्वमस्त्वित्यत्राप्येतदेवोत्तरम्—विकारत्वादिति। वैषम्यादित्यर्थः। बर्हिःकार्ये विधानाद्युक्तं शराणामन्यत्वेऽपि बर्हिः-कार्यकरत्वम्। इह तु नाभिवर्तसामकार्ये क्रतूपकारे बार्हद्गिरादिसाम्नो विधिरस्ति, तस्य नैमित्तिकतया पुरुषार्थत्वात्।

ननु पुरुपार्थस्याप्युक्तरीत्या क्रत्वर्थत्वमपि स्यादित्यत्राप्येतदेवोत्तरम्—विका-रत्वादिति। निमित्ते श्रुतत्वेन नित्यविलक्षणत्वादित्यर्थ। क्रत्वर्थब्रह्मसामस्तोत्रचिकीर्षा हि नित्या। सा च नित्यवदाम्नातमभिवर्तसामैव गृह्णाति, न तु बार्हद्गिरादि। तस्य राजन्यादिप्रयोगेऽभावेनानित्यत्वात्। अतो न तस्यात्यन्तं प्रकरणबाधः। न च "बार्ह-द्गिर ब्राह्मणस्य पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्य" इति ब्राह्मणादिप्रयोग-त्रयस्यापि बार्हद्गिरादिनैमित्तिकावरुद्धत्वात् निर्विषयत्वमभिवर्तस्य। बार्हद्गिरादीनाञ्च

१. तक्रंदधिवत्. फ.　　२. तत्कार्याय. ग.　　३ भवति. अ, फ.

ब्रह्मसामाभिनिर्वर्तनेन दृष्टार्थत्वात्। दृष्टार्थानां समुच्चयासम्भवस्य च द्वादशे वक्ष्यमाणत्वादिति वाच्यम्। अत एव विकल्पोपपत्तेः। तथा च ब्राह्मणादिप्रयोगे कदाचित् बार्हद्गिरादि नैमित्तिकम् कदाचिदभिवर्त्तः। स एव च क्रत्वङ्गत्वाद्विकृतावतिदिश्यते। बार्हद्गिरादि तु पुरुषार्थत्वान्नातिदिश्यत इति फलति। यद्यपि बार्हद्गिरादिके उपात्ते सति अन्यदभिवर्तसाम क्रतुसाधनमुपादेयमिति सूत्रस्वरसः प्रतीयते, तथापि नायं सूत्रार्थः। न हि नैमित्तिकेन बार्हद्गिरादिना क्रतुसाधनब्रह्मसामस्तोत्रे प्रथममभिनिर्वृत्ते सति पुनरभिवर्त्तेन ब्रह्मसामस्तोत्रस्य करण युज्यते, गुणानुसारेण प्रधानावृत्तेरन्याय्यत्वात्। नैमित्तिके बार्हद्गिरादिसामनि उपात्ते सति क्रत्वर्थाभिवर्त्तबाधस्तु पुरुषार्थसमासक्ते 'काम्यन्नित्यस्य बाधकम्' इति न्यायान्निर्दुष्यति। ततश्च नैमित्तिके श्रुते सति अन्यदभिवर्त्तसामैव क्रतुसाधन न तु नैमित्तिकमित्येव[1] सूत्रार्थः। वस्तुतस्तु 'सप्तदशानुब्रूयाद्वैश्यस्य" इत्यादिवद् बार्हद्गिराद्यपि क्रत्वर्थमेव, फलान्तरकल्पनायां गौरवात्।

सूत्रे च नैमित्तिकग्रहण काम्यपरम्, [2]कामस्यागन्तुकत्वेन निमित्तत्वात्। तद्यथा—दर्शपूर्णमासयोः "अप प्रणयति" इति प्रकृत्य श्रूयते—"मृण्मयेन प्रतिष्ठाकामस्य" इति। तत्र अपां प्रणयने साधनाकाङ्क्षायामश्रुतसाधनान्तरकल्पनापेक्षया वरं कामे श्रुतस्यापि मृण्मयपात्रस्य सन्निहितत्वात्क्रत्वर्थतयाप्युपादानम्। न च "चमसेनाप प्रणयति" इति विशेषत प्रणयने चमसविधिसत्त्वात् कथं क्रत्वर्थतया मृण्मयोपादानमिति वाच्यम्। आकृतिविशेषवाची हि चमसशब्दः। तदाकृतिकञ्च पात्र मृदापि कर्तुं शक्यमित्यविरोधः। "वारणो यज्ञावचरः" इति तु पात्रान्तरविषये सावकाशस्सामान्यविधिर्विशेषविधिनानेन बाध्यते। तथाच मृण्मयपात्र पुरुषार्थं सत् क्रत्वर्थमपि भवति। विकृतौ चातिदिश्यत इति पूर्वः पक्षः।

सिद्धान्तस्तु—काम्ये मृण्मयपात्रे विहिते सति अन्यद्वारणपात्रमेव क्रतुसाधनम्, न तु काम्य मृण्मयम्। तस्य क्रतुसाधनीभूतवारणपात्रादन्यत्वात्[3] प्रणयननित्यचिकीर्षया नित्यवदाम्नातवारणपात्रस्यैव परिग्रहात्, मृण्मयपात्रस्य च [4]कामाभावेनानित्यतया तदपरिग्रहात्। अतो मृण्मयपात्र पुरुषार्थमेव, न तु क्रत्वर्थम्। [5]विकृतौ च नातिदिश्यत

---

१. एव. अ, क.  २. कामस्यापि. अ, ग.
३. पात्रान्यत्वात् ग  ४. कामाभावेऽभावेन. अ, क.
५. विकृतावनतिदिश्यते. अ, क.

इति फलति। अत्र गोदोहनवाक्यं नोदाहरणम्। गोदोहनस्य चमसाकृतिविरोधेन तत्र पूर्वपक्षस्यानुन्मेपात्। अतएव शास्त्रदीपिकायान्तन्नोदाहृतमिति तद्व्याख्यातारः। भाष्ये [१]तु गोदोहनवाक्यमप्युदाहृतम्। लोके गोदोहनपात्रस्यापि कदाचिच्चमसाकृतिसम्भवादिति तदाशयो लक्ष्यते॥

इति द्वितीयं बार्हद्गिराधिकरणम्॥ २॥

३

अग्नीषोमीये पशौ "यूपञ्छिनत्ति" इति प्रकृत्य श्रूयते "खादिरो यूपो भवति" इति "खादिरं वीर्यकामस्य यूप कुर्वीत" इति च। तत्र किं खादिरत्व केवलपुरुषार्थम्? उत क्रत्वर्थमपि? इति संशयः। तत्र पूर्वाधिकरणन्यायात् केवलपुरुषार्थत्वे प्राप्ते, सिद्धान्तयति—

**एकस्य तूभयत्वे संयोगपृथक्त्वम्॥ ६॥**

तुर्वैपम्ये। एकस्यैव खादिरत्वस्य रुषार्थोभयरूपत्वे संयोगपृथक्त्वं हेतु। सयुज्यते पदार्थः पदार्थान्तरेण विशिष्टो बोध्यते यत्र सः संयोग- वाक्यम्, तस्य पृथक्त्वं द्विरूपत्वम्। मृण्मयपात्रस्य क्रत्वर्थताबोधकवाक्यान्तराभावात् केवलपुरुषार्थत्वमिति युज्यते। खादिरत्वस्य तु "खादिरो यूपो भवति" इति क्रत्वर्थताबोधकवाक्यान्तरसत्वात्क्रत्वर्थत्वमपि भवतीत्युक्तं भवति॥

ननु "खादिरो यूपो भवति" इति न क्रत्वर्थताबोधकं तस्य वीर्यकामवाक्येनैकवाक्यत्वात् इत्याशङ्क्य परिहरति—

**शेष इति चेन्नार्थपृथक्त्वात्॥ ७॥**

यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्य "सोमेन यजेत" इति वाक्यं शेपो भवति, तद्वद्वीर्यकामवाक्यस्य "खादिरो यूपो भवति" इति वाक्यमपि शेषस्स्यात। ततश्च कथं खादिरत्वस्य क्रत्वर्थत्वमिति चेत्तन्न; कुत? अर्थपृथक्त्वात्- अर्थयाच्ञायाम्, अर्थः अर्थना अपेक्षा। ततो विभक्तत्वात्। अपेक्षाविरहादिति यावत्। ज्योतिष्टोमवाक्ये हि ज्योतिष्टोमाख्ययाग. क इत्यपेक्षाया "सोमेन यजेत" इति वाक्यं तत्स्वरूपं प्रदर्शयति। ज्योतिष्टोमयागस्वरूपस्यालौकिकत्वेन तस्यापरिज्ञाने फले विध्य-

१. तु नास्ति. अ, क, ख.

सम्भवात्। "सोमेन यजेत" इत्यत्र च सोमवता यागेन इष्टं कुर्यादित्यवगते सति इष्टत्वेनेष्टज्ञानस्याप्रवर्तकतया किं तदिति विशिष्य जिज्ञासायां स्वर्गकामवाक्यं तत्स-मर्पयतीति तत्र शेषभावो युक्तः। इह तु वीर्यकामवाक्यं परिपूर्णम्। खादिरत्वस्य लोकसिद्धत्वेन तत्स्वरूपपरिज्ञानाय वाक्यान्तरस्यानपेक्षणात्। "खादिरो यूपो भवति" इति वाक्यमपि प्रकरणलब्धक्रतूपकारफलेनैव निराकाङ्क्षम्। अतो न तयोश्शेषशेषि-भावो युक्त ।

शङ्कान्तरपरिहारपरमप्येतत्सूत्रम्। तद्यथा—ननु "औदुम्बरो यूपो भवति" इत्यस्य यथा "ऊर्जोऽवरुध्यै" इत्यर्थवादः, तथा "खादिरो यूपो भवति" इत्यस्य वीर्यकामवाक्यमप्यर्थवादस्स्यात्। कमिश्रवणन्तु "पूर्णाहुत्या सर्वान् कामानवाप्नोति" इत्यादिवदर्थवादत्वेऽपि सम्भवतीति चेत्तन्न; कुतः? अर्थपृथक्त्वात्-वाक्यार्थान्य-त्वात्, वाक्यभेदादिति यावत्। सोमापौष्णपशुर्ह्यग्नीषोमीयपशुविकृतिः। तत्र चोदकतो [१]यूपजुहूपभृदादयः प्राप्ताः। तत्र यूपमात्रमाश्रित्यौदुम्बरत्वं फले विधातव्यम्। तथाचौदुम्बरत्वेन ऊर्गवरोधं कुर्याद् यूपाश्रितेनेति भवेद्वाक्यभेद इति तत्रार्थवादत्वा-श्रयण युक्तम। इह तु "यूपञ्छिनत्ति' इति प्रकरणलब्धं यूपमाश्रित्य खादिरत्वस्य फले विधाने वाक्यभेदाभावादविरोधः। एवञ्च कमिश्रवणमप्युत्सर्गतः फलविधित्वसमनि-यतमनुगृहीतं भवति। "पूर्णाहुत्या सर्वान् कामानवाप्नोति" इत्यत्र तु "अग्नीनाद-धीत" इति प्रकरणात् पूर्णाहुतेरग्न्यर्थत्वनिश्चयादर्थवादत्वम्। अतः खादिरत्वं पुरु-पार्थं क्रत्वर्थञ्च ॥

इति तृतीय सयोगपृथक्त्वाधिकरणम् ॥ ३ ॥

४

ज्योतिष्टोमे श्रूयते—"पयो ब्राह्मणस्य व्रतम्, यवागू राजन्यस्य, आमिक्षा वैश्यस्य" इति। व्रतमिति भोज्यं द्रव्यमुच्यते। 'व्रतात् भोजनतन्निवृत्योः' इति पाणिनिस्मरणाल्लिङ्गात्। किमिद केवलपुरुपार्थम्? उत क्रतुयुक्तपुरुपार्थम्? इति संशय। केवलपुरुपार्थमिति ब्रूम.। ब्राह्मणस्येत्यादिषष्ठीश्रुत्या तादर्थ्यावगमेन प्रकर-णस्य बाधिततया क्रत्वर्थत्वासम्भवात्। न च "जञ्जभ्यमानो ब्रूयात्मयि दक्षक्रतू"

१. यूपो जुहू. अ, फ.

इति मन्त्रवचनस्य (पुरुषसंयोगेऽपि प्रकरणावाधेन क्रतुयुक्तपुरुपसंस्कारकतया क्रत्वर्थता तृतीये साधिता. तद्वदिहापि स्यादिति वाच्यम् , वैषम्यात् । जञ्जभ्यमानमन्त्रवचनस्य ) हि फलकल्पनाभिया क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वर्थत्वमाश्रितम् । इह तु न फलं कल्पनीयम् । प्राणधारणेन वलकरणेन च पुरुषप्रीत्या व्रतस्य क्लृप्तफलकत्वात् । न चात्र व्रते पयआदि विधेयम्, लोकत एव तत्सिद्धे । किन्तु तन्नियम. । तस्य च न पुरुपप्रीतिः फलम् । नियममन्तरेणापि तत्सिद्धे । अतो नियमस्य कल्प्यफलकत्वाज्जञ्जभ्यमानन्यायावतार इति वाच्यम् । नियमस्य कल्प्यफलकत्वेऽपि पुरुपप्रीत्यर्थभोजनाश्रितप्राङ्मुखत्वादिनियमस्येव पुरुषाभिलपितफलस्यैव कल्पनार्हत्वात् । अन्यथा ब्राह्मणस्येत्यादिपुरुपसंयोगविरोधात्[१] । तस्मात् पयोव्रतादि केवलपुरुपार्थमिति प्राप्ते, सिद्धान्तयति—

## द्रव्याणान्तु क्रियार्थानां संस्कारः क्रतुधर्मस्स्यात् ॥ ८ ॥

तुर्वैषम्ये । सयोगपृथक्त्वात् खादिरत्वमुभयार्थमिति युक्तम् । पयोयवाग्वादि· प्रकरणात् क्रियार्थानां द्रव्याणां क्रत्वधिकृतानां पुरुपाणा संस्कारः—करणे घञ् । प्राणधारणवलाधानातिशयविशेषजनकः । अत. क्रतुधर्मस्स्यात् । पयआदिनियमस्यात्यन्ताप्रतिपन्नफलवचनैकवाक्यत्वकल्पनापेक्षया प्रकृतक्रत्वेकवाक्यताया एव लघुत्वादिति भाव. ॥

ननु ब्राह्मणस्येत्यादिषष्ठीश्रुत्या प्रकरणं बाध्यतामित्यत आह—

## पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

पृथक्त्वात्-विभक्तत्वादनन्वयादिति यावत् । पष्ठी हि पयोव्रतमित्यत्र [२]नोद्देश्यतासम्बन्धेनान्वेति, येन[३] ब्राह्मणाद्यर्थं पयआदिव्रतमित्येव केवलपुरुपार्थता स्यात । किन्तु ब्राह्मणस्येत्यादि कर्तरि पष्ठी प्रकृते ज्योतिष्टोमेऽन्वेति । ततश्च ब्राह्मणकर्तृके ज्योतिष्टोमे पयो व्रतम्, राजन्यकर्तृके तस्मिन्यवागूरित्येवं पयआदिव्रतं व्यवस्थित भवति । सामर्थ्याच्च प्रकृतक्रत्वधिकृतपुरुपप्रीणनद्वारा क्रत्व-

( ) क पुस्तके चिन्हान्तर्गतो भाग स्खलित .

१. सयोगायोगात्. ख.

२. नोद्देश्यतया. ग.

३. येन नास्ति अ.

र्थत्वम्। अतश्च प्रकरणपरिग्रहेऽपि षष्ठीश्रुतेस्सामर्थ्यस्य चोपपत्तेर्न प्रकरणबाध इति भाव ॥

इति चतुर्थं पयोव्रताधिकरणम् ॥ ४ ॥

५

"विश्वजिता यजेत" इत्यादिष्वफलसयुक्तविधिषु फलमस्ति न वेति संशये पूर्वपक्षयति—

**चोदनायां फलाश्रुतेः कर्म · ियेत न शाब्दं प्रतीयते ॥१०॥**

चोदनायाम्-अफलसंयुक्तविधौ कर्ममात्रं-धात्वर्थमात्रं कर्तव्यतया प्रतीयेत, न तु फलम्। कुतः? फलाश्रुतेः-फलस्याश्रवणात्। ननु प्रवर्तनात्मको विधिः। प्रवृत्तिफलकश्च व्यापारः प्रवर्तना। सैषार्थभावनारूपा पुरुषप्रवृत्तिः किं केन कथमित्यशत्रयविशिष्टा। ततश्च यागेन कुर्यादित्युक्ते किमित्यपेक्षणादसति फलश्रवणे वाक्यस्य परिपूर्णत्वाय फलकाम इत्यध्याहार्यमित्यत आह-न ह्यशब्दं प्रतीयत इति। अशब्दमित्यर्थाभावे अव्ययीभाव। ततस्सप्तमी। 'तृतीयासप्तम्योर्बहुलम्' इति तस्या अम्भावः। हि यत शब्दैकसमधिगम्यफलबोधकशब्दाभावे सति न प्रतीयते। यद्यपि[1] भावना भाव्यमपेक्षते, तथापि तन्निर्वाहकफलाश्रवणाद्धात्वर्थमेव सा भाव्यत्वेन स्वीकरोति। न च निष्फलस्य यागस्य कर्तव्यतावचनमप्रमाणं स्यादिति वाच्यम्। 'निष्कण्टकोऽयं पन्थाः, गच्छत्वनेन पथा भवान्' इत्यादिप्रतारकवाक्यवदप्रामाण्यस्येष्टत्वात्। न चाप्रामाण्यकल्पनापेक्षया फलकल्पनैव युक्तेति वाच्यम्। वन्ह्यनौष्ण्यानुमितिवत् प्रत्यक्षबाधेन फलानुमितेरनुदयात्, कर्मण आयासबहुलत्वस्य प्रत्यक्षत्वात्। न च कर्मकालीनप्रत्यक्षबाधो न कालान्तरीयफलानुमितिविरोधीति वाच्यम्, उत्पन्नविनष्टेन कर्मणा कालान्तरे फलोदयासम्भवात्। न च दर्शपूर्णमासादाविवापूर्वद्वारा तत्सम्भव इति वाच्यम्। तत्र हि श्रुते फले तद्बलादपूर्वं कल्प्यते। इह तु यागक्रियामात्रपर्यवसिते शब्दे कथमपूर्वसिद्धिः। तथाच फलाधीनमपूर्वं तदधीनञ्च फलमित्यन्योन्याश्रय। तस्मादफलमेवैवञ्जातीयक कर्मेति प्राप्ते, सिद्धान्तयति—

---

१. न भावनेति अ पुस्तकपाठ.

**अपि वाम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानां ह्यर्थवत्वेन नानि प्रतीयन्ते अर्थतोऽह्य मर्थाना नन्तर्येऽप्यसम्बन्धः तस्मात् ुत्येकदेशस्स्यः ॥ ११ ॥**

अपि वेति पक्षव्यावृत्तौ । चोदना–विश्वजिदादिवाक्यम्, अर्थेन-फलपदेनाध्याहृतेन [गम्येत] परिपूर्णतया प्रतीयेत । कुतः ? आम्नानसामर्थ्यात् । एव सत्येवाम्नानस्य सङ्गतार्थत्वात् [1]विशिष्टार्थबोधजनकत्वात् प्रयोजनवत्वाच्च । एतदुक्त भवति— असत्यपि फलश्रवणे चेतन[2] प्रवर्तनात्मिका शाब्दभावना इष्टसाधने [3]स्वव्यापारे प्रेक्षावन्तं पुरुष प्रवर्तयितुमुद्युञ्जाना सामान्यत कमपि पुरुषार्थमाक्षिप्य तद्विशेषसमर्पणमन्यतो गवेषमाणा समानपदोपात्तमपि धात्वर्थमपुरुषार्थतया दु खात्मकतया चोल्लङ्घ्य तं करणकोटौ निक्षिप्य यागेन किं कुर्यादित्येवं साकाङ्क्षैवावतिष्ठते । ततश्च पुरुपार्थभूतभाव्याध्याहाराभावे सति वाक्यं न परिपूर्येत इति तदध्याहार आवश्यक इति । एतेन फलश्रवणे धात्वर्थस्य करणत्वेऽपि तदभावे तस्यैव भाव्यता युक्तेत्युक्तं निरस्तम् । एवञ्च वेदवाक्यस्यात्यन्ताप्रामाण्यमत्यन्तायुक्तमपि न स्वीकार्यं भवति ।

ननु यत्फलपदमध्याह्रियते तत्पौरुषेयमप्रमाणमित्यत आह— अर्थानामित्यादि । अध्याहारो हि नात्रापूर्वपदस्योत्पत्ति, किन्तु वेद एव प्रदेशान्तरे स्थितस्य फलपदस्य प्रकृतैकवाक्यत्वकल्पनम् । हि–यत[4], अर्थानाम् अभिधेयानाम्, अर्थवत्वेन-अर्थनम् अर्थः अपेक्षा योग्यता च, तद्वत्वेन हेतुना व्यवहितान्यपि वचनानि सम्बद्धानि प्रतीयन्ते । यथा—

'अयि पश्यसि धावन्तं दूरे जातं वनस्पतिम् ।
त्वां ब्रवीमि विशालाक्षि या पिनष्टि[5] जरद्गवम् ॥' इति ।

अत्र हि आकाङ्क्षायोग्यतावशात् पश्यसीति धावन्तमिति व्यवहितेनापि जरद्गवमित्यनेन सम्बध्यते । हि–यतश्च अर्थत –अभिधेयतः असमर्थाना सम्बद्धुमयोग्यानां पदानामानन्तर्येऽपि–अव्यवधानेऽपि सति, असम्बन्धः–अन्वयो न भवति[6] । यथा धावन्तमित्यस्य दूरे जात वनस्पतिमित्यादिभिः । एव विश्वजिदादिवाक्येऽपि ।

---

१. विशिष्टार्थबोधजनकत्वात्. नास्ति ग.　　२. चेतन. नास्ति. अ.
३. व्यापारे. अ., क.　　४. अर्थानामिति. अ.
५. पिनक्षि स　　६. सम्भवति. अ.

तस्मात्-आकाङ्क्षावशात्, स--अध्याहृतवैदिकफलपदविशेषः श्रुत्येकदेशः-वेदैकदेशः। अतो न पौरुषेयत्वशङ्का। न च प्रदेशान्तरस्थस्य फलपदस्य कथमिहाध्याहारः व्यवहितत्वादिति वाच्यम्। व्यवहितस्यानुषङ्गाभावेऽप्यध्याहारसम्भवात्। अनेकसन्निधावाम्नातस्यासम्बन्धिपद[1] [व्यवेतस्य] सर्वैस्सन्निहितैरेकवाक्यत्वकल्पनं ह्यनुषङ्गो नाम। अध्याहारस्तु यत्र कचिदवस्थितस्य पदस्य तत्रैव कृतार्थस्यान्यत्राविपरिवर्तमानस्यापि[2] ध्यानाद्विपरिवृत्तिमाश्रित्य प्रकृतैकवाक्यत्वकल्पना। तस्माद्वैदिकमेव फलपदमिहाध्याहार्यम्। तदेतद्दृष्टान्तेन द्रढयति—

## वाक्यार्थ णार्थवत् ॥ १२ ॥

"इन्द्राय राज्ञे सूकरः" इत्यादौ "अश्व आलभ्यते" इत्यादिवाक्यान्तरस्थेन आलभ्यत इत्यनेनाख्यातेनाध्याहृतेन परिपूर्णो वाक्यार्थो यथा द्रव्यविशेषदेवताविशेषगुणकयागविधानाय सम्पद्यते, तथा [3]विश्वजिद्वाक्यमपि वाक्यान्तरस्थफलपदाध्याहारेण परिपूर्णफलविधानाय सम्पद्यत इत्यर्थ। यद्यपि "यस्सत्रायागूर्य न यजेत स विश्वजिता यजेत" इति विश्वजितो वाक्येनैव सत्रफलार्थत्व षष्ठे वक्ष्यते, एकाहकाण्डपठितविश्वजित्तु स्वर्गार्थतया छान्दोग्ये श्रुतः, तथापि यत्रार्थवादिकमपि फलं न श्रुतं तदेव पिण्डपितृयज्ञादिकमिहोदाहार्यम्॥

## इति पञ्चमं विश्वजित. पुरुषार्थत्वाधिकरणम् ॥ ५ ॥

६

विश्वजिदादिकं फलार्थमिति स्थितम्। तत् किं स्वर्गकाम' प्रजाकाम पशुकाम इत्यादिवाक्यान्तरश्रुतसर्वफलार्थम्? उतैकफलार्थम्? इति संशये पूर्वपक्षयति—

## तत् सर्वार्थमनादेशात् ॥ १३ ॥

तत्-विश्वजिदादिक सर्वफलार्थम्। कुत? अनादेशात्-इदमेव फलपदमध्याहार्यमिति विशेषकप्रमाणाभावात्[4]॥

---

1. पदस्येव तस्य इति मातृकासु पाठ।
2. अन्यत्रापि विपरिवर्तमानस्य. अ.
3. विश्वजिदादि. अ, ग.
4. विशेषकाभावात् अ.

अथ सिद्धान्तयति—

**एकं वा चोदनैकत्वात् ॥ १४ ॥**

एकमेव फलपदमध्याहार्यम्। कुत ? चोदनैकत्वात्–आकाङ्क्षावशादेव हि फलपदमध्याहार्यम्। यजेतेत्याख्यातञ्च सकृच्छ्रुतम्। तदाकाङ्क्षा चैकेनैव फलपदेन शाम्यति यद्ध्यनेकेन फलपदेन सम्बध्यते, तदवश्यमेकेन सम्बध्यते। एवञ्च येनैवैकेन प्रथमं सम्बद्धस्तेनैव विधेर्नैराकाङ्क्ष्यात्[1] नानेकफलपदाध्याहर। एवञ्च नानेकफलप्रयुक्तिशक्तिकल्पानागौरवमपि। एतेन स्वर्गप्रजापश्वादिफलकाम इत्येवमेकस्यैव [2]पदस्याध्याहारेण सर्वेषां फलाना युगपदन्वयान्नैकेन नैराकाङ्क्ष्यमित्यपीति निरस्तम् ॥

**इति षष्ठं विश्वजिदादीनामेकफलवत्वाधिकरणम् ॥ ६ ॥**

**७**

विश्वजिदादिकर्मणि एकं फलमिति स्थितम्। किं स्वर्गप्रजापश्वादिषु यत्किञ्चिदेकं फलम् ? उत स्वर्ग एव ? इति सशये, अविशेषाद्यत्किञ्चिदिति प्राप्ते, सिद्धान्तयति—

**सः स्वर्गस्स्यात् सर्वान् प्रत्यविशिष्टत्वात् ॥ १५ ॥**

सः–कल्प्यमान फलविशेष' स्वर्ग एव स्यात्। कुतः ? सर्वानपि–फलविशेषान् प्रति, अविशिष्टत्वात्–न विद्यते विशिष्टम् अधिक यस्मात्तदविशिष्टम्। उत्तमत्वादिति यावत्। अविशेषप्रवृत्तस्यापि शास्त्रस्य सति सम्भवे उत्तमविषयत्व न्याय्यम्। स्वर्गश्चोत्तमं फलम्। तस्य [3]दुःखासम्पृक्तनिरतिशयसर्वाभिलषणीयसुखात्मकत्वात्। तदुक्तम्—

'यन्न दुःखेन सम्भिन्न न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्' ॥ इति।

यत्[4] स्रक्चन्दनवनितादिसाधनजात दु खानुषक्तन्न भवति, पश्चात्साधारणस्त्रीगमनप्रयुक्तनरकेणाभिभूतञ्च न भवति, यस्मादतिशयितं सुखन्नास्तीति यावत्।

---

१. निराकाङ्क्षात्. क, नैराकाङ्क्ष्याम्. ग.  २. पदस्य नास्ति. अ, क, ख.
३. दु खासम्बन्धि. अ.  ४. यच्चन्दनवातादिसाधनं. ग.

सर्वेषामप्यभिलाषोपनीतञ्च, अपेक्षितमपि तथाविधं [1]सुखं स्वर्गपदवाच्यमित्यर्थः। पश्वादिसुखन्तु दुःखानुषक्तमल्पञ्च कतिचिदेव कामयन्ते। अतो न तदुक्तमम्। न चैव मुमुक्षुभिरप्यभिलषणीयत्वात् प्रत्यवायपरिहार एव फलमिति वाच्यम्, तस्य भूयोऽभिलषितत्वेऽप्यभावरूपत्वेन विलम्बितोपस्थितिकत्वात्। ततश्च स्वर्ग एव फलम् ॥

इतोऽप्येवमित्याह —

**प्रत्ययाच्च ॥ १६ ॥**

"यो यजते स देवाना भोगाय भवति। सर्वेण वै यज्ञेन देवास्सुवर्गं लोकमायन्" इत्यादिवाक्यशेषेषु अनादिष्टफलकयज्ञानां स्वर्गफलप्रतीतेश्चेत्यर्थ.। भाष्ये तु–'आरामकृद्देवदत्त, नियतोऽस्य स्वर्गः' इत्यादिलोकप्रसिद्धेरिति व्याख्यातम्।

नन्वेवं नित्यकर्मणामपि स्वर्ग एव फलं कल्प्येतेति चेन्न; व्याघातात्। जीवनादिनिमित्ते हि अवश्यकर्तव्यता तेषामवगता। स्वर्गफलकत्वे च सा व्याहन्येत, मुमुक्षुभिस्तस्यानभिलषितत्वात्। अतो न स्वर्गस्य नित्यविध्यन्तर्भावो युक्तः। प्रत्यवायादिपरिहारस्तु मुमुक्षुभिरपि काम्यत इति द्वितीयचतुर्थाद्येऽवोचाम। एवञ्च पिण्डपितृयज्ञस्यापि नित्यात्वान्न स्वर्ग. फलमिति न तस्याप्येतद्विषयता। उदाहरणान्तरमेवान्वेषणीयम् ॥

**इति सप्तमं विश्वजिदधिकरणम् ॥ ७ ॥**

**८**

"ज्योतिर्गौरायु" इत्यादिस्तुत्या प्रकृत्य श्रूयते—"प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इति। रात्रिशब्दो ज्योतिरादिस्तुत्यापरः। किमिह प्रतिष्ठालक्षणफलाय रात्रिसत्रविधिः? उतार्थवाद? इति संशये, पूर्वपक्षयति—

**क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः ॥ १७ ॥**

यथा पर्णताद्यङ्गविधौ "न पापं श्लोक शृणोति" इत्यादिरर्थवाद., तथा रात्रिसत्रादिक्रतौ प्रतितिष्ठन्तीति फलविधिसरूपमर्थवादं कार्ष्णाजिनिराचार्यो मन्यते।

---

[1]. सूत्रे ग.

वर्तमानापदेशेन कमिपदाभावेन च फलविध्ययोगादिति तदाशयः। ततश्चानिर्दिष्ट-फलत्वात् पूर्वाधिकरणन्यायेन स्वर्ग एव फलमिह कल्प्यते ॥

अथ सिद्धान्तयति—

## फ त्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥

प्रतिष्ठालक्षणं फलमिह आत्रेय आचार्यो मन्यते। कुतः? निर्देशात्—प्रतितिष्ठन्तीति प्रतिष्ठाफलस्य निर्देशात्। न च वर्तमाननिर्देशात् कमिपदाभावाच्च प्रतिष्ठायाः क्रतुसाध्यत्वानवगमात् कथ प्रतितिष्ठन्तीति फलपरमिति वाच्यम्। ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति विपरिणामेन तदुपपत्तेः। ननु विपरिणामकल्पनापेक्षयार्थवादत्वमाश्रित्य स्वर्गकल्पनैव किन्न स्यादित्यत आह—अश्रुताविति। यथाकथञ्चित् फलान्तरस्याश्रवणे सत्येव स्वर्गकल्पन स्यात्। इह तु विपरिणामेन प्रतिष्ठालक्षणफलश्रवणान्न स्वर्गकल्पनम्। न च विनिगमनाविरहश्शङ्क्य 'स्वर्गस्य हि कल्पनायां तस्य स्वरूपम्, अश्रुतश्च क्रतुसम्बन्धः, फलत्वञ्च कल्प्यम्। न च "ज्योतिष्टोमेन स्वर्गकामः" इत्यादौ स्वर्गस्वरूप क्लृप्तमिति शङ्क्यम्, प्रतिकर्मविशेपस्वर्गस्य विलक्षणत्वात्। 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणत फलविशेस्स्यात्' इत्यर्थवादाधिकरणगुणसूत्रे तथा व्यवस्थापितत्वात्। एतेन कमिसयोगादन्यत्र स्वर्गस्य फलत्वं क्लृप्तमित्यपि निरस्तम्। किञ्च 'स्त्रीकामा वै गन्धर्वाः' इत्यादौ कमिसंयोगेऽपि फलत्वाभावादध्याहृतस्यापि स्वर्गकामशब्दस्य प्रकृते फलपरत्व विध्याकाङ्क्षानिबन्धनमिति फलत्वमपि कल्प्यमेव। प्रतिष्ठायास्तु स्वरूप लोकत एव क्लृप्तम्। श्रुत एव च क्रतुसम्बन्धः। फलत्वमात्रन्तु विपरिणामेन कल्प्यमिति लाघवम्। विपरिणतैरेव श्रुतपदैर्नैराकाङ्क्ष्यसम्भवेऽध्याहारायोगाच्च। न च श्रुतपदानामुत्पत्तिविध्यपेक्षितप्राशस्त्यसमर्पकाणां फलसमर्पणेऽपि व्यापारे वाक्यभेदात् स्वर्ग एव कल्पयितुं युक्त इति वाच्यम्[1] विधेरेव द्वे शक्ती कल्पयिष्याम इति विधित एव प्राशस्त्यावगमसिद्धे.। यद्वा प्रतितिष्ठन्तीत्यादिरविपरिणत· केवलार्थवाद एवास्तु। तद्वशाच्च प्रतिष्ठाकामा एता रात्रीरुपेयुरिति विधिः कल्प्यते, न तु स्वर्गकामा एता रात्रीरुपेयुरिति, विधिः कल्पयितुं शक्यते। तथासति कल्पितविधेरर्थवादस्य चासाङ्गत्यप्रसङ्गात्।

१. स्वर्गस्यापि. अ.

न ह्येतत् सङ्गतं भवति—यतः प्रतितिष्ठन्ति अतस्स्वर्गकामा एता रात्रीरुपेयुरिति। तस्मात् प्रतिष्ठाफलकमेव रात्रिसत्रम् ॥

अथ यदुक्तमङ्गवदिति तत्राह—

**अङ्गे स्तुतिः परार्थत्वात् ॥ १९ ॥**

पर्णताद्यङ्गविधौ "न पापं श्लोकं शृणोति" इति केवलस्तुतिः, न त्वपापश्लोकश्रवणकामः पर्णमयीञ्जुहूं कुर्यादित्यादिविधिकल्पना सम्भवति। कुतः? परार्थत्वात् पर्णताद्यङ्गस्य जुह्वाद्युपस्थितक्रतूपकारार्थतया फलकाङ्क्षाविरहात्। प्रकृते च क्रतूपस्थापकाभावेन रात्रिसत्रस्य क्रतूपकारफलाकत्वाभावेन फलाकाङ्क्षत्वात्। अत प्रतितिष्ठन्तीत्यादि फलपरम् ॥

इत्यष्टमं रात्रिसत्राधिकरणम् ॥ ८ ॥

९

"सौर्यञ्चरुन्निर्वपेत् ब्रह्मवर्चसकाम." इत्यादि काम्यं कर्म स्वर्गार्थमेव सदन्वाचयेन श्रुतफलार्थञ्च? उत श्रुतफलार्थमेव? इति संशये, पूर्वपक्षयति—

**काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ १९ ॥**

काम्ये—सौर्यादिकर्मणि विश्वजिन्न्यायेन स्वर्ग· नित्य—नियतः, ब्रह्मवर्चसादिकन्तु श्रुतमन्वाचयफलम्, स्वर्गार्थं सौर्यादिकर्म कुर्वाणस्य ब्रह्मवर्चसादिकमपि तदिच्छाया सत्या भवतीति। तदनिच्छायामपि स्वर्गार्थत्वं नियतम्। न च श्रुतफलेनैवाकाङ्क्षाशान्तेर्न स्वर्गकल्पनासम्भव इति वाच्यम्। विधिप्रत्ययो हि प्रवर्तनासामान्यमभिदधानस्सर्वानेवाविशेषात् प्रवर्तयति। तदेतत् स्वर्गार्थत्वे सत्येव घटते, तस्य सर्वपुरुषाभिलषितत्वात्। ततश्च 'श्रुतप्रवर्तनासम्बन्धलभ्यं स्वर्गार्थत्वं पदान्तरोपात्तब्रह्मवर्चसादिफलैर्न बाधमर्हति। नन्वेकस्य कथमनेकार्थत्वमित्यत आह—यथेति। यज्ञाङ्गे खादिरत्वादौ क्रत्वर्थ·—अर्थ्यतेऽपेक्ष्यत इत्यर्थः। कर्मणि घञ्। फलोत्पादनाय क्रत्वपेक्षित.। क्रतूपकार इति यावत्। स यथा नित्य, वीर्यादिफलमपि तदिच्छाया सत्यामन्वाचीयते, तद्वदुभयार्थत्वमेकस्य सम्भवति ॥

१. श्रौत ग.

इतोऽप्येवमित्याह—

**[1]वीते च कारणे नियमात् ॥ २० ॥**

कारीरी नाम वर्षकामेष्टिः। तस्यां प्रक्रान्तायां समाप्तेः प्रागेवाकस्माद्वर्षलाभे सति प्रवृत्तिकारणीभूतायां फलेच्छायां निवृत्तायामपि समाप्तिविधिर्दृश्यते—"यदि वर्षेत्तावत्येव होतव्यम्" इति। तदेतत् काम्यकर्मणां श्रुतमात्रफलकत्वे सति नोपपद्येत। स्वर्गो नित्यः, श्रुतन्तु फलमन्वाचीयत इत्यभ्युपगमे तु [2]श्रुतफलेच्छायां निवृत्तायामपि स्वर्गार्थन्तत्समापनविधिरुपपद्यते ॥

अथ सिद्धान्तयति—

**कामो वा तत्संयोगेन चोद्यते ॥२१॥**

काम्ये कर्मणि काम एव भवति। काम्यत इति कामः—फलम्। श्रुतफलमेव भवति, न तु स्वर्गः फल्यः। कुतः ? यत· तत्संयोगेन—ब्रह्मवर्चसादिसंयोगेनैव काम्य कर्म चोद्यते—प्रत्यक्षं विधीयते। ततश्च प्रत्यक्षश्रुतेन विशेषफलेनैव [3]विशेषाकाङ्क्षाशान्तेर्न स्वर्गकल्पनमुदेतुमुत्सहते। न च विधेस्सर्वसाधारण्यानुरोधेन श्रुतब्रह्मवर्चसादेरन्वाचयफलत्वाश्रयणात् स्वर्गकल्पनन्निर्बाधमिति वाच्यम्। स्वर्गार्थत्वे निश्चिते सति श्रुतब्रह्मवर्चसादिफलेऽन्वाचयनिश्चयः, तन्निश्चये च सत्यन्वाचयफलस्यानियतत्वेन तेन फलाकाङ्क्षाया अशान्त्या फलान्तराकाङ्क्षायां स्वर्गकल्पनेत्यन्योन्याश्रयात्। विधेस्तु सर्वसाधारण्यं फलविशेषाश्रवणे सत्येव फलविशेषश्रवणे तु विधिस्वारस्यसिद्धं समीहितसाधनत्वं पदान्तरोपात्तफलविशेषमादायैव पर्यवस्यति। अन्यथा विशेषश्रवणवैयर्थ्यात् ॥

अथ यज्ञाङ्गदृष्टान्तो विषम इत्याह—

**अङ्गे गुणभूतत्वात् ॥ २२ ॥**

यज्ञाङ्गे खादिरत्वादौ "खादिरो यूपो भवति" "खादिरं वीर्यकामस्य" इति वाक्यद्वयेन क्रतूपकारं वीर्यादिलक्षणफलञ्च प्रति गुणभूतत्वात्—साधनत्वावगमादुभयार्थत्वं युज्यते। नेह तथास्ति, स्वर्गबोधकप्रमाणाभावात् ॥

---

१. विहते.  २. श्रुतयत्फलेच्छायामिति मातृकासु पाठः।

३. विशेष. नास्ति. अ, क, ख.  ४. दृष्टान्तोऽपि. क.

अथ वीते च कारणे [1]नियमादित्यत्राह—

[2]वीते नियमात्तदर्थम् ॥२३॥

फलेच्छारूपप्रवृत्तिकरणेऽपगतेऽपि तदर्थं शिष्टविगर्हणापरिहारार्थम्। "यदि वर्षेत्तावत्येव होतव्यम्" इति समाप्तिविधान न तत् स्वर्गार्थत्वकल्पने लिङ्गम्। यो हि देवेभ्यस्सङ्कल्प्य न यागमभिनिर्वर्तयति त मन्वादयस्स्मर्तारो विगर्हन्ते—'प्रतिश्रुतमदत्वा तदपहारेण युज्यते' इत्यादि। तस्मात् काम्यकर्मसु श्रुतमेव फलं न तु स्वर्गकल्पनमिति ॥

इति नवम काम्यकर्मणा श्रुतफलार्थत्वाधिकरणम् ॥ ९ ॥

१०

"सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इति किमनुवाद. ? उत फलविधिः ? इति सशये, पूर्वपक्षयति—

सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २४ ॥

"गोदोहनेन पशुकामस्यापः प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मृण्मयेन प्रतिष्ठाकामस्य, आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, खननपुरीषां प्रतिष्ठाकामस्य" इत्यादिगुणकामैस्सार्वकाम्य—सर्वफलकत्वं प्रत्येतव्यम्। गोदोहनादीनां पश्वादिफलकत्वमेवात्रानूद्यत इति यावत्। ननु तर्हि अमावास्यापौर्णमासीसंयुक्तयदाग्नेयादिवाक्योत्पन्नप्रधानविशेषपरदर्शपूर्णमासशब्दस्य का गतिरित्यत आह—प्रकरणादिति। दर्शपूर्णमासशब्द प्रकरणात्तदीयप्रणीताप्रणयनादिसम्बन्धिगोदोहनादिपर.। यथा 'वाजपेयस्य यूप.' इत्यत्र वाजपेयशब्दस्तदीयपशुपरस्तद्वत्। तथा च दर्शपूर्णमाससम्बन्धिगोदोहनादीनि पश्वादिफलकानीति दर्शपूर्णमासस्तुत्यर्थोऽयमनुवादः। न च प्रधानफलविधिरेवायमस्त्विति वाच्यम्, विधिप्रत्ययाश्रवणान। न च कर्तव्याविति पदमध्याह्रियत इति वाच्यम्। स्वर्गकामो दर्शपूर्णमासाभ्यां यजेतेति श्रुतेनैव स्वर्गेण शान्ताकाङ्क्षतया तदध्याहारकल्पनानवकाशात्। न चैवं

---

१. नियमादित्यत आह. अ, फ. २. विहते.

३. स्वर्गेणैव. अ, फ.

सति सर्वशब्दस्य गोदोहनादिफलेषु सङ्कोचस्स्यादिति वाच्यम् । बहुद्रव्यायाससाध्याश्वमेधादिफलस्य एतत्साध्यत्वकल्पनानौचित्येन सर्वपदस्य सङ्कुचितवृत्तित्वावश्यम्भावात् । तस्मादनुवाद एवायम् ॥

अथ सिद्धान्तयति—

## फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २९ ॥

प्रधानफलविधिरेवायम् , न तु गुणकामानुवादः । कुतः ? प्रधानशब्दसंयोगात्—अमावास्यापौर्णमासीसंयुक्तयदाग्नेयादिवाक्योत्पन्नप्रधानविशेषपरदर्शपूर्णमासशब्दसंयोगात् । न च लक्षणया गोदोहनादिपरत्व तस्य युज्यते । मुख्यवृत्तिसम्भवे लक्षणाश्रयणासम्भवात् । ‘ वाजपेयस्य यूपः” इत्यत्र तु वाजपेयशब्दस्स्वार्थवृत्त एव । तस्य च स्वाङ्गपशुयागद्वारा यूपसम्बन्धसद्भावात् सम्बन्धमात्रार्था षष्ठ्यपि स्वार्थवृत्तैवेति वाजपेयसम्बन्धियूपानुवाद इति युक्तम् । इह तु दर्शपूर्णमासशब्दस्य स्वार्थवृत्तत्वभङ्गप्रसङ्गान्न गोदोहनादिफलानुवादत्वसम्भव । ननु यथा अङ्गानां प्रधानानुग्राहकत्वात् प्रधानद्वारा प्रधानफलार्थता, [1]तद्वत् प्रधानस्याप्यङ्गानुष्ठापकतया तदनुग्राहकत्वादङ्गफलार्थता । न चाङ्गेषु सर्वत्र फलाभावोऽस्ति, प्रस्तरप्रहरणस्यायुरादिफलताया उक्तत्वात् । तथा च दर्शपूर्णमासनामधेयकप्रधानानामेवाङ्गफलार्थत्वानुवादोऽस्तु इति चेन्न; प्रधानस्याङ्गोपकारकत्वेऽपि [2]तदर्थत्वाभावे तद्द्वारा तत्फलार्थत्वासम्भवेन तादर्थ्यचतुर्थ्या अनुपपत्तिप्रसङ्गात् । एवञ्च गोदोहनादीनां केवलफलप्रयुक्तत्वेन प्रधानोपकार्यत्वस्याप्यभावात् प्रधानानां न तत्फलार्थता । तस्मादगत्या कर्तव्यविध्यध्याहारेण फलविधिरेवायम् । अन्यथा पदपदार्थासाङ्गत्यापत्तेः । विध्यन्तरशेषत्वाभावेनानुवादानर्थक्याच्च । अश्वमेधाद्यानर्थक्यन्तु ‘फलस्य कर्मनिष्पत्तेस्तेषां कर्मवत्परिमाणतः फलविशेषस्स्यात्’ इत्यर्थवादाधिकरणगुणसूत्रे परिहृतमेव । न च सर्वकामवाक्येनैव स्वर्गार्थत्वस्यापि सिद्धे स्वर्गकामवाक्यमनर्थकमिति वाच्यम् । वाक्यद्वयेन स्वर्गफलकतया ज्ञातमेव कर्म स्वर्गसाधनमिति कल्पनात् । शाखाभेदान्न पुनरुक्तिरित्यन्ये । स्वर्गकामवाक्यमवयुत्यानुवाद इत्यपरे । अत्र च [3]सर्वज्ञत्वादि

---

१. तत्प्रधानस्यापि. अ, क, तथा. ख. २ तदर्थत्वाभावेन. अ, क.

३. सर्वज्ञादि. ग.

शशविषाणादि च न फलम्, किन्तु विधिषु कामशब्दप्रयोगो येषु फलेषु तत्पर एव सर्वशब्दः, वैदिकत्वसामान्यात् 'सा लिङ्गादार्त्विजे स्यात्' इति ( ) न्यायात् ॥

इति दशमं सार्वकाम्याधिकरणम् ॥ १० ॥

११

दर्शपूर्णमासौ सर्वकामार्थाविति स्थितम्। तत्र किं सकृत् प्रयोगादेव सर्वाणि फलानि युगपत् भवन्ति ? उतैकैकस्मात् प्रयोगादेकैकं फलमित्येवं पर्यायेण ? इति संशये, पूर्वपक्षयति—

**तत्र सर्वेऽविशेषात् ॥ २६ ॥**

तत्र–तस्मिन् सर्वफलार्थतया विधौ सति सकृत्प्रयोगादेव सर्वाणि फलानि भवेयुः। कुतः ? अविशेषात्—साधनस्याविशेषात्। दर्शपूर्णमासौ हि सर्वफलार्थतया श्रुतौ। तयोश्च सकृत् प्रयोगे सति सर्वेषु 'फलेष्वेकतममिदमेव भवतीति निर्धारक-प्रमाणाभावात् सर्वाणि फलानि युगपदेव भवेयुः ॥

अथ सिद्धान्तयति—

**योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात् ॥ २७ ॥**

योगः—सम्बन्धः। स च पौर्वापर्यरूपः पर्यायोऽत्र विवक्षितः। पर्यायेणैव फलसिद्धिः, न तु युगपत्। कुतः ? अर्थस्योत्पत्त्ययोगित्वात्। अर्थस्य–कृत्स्नस्य फलस्य युगपदुत्पत्त्यसम्भवात्। न ह्यैहिकानां वृष्ट्यादीनामामुष्मिकानाञ्चैन्द्रलोक[2]ब्रह्मलोकादिसुखानां युगपदुत्पत्तिसम्भवः। ननु यानि सम्भवद्युगपदुत्पत्तिकानि युगपदेव काम्यन्ते तेषां युगपदुत्पत्तिरस्त्वित्यत्राप्येतदेवोत्तरम्—अर्थस्योत्पत्त्ययोगित्वादिति। अर्थस्य—अनेकफलस्य युगपदुत्पत्त्ययोगात्। कर्मण्येकदा एकफलजनन एव सामर्थ्याव-धृतेः। न ह्यनेककार्यकरणसमर्थोऽपि[3] देवदत्तः अनेकचिकीर्षायामपि युगपदनेकत्र विनियुज्यते, किन्तु पर्यायेणैव। न चाग्नेयादीनां षण्णामपि प्रधानानां साहित्येनैव फलसाधनत्वमेकादशाद्ये वक्ष्यते। तद्वदिहापि साहित्येनैव कामानां फलत्वं न त्वेकैक-

१. फल्गु फलतम अ, फ. २. ब्रह्मलोक. नास्ति. ग.
३. अपि. नास्ति. क.

स्येति वाच्यम्। आग्नेयादियागानां हि फलं प्रत्युपादेयतया तद्गतसाहित्यस्य विवक्षा युक्ता। इह तु कामानामुद्देश्यत्वान्न तेषु साहित्यस्य विवक्षा युज्यते। न च फलकामित्वं कर्तृविशेषणम्, येन तदन्तर्गतफलानां साहित्यं विवक्षितम्, यः स्वर्गकामस्स यजेतेति वचनव्यक्तेः षष्ठे वक्ष्यमाणत्वात्। वस्तुतस्तु नेह सर्वकाम इति श्रुतम्, येन स्वर्गकामादिवाक्य इव फलकामित्वं कर्तृविशेषणमाशङ्क्येतापि। चतुर्थ्यन्तेन फलानि निर्दिश्य तदुद्देशेन कर्मविधानात्। तस्मात् पर्यायेणैव कामा॥

इत्येकादशं योगसिध्यधिकरणम्॥ ११॥

## १२

अधिकरणान्तरपरञ्चैतत्सूत्रद्वयम्। तद्यथा—"स्वर्गकामो यजेत" "वृष्टिकामो यजेत" "पशुकामो यजेत" इत्यादि 'वेदप्रसिद्धसर्वकामार्थत्वं[1] दर्शपूर्णमासयोरिति स्थितम्। तत्र स्वर्गस्तावत् केवलमामुष्मिको देहान्तरभोग्यः। वृष्ट्यादिकन्तु केवलमैहिकमेतद्देहभोग्यम्। पशुपुत्रादिकन्त्विह जन्मनि जन्मान्तरे चोपभोग्यत्वादैहिकमामुष्मिकञ्च। तत्र सर्वशब्दार्थान्तर्गताश्चित्रोद्भिदादिषु श्रुताः पश्वादय कामाः किमामुष्मिका एव विवक्षिता? उतामुष्मिकैहिकास्सर्वे ते? इति संशये, पूर्वपक्षयति—

### तत्र सर्वेऽविशेषात्॥ २६॥

तत्र सर्वेषु कामेषु पशुपुत्रादयस्सर्वे आमुष्मिका एव विवक्षिताः। कुतः? अविशेषात्-स्वर्गवन्निर्वृत्तमात्रे कर्मणि पश्वादीनामप्यनुत्पत्त्यविशेषात्। न हि निर्वृत्तमात्रे चित्रोद्भिदादिकर्मणि इहैव देहे प्रतिग्रहादि विना पश्वादिकमवश्यमुपलभ्यते। अकृतेऽपि चित्रादिकर्मणि प्रतिग्रहादौ सत्यवश्यं तदुपलभ्यते। ततश्च प्रतिग्रहादिकमेव तत्र साधनम्, न तु कर्मजन्यमदृष्टमिति पश्वादिकं देहान्तरभोग्यमेव कर्मफलम्। तस्य देहान्तरारम्भद्वारा अदृष्टापेक्षत्वात्। न ह्यदृष्टं विना मातापितृसंयोगात् भूतपञ्चकसंयोगाच्च दृष्टादेव देहारम्भस्सम्भवति। असकृत् स्त्रीसम्प्रयोगे सत्यपि क्वचित्तदभावात्। अतो देहान्तरभोग्यानामेव पश्वादीनामिह फलत्वम्। एवञ्च "अमुष्मै वै कामाय यज्ञा आह्रियन्ते" इति वाक्यशेषोऽप्युपपन्नो भवति॥

---

१. वेदे प्रसिद्ध. क.

अथ सिद्धान्तयति—

**योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात् ॥ २७ ॥**

इहापि जन्मनि पशुपुत्रादिफलयोगस्य सिद्धिर्भवत्येव, न तु जन्मान्तर एव। कुतः? अर्थस्य-पशुपुत्रादिफलस्य जन्मान्तर एवोत्पत्तियोगित्वानवगमात्। तथाहि-पश्वादीना जन्मान्तरैकभोग्यत्वं वचनबलादवगम्यते ? न्यायबलाद्वा ? नाद्यः; चित्रादिवाक्येषु पश्वादेरिहामुत्रसाधारण्येनैव फलत्वश्रवणात्, अमुत्रैवेत्यश्रवणात्। "अमुष्मै वै कामाय" इति वाक्यशेषस्तु स्वर्गप्रशसार्थोऽर्थवाद एव। स हि राष्ट्रफलकामिष्टि निन्दितु प्रवृत्तः। एवं हि श्रूयते—"कैकेयं वै यशङ्केशी आलिङ्ग्योवाच। अनया मां राष्ट्रप्रतिपादनीययेष्ट्या याजयेति। सोऽब्रवीत् न वै सौम्य राष्ट्रप्रतिपादनीयां (मात्थ) वेत्थ अमुष्मै वै कामाय यज्ञा आह्रियन्ते" इति आमुष्मिकफला यज्ञाः प्रशस्ताः। अतः ऐहिकराष्ट्रफलायामिष्टौ नाभिनिवेष्टव्यमिति तदाशय। त्वदुक्तरीत्या तु राष्ट्रस्यापि फलस्य देहान्तरीयभोग्यत्वात्तदसङ्गतिस्स्पष्टैव। न द्वितीय, इह जन्मनि पश्वादिलाभस्य प्रतिग्रहादिनियतत्वात् कर्मजन्यादृष्टानपेक्षत्वमित्यस्याप्रामाणिकत्वात् प्रतिग्रहादावेव घटकतया अदृष्टस्योपयोगसम्भवात्, अन्यथा '[1]सर्वदा सर्वस्य पुरुषस्य सर्वं द्रव्यं प्रतिग्रहादि [विना] लभ्येत। तस्माच्चित्रादिकर्मजन्यमदृष्टं प्रतिग्रहादिमुखेनेह जन्मनि जन्मान्तरे वा पश्वादिफलञ्जनयति। तत्र पश्वादि[फल]प्रतिबन्धक[2]दुरिताभावे इहैव जन्मनि चित्रादिकं कर्म परिपक्वं भवतीति तत्फलमिहैव जन्मनि भुज्यते। तदभावे जन्मान्तर इति फलबलात् कल्प्यम्। न चेह जन्मनि कदाचित् पश्वाद्यभाव। कारीर्यादाविव वैगुण्यकल्पनया समर्थ्यतामिति वाच्यम्। [3]तद्वदैहिकत्वनिश्चयाभावेन वैगुण्यकल्पनानुपपत्ते। तस्मादि [हा] पि जन्मनि पश्वादयः कामाः ॥

इति द्वादशं पश्वादीनामामुष्मिकैहिकफलत्वाधिकरणम् ॥ १२ ॥

१३

अस्ति वाजपेय –"वाजपेयेन स्वाराज्यकामो यजेत" इति। अस्ति च बृहस्पतिसव. "य पुरोधाकामस्स्यात् स बृहस्पतिसवेन यजेत" इति। तत्र वाजपेयप्रकरण इदमाम्नायते–"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति। किमिह बृहस्पतिसवस्य

---

१ सर्वदा, नास्ति ग. २. दरिद्रताभावे. अ, क. ३. तद्वदेव. अ, क.

पुरोधाफलकस्य वाजपेयोत्तरकालकत्वविधिः ? उत वाजपेयाङ्गतया बृहस्पतिसवविधिः ? इति संशय. । तत्र सिद्धान्तेनोपक्रमते—

## समवाये चोदना संयोगस्यार्थवत्वात् ॥ २८ ॥

समवाये-अङ्गाङ्गिभावसम्बन्धे विषये, चोदना-बृहस्पतिसवस्य विधिः । वाजपेयाङ्गतया बृहस्पतिसवविधिरिति यावत् । कुतः ? एवं सत्येव संयोगस्य--वाजपेयप्रकरणपाठस्य प्रयोजनवत्वात् । पुरोधार्थस्य बृहस्पतिसवस्य वाजपेयोत्तरकालत्वविधौ च तस्य वाजपेयप्रकरणाम्नानवैयर्थ्यात् । न [1]ह्यन्यस्य प्रकरणेऽन्यस्य धर्माम्नानमर्थवत् ॥

अथ पूर्वपक्षमुद्भाव्य निराकरोति—

## कालश्रुतौ काल इति चेन्नासमवायात्प्रयोजनेन स्यात् ॥ २९ ॥

किमिह प्रसिद्धपुरोधाफलकबृहस्पतिसवस्य वाजपेयाङ्गतया विधिः ? उत बृहस्पतिसवधर्मकस्य कर्मान्तरस्य ? नाद्यः ; पुरोधाफलेन क्लृप्तफलस्य [2]तस्य वाजपेयोपकाराय विध्यसम्भवात् । न द्वितीयः ; तथा सति बृहस्पति ( सवशब्दे धर्मलक्षणापत्ते । पुरोधाफलकस्यैव बृहस्पतिसवस्य वाजपेयोत्तरकालविधौ तु न लक्षणास्ति । न च 'समानकर्तृकयो' पूर्वकाले' इति क्त्वाप्रत्ययस्य पूर्वकालेऽनुशासनात् काल ) विधावपि क्त्वाप्रत्ययस्योत्तरकाललक्षणा तुल्येति वाच्यम् । वाजपेयस्यैव हि बृहस्पतिसवपूर्वकालत्वमत्र विधीयते । पर्यवसानगत्यैव तु बृहस्पतिसवस्य तदुत्तरकालत्वं लभ्यते । एवञ्च न प्रकरणबाधोऽपि । एवञ्च कालश्रुतौ—वाजपेयस्य बृहस्पतिसवपूर्वकालताविधौ सति बृहस्पतिसवस्य तदुत्तरकालत्वं पर्यवसानगत्या लभ्यत इति कालविधिरेवायं स्यादिति चेत्तन्न; कुत. ? प्रयोजनेनासमवायात् । प्रयोजनेनेति कर्मणि ल्युट् । बृहस्पतिसवयजे' परतः प्रयुज्यमानेन प्रत्ययेन वाजपेये बृहस्पतिसवपूर्वकालस्य विधेयतया असम्बन्धात । कालविधित्वे हि वाजपेये बृहस्पतिसवात् पूर्वकालस्य [3]विधिर्न सम्भवति । प्रत्ययसमानपदोपात्त-

---

१. ह्यस्य ग. ( ) गपुस्तके ग्रन्थपात· ।

२. तस्य नास्ति अ. ३. विधित्व. अ.

'धात्वर्थगतत्वाभावेन श्रुतिप्रत्यासत्यभावात्। ( अतः क्त्वाप्रत्ययस्योत्तरकाले लक्षणामाश्रित्य बृहस्पतिसवे तद्विधिर्वक्तव्यः। तस्य समानपदोपात्तविधेयधात्वर्थगतत्वेन ) श्रुतिप्रत्यासत्तेः। एवञ्च लक्षणादोषस्तदवस्थः, वाजपेयप्रकरणबाधश्च, वाजपेयशब्दस्यात्यन्तपारार्थ्यञ्च। तस्य केवलं कालोपलक्षणार्थत्वेन विधेयकोटिप्रवेशाभावात्। वाजपेयाङ्गतया बृहस्पतिसवविधौ तु वाजपेयशब्दस्य विधेयसमर्पकत्वाभावेऽपि तदुच्चारणस्य स्वाभिधेये वाजपेयेऽन्यविधानार्थतया कथञ्चिद्वाजपेयश्रुतिरनुगृह्यत इति न तदत्यन्तपारार्थ्यम्। न च बृहस्पतिसवस्य पुरोधालक्षणफलार्थत्वात्तस्य कथं वाजपेयाङ्गतया विधिसम्भव इति वाच्यम्। तद्धर्मककर्मान्तरस्य वाजपेयाङ्गतया विधानात्, मासाग्निहोत्रन्यायेन ( ) धर्मलक्षणाया अदोषत्वात्। किञ्च 'समानकर्तृकयोः पूर्वकाले' इत्यनुशासनात् समानकर्तृकत्वविशिष्ट पूर्वकालत्वं ( क्त्वाप्रत्ययार्थः। समानकर्तृकत्वञ्च वाजपेयबृहस्पतिसवक्रिययोरङ्गाङ्गिभावे सत्येव घटते। 'अङ्गानि तु विधानत्वात् प्रधानेनोपादिश्येरन्' इत्यत्र अङ्गप्रधानयोरेककर्तृत्वस्यैकादशे वक्ष्यमाणत्वात्। असति त्वङ्गाङ्गिभावे समानकर्तृकत्वं ) कर्तृत्वाधिष्ठानपुरुषैक्येन गौणमुपपाद्यम्। न च सम्भवति मुख्ये तद्युक्तमाश्रयितुम्। पूर्वकालत्वमप्यङ्गाङ्गिभावे मुख्यमेव। ततश्चोभयमुख्यत्वानुसारादङ्गतयैव बृहस्पतिसवविधि ॥

इति त्रयोदश बृहस्पतिसवाधिकरणम् ॥ १३ ॥

## १४

दर्शपूर्णमासयोरामनन्ति—"संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति" इति। किमयं वैमृधयागः दर्शपूर्णमासयोरङ्गम्? उत पौर्णमास्या एव? इति संशये, पूर्वपक्षमुद्भाव्य निराकरोति—

**उभयार्थमिति चेत्तन्न शब्दैकत्वात् ॥ ३० ॥**

दर्शपूर्णमासार्थं वैमृधविधानम् प्रकरणात्। "पौर्णमासीं संस्थाप्य" इति 'तस्य कालार्थसंयोग'। तथाच पौर्णमासीसमाप्त्युत्तरकाले क्रियमाणो वैमृधयाग उभयोर्दर्शपूर्णमासयोरङ्गमिति फलतीति चेत्तन्न; कुत.? शब्दैकत्वात्। अनु-

१ धात्वर्थगतत्वाभावेन. अ.
२ पूतस्य. क.

( ) अनयोः चिन्हान्तर्गतो भागस्स्खलित·

निर्वपतीति ह्येकोऽस्य विधिप्रत्ययः। स च सकृच्छ्रुतत्वात्संस्थाप्येति कालेन च प्रकरणोपस्थितदर्शपूर्णमासाभ्याञ्च न सम्बन्धमर्हति। वैमृधेन [१]दर्शपूर्णमासावुपकुर्यात् पौर्णमासीसमाप्त्युत्तर [२]कालकेनेति वाक्यभेदप्रसङ्गात्। अतः पौर्णमासीं संस्थाप्येति न कालार्थसंयोगः।

ननु पौर्णमास्यङ्गतया वैमृधविधावप्ययं वाक्यभेदस्तुल्यः। विशिष्टविधिमभ्युपगम्य तत्परिहारस्तु कालार्थकसयोगेऽपि तुल्यः। अतः पौर्णमास्यङ्गतया विधौ किं विनिगमकम्? प्रत्युत प्रकरणानुग्रहाय कालार्थयोगमाश्रित्योभयार्थतया विधानमेवाश्रयितु[३] युक्तमित्यत्राप्येतदेवोत्तरम्– शब्दैकत्वादिति। शब्दस्य समानकर्तृकत्वविशिष्टपूर्वे कालताबोधकक्त्वाप्रत्ययल्यबादेशस्यैकत्वात्। ईप्सिततमे द्वितीयायास्त्वङ्गाङ्गिभावे[५] सत्येव मुख्यत्वात्। कर्तृस्वरूप हि फलचिकीर्षया साङ्गप्रधानानुष्ठातृत्वमेव। अङ्गप्रधानयोरेककर्तृकत्वस्यैकादशे वक्ष्यमाणत्वात्। तथाविधकर्तृस्वरूपैक्यञ्चाङ्गाङ्गिभावे सत्येव घटते। अङ्गाङ्गित्वाभावे हि कर्तृत्वाधिष्ठानपुरुषैकत्वे गौण एव क्त्वाप्रत्ययः। ततश्च क्त्वादेशल्यप्श्रुतिबलात् रण बाधित्वा पौर्णमास्यङ्गतयैव वैमृधविधिरिति भावः॥

स्यादेतत्––किमिह संस्थाप्येति प्रधानसमाप्तिर्विवक्षिता? उत साङ्गप्रधानगोचरभावनासमाप्तिः? नाद्यः; "स वै पौर्णमासेन हविषा" इत्यादिवाक्यान्तरे तृतीयानिर्देशबलेन साङ्गप्रधानगोचरभावनासमाप्तिरेवात्र[६] सन्तिष्ठतेरर्थ इति सङ्कर्षकाण्डे 'समानतन्त्रे वैमृधः' इत्यधिकरणे वक्ष्यमाणत्वात्। न द्वितीय; व्याघातात। न हि साङ्गपौर्णमासीसमाप्त्युत्तरकालेऽङ्गान्तरस्य[७] वैमृधस्य विधिरिति सम्भवति। 'न चैवं विरोधाद्वैमृधेतरसकलाङ्गसहितप्रधानभावनासमाप्तिरिह [८]विवक्षितेति वाच्यम। तथा सति प्रथमश्रुतप्रकृत्यर्थसङ्कोचापत्ते., तद्वरं जघन्यश्रुतक्त्वादेशल्यप' कर्तृत्वाधिष्ठानपुरुषैक्यविशिष्टपूर्वकाले गौणीं वृत्तिमाश्रित्य कर्तृस्वरूपैक्यलब्धमङ्गाङ्गिभावमनादृत्य कालार्थसंयोगाश्रयणेनोभयार्थतया विधानम। न च साङ्गपौर्णमासी-

---

१. पूर्णमामाद्युपकुर्यात्. अ, क.
२ कालिकेन. अ.
३ विधानमाश्रयितु अ, क.
४. कालकता. ग.
५. त्वङ्गाङ्गिभाव एव. क, ग.
६. अत्र नास्ति. ग.
७. अङ्गान्तरवैमृधविधि ग
८. न चात एव अ, क.
९. विवक्ष्य। ग.

समाप्त्युत्तरकाल 'पौर्णमास्या अङ्गान्तरसम्बन्धव्याघाताद्वैमृधस्य पौर्णमास्यङ्गत्वासम्भवे सति कथ वा तस्योभयार्थत्वमिति वाच्यम्। इह हि पौर्णमास्यङ्गत्वमतेऽपि कालविशिष्टस्य वैमृधस्य विधिरिति निर्विवादम्। कालश्च प्रयोगाङ्गम्। प्रयोगश्च साङ्गप्रधानविषय'। अङ्गसम्बन्धश्च फलान्वयनन्तरभावी। ततश्च फलान्वयात् प्रागेव वैमृधस्य फलाकाङ्क्षायां प्रकरणादुभयार्थत्वे [2]निर्धारिते सति तदनुसारेणागत्या पौर्णमासीं संस्थाप्येत्येतत् कर्तृत्वाधिष्ठानपुरुषैक्यविशिष्टवैमृधेतराङ्गसहितपौर्णमासीपूर्वकालकत्वपरं नीयत [ इत्युभयार्थ ] एव वैमृध इत्याशङ्क्य निराकरोति—

**प्रकरणादिति चेन्नोत्पत्तिसंयोगात् ॥ ३१ ॥**

उक्तरीत्या प्रकरणादुभयार्थत्वमिति चेत्तन्न; कुतः? उत्पत्तिसंयोगात्—[3]उत्पत्तौ उत्पन्नमात्रे वैमृधे प्रकरणविनियोगात् प्रागेव पौर्णमासीसयोगावगमात्। प्रकरणेन हि विनियोगः प्रधानैकवाक्यत्वकल्पनया भवति। एकवाक्यता चावान्तरवाक्यस्य स्वार्थबोधनपर्यवसानोत्तरं[4] कल्पनीया। तत्पर्यवसानञ्च[4] समभिव्याहृतपदार्थान्वयानन्तरमेव भवति, न तु तत॰ प्राक्। ततश्च प्रथममेव पौर्णमासीसंयोगेन निराकाङ्क्षस्य वैमृधस्य नोभयार्थत्वं युक्तमाश्रयितुम्। संस्थाश्रुतेर्वैमृधेतराङ्गविषयसङ्कोचस्तूभयार्थत्वेऽपि तुल्य'। एवञ्च संस्थाप्येति क्त्वाप्रत्ययस्वारस्यमपि न त्यक्तं भवति। मुख्यस्यैव कर्तृस्वरूपैक्यस्य लाभात्। तथा प्रकरणमपि नातीव त्यक्तं भवति। दर्शपूर्णमासोभयसाधारणस्यापि प्रकरणस्य पौर्णमासीमात्राङ्गेनापि वैमृधेन तदेकदेशानुग्रहात्। तस्मात् पौर्णमास्यङ्गमेव वैमृधः। एवञ्च "ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृध॰ पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासस्सेन्द्र" इति वाक्यशेपोऽप्यनुगृहीतो भवति। अत्र हि पौर्णमास्या अनैन्द्रत्वप्रयुक्तं वैगुण्यमाशङ्क्य वैमृधेन तत्समाधान दृश्यते। न हीदं वैमृधस्योभयार्थत्वे युज्यते। "ऐन्द्र दध्यमावास्यायान्तेनामावास्या सेन्द्रा" इति दर्शस्य प्रकारान्तरेण तत्समाधानदर्शनात्। एतेन संस्थाश्रुतिविरोधात् केवलामावास्याङ्गमेव वैमृध इति निरस्तम्। तस्मात् केवलपौर्णमास्यङ्ग वैमृध'। पूर्वपक्षे—अमावास्यायामपि

---

१ पौर्णमास्या. अ.
२. निर्णीते. ख.
३ उत्पत्तौ नास्ति. अ, क.
४. पर्यवसानानन्तर. अ ग.

वैमृधः क्रियते। सिद्धान्ते तु नेति केचित्। तन्न; तथात्वे कालार्थसंयोगबाधापत्तेः। पौर्णमास्युत्तरकाले क्रियमाणस्यैव वैमृधस्योभयाङ्गतायाः पूर्वपक्षाभिमतत्वात्। ननु तर्हि पक्षद्वयेऽप्यनुष्ठानविशेषाभावात् किं चिन्तायाः प्रयोजनमिति चेत्, उच्यते— यदा पौर्णमासी स्वकाले न कृता तत्प्रायश्चित्तं कृत्वा केवलं दर्श एव क्रियते, तदा दर्शोपक्रमात् प्राक् तदङ्गतया वैमृधः कार्यः। पौर्णमास्या अनुष्ठानाभावेऽपि तदुपलक्षिततदुत्तरकालस्य सत्वात् "नक्षत्रं दृष्ट्वा वाच विसृजते" इतिवत्। तत्र हि नक्षत्रदर्शनस्य वाग्विसर्गकालोपलक्षणार्थत्वादह्वावरणादिना तद्दर्शनाभावेऽपि तदुपलक्षितकालस्य सत्वाद्वाग्विसर्गो न निवर्तते। सिद्धान्ते तु-पौर्णमास्याः स्वकालातिक्रमे प्रायश्चित्तं कृत्वा केवलं दर्शः क्रियते, न तु ततः प्राग्वैमृधः॥

इति चतुर्दशं वैमृधाधिकरणम्॥ १४॥

१५

ज्योतिष्टोमे "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इत्यत्राग्निमारुतोर्ध्वकालकानूयाजानामाग्निमारुताङ्गतया विधिः? उत ये अनूयाजास्ते आग्निमारुतोत्तरकाला[1] इति कालार्थस्संयोगः? इति संशयः। अङ्गतया विधिरिति ब्रूमः। कालविधित्वे आग्निमारुतस्य कालोपलक्षणार्थतयात्यन्तपारार्थ्यात्। न च प्रसिद्धानूयाजानुवादेनाग्निमारुताङ्गत्वस्य तदूर्ध्वकालस्य च विधौ वाक्यभेदः शङ्क्यः, विशिष्टकर्मान्तरविधानात्। तथा चाग्निमारुतशस्त्रं तदूर्ध्वकालकैरनूयाजैरुपकुर्यादिति वचनव्यक्तिः। न चाग्निमारुतस्यैवानूयाजाङ्गतया विधिः किन्न स्यादिति वाच्यम्। विधिप्रत्ययसमभिव्याहृतस्येव विधेयत्वात् अनूयाजोपर्येव च विधिप्रत्ययश्रवणात्। तस्मादाग्निमारुताङ्गतया अनूयाजविधिरिति प्राप्ते, सिद्धान्तयति—

**अनुत्पत्तौ तु कालस्स्यात् प्रयोजनेन सम्बन्धात्॥ ३२॥**

तुरवधारणे। अनुत्पत्तौ—कर्मान्तरानुत्पत्तिपरे 'आग्निमारुतात्' इति वाक्ये आग्निमारुतोत्तरकाल एव सवनीयपशुसम्बन्धिनामनूयाजानां विधेयः, नाग्निमारुताङ्गत्वम्। कुतः? प्रयोजनेन सम्बन्धात्—अनूयाजानां सवनीयपशूपकारणलक्षणप्रयोजनान्तरसम्बन्धात्[2] आग्निमारुतार्थतया विध्ययोगात्। कर्मान्तरत्वे चानूयाजा-

१. कालकाः अ, क.    २. प्रयोजनेनोत्तर. अ, क.

नामाग्निमारुताङ्गत्वस्य तदूर्ध्वकालस्य च विधौ वाक्यभेदात् विशिष्टविधौ च गौरवात्। तस्मात् कालार्थ एव संयोगः। प्रयोजनपूर्वपक्षे—आग्निमारुतार्थानामनूयाजानामन्यत्वात् सवनीयपश्वर्था अनूयाजाः स्वकाले कर्तव्याः। सिद्धान्ते [1]तु—सवनीयपश्वर्थानामेवाग्निमारुतोत्तरकालविधानान्न स्वकाले पृथक् तेषामनुष्ठानमिति ॥

इति पञ्चदशमनूयाजानामाग्निमारुतोत्तरकालताधिकरणम् ॥ १५ ॥

१६

ज्योतिष्टोमे श्रूयते—"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति। तत्र किं दर्शपूर्णमासयोस्सोमस्य[2] चाङ्गाङ्गितया विधिः ? उत सोमयागस्य दर्शपूर्णमासोत्तरकालविधिः ? इति संशयः। तत्र कालविधौ दर्शपूर्णमासशब्दस्य कालोपलक्षणार्थतया अत्यन्तपारार्थ्यादङ्गाङ्गितया विधिरिति प्राप्ते, सिद्धान्तयति—

**उत्पत्तिकालविशये कालस्स्याद्वाक्यस्य तत्प्रधानत्वात् ३३ ॥**

उत्पत्तिकालविशये—अङ्गविधिकालविधिसंशये, काल एवात्र [3]विधेयस्स्यात्। कुतः ? दर्शपूर्णमासाभ्यामिष्ट्वेत्यादिवाक्यस्य तत्प्रधानत्वात्—कालविधितात्पर्यकत्वात्। तथाहि—किमिह सोमयागाङ्गतया दर्शपूर्णमासविधिः ? उत दर्शपूर्णमासाङ्गतया सोमयागविधिः ? नाद्यः, दर्शपूर्णमासाभ्यामित्यंशे विधिप्रत्ययाभावात्। न ह्यविधीयमानमङ्गं भवति। द्वितीयेऽपि "सोमेन यजेत" इत्यंशः कर्मान्तरपरः ? उत प्रकृतसोमयागपरः ? नाद्यः; सन्निधिबलेन प्रकृतसोमयागपरत्वावश्यम्भावात्। न च प्रकृतत्वेऽप्यनुपादेयकालसम्बन्धान्मासाग्निहोत्रवत् कर्मान्तरता किं न स्यादिति वाच्यम्। न ह्यनुपादेयसम्बन्धमात्रं कर्मान्तरताप्रयोजकम्। "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादावपि कर्मान्तरत्वापातात्। किन्त्वसन्निधान[4] सहितोऽनुपादेयसम्बन्धः द्वितीये व्यवस्थापितः "सन्निधौ त्वविभागात्" इत्यत्र। न चात्रासन्निधानमस्ति। न च "सोमेन यजेत" इति फलाद्यसंयुक्तोत्पन्नो यागो यथा वसन्तवाक्येन स्वर्गकामवाक्येन च सम्बध्यते, तथानेन वाक्येन दर्शपूर्णमासार्थतयापि सम्बध्यतामिति वाच्यम्। कालार्थतयापि सत्या गतौ

---

१. तु नाग्नि अ, क, ख.
२. सोमयागस्य. ग.
३. विधि अ.
४. सहितानुपादेय. क, ख.

फलार्थतया श्रुतस्य प्रधानस्यान्याङ्गत्वकल्पनायोगात्, उत्पन्नस्य सोमयागस्य फलाकाङ्क्षायां कमिपदसमभिव्याहारेण झटिति फलसम्बन्धावगत्या तत एव निराकाङ्क्षत्वात्, पूर्वाधिकरण एव निर्णीतप्रयोजनानामङ्गाङ्गित्वाभावस्योक्तत्वाच्च। न च "दध्ना जुहोति इत्यादिवद्विधिप्रत्यासत्यभावेऽपि दर्शपूर्णमासयोस्सोमयागार्थतया विधिसम्भव इति वाच्यम्, दर्शपूर्णमासोत्तरकाले सोमयागस्य धात्वर्थस्य विधिसम्भवे वाक्यार्थविधेरन्याय्यत्वात्। ननु यजिप्रत्यासन्नेन विधिना तयोस्साक्षाद्विध्यसम्भवेऽपि तदुत्तरकाले सोमविधिसामर्थ्यादङ्गता[1] नानुपपन्ना। विधिप्रत्ययोऽपि सोमयागस्य विहितस्य प्रकृतस्य बुद्धौ विपरिवर्तमानत्वात्त विधातुमशक्नुवन् व्यवहितावपि दर्शपूर्णमासावेव विधास्यतीति चेन्न, प्रकृतस्यापि सोमयागस्य कालोद्देशेन विधिसम्भवात्, कालस्यानुपादेयतयोद्देश्यत्वात्, उद्देश्यकालविशेषणीभूतदर्शपूर्णमासयोरप्युद्देश्यकोटिप्रविष्टतया विधेयत्वासम्भवाच्च। विध्यन्तरलब्धदर्शपूर्णमासावादायैव सोमयागस्य तदुत्तरकालविधिरुपपद्यत इति न तत्सामर्थ्यादपि तद्विधिकल्पनम्। तस्मादिह कालविधिरेव ॥

इति षोडश सोमस्य दर्शपूर्णमासोत्तरकालानुष्ठानाधिकरणम् ॥ १६ ॥

१७

अस्ति काम्येष्टिकाण्डे जातेष्टिः "वैश्वानरं द्वादशकपालन्निर्वपेत् पुत्रे जाते" इति। सा च रात्रिसत्रन्यायेन "यस्मिञ्जात एतामिष्टिन्निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति वाक्यशेषावगतपूतत्वादिफलार्था। याज्ञिकास्तु विध्युद्देशे पुत्रजन्मनो निमित्तत्वप्रतीतेः यावज्जीविकदर्शपूर्णमासादिवन्नैमित्तिकत्वेन प्रत्यवायपरिहारार्थत्वाद् वाक्यशेषस्य स्तुत्यर्थत्वमेवेति मन्यन्ते। तन्न; न हि विध्युद्देशमात्रादर्थावगतिः, किन्तु सार्थवादात्। ततश्चार्थवादिकं पूतत्वादिफलमुत्पत्तिदशायामेवावगतमिति न विरोधः। न चैव सति पूतत्वादिकामनायामसत्यां सत्यपि पुत्रजनने निमित्ते कर्तव्यता न स्यादिति वाच्यम्। वाक्यशेषकल्प्यस्य फलस्य श्रुतिनिमित्तसंयोगाविरोधेनैव कल्पनीयतया निमित्ते सत्यवश्यकर्तव्यताया अपि स्वीकारात्। (यावज्जीवमित्यत्र नैवमर्थवाद इति नैमित्तिकत्वमेव। तथाच दर्शपूर्णमासा-

---

१. अङ्गताऽनुपपन्ना. अ

दिवदस्या अपीष्टेर्नित्यः काम्यश्चेति प्रयोगद्वयमित्याहुः। अन्ये तु प्रत्यवायपरिहारोऽत्राश्रुतः, ) किन्तु विश्वजित्स्वर्गवत्कल्प्यः। तत्र विधेः फलाकाङ्क्षायामार्थवादिकफलसम्बन्धानन्तरं तावता नैमित्तिकत्वानिर्वाहात्तन्निर्वाहार्थं पश्चात् प्रत्यवायपरिहारोऽश्रुतोऽपि कल्प्यते। [1]ततश्च पूतत्वादिकं प्रत्यवायपरिहारश्चेत्युभयमप्यत्र फलम्। तत्र चोत्पत्तौ निमित्तसयुक्ताया एवेष्टे पूतत्वादिकं फलमिति निमित्तप्रयुक्तानुसारित्वात् पूतत्वादिफलन्न स्वातन्त्र्येण। ततश्चैकस्मिन्नेव प्रयोगे पूतत्वादिफलपञ्चक भवति, न तु 'योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात्' इति न्यायादेकैकस्य प्रयोगस्यैकैकं फलमित्याहु। आह च त्रिकाण्डीमण्डन —

'क्वचित् कामनिमित्ताभ्यां सहिताभ्यामधिक्रिया।
यथैवाग्रयणे यागे यथा जातेष्टिकर्मणि।
केचिन्निमित्तमात्रेणाप्यधिकारमिहाब्रुवन्' इति॥

तदिदं पूतत्वादिफलं किमिष्टिकर्तुः पितु- ? उत पुत्रस्य जातस्य ? इति संशयः। पितुरेवेति ब्रूमः। प्रवर्तनात्मकविधिप्रत्ययेन कर्तृगतसमीहितसाधनत्वस्यैव बोधनात् "अग्नीनादधीत" इत्यात्मनेपदेनावगतस्याधानसाध्यानामग्नीनामात्मगामित्वस्याग्निसाध्यक्रतुफलानामाधातृगामित्वे पर्यवसानाच्च। "यस्मिञ्जात एताम्" इति वाक्यशेषस्तु यस्मिन्नित्यस्य विभक्तिव्यत्ययमाश्रित्य यो निर्वपति स पूतो भवतीति व्याख्येयः। 'तज्जाया जाया भवति यदस्याञ्जायते पुनः' इत्यादिवचनपर्यालोचनया पुत्रात्मना जातस्य पितुरेव वा यस्मिन्निति निर्देशो बोध्य'। तस्मात् पितुरेव पूतत्वादि फलमिति प्राप्ते, सिद्धन्तयति—

**फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात्॥ ३४॥**

तु पूर्वपक्षव्यावृत्तौ। पूतत्वादिफलसयोग अचोदिते—वाक्यशेपानवगते पितरि न स्यात्। कुत ? वाक्यशेपस्य पितृगतफलप्रतीतौ शेपभूतत्वाभावात्। पुत्रगतस्यापि पूतत्वादिफलस्य पितु प्रीतिसाधनत्वेन समीहितत्वान्न विध्यवगतसमीहितसाधनत्वबाध। अर्थवादतः फले कल्प्ये पूतत्वादिविशिष्टपुत्रकत्वमेव फल [2]कल्प्यमिति नात्मनेपदबाधश्च। एवञ्च यस्मिन्नित्यस्य लक्षणापि नाश्रयितव्या भवति। अत. पुत्रगतमेव पूतत्वादिक फलमिति॥

( ) गपुस्तके ग्रन्थपात
१. अतश्च. अ
२ कल्प्यत इति. ख.

ननु निमित्तसंयुक्तोत्पन्नस्यापि कर्मण आर्थवादिकफलवत्वे "यद्येक कपालन्न- श्येदेको मासस्संवत्सरस्यानवेतस्यादथ यजमानः प्रमीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्रमीयेत सङ्ख्यायोद्वासयति यजमानस्य गोपीथाय, यदि नश्येदाश्विनं द्विकपालन्निर्वपेद् द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति" इत्यादावपि काम्यनैमित्तिकता स्यादित्यत आह—

## अङ्गानान्तूपपातसंयोगो निमित्तार्थः ॥ ३५ ॥

तुर्वैषम्ये। युक्तम् स्वतन्त्राया जातेष्टेर्नैमित्तिककाम्यत्वम्। अङ्गानान्तु कपाला- दीनामुपपातसंयोग –मरणादिदोषतत्परिहारनिर्देशो निमित्तार्थः–कपालनाशादिनिमित्ते प्रायश्चित्तविधिस्तत्त्वर्थः। एवंविधप्रायश्चित्ताम्नानान्नैमित्तिकाङ्गतया क्रतूपकारेणैव फल- त्वात् 'द्रव्यसंकारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादस्स्यात्' इति न्यायात्। नापि कपालनाशादिनिमित्ते सति यजमानमरणाद्युपलभ्यते येन तत्परिहार. फलं स्यात्। तस्मादेवञ्जातीयकाना केवलनैमित्तिकत्वमेव ॥

इति सप्तदश जातेष्टेर्नैमित्तिकत्वाधिकरणम् ॥ १७ ॥

१८

किमियञ्जातेष्टि. पुत्रजननानन्तरमेव प्राग्जातकर्मणः कार्या ? उत जातकर्मो- नन्तरम् ? इति संशयः। निमित्ते सति श्रुतिविहितेयमिष्टि· जातकर्मणस्स्मृतिविहित- त्वात्ततः प्रागेव कर्तव्येति प्राप्ते, सिद्धान्तयति—

## अङ्गानान्तूपपातसंयोगो निमित्तार्थः ॥३५॥

तुः अवधारणे। उपपात –मातुरुदरान्निर्गमनम्। जननमिति यावत्। तस्य सयोग.–निमित्तत्वेन निर्देश. केवलं निमित्तार्थः–निमित्ते सति विधानार्थ.। न तु तदव्यवहितानन्तर्यमपि विवक्षितम। यतः अङ्गानां पुत्रं प्रति भोग्यतया तच्छेष- भूतानां पूतत्वादिफलानामियमिष्टि। तस्याश्च जातकर्मण प्राक् क्रियमाणाया शेषिभूत- शिशोर्लोप आपद्येत, जातकर्मणः प्राक् स्तन्यपानाभावात्। 'प्राङ्नाभिकृन्तनात् पुंसो जातकर्म विधीयते। स्तन्यप्राशनतः पूर्वम्' इत्यादिस्मरणात्। न च पुत्रे जात इति निमित्तश्रुत्या स्मृतिरियं बाध्यतामिति वाच्यम। क्तप्रत्ययस्य भूतकालमात्रवाचितया

भूतस्य जननस्य निमित्तत्वप्रतिपादकश्रुतेर्जातकर्मानन्तर्येऽप्यविरोधात्। यद्यपि निमित्तानन्तर्यं स्वारसिकं, तथापि स्मृतिविरोधात् स्वारस्यपरित्यागो न दुष्यति ॥

इत्यष्टादशं जातेष्टेर्जातकर्मानन्तर्याधिकरणम् ॥ १८ ॥

१९

जातकर्मोत्तरकाले[1] जातेष्टिरिति स्थितम्। सा किं जातकर्मानन्तरमेव कर्तव्या? उत सूतकापगमोत्तरम् "य इष्ट्या" दिवाक्यविहितपौर्णमास्यमावास्यान्यतरकाले? इति संशयः। जातकर्मानन्तरमेवेति ब्रूमः। निमित्ते सति विहिताया इष्टेः स्तन्यपानवशेन जातकर्मोत्तरकालमुत्कर्षेऽपि जातकर्माव्यवहितकालातिक्रमे कारणाभावात्। यद्यपि शुचित्वमङ्गम् 'शुचिना कर्म कर्तव्यम्' इति विहितत्वात् 'छिन्ने नाभौ तु सूतकम्' इति तदानीमशुचित्वस्मरणात्। तथाच स्तन्यपानवशादिव शुचित्ववशादपि सूतकापगमोर्ध्वमिष्टेरुत्कर्षो युक्त, तथापि निमित्ते विहिताया इष्टेरग्निहोत्रादिवदवश्यकर्तव्यतया शुचित्वाङ्गविरहेऽपि जातकर्माव्यवहितोर्ध्वमेव क्रिया युक्ता। 'अपि वाप्येकदेशस्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात्' इति सर्वशक्त्यधिकरणे षाष्ठिके तथैव वक्ष्यमाणत्वान्निमित्तश्रुत्या शुचिना कर्म कर्तव्यमिति स्मृतेर्बाध्यत्वाच्च। न च जातकर्मोर्ध्वं य इष्ट्यादिवाक्यविहितपर्वकालाभावे सति कथमियमिष्टिरिति वाच्यम्। निमित्तश्रुतिविरोधेन य इष्ट्यादिवाक्यस्य एतदन्यविषयत्वात्। कालस्याप्यङ्गतया तद्वैगुण्यस्य नैमित्तिककर्मण्यनुगतेष्ट्यादिवदकिञ्चित्करत्वाच्च। तस्माज्जातकर्माव्यवहितोर्ध्वकालैवेयमिष्टिरिति प्राप्ते सिद्धान्तयति[2]—

## अङ्गानान्तूपपातसंयोगो निमित्तार्थः ॥ ३५ ॥

तुर्वैपम्ये। यावज्जीविकेऽग्निहोत्रादिप्रयोगे केवलनैमित्तिकतया निमित्तान्तरमेव शुचित्वमनपेक्ष्य क्रिया युक्ता। अस्यास्त्विष्टेर्नैमित्तिककाम्याया आशौचापगमादूर्ध्वं पर्वण्येव क्रिया युक्ता। अङ्गानामुपपातसयोगः—कार्त्स्न्येन संयोग निमित्तार्थः—कामनानिमित्तविहितकर्मार्थः। काम्यकर्मसु सर्वाङ्गोपसहारस्यावश्यकत्वादिति यावत्। 'काम्येषु चैवमर्थत्वात्' इत्यधिकरणे षाष्ठिके तथा वक्ष्यमाणत्वात, काल-

१ काल . ग. २. सिद्धान्त. क

स्यानुपादेयाङ्गतया तदुपसंहारस्य नैमित्तिकेऽपि कर्मण्यावश्यकत्वाच्च। 'अभ्यासो वा कर्मशेषत्वात्' इत्यधिकरणे षाष्ठिके तथैव वक्ष्यमाणत्वात्। शुचित्वाङ्गस्य पर्वकालस्य चाबाधेनैवोपपत्तेश्च। ततश्च 'सूतिकां पुत्रजननीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम्' इति पत्न्याशौचेऽपि निवृत्ते पर्वणि जातेष्टिरिति केचित्। दशाहादूर्ध्वं पर्वणीति भाष्यकृतः। सोमयागमध्ये प्रसूतया दशाहादूर्ध्वमेव कर्मविधानदर्शनादाहिताग्निपत्न्या दशाहमेवाशौचमिति तदाशयः। बोधायनादिकल्पसूत्रेषु दशाहोपर्येव जातेष्टिविधानाच्च ॥

इत्येकोनविंशं जातेष्टेराशौचापगमोर्ध्वमनुष्ठानाधिकरणम् ॥ १९ ॥

२०

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत सौत्रामण्या मैत्रावरुण्या वामिक्षया यजेत" इति वाजपेयाङ्गत्वेन बृहस्पति[1] सवादिविधिरिति स्थितम्। तत्र बृहस्पति सवादयः वाजपेयाख्यप्रधानयागानन्तरमेव प्रधानकाले शरदि समानतन्त्रा कर्तव्याः? उत साङ्गे वाजपेये समाप्तेऽतिदेशतः प्राप्ते स्वकाले वसन्तादौ पृथगङ्गोपेताः कर्तव्याः? इति संशये, पूर्वपक्षयति—

**प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ३६ ॥**

अङ्गानां बृहस्पतिसवादीनां मुख्यकालत्वं–प्रधानकालकत्वम्। कुतः? प्रधानेन सहाङ्गानामभिसम्बन्धात्—एककालकत्वसम्बन्धनियमात्। चिकीर्षितस्य हि कर्मणः कस्मिन् काले कर्तव्यमित्यपेक्षा भवति। फलवदेव च कर्म चिकीर्ष्यते। ततश्च साङ्गप्रधानगोचरः फलभावनाख्यो व्यापार एव चिकीर्षितः, न तु प्रधानमात्रम्। अङ्गानुष्ठानाभावे फलानुत्पत्तेः। अत आकाङ्क्षावशात् साङ्गप्रधानस्यैव कालसम्बन्धः, न तु प्रधानमात्रस्य, अनाकाङ्क्षितत्वात्। एवञ्च "पौर्णमास्या पौर्णमास्या यजेत" इत्यादौ तृतीयानिर्देश उपपद्यते। तत्र पौर्णमासीकरणकफलभावनाया एवोद्देश्यत्वप्रतीतेरित्येकादशे व्यवस्थापयिष्यते 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम्' इत्यत्र। ततश्च "शरदि वाजपेयेन यजेत" इति वाजपेय-

---

1. सत्रविधि-. अ.

करणिकायास्साङ्गभावनाया एव शरत्कालविध्युद्देश्यत्वावगमात् तेनातिदिष्टो वसन्तादिकालो बृहस्पतिसवादीनां बाध्यते। न च वाजपेयेनेष्ट्वेति तृतीयानिर्देशे सत्यपि क्त्वाप्रत्ययोक्तकालस्य बृहस्पतिसवव्यतिरिक्ताङ्गेषु यथा सङ्कोचः, तथा शरत्कालस्यापि सङ्कोचोऽस्त्विति वाच्यम्, वैषम्यात्। वाजपेयेनेष्ट्वेत्यत्र हि बृहस्पतिसवसहितसर्वाङ्गयुक्तवाजपेयप्रयोगग्रहणे बृहस्पतिसवस्यापि बृहस्पतिसवपूर्वकालकत्व स्यात्। न च[1] तत्सम्भवति, बाधात्। अतस्तत्र क्त्वाप्रत्ययोक्तकालस्य बृहस्पतिसवव्यतिरिक्ताङ्गेषु युक्तस्सङ्कोचः। शरद्वाक्ये तु तथा सङ्कोचकं न किञ्चित्कारणमस्ति। बृहस्पतिसवे वसन्तकालातिदेशस्य शरदुपदेशापेक्षया दुर्बलत्वेन [2]तत्सङ्कोचकत्वायोगात्। अतः प्रधानकाला बृहस्पतिसवादयो वाजपेयेन समानतन्त्रा इति प्राप्ते, सिद्धान्तयति—

**अपवृत्ते तु चोदनात्तत् सामान्यात् स्वकाले स्यात् ॥ ३७ ॥**

तुः पूर्वपक्षव्यावृत्तौ। तत्—बृहस्पतिसवादिकम्। सामान्यात्—प्रकृतिवद्विकृतिरित्यतिदेशात् स्वकाले-वसन्तादौ स्यात्, न तु शरदि प्रधानानन्तरमेव। कुतः? अपवृत्ते चोदनात्—अपवर्गस्समाप्तिः। वाजपेयेनेष्ट्वेति वाजपेयकरणकसाङ्गफलव्यापारे समाप्ते परमापूर्वे चोत्पन्ने पश्चाद् बृहस्पतिसवविधानात्। न च बृहस्पतिसवात् प्रागेव साङ्गवाजपेयव्यापारे फलशिरस्के सति किं बृहस्पतिसवेन तदङ्गेन। अतः प्रधानानन्तर्यमेव बृहस्पतिसवस्य साकल्याधानार्थत्वा[दिति वाच्यम्] बृहस्पतिसवविधिबलादेवोत्पन्नस्यापि परमापूर्वस्य वैकल्यकल्पनादित्याहुः। अन्ये तु पौर्णमास्यमावास्याख्ययोस्समुदाययोरन्योन्यसाहित्यं विना परमापूर्वसाधनत्वाभावेऽपि "पौर्णमास्या पौर्णमास्या यजेतामावास्यायामावास्यया" इति तृतीयाभ्यां यथा पृथक् समुदायापूर्वसाधनत्वावगमः, तथा वाजपेयस्यापि बृहस्पतिसवं विना परमापूर्वसाधनत्वासम्भवाद्वाजपेयेनेति तृतीयया समुदायापूर्वसाधनत्वमेव बोध्यते। ततश्च बृहस्पतिसवेतरसकलाङ्गोपेतवाजपेयव्यापारात् समुदायापूर्वं निष्पद्यते। परमापूर्वन्तु बृहस्पतिसवानन्तरमेव निष्पद्यत इत्याहुः। न चैवमपि वाजपेयेनेष्ट्वेति क्त्वाप्रत्य-

---

१. च नास्ति. ग.

२. तत्सङ्कोचत्वायोगात् अ, क.

याद्वाजपेयानन्तरमेव बृहस्पतिसवस्स्यात्, न तु स्वकाल इति वाच्यम्। क्त्वा-प्रत्ययेन वाजपेयोत्तरकालकर्तृत्वमात्रस्य प्रतीतेः, आनन्तर्यस्यौत्सर्गिकत्वात्, तस्य च स्वकालबाधसम्भवे सति त्याज्यत्वात्। तस्मात् स्वकाले बृहस्पतिसवादिक-मिति सिद्धम् ॥

इति विंश बृहस्पतिसवादीनां स्वकालानुष्ठेयताधिकरणम् ॥ २० ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसा[1]कुतूहलवृत्तौ
चतुर्थाध्यायस्य तृतीयः पादः ॥



१. कौतूहल. क, ख.

# अथ चतुर्थाध्यायस्य चतुर्थः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पादे फलप्रयुक्तिर्विचारिता। इदानीन्तदपवादः प्राधान्येन विचार्यते। सन्तीष्टय "अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति" इत्यादयः। "आदित्यां मल्हां गर्भिणीमालभते" इत्यादयश्च पशुयागाः। "अग्निष्टोममग्र आहरति अथाभिषेचनीय उक्थ्यो भवति" इत्यादयश्च सोमयागाः। "अपामार्गहोमो भवति" इत्यादयश्च दर्विहोमाः। "पष्ठौहीमक्षैर्दीव्यति, शौन शेपमाख्यापयते, दिशो [1]व्यारव्यापयति" इत्यादयश्च विदेवनादयः। तत्सन्निधाविदमाम्नायते--"राजा स्वाराज्यकामो राजसूयेन यजेत" इति। किमत्र यागायागात्मकानि सर्वाणीमानि राजसूयशब्दवाच्यानि स्वाराज्यफलकानि समप्रधानानि? उत इष्टिपशुसोमयागा एव राजसूयशब्दवाच्याः फलवन्तः प्रधानभूताः, अयागास्तु तदङ्गभूता एव? इति संशये, पूर्वपक्षयति—

**प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥**

चोदनानामिति कर्मणि ल्युट्। विधीयमानानां यागानामयागानाञ्च अनङ्गत्वम्—समप्रधानत्वम्। कुतः? प्रकरणशब्दसामान्यात्—प्रकरणे सन्निधौ श्रूयमाणस्य राजसूयशब्दस्य (यागायागसाधारण्यात्। [2]यद्यपि सो[मो]राजा अभिषूयतेऽस्मिन्निति व्युत्पत्त्या सोमयागमात्रपरस्य, राजा सूयते अभिषिच्यत इति व्युत्पत्त्या अभिषेच-

१. व्यचक्ष्यापयति. ग.  ( ) गपुस्तकेऽत्र ग्रन्थपात.

२. कथ तदितरत्र सम्भव इत्यनन्तर यद्यपि, इति योजनीयम् ।

नीयोक्थ्यमात्रपरस्य वा राजसूयशब्दस्य) कथं तदितरत्र सम्भवः, तथापि छत्रिन्यायेन सर्वेष्वेतेषु [यागा]यागात्मकेषु वृत्तिस्सम्भवति। अन्यथा सिद्धान्तेऽपि तस्येष्टिपशुयागेषु [1]अभिषेचनीयेतरसोमयागेषु च कथं [2]वृत्ति। न च यजिना यागानामेव फलसाधनत्वावगमात्तत्समानाधिकरणराजसूयशब्दस्यापि तन्मात्रपरत्वमेवोचितम्। अन्यथा यजेर्लक्षणाप्रसङ्गादिति वाच्यम्। प्रथमश्रुतसर्वसाधारणराजसूयशब्दानुसारेण जघन्यश्रुतयजेर्लक्षणाया न्याय्यत्वात्। किञ्च साधारणराजसूयशब्दस्य यागमात्रे सङ्कोचाभ्युपगमे अयागांशे फलसाधनत्व प्रतीयमानं बाधितमेव स्यात्। यजेर्यागायागपरत्वे तु नैव बाध, यागानां फलसम्बन्धानिवारणात्। अतो यागानामयागानाञ्च सर्वेषां समप्रधानत्वम्॥

अथ सिद्धान्तयति—

अपि वाङ्गमनिज्याः स्युस्ततो विशिष्टत्वात्॥ २॥

अपिवेति पूर्वपक्षव्यावृत्तौ। अनिज्याः–अयागाः विदेवनादयः अङ्गमेव स्युः। अङ्गमित्येकवचनं सामान्याभिप्रायम्। वेदाः प्रमाणमित्यादिवत्। अङ्गान्येव स्युः, न तु तेषां प्राधान्यम्। कुत.? ततो विशिष्टत्वात्—फलसाधनसमर्पणे राजसूयनामापेक्षया यजेरेव सामर्थ्यातिशयात्। समानपदश्रुत्या हि भावार्थाधिकरणन्यायेन यजेरेव प्रथमसाधनतया फलभावनायामन्वयः। नामधेयन्तु तत्परतन्त्रमनुवादमात्रम्। यजिसामानाधिकरण्याच्च यजिनामधेयत्वलाभ। ततश्च प्रथमं यजिसामानाधिकरण्यलक्षणवाक्यप्रमाणेन राजसूयशब्दस्य यजिनामत्वेऽवगम्यमाने सन्निधिलक्षणप्रकरणवशान्न यागायागसर्वपरत्वाश्रयणं युक्तम्। किञ्च सन्निहितसर्वसाधारणमपि राजसूयपदं नाम्नो नित्यानुवादत्वाद्यजिमात्रे सङ्कोचं सहते। यजिस्तु जघन्योऽपि विधिगतत्वादनुवादत्वाभावाच्च न लक्षणां सहते। न चैवं विदेवनादीनामपि फलाकाङ्क्षत्वादश्रुत[फल]कल्पनायाञ्च गौरवात् प्रकृतफलान्वय एव वाच्य इति विधावपि लक्षणा प्रामाणिकीति वाच्यम्। 'फलवत्सन्निधावफलन्तदङ्गम्' इति न्यायेन तेषां क्रतूपकारेणैव शान्तफलाकाङ्क्षत्वात्। तस्मादिष्टिपशुसोमयागा एव राजसूयनामधेयकाः[3] फलवन्त. प्रधानभूताः। विदेवनादीनि तु तदङ्गानि। प्रयोजन पूर्वपक्षे—अवेष्टे. क्रतुवहिर्भावे सति न विदेवनादीनि, सिद्धान्ते तु––तानि विशन्त इति॥

इति प्रथम विदेवनादीना राजसूयाङ्गत्वाधिकरणम्॥ १॥

---

१. अभिषेचनीयोत्तर. अ  २. प्रवृत्ति. अ.  ३. [illegible]

२

विदेवनादीनि राजसूयाङ्गमिति स्थितम्। किं तानि सन्निहिताभिषेचनीयोक्थ्यमात्रस्याङ्गानि? उत राजसूयशब्दवाच्यानामिष्टिपशुसोमयागात्मकानां सर्वेषाम्? इति संशये, पूर्वपक्षयति—

**मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥**

विदेवनादिकं यस्य—अभिषेचनीयस्य मध्यस्थं—प्रयोगमध्येऽनुष्ठेयतया स्थितम्, तन्मध्ये-तस्यैवाभिषेचनीयस्याङ्गकलापमध्ये प्रविष्टं वेदितव्यम्। अभिषेचनीयस्यैवाङ्गमिति यावत्। न च प्रयोगसादेश्यलक्षणसन्निध्यपेक्षया राजसूयप्रकरणस्य प्रबलत्वात्तेन सर्वयागाङ्गाश्रयणं[1] युक्तमिति वाच्यम्। ततोऽपि बलवतावान्तरप्रकरणेनाभिषेचनीयाङ्गताया एवाश्रयितुमुचितत्वात्। ननु पूर्वोत्तराङ्गमध्याम्नानलक्षणसन्दंशादेवावान्तरप्रकरणमुद्भवति। विदेवनादि ाभिषेचनीयविध्यनन्तरमाम्नातं न तु ततः पश्चात् किञ्चिदभिषेचनीयस्याङ्गमुपदिष्टमस्ति। अतो नावान्तरप्रकरणं[2]तस्य विद्यत इति चेन्न; अभिषेचनीयविध्यनन्तरमाम्नातानामपि विदेवनादीनामभिषेकान्तानां "माहेन्द्रस्य स्तोत्र प्रत्यभिषिच्यते" इत्यभिषेचनीयाङ्गमाहेन्द्रस्तोत्रकालेऽपकृष्यानुष्ठानविधानस्य पञ्चमे वक्ष्यमाणत्वात्। न चैवमनुष्ठानदशायां विदेवनादीनामभिषेचनीयाङ्गसन्दंशे सत्यप्युत्पत्तिदशायां तदङ्गसन्दशाभावान्नावान्तरप्रकरणसम्भव इति वाच्यम्। निष्फलानुष्ठाने प्रवृत्त्ययोगेन प्रयोजनापेक्षाया अनुष्ठानान्यथानुपपत्त्यधीनतया यत्रानुष्ठानन्तत्र प्रयोजनापेक्षा भवति, न तु यत्र विधिस्तत्रेति कल्पनात्। अनुष्ठानञ्च विदेवनादीनामभिषेचनीयाङ्गमध्य इति तत्सन्दंशोद्भूतेनावान्तरप्रकरणेनाभिषेचनीयमात्राङ्गत्वम्॥

अथ सिद्धान्तयति—

**सर्वासां वा समत्वाच्चोदनातस्तस्मान्न हि तस्य रणं देशार्थमुच्यते मध्ये ॥ ४ ॥**

वाशब्द एवार्थे। इष्टिपशुसोमेज्यानां सर्वासामेव विदेवनादिकमङ्गं स्यात्, न त्वभिषेचनीयस्यैव। कुतः? चोदनातः समत्वात्-चोदनात इति सार्वविभक्तिकस्तसिः। राजसूयेनेत्यादिफलचोदनायास्सर्वासां समत्वात् फलवत्वादिति यावत्। ततश्च सर्वासा-

---

१. सर्वयागाश्रयण. अ, क. २. प्रकरणमस्य. ग.

मिष्टिपशुसोमेज्यानां फलवत्त्वेन प्रकरणस्याविशिष्टत्वात् सर्वाङ्गत्वमेव। ननु महाप्रकरणादपि [1]बलवता अवान्तरप्रकरणेनाभिषेचनीयाङ्गत्वमेव युक्तमित्यत आह— न हि तस्य प्रकरणमिति। हि–यतः, तस्य–अभिषेचनीयस्य विदेवनादिविषयकमवान्तरप्रकरणं नास्ति, विदेवनादेरुत्पत्तिदशायामभिषेचनीयाङ्गसन्दंशाभावात्। नन्वनुष्ठानदशायां तदङ्गसन्दशसत्त्वादस्त्यवान्तरप्रकरणमित्यत आह—देशार्थमुच्यते मध्य इति। देशशब्देन कालात्मकमधिकरणमुच्यते। महाप्रकरणेन सर्वयागार्थतयोत्पन्नानामेव विदेवनादीनामभिषेचनीयमाहेन्द्रस्तोत्रकालकत्वविधानार्थं "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इति वाक्यम् उच्यते–पठ्यत इत्यर्थः। अयमाशयः—उत्पत्तिकालीन एवाङ्गसन्दंशोऽवान्तरप्रकरणमुन्नावयति, न त्वनुष्ठानकालीनः। अनुष्ठानं हि अंशत्रययुक्तभावनावगत्यनन्तरं भवति। ततश्चानुष्ठानावगमात् प्रागेव विदेवनादिभावनानां प्रयोजनाकाङ्क्षायां तदानीमवान्तरप्रकरणाभावान्महाप्रकरणेन दुर्बलसन्निधिप्राप्ताभिषेचनीयाङ्गत्वं बाधित्वा [2]सर्वराजसूयार्थत्वेनावगता विदेवनादयोऽभिषेचनीयमाहेन्द्रस्तोत्रकालेऽपकृष्यानुष्ठीयमानाः पुन प्रयोजनं नापेक्षन्ते येनावान्तरणप्रकरणविषयतां प्रतिपद्येरन्। तस्माद्विदेवनादयस्सर्वराजसूययागाङ्गम्। प्रयोजनन्तु पूर्वाधिकरणवदूह्यम् ॥

इति द्वितीय विदेवनादीनामिष्टिपशुसोमार्थताधिकरणम् ॥ २ ॥

३

राजसूये–"सौम्यञ्चरुं बभ्रुर्दक्षिणा" इति विधाय श्रूयते–"पुरस्तादुपसदां सौम्येन प्रचरन्ति" इति। किमयं सौम्ययागः [3]उपसदङ्गम्? उत राजसूयशब्दवाच्यप्रधानयागान्तर्गत? इति संशये, (पूर्वपक्षयति—

**प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ९ ॥**

प्रकरणस्य फलाकाङ्क्षालक्षणस्य सन्निवेशस्याविशेषे सत्यपि स्वाराज्यवाक्यान्न सौम्ययागस्य प्राधान्यावगतिः) सौम्येनोपसदामिति तृतीयाषष्ठीश्रुतिभ्यां तस्योप-

---

[1] बलवता नास्ति. अ.		[2] सर्वराजसूययागार्थत्वेन अ, क, ख.

[3] उपसदामङ्गं. अ, क.		() गपुस्तके ग्रन्थपात।

सदङ्गत्वावगतेः। तृतीया हि साधनत्ववाचिनी। तद्वशात् सम्बन्धसामान्यवाचिन्यपि षष्ठी योग्यतया शेषित्वे पर्यवसन्ना। उपसदां चोदकतः प्राप्तिसमय एव पराङ्गत्वेनावगतानां सौम्यचर्वर्थत्वासम्भवे[1] अपूर्वसौम्ययागस्यैवोपसदङ्गत्वौचित्येन वैपरीत्यासम्भवाच्च। ननूपसदां सौम्येनेति नैवमन्वयः, किन्तूपसदां पुरस्तादित्यन्वयः। "षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी। सा च दिग्योगलक्षणपञ्चमीसमानार्था। ततश्च स्वाराज्यफलस्य सौम्यचरोः प्रचारमनूद्य तत्रोपसत्पूर्वकालकत्वविधिरेवायमिति चेन्न; तस्या उपपदविभक्तित्वेन तदपेक्षया पदान्तरमनपेक्ष्य शेषशेषिभावसम्बन्धवाचित्वस्यैव उपसदां सौम्येनेत्येवमाश्रयणीयत्वात्। तथाच सौम्ययागेन उपसदामुपकुर्यादिति वचनव्यक्तिः। पुरस्ताच्छब्दस्त्वङ्गस्य तत्समीपेऽनुष्ठानादनुवादमात्रम्। न च "स्वाराज्यकामो यजेत" इत्येव समानपदश्रुत्या सौम्ययागस्य फलाकाङ्क्षाशान्तेर्नोपसदङ्गत्वमिति वाच्यम्। स्वाराज्यवाक्यस्य सर्वयागपरताया प्रकरणापेक्षतया ततः प्रागेव प्रकरणनिरपेक्षेण 'उपसदां सौम्येन'' इति वाक्ये तृतीयाषष्ठीश्रुतिभ्यां सौम्ययागस्योपसदङ्गत्वावगते। नन्वत्र पुरस्ताच्छब्दानुग्रहाय कालविधिरप्यस्तु इत्यत आह—विप्रतिपिद्धं ह्युभयम्। हि—यतः उपसदङ्गत्वं कालश्चेत्युभयविधानं विरुद्धम्। सौम्येनोपसदामुपकुर्यात् पूर्वकालकेनेति वाक्यभेदात्। तस्मादुपसदङ्गं सौम्ययागः॥

अथ सिद्धान्तयति—

## अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥

अपिवेति पूर्वपक्षव्यावृत्तौ। स्वाराज्यवाक्यतः फलवत्त्वेनावगतस्य सौम्ययागस्य प्रचार [2]उपसत्पूर्वकाल एवात्र विधीयते, न तु तस्योपसदङ्गत्वम्। "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति वाक्येनास्य वाक्यस्य विशेषादर्शनात्। तत्र हि आग्निमारुतस्यानूयाजानाञ्च सोमपशुयागार्थत्वेन प्रज्ञातत्वात् कालार्थ एव संयोगः, न त्वङ्गाङ्गिभावार्थ इत्युक्तम्, एवमत्रापि सौम्ययागस्य स्वाराज्यफलकत्वेन प्रज्ञातस्य उपसदाञ्च क्रतूपकारकत्वेन प्रज्ञाताना नाङ्गाङ्गित्वार्थस्संयोग, किन्तूपसदा पुरस्तादिति दिग्योगलक्षणा षष्ठीमाश्रित्य कालार्थ एव। अन्यथा पुरस्ताच्छब्दानर्थक्यात् तदपेक्षया षष्ठ्यास्वारस्यहानेरदोषत्वात्। तस्मादुपसत्पूर्वकालेऽनुष्ठीयमानः सौम्य-

---

१. असम्भवेन क.

२. उपसत्काल एव. क.

यागः स्वाराज्यफलकः प्रधानभूत एव। प्रयोजनन्तु पूर्वपक्षे—प्रत्युपसत्सौम्यस्यावृत्तिः, सिद्धान्ते तु-सर्वासामादौ सकृदिति ॥

इति तृतीयं सौम्ययागस्य प्राधान्यनिरूपणाधिकरणम् ॥ ३ ॥

४

"वैश्वदेवीं साङ्ग्रहणीन्निर्वपेत् ग्रामकामः" इति प्रकृत्याम्नायते "ध्रुवोऽसि ध्रुवोऽहं सजातेषु भूयासमिति परिधीन् परिदधाति" "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" "यत्प्रयाजानां पुरस्ताज्जुहुयात् वहिरात्मन् सजातान्दध्यात् यदनूयाजानामुपरिष्टाज्जुहुयात् स्वर्गं लोकमपक्रामेन्मध्ये जुहोति" इति। तत्र साङ्ग्रहण्याः फलवत्त्वात् प्राधान्यन्निर्विवादम्। परिधिपरिधानन्तु प्रकृतावङ्गत्वेन क्लृप्तमिहातिदेशतः प्राप्तं साङ्ग्रहण्यङ्गम्। तदङ्गत्वेन विहिता अपि "ध्रुवोऽसी" त्यादिमन्त्रास्साङ्ग्रहण्यङ्गमिति निर्विवादम्। आमनहोमास्तु केवलं वैकृताः। ते किं साङ्ग्रहण्या अङ्गम्? उत तेऽपि फलवन्तः प्रधानभूताः? इति संशयः।

ननु साङ्ग्रहण्या एव फलं श्रुत नामनहोमानाम्। अत फलवत्सन्निधावफलन्तदङ्गमिति न्यायेनामनहोमानां साङ्ग्रहण्यङ्गत्वमेवेति चेन्न; फलवत्या अपि साङ्ग्रहण्या आमनहोमविषये आकाङ्क्षाभावेन तेषान्तदङ्गत्वानुपपत्तेः, विकृतिभूतायास्साङ्ग्रहण्या उपकरसाकाङ्क्षायास्सन्निहितानप्यामनहोमानक्लृप्तोपकारत्वादुपेक्ष्य स्वोत्पत्तिवाक्यगतनिर्वपत्यादिलिङ्गैश्चोदकप्राप्तान् दर्शपूर्णमासविध्यन्तानुपादाय निराकाङ्क्षत्वात्। न च नक्षत्रेष्ट्युपहोमवदामनहोमानामाकाङ्क्षया साङ्ग्रहण्या आकाङ्क्षामुत्थाप्य तदन्वयोऽस्त्विति वाच्यम्। नक्षत्रेष्टिपूपहोमानां फलाश्रवणादफलत्वात् फलवत्सन्निधावफलन्तदङ्गमिति न्यायेन तदङ्गत्वेऽपि, आमनहोमवाक्ये ग्रामकामपदानुषङ्गेण तेषां फलवत्वेन तदङ्गत्वासम्भवात्। तस्मादामनहोमा अपि साङ्ग्रहणीवत् स्वातन्त्र्येण फलवत्वात् प्रधानभूताः, न त्वाग्नेयाग्नीषोमीयादिवत् समप्राधान्यम्। तद्वत्सहत्यैकफलसाधनत्वाभावादिति प्राप्ते, सिद्धान्तयति—

**फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥**

वाशब्द एवार्थे। फलवत्—ग्रामफलकं साङ्ग्रहणीकर्मैव, इतरस्य—अफलस्य आमनहोमत्रयस्य प्रधानं स्यात्। कुतः? उक्तहेतुत्वात्—फलवत्सन्निधावफलन्तदङ्ग-

मिति हेतोरुक्तत्वात्। साङ्ग्रहण्याः कथम्भावाकाङ्क्षाशान्त्या आकाङ्क्षालक्षण-प्रकरणाभावेऽपि सन्निधिप्रमाणेन नक्षत्रेष्ट्युपहोमादिवदङ्गत्वसम्भवात्। नन्वामन-होमानामपि ग्रामकामपदानुषङ्गेण फलवत्वात् कथमङ्गत्वमित्यत्राप्येतदेवोत्तरम्—उक्तहेतुत्वादिति। 'व्यवायान्नानुषज्यते' इत्यधिकरणे व्यवधानस्यानुषङ्गाभावहेतुताया उक्तत्वात्। अस्ति चात्र परिधान[मन्त्र]विधिना [व्यवधानम्]। [ यत्प्रयाजाना-मित्याद्यामनहोमविध्युत्तरवाक्ये प्रयाजानूयाजशब्दाभ्यान्न सामान्यतः प्रयाजानूयाजा विवक्षिता, अतिप्रसङ्गात्। नापि सन्निहितामनहोमार्थाः, तेषां दर्विहोमत्वेन तत्र प्रयाजानूयाजाभावात्। अत्यन्ताप्राप्ततद्विधौ च गौरवात्, किन्तु प्रकरणादेव साङ्ग्रहणीयप्रयाजानूयाजपरत्वं वक्तव्यम्। एवञ्च प्राकृतं प्रयाजानूयाजग्रहणपर्यन्तं साङग्रहण्याकाङ्क्षालक्षणस्यानुवृत्तत्वेन तेन प्राकृतेषु प्रयाजानूयाजेषु गृह्यमाणेषु मध्य-पतितानामामनहोमानामपि ग्रहणमवर्जनीयम्। तस्मादामनहोमास्साङ्ग्रहण्यङ्गम्[1] ॥

इति चतुर्थमामनहोमाधिकरणम् ॥ ४ ॥

५

ज्योतिष्टोमे श्रूयते—"यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृ-श्च्येते प्राजापत्यं दधिग्रहं गृह्णीयाच्छामयत्येवैनम्" इति। अध्वर्युर्यजमानश्च यां देवताम् अन्तरितः व्यतिक्रामतः यष्टुं विस्मरतः तस्यास्सकाशात् तौ आवृश्च्येते प्रच्युतौ भवतः, क्षुब्धौ भवतः ; दधिग्रहस्तं दोष शमयतीत्यर्थः। किमयन्दधिग्रहो नैमित्तिकः ? उत नित्यो नैमित्तिकश्च ? अथ नित्य एव ? इति संशये, पूर्वपक्षयति—

**दधिग्रहो नैमित्तिकश्श्रुतिसंयोगात् ॥ ८ ॥**

दधिग्रहः केवलनैमित्तिकः। कुतः ? श्रुतिसंयोगात्। यामिति निमित्तबोधक-यच्छब्देन देवतान्तरायस्य निमित्तत्वेन संयोगात् ॥

अथ [2]द्वितीयं पक्षमुद्भावयति—

**नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥**

दधिग्रहो न केवलनैमित्तिकः, किन्तु नित्योऽपि। कुतः ? ज्येष्ठशब्दात्। "ज्येष्ठो वा एष ग्रहाणाम्" इति दधिग्रहे ज्येष्ठशब्दप्रयोगात्। ज्येष्ठशब्दो हि

---

१. नाङ्ग्रहण्या अङ्गम्. फ. २. द्वितीयपक्ष. अ, फ.

प्रशस्ततमवाची। प्रशस्तशब्दादतिशायने इष्ठन् प्रत्यये 'प्रशस्यस्य श्र, ज्यश्च' इति प्रकृतेर्ज्यादेशे च तस्य निष्पत्तेः। नैमित्तिकं हि निमित्तस्य कादाचित्कत्वाच्चञ्चलम्। नित्यश्च सर्वकालकत्वात्तदपेक्षया प्रशस्ततमम्। यद्वा ज्येष्ठः प्रथम॰। दधिग्रहस्य नित्यस्य ग्रहान्तरेभ्यः प्रथमं गृह्यमाणत्वात् नैमित्तिकस्य च देवतान्तराये निमित्ते जाते कदाचिदादौ मध्ये च क्रियमाणत्वेन नियमतः प्राथम्याभावात् "सर्वासां वा एतद्देवतानां रूपं यदेष ग्रह॰" इति दधिग्रहस्य सर्वदेवतात्मकत्वमुच्यमानं प्रत्यक्षविरुद्धत्वात् क्रतौ सर्वदेवतानामिव नित्यत्वादेव गौणमुपपाद्यम्। अतोऽपि नित्यो दधिग्रह देवतान्तराये निमित्ते श्रवणान्नैमित्तिकश्च॥

अथ सिद्धान्तयति—

**नित्य एव स्यादर्थवादात् तयोः कर्मण्यसम्बन्धात् भागित्वाच्चान्तरायस्य॥ १०॥**

दधिग्रहो नित्य एव स्यात्, प्रकरणे नित्यवदाम्नानात् ज्येष्ठशब्दात् साख्याच्च, न तु नैमित्तिकोऽपि। कुत॰? अर्थवादात्—प्रशस्तोऽयन्दधिग्रह॰ यदनेन देवतान्तरायप्रयुक्तदोषोऽपि निर्हण्यत इत्येव "यां वा अध्वर्यु" इत्यादिवाक्यस्य केवलप्रशंसार्थत्वात्। "यदि सोममपहरेयु॰" इत्यादाविव यदिशब्दस्य "भिन्ने जुहोति" इत्यादाविव सप्तम्याश्चाभावेन देवतान्तरायस्य निमित्तत्वाप्रतीतेः। न च यच्छब्दमात्रान्निमित्तत्वावगतिरस्ति, "यदाग्नेयोऽष्टाकपालः" इत्यादौ तदभावात्। न च "यस्योभयं हविरार्तिमार्च्छेत्" इत्यादाविव निमित्तत्वावगतिरिति वाच्यम्, वैषम्यात्। निमित्तं हि कादाचित्कमुद्देश्यं कर्तृविशेषणञ्च। तच्च कर्तृसमानाधिकरणेनैव यच्छब्देन गम्यते। "यस्योभयं हविरार्तिमार्च्छेति स ऐन्द्रं पञ्चशरावमोदनन्निर्वपेत्" इत्येवं यच्छब्देन कर्तृसमानाधिकरणेन यजमानस्यावृत्त्या उभयार्तेरसार्वत्रिकत्वकर्तृविशेषणत्वोद्देश्यत्वप्रत्यायनेन तस्यैव निमित्तत्वबोधने सामर्थ्यात्। प्रकृते च देवतासमानाधिकरणस्य[1] यच्छब्दस्य 'तस्या आवृश्च्येते' इति दोषप्रतिपादनमात्रोपक्षीणतया कादाचित्कत्वेनाधिकारिविशेषणत्वेन च देवतान्तरायबोधनेऽसामर्थ्यात् "यां देवतां यजेत्ता ध्यायेद्वषट्करिष्यन्" इत्यादाविव देवतासम्ब-

---

१. सामानाधिकरण्यस्य. अ.

न्धिनः कस्यचिद्विधानाभावेन देवताविशेषणयच्छब्दस्योद्देश्यसमर्पकत्वाभावाच्च कथं निमित्तत्वावगमः।

ननु दधिग्रहस्य प्रकरणात् क्रत्वङ्गत्वेऽपि "भिन्ने जुहोति" इत्यादिना वैगुण्यपरिहारद्वारा क्रत्वर्थत्ववद्वाक्यशेषस्य देवतान्तरायपरिहारार्थत्वात्तस्य च देवतान्तरायस्यानित्यत्वात् पर्यवसानगत्या नैमित्तिकत्वमित्यत्राप्येतदेवोत्तरम्— अर्थवादादिति। निमित्तसप्तम्या भेदनहोमादीनां तथात्वेऽपि प्रकृते निमित्तसप्तम्यभावेन 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादस्स्यात्' इति न्यायेन केवलमर्थवादत्वादित्यर्थः। देवतान्तरायपरिहारार्थत्वे बाधकमप्याह—तयोः कर्मण्यसम्बन्धादिति। क्रियत इति कर्म फल, तयोः कर्मणि अध्वर्युयजमानयोर्देवतान्तराय प्रयुक्तदोषपरिहारे कादाचित्के फले दधिग्रहस्य नित्यस्य साधनतया असम्बन्धात्। नित्यानित्यसंयोगविरोधादिति यावत्। न ह्येतत् सम्भवति–नित्यो दधिग्रहः कादाचित्कदेवतान्तरायप्रयुक्तदोपपरिहारार्थ इति।

[ नन्वस्मादेव ] वाक्यशेषात् देवतान्तरायविधिरप्युन्नीयते—अध्वर्युणा यजमानेन चावश्यं देवता अन्तरितव्येति। ततश्च देवतान्तरायस्य नित्यत्वात् तत्प्रयुक्तदोषपरिहारोऽपि नित्य इति न नित्यानित्यसंयोगविरोध इत्यत आह—भागित्वाच्चान्तरायस्येति। [1]भागः भजनं प्राप्तिः [2]अस्यास्तीति भागी। यदि देवतान्तरायो न प्राप्तः, तदा तदनुवादाद्विधिरवश्यमुन्नेयस्स्यात्। प्रकृते तु देवतान्तरायो दैवान्मानुषाद्वा प्राप्त इति न तद्विधिकल्पनावकाशः। चकारोऽनुक्तयुक्तिसमुच्चयार्थः। देवतान्तरायस्याविहितत्वेन ततो दोपस्याप्रसक्तेः तत्परिहारार्थत्वकथनं व्याहतमेवेति। तस्मान्नित्य एव दधिग्रहः। भङ्गित्वादिति पाठे कादाचित्कत्वादित्यर्थः। प्रयोजनं पूर्वपक्षे–निमित्ते सत्येवानुष्ठेयः। द्वितीयपक्षे तु—नित्यमादावनुष्ठेयः। निमित्ते सति मध्येऽप्यनुष्ठेयः। सिद्धान्ते–मध्ये निमित्तेऽपि नानुष्ठेय इति॥

इति पञ्चमं दधिग्रहाधिकरणम्॥ ५॥

---

१ विभाग घ. २. अस्यामस्तीति. क.

६

सन्ति साग्निचित्ये क्रतावुख्यभरणविकल्पा । "संवत्सरं दीक्षित उख्यं विभर्ति त्र्यह पडह द्वादशाहं वा" इत्यादय । अस्ति च तत्राग्निदीक्षणीया । तत्र "आग्नावैष्णवमेकादशकपालन्निर्वपत्यादित्यं घृते चरुम्" इति विधाय श्रूयते—"यो वै संवत्सरमुख्यमभृत्वाग्निञ्चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव तदार्तिमाच्छे- द्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् संवत्सरो वा अग्निर्वैश्वानरो यथा संवत्सर- माप्त्वा काल आगते विज्ञायत एवमेव संवत्सरमाप्त्वा काल आगतेऽग्निञ्चिनुते नार्तिमाच्छेति" इति । सामि इत्यव्ययमर्धार्थकमिहापूर्णे काले वर्तते । उखा अग्नि- सम्भरणयोग्यं भाण्डम् । तत्र भवः उख्य । तमग्निं यः संवत्सरमभृत्वा त्र्यहादिपक्ष- माश्रित्याग्निञ्चिनुते तदग्निचयनमकाले गर्भपतनमिव भवति । अतः स चेता आर्तिन्नाशं प्राप्नुयात् । वैश्वानरेण तत्परिहार इत्यर्थः । सोऽयं वैश्वानरः किं नित्यः ? उत नैमित्तिकः ? इति संशये पूर्वपक्षयति—

**वैश्वानरश्च नित्यस्स्यान्नित्यैस्समानसङ्ख्यात्वात् ॥ ११ ॥**

दधिग्रहवद्वैश्वानरोऽपि नित्यस्स्यात् । "यां वा अध्वर्युश्च" इत्यादिवत् "यो वै सवत्सरम्" इत्यादेरप्यर्थवादत्वेन संवत्सरभरणस्य वैश्वानरे निमित्तबोधकत्वा- भावेनार्थवादत्वात् । न च पूर्वाधिकरणे कर्तृसमानाधिकरणयच्छब्दस्य निमित्त- समर्पकताया उक्तत्वादिह यच्छब्दस्य कर्तृसमानाधिकरणत्वान्नैमित्तिकत्वमेव युक्त- मिति वाच्यम्, यस्संवत्सरमभृत्वा अग्निञ्चिनुते स आर्तिमाच्छेदित्यन्वितस्य यच्छ- ब्दस्य वैश्वानरन्निर्वपेदिति कर्तृसामानाधिकरण्याभावात् । तस्मान्नित्य एव वैश्वानरः । तत्र वाक्यशेषमपि प्रमाणयति—नित्यैस्समानसङ्ख्यात्वादिति । "त्रीण्येतानि हवींषि भवन्ति । त्रय इमे लोकाः" इति लोकाना हविषाञ्च त्रित्वसङ्ख्यासाम्यं प्रतिपाद्यते । तच्च सजातीयानामेव समञ्जसम् । नित्यत्वेनैव चैषां साजात्यं नान्यत. । तस्मादपि वैश्वानरो नित्य ॥

अथ सिद्धान्तयति—

**पक्षे वोत्पन्नसंयोगात् ॥ १२ ॥**

वा शब्द एवार्थे । पक्षशब्दः कादाचित्कत्वे । वैश्वानरः कदाचिदेव स्यात् । असंवत्सरभरणनिमित्तिक एव स्यात् । कुत. ? उत्पन्नसयोगात्—असंवत्सरभरणे

निमित्ते उत्पन्ने वैश्वानरस्य संयोगात् विधानात्। यस्संवत्सरन्न बिभृयात् स वैश्वानरन्निर्वपेदित्यर्थपर्यवसानेन यच्छब्दस्य वैश्वानरकर्तृसमानाधिकरणतया निमित्तसमर्पकत्वात्। तस्मात् संवत्सरभृतो न वैश्वानरः। "त्रीण्येतानि हवींषि त्रय इमे लोकाः" इत्यादिवचनन्तु त्रित्वमात्रमवलम्ब्यार्थवाद एव ॥

इति षष्ठं वैश्वानरेष्टेर्नैमित्तिकत्वाधिकरणम् ॥ ६ ॥

७

अग्नौ श्रूयते—"योऽग्निञ्चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीञ्चिनुते" इति। चितयः—प्रस्ताराः इष्टकासन्निवेशविशेषा। किमियं षष्ठी चितिर्नित्या तथाचाग्निर्नित्य षट्चितिकः ? उत नैमित्तिकी षष्ठी चितिः, तथाच पञ्चचितिकस्याग्नेश्चयनानन्तरमप्रतिष्ठायां निमित्ते एकचितिकोऽयमन्योऽग्निः ? इति संशये, पूर्वपक्षयति—

**षट्चितिः पूर्ववत् स्यात् ॥ १३ ॥**

षण्णां पूरणी चिति षट्चितिः। षष्ठी चितिः पूर्ववत्—पञ्च पूर्वाश्चितयो भवन्तीत्युपात्ताः पञ्च चितय इव ताभिस्सह नित्या स्यात्, न तु नैमित्तिकी। न हि पञ्चचितिकस्याग्नेश्चयनानन्तरमप्रतिष्ठायां निमित्ते पृथक् क्रियमाणा एका चितिः षष्ठी चितिरिति व्यपदेशमर्हति। पूरणप्रत्ययस्य पञ्चचितिसहभावं विनानुपपत्तेः। ततश्च विधिगतषष्ठीशब्दानुसारेण "योऽग्निञ्चित्वा" इति कर्तृसमानाधिकरणस्यापि यच्छब्दस्य निमित्तसमर्पकत्वाभावेनार्थवादत्वमेव युक्तमाश्रयितुम्। तस्मात् पञ्चभिश्चितिभिस्सह नित्या षष्ठी चिति. ॥

इतोऽप्येवमित्याह—

**ताभिश्च तुल्यसङ्ख्यानात् ॥ १४ ॥**

"इय वाव प्रथमा चितिरोषधयो वनस्पतयः पुरीषमन्तरिक्षं द्वितीया वयांसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषं यजमानः पञ्चमी प्रजा पुरीष संवत्सरो वै षष्ठी चिति' ऋतव. पुरीषम्' इति नित्याभिः पूर्वपञ्चचितिभिस्सह परिगणनादपि षष्ठी चितिर्नित्या। तुल्यानाञ्च सहानुक्रमणं भवति। यथा 'देवा मनुष्या' पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतः' इति ॥

इतोऽप्येवमित्याह—

**अर्थवादोपपत्तेश्च ॥ १५ ॥**

"षट् चितयो भवन्ति षट् पुरीषाणि द्वादश सम्पद्यन्ते" इत्यर्थवादोऽपि षष्ठ्याश्चितेर्नित्यत्वे सत्येव सामञ्जस्येनोपपद्यते । अतोऽपि[1] षट्चितिक एवाग्निः ॥

अथ सिद्धान्तयति—

**एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १६ ॥**

एकशब्दोऽसहायवाची । एवशब्दोऽवधारणे । अपवर्गः समाप्तिः । पञ्चचितिभिस्सहभूतैव षष्ठी चितिः । कुतः ? हि यतः, अपवृक्ते समाप्ते साग्निचित्यक्रतौ अप्रतिष्ठानिमित्तेन संयुक्ता षष्ठी चितिर्विधीयते । "अग्निञ्चित्वा सौत्रामण्या यजेत" इत्यत्र हि साग्निचित्यक्रत्वानन्तर्यं सौत्रामण्याः पञ्चमे वक्ष्यते । अतो योऽग्निञ्चित्वेत्यत्रापि साग्निचित्यक्रतुप्रयोगानन्तर्यप्रतीत्या पृथक् प्रयोगे सति [2]कर्तृसमानाधिकरणयच्छब्दबलेन नैमित्तिकमार्थवादिकफलकञ्चित्यन्तरमित्येव [3]न्याय्यम् । न चैवं फलकल्पनागौरवमिति वाच्यम् । प्रथमश्रुतयच्छब्दानुसारेण स्ववाक्यस्थप्रतिष्ठायाः फलत्वकल्पनस्य न्याय्यत्वात् । ननु षट्सङ्ख्यापूरणस्य एकोपाध्यवच्छेदमन्तरेणानुपपत्तेरिहोपाध्यन्तराभावात् प्रयोगस्यैवोपाधित्वे सत्येकस्मिन्नेव प्रयोगे षण्णामपि चितीनामनुष्ठेयत्वान्न प्रयोगान्तरचितीरपेक्ष्य सङ्ख्यापूरणं युक्तम् । एवञ्चोपसंहारस्थपूरणप्रत्ययस्य [ऋगा] दिशब्दवन्नेतुमशक्यत्वात्तदुपक्रमगतस्यापि यच्छब्दस्यैवार्थवादतया नयनमुचितमिति चेन्न; पञ्च चितय प्रागुक्ताः । ततः परं नैमित्तिकी चितिरभिधीयत इति वस्तुस्थितिलभ्याभिधानक्रियोपाधिकषट्सङ्ख्यापूरणार्थकत्वेन पूरणप्रत्ययस्योपपत्तेः ॥

ताभिश्च तुल्यसङ्ख्यानादित्यत्राह—

**विप्रतिषेधात्ताभिस्समानसङ्ख्यात्वम् ॥ १७ ॥**

षष्ठ्याश्चितेर्नित्यत्वस्य योऽग्निञ्चित्वेत्युपक्रमगतयच्छब्देन निमित्तसमर्पकेण विप्रतिषेधात्—विरोधादनित्याया एव तस्याः प्रयोगान्तरस्थाभिः पूर्वचितिभिः

---

१. अपि नास्ति. ग. २. कर्तृत्वसामानाधिकरण्य. अ, क.

३. इत्येवार्थं अ.

समानसङ्ख्यात्वं—समानतया सङ्ख्यानं परिगणनं यस्य तस्य भाव· समान-सङ्ख्यात्वम् । अतुल्यत्वेऽपि बहुपरिगणनं युज्यते । यथा 'देवा मनुष्याः पितरः' इति । एतेन षट्चितयो भवन्तीत्यर्थवादोऽपि व्याख्यातः ॥

इति सप्तमं षट्चित्यधिकरणम् ॥ ७ ॥

८

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इत्यनारभ्यश्रुतः पिण्डपितृ-यज्ञः किं दर्शकर्मणोऽङ्गम् ? अनङ्गं वा ? इति संशयः । "अमावास्यायाममावास्यया यजेत" इति कर्मणि प्रसिद्धामावास्याशब्दसमभिव्याहारलक्षणवाक्यप्रमाणादमावास्या-कर्मणोऽङ्गं पिण्डपितृयज्ञः । न च काले मुख्यस्यामावास्याशब्दस्य कर्मणि लक्षणा दोष इति वाच्यम् । कालपरत्वमभ्युपगम्यानङ्गत्वाभ्युपगमे फलकल्पनाप्रसङ्गेन तद-पेक्षया लक्षणाया ज्यायस्त्वात् । तस्मादमावास्याकर्मणोऽङ्गं पिण्डपितृयज्ञ इति प्राप्ते, सिद्धान्तयति—

**पितृयज्ञस्स्वकालत्वादनङ्गं स्यात् ॥ १८ ॥**

पिण्डपितृयज्ञः अमावास्याकर्मणः अनङ्गं स्यात् । कुतः ? स्वकालत्वात्—[1]स्वं स्वीयं मुख्यवृत्त्या स्वशब्दाभिहितः कालो यस्य सः स्वकालः । अमावास्या-शब्दस्य कालवाचितया स्वशब्दाभिहितकालयोगित्वादित्यर्थः । न च कालपरत्वे फलकल्पनादोष इति वाच्यम् । कालपरत्वे अमावास्याशब्दे मुख्यवृत्तत्वस्य अपराह्ण-सामानाधिकरण्यस्य लाभात् फलकल्पनागौरवन्त्विह न दुष्यति । अर्थप्रतीतौ शब्दस्यैवान्तरङ्गतया तत्स्वारस्यानुरोधेनैवार्थनिर्णयस्योचितत्वात् । अत एव विद्याप्रयु-क्तिकल्पनागौरवमप्यनादृत्य निषादस्थपत्यधिकरणे कर्मधारयसमास एवाश्रयिष्यते । न च 'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः' इति मनुवचनात् [2]पितृयज्ञस्यामा-वास्याकर्माङ्गत्वमिति वाच्यम्, तत्र हि मासिश्राद्धं कर्म प्रकृतं तस्य चापरपक्षीयाः पञ्चदशतिथयोऽपि कालास्तत्रैवोक्ताः । तत्राहिताग्नेर्दर्शकालेन विना मासि श्राद्धं नास्ति । तिथ्यन्तरविधयस्त्वनाहिताग्निविषया इति मानवस्मृतिपूर्वापरपर्यालोचनावता सङ्गतम् । तस्मादनङ्गं पिण्डपितृयज्ञः ॥

१ स्व· स्वीय . ग, क २. पितृयज्ञस्य कर्माङ्गत्व. क.

पञ्चदशीविच्छेदे सति प्रवृत्तायां प्रतिपदि अमावास्याशब्दो लोके प्रयुज्यते। अस्तु वा अमावास्याशब्दः काल एव मुख्यः, तथापि पिण्डपितृयज्ञविधौ कर्मपर एवास्थेयः। तैत्तिरीयके हि "इन्द्रो वृत्रं हत्वा असुरान् पराभाव्य सोऽमावास्यां प्रत्यागच्छत्। ते पितर' पूर्वेद्युरागच्छन्। पितॄन्यज्ञोऽगच्छत् तन्देवाः पुनरयाचन्त। तमेभ्यो न पुनरददुः, तेऽब्रुवन्वरं वृणामहै, अथ वः पुनर्दास्यामः अस्मभ्यमेव पूर्वेद्युः क्रियाता इति तमेवेभ्यः पुनरददुः। तस्मात् पितृभ्यः पूर्वेद्युः क्रियते यत् पितृभ्य पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञन्निष्क्रीय यजमानः प्रतनुते" इति श्रुतम्। एवं वाजसनेयकेऽपि। अत्र चोपक्रमे अमावास्याशब्दो न कालपरः, किन्तु कर्मपर एव। 'पितॄन्यज्ञोऽगच्छत्' इति यज्ञशब्देनामावास्याशब्दोपात्तस्य परामर्शात्। अमावास्याशब्दस्य कालपरत्वे पूर्वेद्युश्शब्दस्य चतुर्दशीपरत्वापत्या तत्रैव पिण्डयज्ञस्य कर्तव्यत्वापत्तेश्च। तथा सति "अमावास्याया पिण्डपितृयज्ञेन चरन्ति। यदहरेवैष न पुरस्तान्न पश्चाद्दृशे तदह· पितृभ्यो दद्यात्" इति वाजसनेयादिश्रुतिविरोधस्स्यात्। तस्माद् "अमावास्यायामपराह्णे" इत्यमावास्याशब्दः कर्मपर एवेत्यङ्गमेव पितृयज्ञः। "पितृभ्य एव तद्यज्ञन्निष्क्रीय प्रातर्देवेभ्यः प्रतनुते" इति पितृयज्ञस्य दर्शकर्मनिष्क्रयार्थतया तदङ्गत्वावगमाच्च। अग्निहोत्रादिभिस्सह पितृयज्ञस्य परिगणनमङ्गत्वेऽप्यविरुद्धम्। यथा वैश्वदेवपर्वणि हविर्भिस्सह परिगणितानां प्रयाजादीनाम्। तत्र ह्येवं श्रुतम् "नव प्रयाजा इज्यन्ते नवानूयाजाः। अष्टौ हवींषि द्वावाघारौ द्वावाज्यभागौ त्रिंशत् सम्पद्यन्ते" इति। अतो दर्शाङ्गमेव पिण्डपितृयज्ञ.। स च प्रतिषिद्धेऽपि दर्शकर्मणि भ्रातृव्यवतो वचनाद् भवति। एतेन 'अङ्ग वा समभिव्याहारात्' इति कात्यायनसूत्रं न्यायाभासमूलकमिति प्रत्युक्तम्।

अधिकरणन्तु यत्र शाखायामेवंविधो वाक्यशेषो नास्ति तद्विषयं द्रष्टव्यम्। अधिकन्तु सङ्कर्षे वक्ष्यते। अधिकरणप्रयोजनविषये श्लोक उदाहृतो भाष्ये—

आधान पौर्णमास्याञ्चेद्व्यक्तं दर्शे[1] करिष्यते।

अनङ्ग पितृयज्ञश्चेत् [2]सत्रे च न करिष्यते।। इति।

यद्यनङ्ग पितृयज्ञ. तदा पौर्णमास्यामाधाने कृते ततो द्व्यहादिषु पवमानहविष्षु[ कृतेषु] तदनन्तरामावास्याया दर्शयागाभावेऽपि पितृयज्ञः कार्यः। तदनन्तरपौर्ण-

१ कृते देर्श, भाष्यपाठ। २. तत्रैव. भाष्यपाठः।

मास्यामेव दर्शपूर्णमासोपक्रमविधानात्। दर्शकर्माङ्गत्वे तु न कार्य । एवं कुण्डपायिनामयनाख्ये सत्रेऽपि "मासन्दर्शपूर्णमासाभ्या यजन्ते" इत्यत्र प्रत्यहं पितृयज्ञोऽङ्गत्वे कार्यः, अन्यथा न कार्यः ॥

इत्यष्टमं पिण्डपितृयज्ञाधिकरणम् ॥ ८ ॥

९

ज्योतिष्टोमे श्रूयते—"आश्विन ग्रहं गृहीत्वा त्रिवृता यूप परिवीयाग्नेयं सवनीय पशुमुपाकरोति" इति। त्रिगुणा रशना त्रिवृत्। सवनत्रयानुगतप्रचारत्वात् सवनीयः। किमियं त्रिवृद्रशना पश्वङ्गम्? उत यूपाङ्गम्? इति संशये, पूर्वपक्षयति—

**पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २१ ॥**

त्रिवृद्रशना पश्वङ्गं स्यात्, न तु यूपाङ्गम्। कुत॰? पश्वागमे विधानात्। पशुसम्बन्धेन विधानादित्यर्थः। न हि यूपस्य रशनया दृष्ट किञ्चित् कार्यमस्ति। पशोस्त्वनपक्रमणार्थं बन्धनं रशनया कार्य दृष्टमस्ति। ततश्च समभिव्याहारलक्षणवाक्यप्रमाणादेव त्रिवृद्रश[नाकरणञ्चेह] बन्धनं विवक्षितम्। यथा एकस्मिन् वा यूपे पशूनेकादशोपाकरोतीति। न तु स्पृष्ट्वा देवतार्थत्वेन निर्देश उपाकरण, तादर्थ्ये त्रिवृद्रशनाया अदृष्टार्थत्वापातात्। यूपमिति द्वितीया च सप्तम्यर्थे। तथाच यूपे रशनया पशुबन्धनञ्चोदकतः प्राप्तमनूद्य त्रिवृतेति विधीयते। परिवीयेति च रशनया पशुबन्धनेऽर्थप्राप्तं पशुवेष्टनमनूद्यते। बन्धनस्य ग्रथनात्मकस्य पशुवेष्टनमन्तरेणानुपपत्तेः। यद्यपि पशुबन्धनार्था द्विगुणा रशना चोदकतः प्राप्ता, तथापि तया सह त्रिवृतस्समुच्चयोऽस्तु। सिद्धान्तेऽपि अग्नीषोमीयपशुकालीनया [1]यूपरशनया सह समुच्चयाभ्युपगमात् ॥

सिद्धान्तयति—

**यूपाङ्गं वा तत्संस्कारत्वात् ॥ २२ ॥**

वा शब्दोऽवधारणे। यूपाङ्गमेव त्रिवृद्रशना, न तु पश्वर्था[2]। कुत॰? तत्सकारत्वात्। यूपमिति द्वितीयाश्रुत्या त्रिवृद्रशनाया यूपार्थत्वावगमात्। यदि ह्यत्र

१. यूप. नास्ति. अ.  २. पश्वङ्ग. अ.

परिव्याणेन यूपस्य दृष्टं प्रयोजनन्न लभ्येत तदैवं क्लिष्टकल्पना भवेत्। लभ्यते चात्र परिव्याणेन यूपस्य दार्ढ्यन्दृष्टं प्रयोजनम्। रशना हि यूपस्य कियन्तमपि द्रढिमानञ्जनयति। तेन च यूपस्य ईषद्भेदशङ्का परिह्रियते। अतस्त्रिवृद्रशनाया परिव्याणद्वारा यूपार्थताया द्वितीयाश्रुत्यविरोधेन सम्भवन्त्यां नाश्रुतपशुबन्धनार्थता युक्ता।

प्रयोजनं पूर्वपक्षे—आतिदेशिक्या द्विगुणया वैशेषिक्या त्रिवृता च रशनया सवनीयपशुर्बन्धनीय.। यूपस्य तु त्रिवृता परिव्याणमग्नीषोमीयपशौ कृतं सर्वार्थमिति न पुनरिह कर्तव्यम्। सिद्धान्ते तु अग्नीषोमीये पशौ त्रिवृता परिवीतस्यापि यूपस्य पुनरिह त्रिवृता परिव्याणम्। पशोस्तु चोदकतो द्विगुणयैव रशनया नियोजन मिति। भाष्ये तु प्रयोजनविषये श्लोक उदाहृतः—

पश्वङ्गं रशना चेद्यद्येकस्मिन् बहून्नियुञ्जीत।
प्रतिपशु रशना कार्या विपर्यये[1] द्वैरशन्य स्यादिति।

अस्यार्थ.—एकैकः पशुरेकैकस्मिन्यूपे इत्येवमैकादशिना. पशव. एकादशसु यूपेषु नियोज्या, एकस्मिन्नेव वा यूपे एकादश पशवो नियोज्या इत्यस्ति पक्षद्वयम्। तत्र यदि एकस्मिन्नेव यूपे बहून् पशून्नियुञ्जीत तदा त्रिवृद्रशना सवनीयपश्वङ्गञ्चेत् प्रतिपशु कार्या। तथाचाग्नीषोमीयपशुकाले परिवीतरशनया सह द्वादश रशनास्सम्पद्यन्ते। ऐकादशिनानां सवनीयविकारत्वस्य 'ऐकादशिनेषु सौम्यस्य' इत्यष्टमे वक्ष्यमाणत्वात्। यूपाङ्गत्वे तु अग्नीषोमीयपश्वङ्गत्वमवधार्यते। अग्नीषोमीयपशुकालीनत्रिवृद्रशनया सह द्वे त्रिवृद्रशने सम्पद्येते इति। तदिदं प्रयोजनं सूचयन्नाह—

## अर्थवादश्च तदर्थवत्॥ २३॥

तत्तथा सति त्रिवृद्रशनायाः पश्वङ्गत्वे सति "यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते" इति यूपैकादशिन्या द्वैरशन्यार्थवादः अर्थवत्-सङ्गतार्थको भवति। अर्थवदिति सामान्याभिप्रायं नपुंसकम्। यदि हि त्रिवृद्रशना सवनीयपश्वङ्ग स्यात् तर्हि अग्नीषोमीयपशुकाले कृतस्य त्रिवृद्रशनापरिव्याणस्य सर्वार्थतया सवनीयपशौ पुनः परिव्याणाभावादेकैव। त्रिवृद्रशना यूपाङ्गमिति तद्विकारैकादशिनेषु द्वैरशन्यार्थवादोऽयमसङ्गतः स्यात्। अथ पशुरशनावन्धनावलम्ब-

1. यूपे चेत्. भा पा.

नोऽयमर्थवाद इति चेदेवमपि पूर्वपक्षे त्रिवृता द्विगुणया च पशुबन्धनाभ्युपगमात् त्रैरशन्यं स्यादिति [1]तद्विरोधो दुष्परिहरः। तस्माद्यूपाङ्गमेवेह त्रिवृद्रशना। भाष्ये तु त्रिवृद्रशनाया यूपाङ्गत्वे "युवा सुवासाः परिवीत आगात्" इति मन्त्रार्थवादोऽर्थवान् भवतीति योजितम् ॥

इति नवमं त्रिवृद्रशनाया यूपाङ्गत्वाधिकरणम् ॥ ९ ॥

१०

"यूपस्य स्वरुं करोति" "([2]स्वरुणा) पशुं समनक्ति"ति श्रुतम्। किमयं स्वरुर्यूपार्थः? उत पश्वर्थः? इति संशये पूर्वपक्षयति—

स्वरुश्चाप्येकदेशत्वात् ॥ २४ ॥

चापीति निपातसमुदायस्समुच्चये। स्वरुरपि त्रिवृद्रशनावत् यूपाङ्गम्। कुतः? एकदेशत्वात् अवयवत्वादवयवानाञ्च हस्तादीनामवयव्यङ्गत्वदर्शनात्। न च "स्वरुणा पशुम्" इति द्वितीयाश्रुत्या पश्वर्थतयावगतस्य तस्य कथं यूपार्थतेति वाच्यम्। "यूपस्य स्वरु करोति" इति षष्ठ्या [3]शेषित्वपरया स्वरूत्पत्तेर्यूपार्थतयावगतत्वात्। नन्वत्रैव द्वितीयपादाद्याधिकरणे 'स्वरुश्चानेकनिष्पत्तिः स्वकर्मशब्दत्वात्' इत्यत्र यूपस्य स्वरुं करोतीति षष्ठ्या अनुनिष्पाद्यत्वसम्बन्धपरतामाश्रित्य यूपानुनिष्पन्नश्शकलस्स्वरुत्वेन ग्राह्य इत्यर्थो निर्णीतः। तत्कथं तस्य यूपार्थत्वमिति चेन्न; न ह्यनुनिष्पाद्यत्वसम्बन्धे षष्ठ्याः प्रचुरप्रयोगोऽस्ति। शेषित्वसम्बन्धे तु देवदत्तस्य गौरित्यादौ लोके, दध्नेन्द्रियकामस्येत्यादौ वेदे च प्रचुरप्रयोग उपलभ्यते[4]। करोतिश्च घटं करोतीत्यादावुत्पादन एव प्रचुरं प्रयुज्यते, न तु ग्रहणे। अतस्तदधिकरणमनुपपन्नम्। तथाचोत्पत्तावेव स्वरोः पश्वर्थतयावधारणात् "स्वरुणा पशुम्" इति वाक्य "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्रेव विभक्तिव्यत्ययमाश्रित्य स्वरुं पशावञ्जनेन प्रतिपादयेदित्येवमन्यथा नेयम्। एवञ्च स्वरुकरणेन यूपस्योपकुर्यादिति वचनव्यक्तिः फलति ॥

---

१. तत् नास्ति. अ, क.
२. मातृकासु 'स्वधितिना' इति पाठः।
३. शेषशेषित्व. ग.
४. समुपलभ्यते अ, क.

इतोऽपि यूपस्यैवाङ्गं स्वरुरित्याह—

निष्क्रयश्च तदङ्गवत् ॥ २५ ॥

"देवा वै संस्थिते सोमे प्र स्रुचोऽहरन् प्र यूप ते प्रस्तरं स्रुचान्निष्क्रयणमपश्यन् स्वरुं यूपस्य संस्थिते सोमे प्रस्तर प्रहरति जुहोति स्वरुम्" इति स्वरुप्रहरणस्य यूपप्रहरणप्रत्याम्नायत्वरूपनिष्क्रय उच्यमान 'तत्-स्वरुकरणं अङ्गवत् अङ्गत्वेन दर्शयति। स्वार्थे वति[1]। तस्मात् स्वरुर्यूपाङ्गम् ॥

अथ सिद्धान्तयति--

पश्वङ्गं वार्थकर्मत्वात् ॥ २६ ॥

समञ्जनद्वारा पश्वङ्गमेव स्वरुः। कुत ? अर्थकर्मत्वात्। अर्थः [2]दृष्टं कार्यम् तदर्थं कर्म [3]अर्थकर्म। एवं सत्येव स्वरुकरणस्य दृष्टकार्यार्थकर्मत्वलाभात्। दृष्टार्थत्वलाभादिति यावत्। षष्ठ्या हि स्वरोर्यूपार्थतायामदृष्टार्थत्वापत्ति पश्वर्थत्वेऽञ्जनसाधनतया दृष्टार्थतालाभाद्वाक्यान्तरगतद्वितीयाद्यनुरुद्ध्य पश्वर्थतैव कल्पनीया ॥

निष्क्रयश्च तदङ्गवदित्यत्राह—

भक्त्या निष्क्रयवादस्स्यात् ॥ २७ ॥

[4]परकीयस्य द्रव्यस्य मूल्यार्पणेन आत्मसाद्गुणः निष्क्रयः। न ह्ययमत्र वास्तवस्सम्भवति। तस्मात् स्वरुणा यूपस्य निष्क्रयवाद भक्त्या स्तुत्या[5] नेयस्स्यात्। तस्मान्न स्वरुर्यूपाङ्गम्, किन्तु पश्वङ्गमेव। प्रयोजन पूर्वपक्षे—एकयूपे पश्वेकादशिन्यामेकस्यैव पशोस्समञ्जन तावतापि प्रतिपत्तिसिद्धेः। सिद्धान्ते तु—प्रतिपशु समञ्जनमिति। तदुक्तं भाष्ये—

"स्वरुर्यूपाङ्गमिति चेदेकस्यैव समञ्जनम।
बहूनामेकयूपत्वे सर्वेषान्तु [6]विपर्यये" इति ॥

इति दशमं स्वरो पश्वङ्गत्वाधिकरणम् ॥ १० ॥

---

१. तत् नास्ति. ग.
२. दृष्टकार्यं. ग.
३ अर्थकर्म नास्ति. ग.
४. परस्य. ग
५. स्तुत्या नास्ति. ग.
६. समञ्जन. भा पा.

११

सन्ति दर्शपूर्णमासयोः कालसंयुक्तोत्पन्नाः केचिद्यागाः—"यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति" "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" "अग्नीपोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" "ऐन्द्रन्दध्यमावास्यायाम्" "ऐन्द्रं पयोऽमावास्यायाम्" इति। सन्ति च केचिदकालसंयुक्ता यागाः—"आज्यभागौ यजति" इत्यादय.। किन्तेपां सर्वेषामेव प्राधान्यम् ? उत कालसंयुक्तानामेव ? इति सशये, पूर्वपक्षयति—

**दर्शपूर्णमासयोरिज्याप्राधान्यमविशेषात् ॥ २८ ॥**

दर्शपूर्णमासयोः इज्यानां सर्वासामेव प्राधान्यम्। कुत ? अविशेषात्—"दर्शपूर्णमासाभ्या स्वर्गकामो यजेत" इति फलवाक्यस्थयजिना सर्वेषामेव यागानामविशेषेण फलसम्बन्धबोधनात् ॥

अथ सिद्धान्ती प्रत्यवतिष्ठते—

**अपि वाङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिस्सामान्याद्ध्यभिसंस्तवः ॥ २९ ॥**

अपिवेति प्रत्यवस्थाने। येष्वाज्यभागादिषु "चक्षुपी वा एते यज्ञस्य यदाज्यभागौ" इत्यादिना अङ्गत्वेन चक्षुष्ट्वादिना सस्तुतिः श्रूयते तान्येव कानिचिदङ्गानि। ननु चक्षुष्ट्वादिना संस्तुतौ सत्यामपि पारमार्थ्यलक्षणमङ्गत्वं तेपां कथं सिध्यतीत्यत आह—सामान्याद्ध्यभिसंस्तव इति। हि यत', सामान्यात् सादृश्यादेव चक्षुष्ट्वेन अभिसंस्तव सस्तुतिर्भवति। चक्षुरादिसाम्यञ्चाज्यभागादीनामन्यशेपत्वेनैवेति भवत्याज्यभागादीनामङ्गत्वमेव ॥

उक्तार्थः श्रुतिसम्मत इत्याह—

**तथाचान्यार्थदर्शनम् ॥ ३० ॥**

सौर्येष्टौ "प्रयाजे प्रयाजे कृष्णलञ्जुहोति" इति कृष्णलहोमविध्यर्थतया प्रयाजानुवाददर्शनमपि उक्तमर्थं गमयति। दर्शपूर्णमासयोस्सर्वयागानां प्राधान्ये तु तद्विकृतौ प्रयाजानामतिदेशाभावात्तदनुवादासङ्गतिस्पष्टैव। प्रधानानामतिदेशाभावस्य वक्ष्यमाणत्वात। तस्मादाज्यभागादीनां न प्राधान्यम् किन्त्वङ्गत्वमेव ॥

अथ पूर्वपक्षी प्रत्याचष्टे—

**अविशिष्टन्तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३१ ॥**

तुः प्रत्याख्याने । यत् चक्षुष्ट्वाद्यभिसंस्तवरूपमङ्गत्वे कारणमुक्तं तदेतत् प्रधानेष्वाग्नेयादियागेष्वप्यविशिष्टं तुल्यम् । कुतः ? गुणस्य विद्यमानत्वात्—गुणस्य शिरस्त्वादिगुणकथनस्य तेष्वपि सत्वात् । यथा "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इत्यादि । तथाच सर्वेषामङ्गत्वे सति प्रधानमेव किञ्चिन्न स्यात्, असति च प्रधाने कस्य किमङ्गमिति न विज्ञायेत । तस्माच्चक्षुष्ट्वादिवाद· केवलमर्थवाद इति सर्वेषामेव प्राधान्य युक्तम् ॥

अथ तथाचान्यार्थदर्शनमित्येतदपि निराचष्टे—

**नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३२ ॥**

तदेवमुक्तरीत्या अङ्गत्वबोधके[१] वचने न्याये चानुक्ते सति विकृतौ प्रयाजानुवाददर्शनं नाङ्गत्वसाधकम्, दर्शपूर्णमासयोस्सर्वेषामेव यागानां प्राधान्येऽपि तदुपपत्ते । ननु प्रधानस्य विकृतावतिदेशाभावात् कथं तत्र प्रयाजानुवाद इत्यत आह—परार्थत्वादिति । परं अन्यत् [२]प्र[याजा]न्तरम् अर्थ अभिधेयं यस्य तत् परार्थम् । तत्र प्रयाजशब्दस्याप्राकृतप्रयाजविषयत्वादित्यर्थः । अस्मादेवानुवादात्तत्र प्रयाजविधिरनुमीयत इति यावत् । तस्माद्दर्शपूर्णमासयोस्सर्वेषामेव यागानां प्रधान्यमिति प्राप्ते, सिद्धान्तयति—

**पृथक्त्वेन त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत् पुनर्मुख्यलक्षणं तत्सन्निधावसंयुक्तन्तदङ्गं स्यात् भागित्वात् कारणस्याश्रुतश्चान्यसम्बन्धः ॥ ३३ ॥**

तुर्नार्थे । न सर्वे यागा. प्रधानानि, किन्तु कालसयुक्तोत्पन्नान्याग्नेयादीन्येव । यत फलवाक्ये अभिधानयोः-दर्शपूर्णमासशब्दरूपयोर्नाम्नो निवेशः, अतः कालसयुक्तान्येव फलवन्ति । तेपामेव दर्शपूर्णमासशब्दवाच्यतायाः पौर्णमास्यधिकरणे व्यवस्थापितत्वात । ननु षण्णामाग्नेयादियागाना कथं द्विवचनान्न दर्शपूर्णमासशब्दाभिधेयता, तत्राह—पृथक्त्वेनेति । त्रिकद्वयविवक्षया तथा प्रयोग उपपद्यत

१ बोधकवचने. अ, क. २. प्रधानान्तरमिति मातृकासु पाठ.

इत्यर्थः। ननु पौर्णमास्यधिकरणे पौर्णमास्यमावास्याशब्दयोरेव त्रिकद्वयनामत्व-मुक्तम्। तथाच फलवाक्ये दर्शपूर्णमासशब्दयोस्तत्कालकर्तव्यसर्वयागपरत्वम-स्त्वित्यत्राप्येतदेवोत्तरम्—अभिधानयोर्निवेश इति। दर्शपूर्णमासशब्दयोरपि काल-संयुक्तत्रिकद्वय एव निवेशः। कुतः? श्रुतितः—पौर्णमास्यधिकरणेऽमावास्यापौर्णमा-सीशब्दयोस्तत्कालसंयुक्तोत्पन्नत्रिकद्वयनामत्वे व्यवस्थिते सति दर्शपूर्णमासशब्दयोरपि तत्पर्याययोस्तन्नामता "य एव विद्वान् पौर्णमासीं यजते" "य एव विद्वानमावास्यां यजते" इति श्रुतितस्सिद्धत्वात्[1]। "दर्शो ह वा एतयोः पूर्वः पूर्णमास उत्तरो यत्पौ-र्णमासीं पूर्वामारभेत तद्यथापूर्वं क्रियते तत् पूर्वामारभमाणस्सरस्वत्यै चरुन्निर्वपेत् सरस्वते द्वादशकपालममावास्या वे सरस्वती पूर्णमासस्सरस्वानुभावेतौ यथापूर्वं कल्पयित्वारभते" इति दर्शपूर्णमासशब्दयोरमावास्यापौर्णमासीशब्दयोश्चैकार्थता-व्यपदेशाच्च।

नन्वस्तु फलवाक्ये [2]दर्शपूर्णमासशब्दसंयोगात् कालसंयुक्तोत्पन्नानामेव फलवत्वम्, तथापि तेषामेव प्राधान्यमितरेषान्तदङ्गत्वमिति कुत इत्यत आह—तत्पुनरित्यादि। तत् फलसंयोगित्वमेव मुख्यलक्षणं—प्रधानलक्षणम्। तत्सन्निधौ यत् फलासंयुक्तमाम्नातं तत्तदङ्गं स्यात्। कुतः? कारणस्य भागित्वात्। 'असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वात्' इत्यधिकरणे फलवत्सन्निधावफलन्तदङ्गमित्यङ्गता-प्रयोजकस्य[3] भागित्वात्। भागः भजनं सेवनम् अस्यास्तीति भागी। सेवितत्वादु-क्तत्वादिति यावत्। प्रयाजादिकञ्चाफलमेव फलवदाग्नेयादि [4]यागविधिसन्नि-धावाम्नातम्। यतः तेषां प्रयाजादीनामन्यसम्बन्धः—अन्येन फलेन सम्बन्धः श्रुतो नास्ति।

स्यादेतत्; लोके नीलमुत्पलमित्यादौ विशेष्यस्य विशेषणपरतन्त्रत्वं नीलादि-पदस्य प्रसिद्धार्थकत्वादुपपद्यते। दर्शपूर्णमासपदे तु न लोके कर्मनामधेयत्वेन [5]प्रसिद्धे, येन प्रकृतसर्वयागपरमाख्यातं कालसंयुक्तयागेषु नियमयेताम्। किन्तु कर्मवचना-ख्यातसामानाधिकरण्यानुपपत्त्यैव तयोः कर्मनामत्वं कल्पनीयम्। एवञ्च राजसूय-

---

१. स्थितत्वात् अ क.
२. दर्शपौर्णमासो अ, क.
३. प्रयोजककारणस्य अ, क.
४. याग. नास्ति ग.
५. प्रसिद्धि अ, क.

शब्दस्य यथा आख्यातवशादिष्टिपशुसोमात्मकप्रकृतसर्वयागपरत्वम् , एवं दर्शपूर्णमासशब्दयोरपि प्रकृतसर्वयागपरत्वमाख्यातवशादनुसर्तव्यम् । न च राजसूयशब्दस्याप्रसिद्धार्थतया यजिपारतन्त्र्ये सत्यपि दर्शपूर्णमासनाम्नोः पौर्णमास्यधिकरणे विद्वद्वाक्यतो व्युत्पादितत्वेन प्रसिद्धार्थतया तदनुवृत्तिराख्यातस्य युक्तेति वाच्यम्। तस्मिन्नधिकरणे अमावास्यापौर्णमासीनामनी त्रिकसमुदायद्वय एव [1]व्युत्पादिते। अतस्तत्पर्याययोरपि दर्शपूर्णमासशब्दयोस्समुदायद्वयपरत्वं वाच्यम् । तत्तु न सम्भवति, तयोस्समुदायपरत्वे समुदायस्यायागतया यजेर्लक्षणाप्रसङ्गेन प्रधानस्याख्यातस्य स्वार्थपरित्यागापत्त्या तदनुवर्तनासम्भवात् । अत फलवाक्यगतं दर्शपूर्णमासाभ्यामित्येतदेव द्विवचनप्रतिरूपकमव्ययम् । तच्च सामान्यप्रवृत्तप्रकृतसर्वयागपराख्यातवशात् कालविशेषसंयोगानादरेण प्रकृतसर्वयागेषु वर्तत इति स्वीकार्यम् । यद्वा दर्शपूर्णमासेत्यव्युत्पन्नं प्रातिपदिकमाख्यातवशात् प्रकृतसर्वयागेषु वर्तते । द्विवचनन्तु बहुत्वे व्यत्ययेनेति स्वीकार्यम् । तस्मात् सर्वेषामेवात्र फलयोगित्वात प्राधान्यमित्यत आह—

## गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यते ॥ ३४ ॥

"चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्याम्" "पौर्णमास्यां पौर्णमास्या यजेतामावस्यायाममावास्यया" इत्यादौ अभिमर्शनादयो धर्माः पौर्णमासीनाम्ना अमावस्यानाम्ना च सयुक्ता विधीयन्ते । यदि तु दर्शपूर्णमासपदे प्रत्येकं कालविशेषसयुक्तोत्पन्नत्रिकसमुदायद्वयपरे न स्यातां तर्हि तुल्यन्यायत्वादमावास्यापौर्णमासीशब्दयोरपि प्रत्येकं समुदायपरत्वं न स्यात् । ततश्च पौर्णमासीनाम्ना अमावस्यानाम्ना चाभिमर्शनादिधर्मविधयो [2]नोपपद्येरन् । तस्मात् पौर्णमास्यधिकरणरीत्या तयोः प्रत्येकत्रिकसमुदायपरत्वमेवास्थेयम् । न चैवं सति यजिसामानाधिकरण्यानुपपत्तिरिति वाच्यम् । समुदायसमुदायिनोरन्तर्भेदेन तदुपपत्तेः । अतो दर्शपूर्णमासनामधेयाना कालसंयुक्तोत्पन्नयागानामेव प्राधान्यं न त्वाज्यभागादीनामपि । अन्यथा वाधकमप्याह—नाङ्गेषूपपद्यत इति । अङ्गेषु सत्सु आज्यभागादिषु चक्षुष्ट्वादिसंस्तुतिरुपपद्यते नान्यथा ॥

---

१. प्रतिपादिते. अ, क.

२ नोपपद्यन्ते. अ.

अत्र शङ्कते—

**तुल्या च कारणश्रुतिरन्यैरङ्गाभिधानैः ॥ ३५ ॥**

आग्नेयादिष्वपि यागेषु कारणश्रुतिः—अङ्गत्वप्रयोजिका हृदयत्वादिस्तुतिः अन्यैरङ्गाभिधानैः—आज्यभागादिविषये चक्षुष्ट्वादिसंस्तवैः तुल्या विद्यते । अतस्तेषामपि कुतो नाङ्गत्वमित्यर्थः ॥

समाधत्ते—

**उत्पत्तावपि सम्बन्धस्तस्मादङ्गोपदेशस्स्यात् ॥ ३६ ॥**

अपिशब्दो भिन्नक्रमः । पुरुषस्य तावदग्रे शिर उत्पद्यते, ततो मध्यो हृदयप्रदेशः, ततः पादौ । एवमाग्नेयस्य प्रथममुत्पत्तिः । ततः उपांशुयाजस्य, ततोऽग्नीषोमीयस्येत्येवमाग्नेयादीनामुत्पत्तौ शिर आदिसाम्यलक्षणस्सम्बन्धोऽस्ति । अत आग्नेयादीनां प्राधान्ये सत्यपि अङ्गोपदेशस्स्यात्—शिरस्त्वादिसस्तवः अविरुद्धः स्यात् ॥

इतोऽपि न प्रयाजादीनां प्राधान्यमित्याह—

**तथाचान्यार्थदर्शनम् ॥ ३७ ॥**

"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते । त्रयोदशामावास्यायाम्" इत्यस्ति वाक्यशेषः । पञ्च प्रयाजाः द्वावाज्यभागावाग्नेयोपांशुयाजाग्नीषोमीयास्त्रयः, त्रयोऽनूयाजा इति पौर्णमास्याञ्चतुर्दशाहुतयः । अमावास्यायान्तु नोपांशुयाजः । अग्नीषोमीयस्थाने द्वे सान्नाय्ये । तयोस्सम्प्रतिपन्नदेवताकत्वादेकाहुतिरिति त्रयोदश । यदि च प्रयाजादीनामपि[१] प्राधान्यं तर्हि तेषामन्यतरत्रानुष्ठानेनैव शास्त्रार्थसिद्धेः पौर्णमास्याञ्चतुर्दशामावास्यायां त्रयोदशेति नोपपद्येत । अङ्गत्वे तु तेषामुभयत्रानुष्ठानं सिध्यति । "पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेत" इत्यनयोः पृथगङ्गप्रयोगविधानार्थताया एकादशे व्यवस्थापयिष्यमाणत्वात् । एतेनाधिकरणप्रयोजनमपि सूचितं भवति ॥

इत्येकादशमाज्यभागादीनामङ्गत्वव्यवस्थापनाधिकरणम् ॥ ११ ॥

---

१. अपि. नास्ति. ग.

१२

दीक्षणीयादीष्टिमग्नीषोमीयादिपशुयागान् सोमयागञ्च प्रकृत्य श्रूयते—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। किमत्र सर्वयागानां प्राधान्यम्? उत सोमयागस्यैव प्राधान्यमितरेषान्तदङ्गत्वम्? इति संशये, पूर्वपक्षयति—

**ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३८ ॥**

ज्योतिष्टोमे सर्वाण्येतानि कर्माणि प्राधान्यतस्तुल्यानि सर्वाणि, ( समप्रधानानीति यावत्। कुतः? हि यतः, फलसंयोगलक्षणं प्राधान्यकारणम् अविशिष्टम्—सर्वेषां तुल्यम्, फलवाक्ये सामान्यप्रवृत्तयजिना प्रकृतयागानां सर्वेषामुपादानात् ) "त्रिवृत् पञ्चदशः सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" इति तु व्युत्पादनं प्रकृतसर्वयागविषयमेव। प्रकरणाविशेषेण स्तोत्रस्य सर्वयागाङ्गतया स्तोत्राधारमन्त्रगतत्रिवृदादिसङ्ख्यानामपि प्रकृतसर्वयागाङ्गत्वात्। न च त्रिवृदादिस्तोमा स्तोत्राङ्गत्वात्तद्द्वारा सोमयागाङ्गमेव, "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्" इति स्तोत्रस्य सोमसंस्काररूपग्रहग्रहणचमसोन्नयनाङ्गत्वावगमेन वाक्यसयुक्तस्य स्तोत्रस्य प्रकरणेन सर्वयागाङ्गत्वायोगादिति वाच्यम्। ग्रहं वेत्यादिवाक्य हि स्तोत्रोपाकरणकालविधानार्थमेव, न तु स्तोत्रस्य ग्रहग्रहणचमसोन्नयनाङ्गत्वविधानार्थम्, उपाकरोतिश्रवणात् स्तोत्राणां प्रकरणाद्यागाङ्गतया ग्रहणोन्नयनानाञ्च सोमसंस्कारकतया कृतार्थाना परस्पराकाङ्क्षाविरहेणाङ्गाङ्गित्वासम्भवाच्च। तथाचाविशेषप्रवृत्तयजिना ज्योतिष्टोमनाम्ना च प्रकृतयागानां सर्वेषामेव प्राधान्यम् ॥

अथ सिद्धान्तयति—

**गुणानान्तूत्पत्तिवाक्येन संयोगात् कारणं श्रुतिः तस्मात् सोमप्रधानं स्यात् ॥ ३९ ॥**

तु पूर्वपक्षव्यावृत्तौ। उत्पद्यत इत्युत्पत्तिः फलम्। गुणानां त्रिवृदादिस्तोमानामुत्पत्तिवाक्येन ज्योतिष्टोमेनेति फलवाक्येन सम्बन्धोऽस्ति। तत्र ज्योतिष्टोमपदेन त्रिवृदादिस्तोमसम्बन्धस्य सोमे प्रतीते, त्रिवृत्पञ्चदश इत्यादिवाक्येन ज्योतींषि त्रिवृदादयः स्तोमा अस्येति निर्वचनात्। अत ज्योतिष्टोमेनेत्यादिश्रुतिः सोमयागस्यैव फलद्वयसम्बन्धे कारणम्। तस्मात् सोमयाग एव प्रधानं स्यात् न तु दीक्षणीयादि-

() अ, क पुस्तकयोर्ग्रन्थपात

यागा अपि। न च त्रिवृदादिस्तोमसंयोगस्सोमयाग इव स्तोत्रद्वारा दीक्षणीयादियागेष्वप्यविशिष्ट., प्रकरणाविशेषेण स्तोत्राणां (दीक्षणीयादिसर्वयागाङ्गत्वसम्भवादिति वाच्यम्। 'कथमिदं फलं कर्तव्यमित्याकाङ्क्षालक्षणं हि प्रकरणम्। तच्चानेनेदं फलं कर्तव्यमित्यवगमानन्तरमुन्मिषति। एवञ्च ज्योतिष्टोमेनेति फलवाक्यप्रवृत्तेः प्राक्) दीक्षणीयादियागानां स्तोत्राणाञ्च निष्फलत्वस्याविशिष्टतया परस्परमाकाङ्क्षाविरहेणाङ्गाङ्गितया सम्बन्धासम्भवात् कथ स्तोत्रद्वारा दीक्षणीयादियागेषु त्रिवृदादिस्तोमसंयोग.। ततश्च फलवाक्ये ज्योतिष्टोमपदेन दीक्षणीयादियागानां परामर्शासम्भवान्न तेषां प्राधान्यम्, किन्तु सोमयागस्यैव। तत्रैव स्तोत्रद्वारा त्रिवृदादिसम्बन्धसत्वात्। यद्यपि ज्योतिष्टोमेनेति फलवाक्यप्रवृत्ते. प्राक् सोमयागस्यापि स्तोत्रैरङ्गाङ्गितया सम्बन्ध उक्तरीत्या सम्भवत्येव, तथापि त्रिवृत् पञ्चदश इत्यादिनामनिर्वचनवाक्ये यन्तेतस्येति षष्ठीश्रुत्या अङ्गाङ्गिभावानादरेण त्रिवृदादिसम्बन्धमात्रं प्रवृत्तिनिमित्तमवगतम्। तच्च 'ग्रहं वा गृहीत्वा' इत्यादिवाक्यसिद्धस्तोत्रोपाकरणस्य सोमग्रहणचमसोन्नयनानाञ्च कालार्थसंयोगमेवावलम्ब्य फलवाक्यप्रवृत्तेः प्रागेव सोमयागे उपाक्रियमाणस्तोत्रद्वारा निवेष्टुमर्हतीति फलवाक्ये ज्योतिष्टोमपदेन सोमयागश्शक्यतेऽभिधातुम्। तस्मात् सोमयाग एव प्रधानं दीक्षणीयादियागास्तु तदङ्गभूताः॥

अत्र लिङ्गदर्शनमपि प्रमाणयति—

**तथाचान्यार्थदर्शनम् ॥ ४० ॥**

दूणाशाख्ये ज्योतिष्टोमविकारे "चतुर्विंशतिमानन्दीक्षणीयायां ददाति, प्रायणीयायां द्वे चतुर्विंशतिमाने" इत्यादिवाक्येषु चतुर्विंशतिमानादिविध्यर्थतया दीक्षणीयाद्यनुवाददर्शनमपि दीक्षणीयादीनामङ्गत्वमेव गमयति। प्राधान्ये त्वतिदेशाभावात्तदसङ्गतिस्पष्टैव। तस्मादपि सोमयागस्यैव प्राधान्यम्। अनेन सूत्रेण प्रयोजनमिदमित्यपि सूचितं भवति।

अत्रेदमवधेयम्—"सोमेन यजेत" इत्येवोत्पत्तिवाक्यम्। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति त्वस्योत्पन्नस्य सोमयागस्य फलसम्बन्धमात्रपरम्, न तु फलसयुक्तकर्मोत्पत्तिपरम्। सति सम्भवे हि धात्वर्थविधिर्न्याय्य। फलवाक्यस्य

---

१. फल कथमिद. अ. () गपुस्तके ग्रन्थपात.।

फलसंयुक्तकर्मोत्पत्तिपरत्वे तु सोमवाक्ये नामार्थस्य द्रव्यस्यैव विधिस्स्यात्। सोमवाक्यस्य द्रव्यविशिष्टकर्मोत्पत्तिपरत्वे तु फलवाक्ये फलस्याविधेयत्वात् फलाय कर्मविधावुभयत्रापि धात्वर्थविधिसिद्धिरित्याहुः। केचित्तु फलवाक्ये कर्मविधौ सोमवाक्ये सोमद्रव्येण यागं भावयेदित्यर्थस्स्यात्। ततश्च भावनायां फलं प्रति गुणत्वा‍द्यागं प्रति प्राधान्याच्च वैरूप्यं स्यात्। उद्भिदादौ तु गत्यभावात्तथाश्रयणम्। इह [1]तु गत्यन्तरसत्वान्न तथा, सोमवाक्यस्य तदुत्पत्तिपरस्य पृथक्सत्वादित्याहुः॥

इति द्वादश दीक्षणीयादीनामङ्गत्वाधिकरणम्॥ १२॥

इति श्रीमत्सन्तन्यमानश्येनकूर्मषोढशाररथचक्राकाराद्यनेकगुणविराजमानप्रौढापरिमितमहाध्वरस्य श्रीशाहजीशरभजीतुक्कोजीभोसलचोलमहीमहेन्द्रत्रयामात्यधुरन्धरस्य श्रीमदानन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषीपोष्येण बाल्य एव तद्यानिर्वर्तितापरमितमहाग्निविजृम्भितसर्वतोर्यामवाजपेयादिसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन महादेववाजपेययाजिसुतेनान्नपूर्णागर्भजातेनापारपदवाक्यप्रमाणपारावारपारावरीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः॥

समाप्तश्चाध्यायः॥

---

१. तु-नास्ति. अ.

# अथ पञ्चमाध्यायस्य प्रथमः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

चतुर्थाध्याये बृत्तः[१] प्रयोज्यवर्गनिर्णय । पञ्चमेऽध्याये प्रयोज्यगोचरः क्रमश्चिन्त्यते । तत्रोपोद्घाततया प्रथमन्तावदिदं विचार्यते—"अग्नीनन्वादधाति" "शाखामाच्छिनत्ति" "बर्हिराहरति" इत्यादिपदार्थानामेकेन कर्त्रा युगपत् कर्तुमशक्यतया क्रमे कस्मिश्चिदपेक्षिते सति किं वेदसिद्ध एव क्रमः पदार्थानामाश्रयणीयः ? उत यः कश्चित् क्रमः ? इति संशये, [२]वेदविहितनियतक्रमाश्रयणे तदतिक्रमे प्रायश्चित्तादिना विलम्बापातात् प्रयोगप्राशुभावाय क्रम ऐच्छिक एवादर्तव्य इत्यध्यायोऽयं [३]क्रमविषयो नारम्भणीय इति प्राप्ते, आह—

**श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥**

श्रुतिः वेदः लक्षणं विधिः यस्य तत् श्रुतिलक्षणम् आनुपूर्व्यं क्रमः वेदसिद्ध एव क्रम आदर्तव्यः । कुतः ? तत्प्रमाणत्वात्—तस्याः श्रुतेः चोदनापादे प्रामाण्यस्य निर्णीतत्वात् । पुनरुक्तिस्तु दार्ढ्यार्था ॥

अथवा—क्रमः किं साक्षाद्विधिविधेयः ? उत दध्यादिवत् भावार्थविशेपणतया ? नाद्यः; आनुपूर्व्यलक्षणस्य क्रमस्य भावार्थत्वाभावेन स्वतोऽननुष्ठेयतया साक्षाद्विधिविषयत्वाभावात् । न द्वितीयः; क्रमस्य हि किमन्वाधानादिपदार्थसङ्घातधर्मतया विधिः ? उत एकैकपदार्थधर्मतया ? नाद्य ; अन्वादधातीत्यादि[४]विधीनामेकैकपदार्थगोचरतया सङ्घातस्याविधेयत्वेन एकत्वेन च क्रमस्य विध्यन्वयासम्भवात् । न

---

१. प्रवृत्त॰. ग.    २. वेदसिद्ध. ग.
३. क्रमविपय नास्ति. अ.    ४. पदाना. अ.

द्वितीयः ; एकैकस्य पदार्थस्य क्रमाभावात्, क्रमस्य सङ्घातधर्मत्वाद् अग्नीनन्वाधाय शाखाञ्छिनत्तीत्येवं क्रमस्य शब्दतो विध्यभावाच्च । तस्मात् क्रमस्य विध्यगम्यत्वात्त-द्विषयोऽयमध्यायो नारम्भणीय इति प्राप्त आह—

**श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥**

श्रुतिलक्षण विधिगम्यमेवानुपूर्व्यम् । कुतः ? तत्प्रमाणत्वात् तस्मिन् श्रुत्यर्थादि-षण्णां [1]वक्ष्यमाणनां प्रमाणत्वात् । यद्यपि भावार्थत्वाभावात् क्रमस्य स्वतो विधिर्न सम्भवति, तथापि भावार्थविशेषणतया तद्विधिस्सम्भवत्येव । यद्यपि सङ्घातस्यैकत्वा-द्विध्य [ सं ] स्पर्शाच्च न तत्र क्रमो विध्यर्हः, तथापि पदार्थविशेषणतया तद्विधि-स्सम्भवत्येव । न च पदार्थानां प्रत्येकं क्रमाश्रयत्वमिति वाच्यम् । पदार्थेषु प्रत्येकं क्रमस्य रूपादिवत् पर्याप्तिवृत्तित्वाभावेऽपि संयोगद्वित्वादिवद्व्यासज्यवृत्तित्वस-म्भवात् । अतः क्रमस्य विधिगम्यत्वात्तद्विषयोऽयमध्याय आरब्धव्य ॥

तत्र क्रमस्तावत्—श्रुत्यर्थपाठस्थानप्रवृत्तिमुख्याख्यषट्प्रमाणकः । तत्र श्रुति-क्रमस्तावदादौ चिन्त्यते । सत्रभूतद्वादशाहे श्रूयते—“अध्वर्युर्गृहपतिन्दीक्षयित्वा ब्रह्माणं दीक्षयति” इत्यादि । तत्र कि पाठादेव क्रमो गम्यते ? उत क्त्वादिश्रुत्या ? इति सशय । पाठादिति ब्रूमः । अत्र हि समानपदश्रुत्या दीक्षा एव विधीयन्ते । प्रकृतौ ज्योतिष्टोमे ब्रह्मादीनां दीक्षाविध्यभावेन चोदकादिह तदप्राप्तेः । क्रमस्तु दीक्षाणां पाठादेव प्राप्तः । ततश्च क्त्वाश्रुतिरनुवाद इति प्राप्ते, सिद्धान्तयति—

**श्रुतिलक्षणमानुपूर्व्यन्तप्र णत्वात् ॥ १ ॥**

आनुपूर्व्यमत्र श्रुतिलक्षणम्–क्त्वादिश्रुतिगम्यमेव, विधेयान्तराभावात् । ननु ब्रह्मादीनां दीक्षैव विधीयताम् । तत्राह—तत्प्रमाणत्वादिति । तस्यां सत्रे दीक्षाप्राप्तौ सर्वेपा यजमानत्ववचनस्य प्रमाणत्वात् । यजमानस्य [2]हि दीक्षा प्रकृतौ विहिता । सा च सत्रे ब्रह्मादीनामपि यजमानत्वात् प्राप्ता । तदनुवादेन क्त्वाश्रुत्या क्रममात्रमत्र विधीयते । न च क्रमस्यापि [3]पाठलभ्यत्वान्न विधिरिति वाच्यम् । अनुष्ठेयपदार्थानां हि क्रमाकाङ्क्षायामनुष्ठेयार्थस्मारकमन्त्रपाठक्रमाद्वा अनुष्ठेयविधिवाक्यक्रमाद्वा क्रमा-दरो युक्त, न त्वनुवादवाक्यादपि क्रमादरो युज्यते । [4]पाठानुमितक्रमस्य विलम्बितो-

---

१. वक्ष्यमाणत्वात्. क.
२. हि नास्ति. क.
३. पाठगम्यत्वात्. अ, ग.
४. पाठानुगत. अ.

पस्थितिकतया विधिदशायामप्रवृत्तेश्च। तस्मान् श्रुतिगम्य एवात्र क्रमः, न तु पाठगम्य। अध्वर्युर्गृहपतिमित्यादिवाक्ये श्रुतिगम्यमेवानुपूर्व्यं [न] पाठगम्यं, विधेयान्तराभावेन तस्या क्त्वादिश्रुतेः क्रममात्रे प्रमाणत्वादिति वा सूत्रार्थः। प्रयोजनं पूर्वपक्षे पाठानुमितक्रमस्य मध्ये प्राप्तस्मार्तगुरुसम्भाषणादेश्चानुमितश्रुतिमूलकत्वाविशेषाद्विकल्पः। सिद्धान्ते तु-श्रौतक्रमेण स्मार्तस्य बाध इति॥

इति प्रथम श्रुतिक्रमाधिकरणम्॥ १ ॥

२

"अग्निहोत्रं जुहोति, यवागू पचति" इति यवागूपाकहोमयोः किमनियतः क्रमः ? उत पूर्वं यवागूपाकस्ततो होमः ? इति संशयः। नास्ति क्रमनियमः, प्रमाणाभावात्। विध्योः पाकहोममात्रपर्यवसानात्। न च होमस्य यवागूपाक विना अनिष्पत्तेः पाकहोमयोः पौर्वापर्यमर्थात्सिध्यतीति वाच्यम्। यवागूपाकं विनापि होमस्य पयोदध्यादिना सम्भवेनानुपपत्त्यभावादिति प्राप्ते, सिद्धान्तयति—

अर्थत्वाच्च॥ २ ॥

चकारात् पूर्वसूत्रस्थमानुपूर्व्य ( मनुकृष्यते। पाकं विना होमानुपपत्तेरर्थत्वात् पाकहोमयोरानुपूर्व्यं ) प्रत्येतव्यम्। पयोदध्यादिद्रव्यान्तरेण होमे सति यवागूपाकस्यादृष्टार्थत्वापातात्। तथाच प्रकृतविध्योः पाकहोममात्रपर्यवसानेऽपि प्रयोजनवशादुपस्थितस्य क्रमस्य क्रमापेक्षप्रयोगविधिविधेयत्वान्नियतः क्रमः॥

इति द्वितीयमर्थक्रमाधिकरणम्॥ २ ॥

३

दर्शपूर्णमासयोस्सन्ति पञ्च प्रयाजाः। सन्ति च तदनुमन्त्रणमन्त्राः पञ्च तैत्तिरीयशाखायां "वसन्तमृतूना प्रीणामि" इत्यादयः। तथा शाखान्तरेऽपि पञ्चतदनुमन्त्रणमन्त्रास्सन्ति—"एको ममैका तस्य द्वौ मम ( द्वे तस्य" इत्यादयः। तेषाञ्चादृष्टार्थत्वात् समुच्चयो द्वादशे वक्ष्यते। तत्र "वसन्तमृतूनां प्रीणामि" "एको ममैका तस्य" इति द्वाभ्यां प्रथमप्रयाजस्यानुमन्त्रणं, "ग्रीष्ममृतूना प्रीणामि" "द्वौ मम द्वे तस्य" इति द्वाभ्या द्वितीयस्येत्येवं ) पञ्चानामपि प्रयाजानामेकैकस्य एकैकेन मन्त्रयुगलेना-

() अपुस्तके स्खलितोऽयं भागः  () मपुस्तके ग्रन्थपातः।

नुमन्त्रणमिति स्थितिः। तत्र कदाचित् प्रथमस्य प्रयाजस्य "वसन्तमृतूनां प्रीणामि" इत्यनेन "एको ममैका तस्य" इत्यनेन च क्रमेणानुमन्त्रणे कृते द्वितीयप्रयाजस्यानुमन्त्रणे "ग्रीष्ममृतूनां" "द्वौ मम" इत्यनयोर्मन्त्रयोः[1] क्रमनियमोऽस्ति न वेति संशयः। तत्र यथा प्राजापत्यपशुषु यस्य पशोरुपाकरणे प्राथम्यं तस्यैव नियोजनादिषु प्राथम्य प्रवृत्तिक्रमादाश्रीयते तद्वदत्रापि प्रवृत्तिक्रमो [2]नियामक आश्रयणीयः। तथाच यच्छाखागतानुमन्त्रणप्राथम्यस्य प्रथममनुमन्त्रणं कृत तच्छाखागतेनैव मन्त्रेण द्वितीयस्यापि प्रथममनुमन्त्रणम्। एवं तृतीयादीनामपीति प्राप्ते, सिद्धान्तयति—

**अनियमोऽन्यत्र ॥ ३ ॥**

उक्तौ श्रुत्यर्थौ। वक्ष्यमाणानि च [3]पाठादीनि क्रयनियामकानि यत्र सन्ति ततोऽन्यत्र क्रमस्यानियमः। [4]तथा चोक्तवक्ष्यमाणप्रमाणाभावान्नात्र क्रमनियम इति यावत्। प्राजापत्यपशुषूपाकरणनियोजनादीनां [5]परस्पर प्रत्यासत्तिश्शास्त्रचोदिता। अतस्तदनुग्रहाय प्रवृत्तिक्रमाश्रयणं[6] वक्ष्यते। इह तु तैत्तिरीयशाखागतमन्त्राणां पञ्चानां परस्परप्रत्यासत्तिर्न शास्त्रचोदिता। पाठक्रमस्य प्रधानक्रमवशसम्पन्नत्वेनान्यथासिद्धतया मिथः प्रत्यासत्तौ प्रमाणत्वाभावात्। एवं शाखान्तरमन्त्राणामपि। अतोऽत्र प्रवृत्तिक्रमाश्रयो न युक्त ॥

इति तृतीय प्रयाजानुमन्त्रणमन्त्रेष्वनियमाधिकरणम् ॥ ३ ॥

४

"समिधो यजति" "तनूनपात यजति" "इडो यजति" इत्यादिपदार्थाना क्रमेणाम्नातानामनुष्ठानं किं पाठक्रमेण ? उतानियमेन ? इति संशयः। नास्त्यनुष्ठाने क्रमनियम, प्रमाणाभावात्। पाठक्रमस्य च वाक्योच्चारणानुपूर्वीरूपस्य पदार्थक्रमबोधने सामर्थ्याभावादिति प्राप्ते, सिद्धान्तयति—

**क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥**

वाशब्दोऽवधारणे। पाठक्रमेणैव पदार्थाना क्रमो नियम्येत। कुतः ? तद्गुणत्वात्। तस्य पाठक्रमस्य पदार्थक्रमं प्रति बोधकतया गुणत्वात्। पदार्थानामनुष्ठान-

१. मन्त्रयो. नास्ति. अ.
२. नियामक. नास्ति. अ, क.
३. पाठादीनि. नास्ति अ.
४. यथा घ, ग.
५. परस्परप्रत्या. अ
६. क्रमश्रवण. ग.

क्रमस्य पाठक्रमगम्यत्वादिति यावत्। स्नायादनुलिम्पेत् भुञ्जीतेत्यादौ लोके पाठक्रमेणानुष्ठानक्रमावगमादिति[१] भावः। तर्हि काम्येष्टीनामपि पाठक्रमादनुष्ठानं स्यादित्यत आह—क्रत्वेकत्व इति। तासां भिन्नफलार्थतया एकत्वाभावेनाकाङ्क्षाशून्यतया तत्र प्रतीतस्यापि क्रमस्य ग्रहैकत्ववदनादरणादिति भावः।

ननु लोके वक्तृविवक्षानुसारेण कथमपि क्रमावगमसम्भवेऽपि वेदे शाब्दमर्यादयैतदवगतिर्वाच्या। न चात्र "समिधो यजति" इत्यादिवाक्येषु क्रमवाचकशब्दोऽस्तीति कथं क्रमावगतिरित्याशङ्क्य परिहरति—

**अशब्द इति चेत् स्याद्वाक्यशब्दत्वात् ॥ ५ ॥**

क्रमवाचकशब्दरहिते समिदादिवाक्यजाते कथं क्रमावगम इति चेद्ब्रूषे तत्रेदं शृणु, स्यादेव समिदादिपदार्थाना शब्दत एव क्रमावगमः। कुतः ? वाक्यशब्दत्वात्। क्रमस्य समिदादिवाक्यगम्यत्वादित्यर्थः। यद्यपि समिदादिवाक्येषु क्रमवाचकपदं नास्ति, तथापि स्नायादनुलिम्पेदित्यादिवाक्येभ्यो लोके क्रमनियमावगमस्य वक्तृतात्पर्यानुसन्धान विनैव बहुलमुपलभ्यमानतया वाक्येषु क्रमविशिष्टार्थवाचकताशक्तेरपूर्वायास्सत्त्वादिति भावः। वाक्येषु च समुदायशक्तिस्तद्भूताधिकरणे भाष्ये प्रपञ्चिता ॥

अथवा माभूद्वाक्येषु समुदायशक्तिः। अथापि क्रमस्य शाब्दत्वमस्त्येवेत्याह—

**अर्थकृतो वानुमानं स्यात् क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्धस्तस्मात् स्वशब्द उच्यते ॥ ६ ॥**

प्रयोगवेलायां तावत् पदार्थस्मरणमपेक्षितम्। तच्च वेदवाक्येनैव सम्पाद्यम्। वाक्यञ्च स्मृतमेव पदार्थस्मृतिञ्जनयति। प्रथमपठितमेव च वाक्यं प्रथमं स्मर्यते। ततः पश्चादुत्तरोत्तरवाक्यं स्मर्यत इति पाठक्रमादनुष्ठानक्रमोऽर्थकृत [illegible]। स च क्रत्वेकत्वे—एकस्मिन् क्रतौ कर्तुरेकत्वादनेकपदार्थानुष्ठानस्य [illegible] प्रयोगविध्यपेक्षितश्च। प्रयोगविधिश्च विनियोग परिगृह्णाति। [illegible] विधीना क्रमविशेषविशिष्टपदार्थविधित्वेऽनुष्ठानं [illegible]। [illegible]

यदि वेदवाक्येनैव प्रयोगकाले पदार्थाः स्मर्तव्या इत्यत्र किञ्चित् प्रमाणं स्यात्, न च तदस्तीत्यत आह—परार्थत्वादिति । अध्ययनविधिस्तावत् परार्थः । परं शब्दतः अनुपात्तं सामर्थ्यलभ्य पदार्थावबोधनं प्रयोगकालीनपदार्थस्मरणञ्च तदर्थः । अध्ययनविधिनार्थावबोध इवानुष्ठानकालीनस्मरणेऽपि दृष्टफलत्वाविशेषेण स्वाध्यायस्योपादानादिति यावत् । नन्वेवं सति स्वाध्यायेनार्थावबोधं प्रयोगकालीनस्मरणञ्च भावयेदिति वाक्यभेदस्स्यादित्यह आह—स्वेन त्वर्थेन सम्बन्ध इति । तुरवधारणे । अधीतेन स्वाध्यायेन यद्यच्छक्यते तत्सर्वं भावयेदित्येवमेकरूपेणैव स्वीयेनोभयविधप्रयोजनेनाध्ययनविधेस्सम्बन्धो[१] भवतीति न वाक्यभेदः । यद्यपि पूर्वानुभवक्रमेणैव न स्मरणं व्युत्क्रमेणापि स्मरणदर्शनात्, तथापि—

"मन्त्रो हीनस्स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोऽपराधात्" ।

इति स्वरवर्णादिव्यत्यासे प्रत्यवायश्रवणात् पाठक्रमोऽपि स्वाध्यायविधिविधेय इत्यभ्युपेयम् । ततश्च तस्य दृष्टे सत्यदृष्टकल्पनायोगाद्विध्यवस्थाया दृष्टप्रयोजनानवाप्तेरनुष्ठकाले यथापाठ वाक्यस्मरणमेव प्रयोजनं कल्प्यमिति भाव । तस्मात् पाठक्रमेण पदार्थानुष्ठानक्रम स्वशब्द उच्यते–विधिशब्दवत्तया प्रत्येतव्यः ॥

इतोऽप्येवमित्याह—

**तथाचान्यार्थदर्शनम् ॥ ७ ॥**

"चतुर्थोत्तमौ प्रति समानयते" इति समानयनविधिपरवाक्ये बर्हिर्यागस्य प्रयाजस्य चतुर्थतां दर्शयति । तदेतत्पाठक्रमादनुष्ठानक्रमे सत्युपपद्यते, नान्यथा । तस्मादपि सर्वत्र पाठक्रमादनुष्ठानक्रमः ॥

इति चतुर्थं पाठक्रमाधिकरणम् ॥ ४ ॥

५

वाजपेये "सप्तदश प्राजापत्यान् पशूनालभते" इति सप्तदश पशुयागा युगपदुत्पन्ना । तत्र सप्तदशानामपि पशूनामुपाकरणनियोजनप्रोक्षणादयः पदार्था युगपत कर्तुमशक्यत्वात क्रमेण प्रतिपशु कार्याः । तत्रोपाकरण प्रथमः पदार्थः कस्मिश्चित् पशौ

१. प्रयोजन सम्भवतीति अ.

प्रथमं क्रियते। ततोऽन्यस्मिन् पशौ कस्मिंश्चिदित्येव सप्तदशसु पशुषूपाकृतेषु नियोजनादीनि कार्याणि। तानि किमुपाकरणक्रमेण कार्याणि? उतानियमेन? इति सशय'। उक्तानां श्रुत्यर्थपाठानां क्रमप्रमाणानामभावान्नास्ति नियोजनादीनामपि क्रमनियम·। कृतैकशेषेणैकेन प्राजापत्यशब्देनोत्पन्नानामेषां पाठक्रमाभावात्। न चोपाकरणरूपप्रथमपदार्थ[1]प्रवृत्तिक्रमेण नियोजनादिपदार्थानां क्रमनियम इति वाच्यम्। प्रथमपदार्थप्रवृत्तेः प्रयोगविध्यनन्तरभावितया प्रयोगविध्यसङ्ग्राह्यत्वेन प्रथमपदार्थप्रवृत्त्या तन्नियमानुपपत्तेरिति प्राप्ते, सिद्धान्तयति—

## प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥

गुणानां नियोजनादीना प्रथमपदार्थप्रवृत्तिक्रमेण क्रमो विज्ञेयः। कुत.? तदुपक्रमात्—तेषा नियोजनादीनां गुणानाम् उपक्रमात् प्रधानसमीपेऽनुष्ठाननियमात्। प्रधानप्रत्यासत्तिवशादिति यावत्। तथाहि—अङ्गानां प्रधानकालत्वमेकादशे वक्ष्यते। तत्र च प्राच्याङ्गाना श्रुत्यादिक्रमेण कर्तव्यत्वात् पूर्वपूर्वाङ्गानामुत्तरोत्तराङ्गैर्व्यवधानमवर्जनीयत्वान्न दोपावहम्। एवमुदीच्याङ्गानामपि पूर्वपूर्वैरितरेषां व्यवधानञ्च दोपावहम्। तथाच प्रकृतिभूताग्नीषोमीयपशौ उपाकरणादीना नियोजनादिभिरुत्तरोत्तरै· पदार्थै· प्रत्येकमेकत्वसङ्ख्याविशिष्टैर्व्यवहिता प्रधानप्रत्यासत्ति· परस्परञ्च साक्षात्प्रत्यासत्ति[2] स्थिता। प्रकृते च यद्युपाकरणक्रमेण पशवो नियुज्यन्ते तदा सप्तदशसु पशुषूपाकृतेषु प्रथमस्य पशोः क्रियमाणं नियोजनं प्रथमस्य पशोः कृतमुपाकरणञ्च षोडशभिर्द्वितीयाद्युपाकरणैर्व्यवहितं भवति। एवं द्वितीयपशूपाकरणमप्यवशिष्टपञ्चदशपशूपाकरणै. प्रथमपशुनियोजनेन चाहत्य षोडशभिः पदार्थैः व्यवहितं भवति। एव तृतीयादिपशुष्वपि द्रष्टव्यम्। यदि तु नियोजनादिषु प्रथमप्रवृत्तोपाकरणक्रमो नाद्रियेत, तदा सप्तदशसु पशुषूपाकृतेषु कदाचित् प्रथमस्य पशोर्नियोजनमकृत्वापि द्वितीयादिषोडशपशूना नियोजनेषु कृतेषु सर्वान्ते प्रथमस्य पशोर्नियोजनं क्रियेत, ततश्च प्रथमपशावुपाकरणस्य नियोजनस्य च द्वात्रिंशता पदार्थैर्व्यवधानं स्यात्। न च नेदमतिव्यवधान दोष। अनया रीत्या अन्तिमपशोरुपाकरणानन्तरं तस्यैव पशो प्रथममेव नियोजनानुष्ठानेऽत्यन्तसन्निकर्ष। एवमुपान्त्यादीनामप्येकद्वित्रादिमात्रव्यवहितस्सन्निकर्ष इति क्वचित् प्रत्यासत्तिविशेषाधायकत्वादिति

१. निवृत्ति. अ. २. सापेक्षा. अ.

वाच्यम्। "प्राजापत्यान् पशूनालभते" इत्येकविधिविहितत्वावगतसाहित्यानुरोधेन प्रयोगविधिना पदार्थानां मिथष्षोडशभिरेव पदार्थैर्व्यवधानस्यास्यानुज्ञातत्वेनाधिकैरिव न्यूनैरपि व्यवधाने दोषसाम्यात्। न च प्रयोगविध्युत्तरभाविनि प्रथमपदार्थप्रवृत्तिः कथं प्रयोगविधिसङ्ग्राह्या स्यादिति वाच्यम्। प्रथमपदार्थप्रवृत्तिर्हि प्रयोगविधेः प्राक् सत्यं न निष्पद्यते। तदवगमस्तु प्रयोगविधेः प्राग् भवत्येव, प्रयोगविधेस्स्वस्वविध्यवगतपदार्थग्राहकत्वात्। प्रागवगता च सा पदार्थप्रवृत्तिरुत्तरपदार्थानामपि [1]स्वक्रमेण क्रममवगमयति। तथाचावगतान् प्रत्यासन्नान् पदार्थान्विदधत्प्रयोगविधिस्तत्प्रत्यासत्त्यनुग्रहाय प्रागवगतपदार्थप्रवृत्त्युपस्थितमुत्तरं पदार्थक्रम ग्रहीतुं शक्नोत्येवेति न दोषः॥

ननु प्राजापत्ययागानामेकविधिविधेयतया युगपदुत्पन्नत्वेऽपि सङ्ख्यया कर्मभेदावगमात् सौर्यादिकाम्येष्टिवदेकैकस्य यागस्य सर्वमङ्गजातं काम्येष्टिवत् कार्यमिति विचार एवायमनुपपन्न इत्याशङ्क्य निराकरोति—

सर्वमिति चेन्नाकृतत्वात्॥ ९॥

प्राजापत्ययागेष्वेकैकस्य सर्वमङ्गजातं पृथक्कार्यमिति [2]चेत्तन्न; अकृतत्वात् एवं सति साङ्गानां प्रधानाना साहित्येन प्रयोगस्याकृतत्वप्रसङ्गात्। "वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति" इति तृतीयया करणत्वेनावगतानां प्राजापत्याना सेतिकर्तव्यताकानामेव साहित्यावगमात्। अस्मादेव च बलात् षोडशभिर्व्यवधान न दोषावहम्। न चैवमपि सन्निपत्योपकारकमुपाकरणनियोजनादिकाण्डमेकस्य कृत्वा द्वितीयादीनामप्येवमेवैकैकस्य काण्डमपवर्जयितव्यम्। अङ्गसाहित्यन्त्वाराढुपकारकप्रयाजादिकमादायोपपद्यत इति वाच्यम्। सन्निपत्योपकारकाणामप्युपाकरणादीनां पदार्थानुसमयस्याग्रिमपादे वक्ष्यमाणत्वात्॥

काम्येष्टिदृष्टान्तो विषम इत्याह—

क्रत्वन्तरवदिति चेन्नासमवायात्॥ १०॥

काम्येष्टिवन्न साहित्यमिति चेत्तन्न, कुतः? असमवायात्—काम्येष्टीना तत्तत्फलार्थतया विहिताना साहित्यासम्भवात्। न निष्फलानां तत्र युगपत् कामना

---

१. स्वक्रममवगमयति. अ, क.

२. चेन्न. अ.

नियता। तस्मान्न तासां साहित्यम्। प्राजापत्यानान्तु एकस्मिन्नेव क्रतूपकारे साहित्यावगमादुपाकरणादीनां साहित्ये सति विचारोऽयमुपपन्नः ॥

इति पञ्चमं प्रवृत्तिक्रमाधिकरणम् ॥ ५ ॥

६

अस्ति ज्योतिष्टोमविकारस्साद्यस्को नाम क्रतुः। तत्र श्रूयते—"सह पशूनालभते" इत्यग्नीषोमीयसवनीयानुबन्ध्यपशूनां साहित्यम्। तत्र नियोजनादीनां प्रथमप्रवृत्तोपाकरणक्रमेण क्रमनियमः पूर्वाधिकरणसिद्ध उपाकरणविषये [1]किमनियतः? उताग्नीषोमीयस्य प्रथममुपाकरणम्? अथवा सवनीयस्य? इति संशय.। नियामकाभावादनियत· क्रम.। न च प्रकृतावग्नीषोमीयपशूपाकरणस्य प्राथम्यमेव[म]त्रापि तत्प्राथम्ये नियामकमिति वाच्यम्। एकप्रयोगस्थप्रवृत्तिक्रमस्यैव क्रमनियामकत्वादिति प्रथम पक्षः। [2]प्रकृतिदृष्टस्याप्यग्नीषोमीयपशूपाकरणप्राथम्यस्य विना कारण परित्यागायोगादग्नीषोमीयपशोरेव प्रथममुपाकरणमिति द्वितीय पक्षः॥

अथ सिद्धान्तयति—

स्थानाच्चोत्पत्तिसंयोगात् ॥ ११ ॥

स्थानशब्द. कालवाची। सहैव कर्तव्यत्वेनावगतानां त्रयाणाम्मध्ये प्रथमोपस्थितस्य प्रथममुपाकरणम्। प्रथमोपस्थितिश्च सवनीयस्यैव पशो। तस्यैव काले पशूनां साहित्यविधेस्तृतीयोपान्त्ये व्यवस्थापितत्वात्। एवञ्चायं सूत्रार्थ·—सवनीयपशुरेव प्रथममुपाकरणमर्हति। कुतः? स्थानात्—आश्विनग्रहग्रहणोत्तरकालरूपस्वस्थानवशेन तस्यैव प्रथममुपस्थिते। ननु कुतस्तस्याश्विनग्रहग्रहणोत्तरकालकता? उत्पत्तिसंयोगात्—"आश्विन ग्रह गृहीत्वा त्रिवृता यूप परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इत्युत्पत्तौ, तेन कालेन सवनीयस्य सयोगात्। अग्नीषोमीयपशुर्हि आग्नीध्रीयाग्नेस्सोमस्य च प्रणयनानन्तरकालकः। स च सहालम्भनवचनात् स्वस्थानाच्चलित इति न तस्य स्वस्थानादुपस्थितिः। सवनीयपशुस्तु स्वस्थानादचलित इति तेनोपस्थितत्वात् प्रथममुपाक्रियते ॥

इति षष्ठ स्थानक्रमाधिकरणम् ॥ ६ ॥

---

१. उपाकरणे विषये किमनियम. क.          २. प्रथम अ.

( वर्णकान्तरम् )

अत्र चकारद्योतितं वर्णकान्तरं वार्तिके स्थितम्। तद्यथा—साद्यस्क्रे सवनीयपशोः प्रथममुपाकरणमिति स्थितम्। तत्राग्नीषोमीयानुबन्ध्ययोरुपाकरणे क्रमनियमे प्रमाणाभवादनियतः क्रमः। प्रकृतावग्नीषोमीयानुबन्ध्ययोः पौर्वापर्यस्य सत्वेऽपि तस्याविहितत्वेनार्थिकतया अतिदेशाभावादिति प्राप्ते, ब्रूमः—स्थानादग्नीषोमीयस्य प्रथममुपाकरणम्। उत्पत्तौ तस्य प्राथम्येन संयोगात्, प्रकृतिदृष्टस्य प्राथम्यस्य विना कारणं परित्यागायोगात्॥

( वृत्त वर्णकान्तरम् )

७

चित्रायमिष्टौ "सारस्वतौ भवतः" इति यागद्वयं श्रुतम्। सरस्वान् देवता अस्य सरस्वती देवता अस्येति द्वयोरेकशेषः। "एतद्वै दैव्यम्मिथुनं यत् सरस्वांश्च सरस्वती च" इति वाक्यशेषात्। तयोर्निर्वापे क्रमनियमोऽस्ति नवेति संशयः। उक्तानां श्रुत्यर्थपाठस्थानप्रवृत्त्याख्यानां क्रमप्रमाणानामभावादनियम इति प्राप्ते, सिद्धान्तयति—

## मुख्यक्रमेण चाङ्गानान्तदर्थत्वात्॥ १२॥

क्वचिन्मुख्य[1]क्रमेणाप्यङ्गानां क्रमनियमो भवति "सारस्वतौ भवतः" इत्यादौ निर्वापाद्यङ्गानाम्। कुतः? तदर्थत्वात्—अङ्गानां प्रधानार्थत्वात्। न च कथमत्र मुख्यक्रमः [2]उभयोर्मुख्ययोस्सारस्वतयागयोस्सहचोदितत्वादिति वाच्यम्। आदौ हि सरस्वतीयागस्य याज्यानुवाक्ये पठिते "प्रणो देव्या नो दिवः" इति। ततः पश्चात्सरस्वद्यागस्य पठिते "पिपिवांसं सरस्वते ते सरस्वदूर्मय" इति। ततश्च विधिपाठक्रमाभावेऽपि मन्त्रपाठक्रमादस्ति यागक्रम। न च स्त्रीदेवत्ययाज्यानुवाक्ययोरेव प्रथमप्रवृत्तेस्तत्प्रवृत्या निर्वापेऽपि क्रमस्य सिद्धतया न मुख्यक्रमो मानान्तरमिति वाच्यम्। प्रवृत्तिक्रमे [3]ह्यङ्गाना मिथ प्रत्यासत्तिर्मानत्वप्रयोजिका। प्रकृते त्वङ्गानां प्रधानप्रत्यासत्तिरिति मानत्वप्रयोजकभेदादुपधेयसङ्करेऽप्युपाधेरसङ्कराद्युक्त मानान्तरत्वम्। असङ्कीर्णोदाहरणन्तु चतुर्थपादे वक्ष्यते।

---

१. क्रमेणाङ्गाना. अ, क. २. उभयोस्सारस्वतयागयोः. अ, क.

३. मात्राङ्गाना ग.

ननु प्रधानयोस्सहचोदितत्वाद्युगपदनुष्ठातुं शक्यत्वात् परकीयैकैकपदार्थव्यवधानस्य 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति' न्यायेन () आश्रयणीयत्वात् (कथं मुख्यक्रमात्) प्रधानप्रत्यासत्त्यनुग्रहः, येन मानत्वप्रयोजकभेदान्मानान्तरता (स्यादिति चेत् सत्यम्; सहचोदितमप्येकैक प्रधानमात्मीयान् पदार्थानेकैकक्षणव्यवहितानेवानुजानाति न व्यवहितान्, नापि परकीयपदार्थद्वयव्यवहितान। तथाच यदि मुख्यक्रमेण पूर्वं निर्वापः) प्रथमो धर्मो न क्रियते, किन्तु पुन्देवत्यस्य पूर्वं क्रियते, तदा प्रवृत्तिक्रमात् द्वितीयादिपदार्था अपि पुन्देवत्यस्यैव प्रथम स्युः। पश्चात्तु स्त्रीदेवत्यस्य। ततश्च प्रयाजशेपाभिघारणरूप उपान्त्यः पदार्थोऽपि पश्चादेव स्त्रीदेवत्यस्य कार्यः। एवञ्चाज्यभागानन्तरमवदानादिप्रक्षेपान्तं पदार्थं स्त्रीदेवत्यस्य कृत्वानन्तरं पुन्देवत्यस्य प्रधानं क्रियमाणं द्वाभ्यां परकीयपदार्थाभ्यां व्यवहितमेव स्वाङ्ग प्रयाजशेषाभिघारणं गृह्णीयात्। तेन च विप्रकृष्टे तत पूर्वतनानामप्यङ्गानामत्यन्तविप्रकर्षस्स्यात्। तथा स्त्रीदेवत्यस्य प्रधानमव्यवहिताभिघारणावदानादिप्रक्षेपान्तपदार्थौ गृह्णीयात्। ततश्च सहचोदनासामर्थ्यादनुज्ञातमेकैकव्यवधान बाध्येत। अतो मुख्यक्रमादङ्गानां क्रमः। एतेन पूर्वपदार्थप्रवृत्त्या उत्तरेषां क्रमनियमः। नोत्तरप्रवृत्त्या पूर्वेषामिति निरस्तम्, क्रमनियमस्य प्रत्यासत्त्यनुग्रहविशेषायत्तत्वात्। तत्र च पदार्थप्रवृत्तौ पूर्वत्वस्यातन्त्रत्वात्। अतस्सरस्वतीदेवत्यस्यैव प्रथममङ्गप्रवृत्तिरिति ॥

इति सप्तमं मुख्यक्रमाधिकरणम् ॥ ७ ॥

८

पौर्णमास्यामाग्नेय पुरोडाश., आज्यहविरुपांशुयाज. अग्नीषोमीयः पुरोडाश इति मुख्यक्रम'। तत्र पुरोडाशधर्मा निर्वपणप्रोक्षणादयः प्रथमं पठिताः। पश्चादाज्यधर्मा निर्वपणोत्पवनादयः पठिता.। तत्राग्नेयस्य प्रथम निर्वपणादि पश्चादाज्यस्येति निर्विवादम। [1]उपांशुयाजाज्यनिर्वपणादिषु अग्नीषोमीयनिर्वपणादिषु च संशयः—कतमे पूर्वं कर्तव्या ? कतमे पश्चात् ? इति। तत्र मुख्यक्रमादाज्यस्य धर्मा एव प्रथम कार्या'। ततोऽग्नीषोमीयपुरोडाशस्येति प्राप्ते, सिद्धान्तयति—

() गपुस्तके ग्रन्थपात.। () गपुस्तके ग्रन्थपात।

१. उपांशुयाजार्थाज्यनिर्वपणादिषु. क.

## प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १३ ॥

भवतु "सारस्वतौ भवतः" इत्यत्र मुख्यक्रमादङ्ग  ः। प्रकृतौ पौर्णमास्यान्तु यथाक्रमं--पाठक्रमानुसारेण अग्नीषोमीयनिर्वपणादि प्रथमं तत आज्यनिर्वपणादि प्रतीयेत। कुतः ? स्वशब्दत्वात्—अङ्गपाठक्रमस्य प्रत्यक्ष सिद्धत्वादित्यर्थः। मुख्यक्रमाद्धयङ्गक्रमोऽनुमातव्यः। तदनुमानञ्चात्र न सम्भवति, प्रत्यक्षसिद्धेनाङ्गपाठक्रमेण बाधात्। ननु पाठक्रमस्य प्रत्यक्षत्वेऽपि न तेन मुख्यक्रमकल्प्यः क्रमो विरुध्यते, किन्तु पाठक्रमकल्प्याङ्गक्रमेण। ततश्च यावत् पाठक्रमादङ्गक्रमः कल्प्यते, तत प्रागेव मुख्यक्रमोऽङ्गक्रमं कल्पयति। न च विनिगमनाविरह। पूर्वाधिकरणन्यायेन प्रधानप्रत्यासत्तिवशेन मुख्यक्रमस्य प्रबलत्वात्। मुख्यक्रमानादरेऽग्नीषोमीयधर्माणामुपांशुयाजधर्मैर्व्यवहिततया स्वप्रधानेनात्यन्तं व्यवधानापातात्। अतो मुख्यक्रमादाज्यनिर्वपणाद्येव प्रथम ततोऽग्नीषोमीयनिर्वपणादि इति चेन्न, मुख्यपाठतो मुख्यक्रमकल्पनादशायामेव प्रत्यक्षसिद्धपाठ[1]क्रमादेवाङ्गक्रमसिद्धौ तद्विरोधात् क्रमाकाङ्क्षाविरहाच्च[2] पश्चान्मुख्यक्रमादङ्गक्रमकल्पनाया अयुक्तत्वात्। न चैव सति प्रधानप्रत्यासत्तिविरोधश्शङ्क्य, 'अन्यतः प्राप्तान्यङ्गान्यभिसमीक्ष्य प्रयोगविधिर्विधत्ते' इति न्यायेन प्रयोगविधेर्यथाप्राप्त्येवाङ्गानां प्रधानप्रत्यासत्तिविधायकत्वात्। तस्माद्यथापाठमेवात्राङ्गानां धर्मा न तु मुख्यक्रमादिति ॥

इत्यष्टमं पाठक्रमबलीयस्त्वाधिकरणम् ॥ ८ ॥

९

तैत्तिरीयके द्वितीयकाण्डे पञ्चमप्रश्ने द्वितीयानुवाके "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" इत्यग्नीषोमीयविधायकब्राह्मण पठितम्। ततष्षष्ठप्रश्ने त्रितीयानुवाके "यदाग्नेयोऽष्टाकपाल." इत्याग्नेयविधायकब्राह्मण पठितम्। हौत्रकाण्डे तु "सत्य प्रपद्ये" इति प्रश्ने सप्तमानुवाके "अग्निर्मूर्धा" "भुवो यज्ञस्य" इत्याग्नेयस्य याज्यानुवाक्ये पठिते। ततः "प्रजापते न त्वदेतानि" "स वेद पुत्रः पितरम्" इति याज्यानुवाक्ये पठिते। [ तत. ] "अग्नीषोमा सवेदसा" इत्यादिके पठिते। तदिह किं विधिक्रमादग्नीषोमीयस्य प्रथम प्रयोगः ? उत

---

१. क्रमकाङ्क्रम. क, ग,    २. विरोधाच्च क.

मन्त्रक्रमादाग्नेयस्य प्रथमम् ? इति संशयः। विधिक्रमादग्नीषोमीयस्यैव प्रथममिति ब्रूम। विधिक्रमो ह्युत्पद्यमानेषु पदार्थेषु गम्यते। ततश्चाग्नीषोमीयस्यैव प्राथम्यं प्रथममवगतम्। याज्यानुवाक्यायुगलात्मकमन्त्रक्रमस्तु उत्पन्नयोराग्नेयाग्नीषोमीययोर्विनियुक्तयोश्च याज्यानुवाक्यायुगलयोः प्रवर्तत इति विलम्बितप्रवृत्तिकतया दुर्बलं। एवञ्च प्रथमावगतत्वाद्यथा पूर्वत्र पाठक्रमस्य प्राबल्य, एवमिहापि। तस्मादग्नीषोमीयस्यैव प्रथमं प्रयोगं तत आग्नेयस्येति प्राप्ते, सिद्धान्तयति—

**मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशस्सः ॥ १४ ॥**

तुर्वैषम्ये। अस्तु पूर्वत्र शीघ्रप्रवृत्तिकतया मन्त्रपाठक्रमो मुख्यक्रमाद् बलीयान्। इह तु विधिमन्त्रक्रमयोर्विरोधे मन्त्रतः याज्यानुवाक्यारूपमन्त्रक्रमेण मुख्यक्रमस्स्यात्। कुतः ? प्रयोगरूपसामर्थ्यात्—प्रयोगरूपे प्रयुज्यमानपदार्थनिरूपणे तत्स्मारणे मन्त्रस्य सामर्थ्यात्। यद्यपि विध्यवस्थायामग्नीषोमीयस्य प्रथममवगतिः, तथापि न विधिकालीनक्रमानुभवस्यानुष्ठानक्रमोपाधिकता। किन्तु अनुष्ठेयपदार्थस्मृतिक्रमादेवानुष्ठानक्रमः, तत्स्मृतिक्रमश्च स्मारकमन्त्रक्रमात्। मन्त्राश्च प्रयुक्ता एवानुष्ठेयावस्थपदार्थान् स्मारयन्ति। ततश्च पूर्वो मन्त्रः प्रयुक्तः स्वोत्तरमन्त्रं स्मारयति। स चोत्तरो मन्त्रः स्वार्थमुत्तरपदार्थं स्मारयतीत्यनुष्ठानकालीनपदार्थस्मृतौ मन्त्रपाठक्रमस्सन्निकृष्टो भवति। विधायकब्राह्मणपाठक्रमस्तु नैवमित्याह—तस्मादुत्पत्तिदेशस्स इति। सः-विधायकब्राह्मणपाठः। तस्मात्-अनुष्ठेयपदार्थस्मरणाद् विप्रकृष्ट इति शेषः। यतः[1] उत्पत्तिदेशः-उत्पत्तिमेव केवलां [2]दिशति समर्पयति ब्राह्मणपाठः, न तु प्रयोगकालीनानुष्ठेयावस्थपदार्थस्मृतिं, ब्राह्मणस्य [3]प्रयोगाद् बहिरेव विधानमात्रे चरितार्थतया प्रयोगकाले उच्चारणानवश्यम्भावेन झटिति प्रयोगकालीनपदार्थस्मारकत्वाभावात्। किन्तु प्रथमं तावदनुष्ठाता समान्येन दर्शपूर्णमासौ साङ्गौ कर्तव्याविति निश्चित्य तद्विशेषस्मरणार्थं तद्विधायकं वाक्यमालोचयति। तेन च तदर्थविशेषं बुद्ध्वानुतिष्ठति। तत्रानुष्ठितः प्रथमपदार्थः न झटित्येव द्वितीयपदार्थं स्मारयति। पदार्थानां स्वरूपेण पौर्वापर्यानवक्लृप्ते। किन्तु तदनुष्ठानानन्तरमनुष्ठितोऽयं पदार्थ

१. यतः नास्ति. ग		३. प्रयोगाद्विधिरेव. क.
२. दर्शयति. अ.

इत्यनुष्ठितं पदार्थविशेषमालोचयन् तद्विधायकं वाक्यमनुसन्धाय तदुत्तर वाक्यं पाठक्रमादनुस्मरन् तद्वाक्यविहितं पदार्थं स्मरतीति विधिक्रमोऽनुष्ठेयक्रमे विप्रकृष्यते। तथाच ब्राह्मणक्रमस्य प्रथमभावित्वेऽप्यनुष्ठाने विप्रकृष्टत्वाद्दुर्बलत्वम्। मन्त्रक्रमस्या- नुष्ठानसन्निकर्षात् प्राबल्यमिति मन्त्रक्रमादाग्नेयस्य प्राथम्यम्। न चैवं सति विधि- पाठक्रमादनुष्ठानक्रम क्वापि न स्यात्। ततश्च पाठक्रमाधिकरणविरोध इति वाच्यम्। यत्र मन्त्रपाठक्रमो नास्ति तत्रागत्या विप्रकृष्टस्यापि ब्राह्मणपाठक्रमस्य स्मारकताभ्युपगमात् ॥

## इति नवमं मन्त्रक्रमबलीयस्त्वाधिकरणम् ॥ ९ ॥

## १०

"आग्नावैष्णवमेकादशकपालन्निर्वपेदभिचरन्। सरस्वत्याज्यभागा स्यात्। बार्हस्पत्यश्चरु" इत्यस्ति त्रिहविष्का काचिदिष्टिः। आज्यभागा—आज्यहविष्केत्यर्थः। तत्राग्नावैष्णवो यागोऽग्नीषोमीयविकारः। सारस्वत उपांशुयाजविकारः। बार्हस्पत्य- स्त्वाग्नेयविकारः। प्रकृतौ च मुख्यक्रमादङ्गपाठक्रमाच्चाग्नेयधर्मा निर्वपणप्रोक्षणादयः (प्रथमं प्रयुज्यन्ते। ततोऽग्नीषोमीयधर्माः पाठक्रमात् प्रयुज्यन्ते। तत आज्यधर्मा निर्वपणोत्पवनादय।) अङ्गपाठस्य प्रत्यक्षत्वेन तद्विरुद्धक्रमस्य मुख्यक्रमेण कल्पयितु- मशक्यत्वादित्यनुपदमेवोक्तम्। तदिह विकृतौ प्राकृताङ्गानाञ्चोदकप्राप्तत्वात्तत्पाठ- क्रमोऽप्यानुमानिक इति मुख्यपाठक्रम अङ्गपाठक्रमश्च तुल्यबलाविति [1]भवति संशयः—किं विधिक्रमेणैवाङ्गप्रधानसाहित्यबोधकप्रयोगविहिताङ्गप्रधानप्रत्यासत्त्यनु- ग्रहाय मुख्यक्रमेण सारस्वताज्यधर्मा प्रथमं कर्तव्याः, ततो बार्हस्पत्यधर्माः? उत चोदकवशाद् बार्हस्पत्यधर्मा प्रथमं कर्तव्याः, तत आज्यधर्माः? इति। आग्ना- वैष्णवस्य तु चोदकात् प्रयोगवचनाच्चोभयस्मादपि प्राथम्यन्निर्विवादम्। तत्र पूर्वपक्षयति—

## तद्वचनात्तु विकृतौ यथाप्रधानं स्यात् ॥ १५ ॥

तु प्रत्यवस्थाने। अस्तु प्रकृतौ विधिपाठस्य मन्त्रपाठक्रमाद् बाधः। इह तु विकृतौ यथाप्रधानं मुख्यक्रमेण सारस्वतस्याज्यस्य प्रथमन्निर्वपणादि स्यात्,

( ) अधुन्तके ग्रन्थपाठ.

1. भवति नास्ति. ग.

तस्माद्यथाचोदक बार्हस्पत्यधर्माणामेव प्रथमं प्रयोगः, ततस्सारस्वताज्यधर्माणाम्। नन्वेवमाग्नावैष्णवस्याग्नीषोमीयविकारत्वात्तद्धर्माणामप्याग्नेयविकारबार्हस्पत्यधर्मान-न्तर्यमेव स्यात् प्रकृतिदर्शनादिति चेत्, उच्यते—सारस्वतेन व्यवधानादाग्ना-वैष्णवबार्हस्पत्ययोर्न क्रमसंशयस्सम्भवति। येन चोदकप्राप्तक्रमस्य प्राबल्यं ततस्स्यात्। किञ्चाग्नावैष्णवसारस्वतयो. तत्र चोदकात् प्रयोगवचनाच्चाग्नावैष्णवधर्माणां प्राथम्येऽ-वधारिते पश्चात् सारस्वतबार्हस्पत्ययोः क्रमसंशये चोदकस्तावत् सारस्वतधर्मापेक्षया बार्हस्पत्यधर्माणां प्राथम्यमवतारयति, न त्वाग्नावैष्णवधर्मापेक्षया। अत एव सूत्रे विप्रतिपत्तावित्यर्थवदित्याहुः॥

इति दशम प्रयोगवचनाच्चोद कस्यबलवत्त्वाधिकरणम्॥ १०॥

११

चातुर्मास्येषु साकमेधाख्यन्त्रितीयं पर्व। तत्रामनन्ति "प्रातरग्नयेऽनीकवते पुरोडाशमष्टाकपालन्निर्वपति, मरुद्भ्यस्सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृह-मेधिभ्यस्सर्वासान्दुग्धे सायञ्चरुम्" इति। किमेता इष्टयो द्व्यहकालाः; उत सद्य-स्कालाः? इति सशये, पूर्वपक्षयति—

**विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम्॥ १७॥**

"पूर्वेद्युरग्निं गृह्णाति, परेद्युर्यजते" इति प्रकृतेर्यथा द्व्यहकालत्व शिष्ट विहित, तथा विकृति तत्काला—द्व्यहकाला स्यात्। कुत? प्रकृतिधर्मत्वात्—विकृतेः प्रकृत्युपदिष्टधर्मकत्वात्॥

अथ सिद्धान्तयति—

**अपिवा क्रमकालसंयुक्ता सद्य. क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपस्स्यात्॥ १८॥**

अपिवेति पूर्वपक्षव्यावृत्तौ। अनीकवतादीष्टिः ( सद्य. —एकस्मिन्नहनि क्रमेण प्रातरादिकालैः सयुक्ता—कार्त्स्न्येन युक्ता समस्ताङ्गसहितप्रधानभावना[1] क्रियेत। कुत?) तत्र विधेः—[2]प्रातरादिकालेषु समस्ताङ्गसहितप्रधानानुष्ठानस्य प्रत्यक्षमवग-

---

() अपुस्तके ग्रन्थ रात. १ भावनया. क.

२. तत्र प्रातरादि. ख, ग.

मात्। ये ह्यहरवयवेषु प्रातरादिषु पदार्था उच्यन्ते क्रमेण ते तावदेकस्मिन्नहनीति गम्यते। यथा देवदत्तः प्रातरपूपान् भक्षयति, मध्यन्दिने विविधमन्नमश्नाति, सायम्मोदकशकलान् भक्षयतीत्येकस्मिन्नहनीति गम्यते। ततश्च प्रत्यक्षश्रुतसद्यस्कालकतया प्रकृतिप्राप्तधर्मस्य द्व्यहत्वस्य लोपस्स्यात्। कुतः ? अनुमानात्— आनुमानिकचोदकादेव तत्प्राप्तेः॥

ननु विरोधे सत्येव प्रत्यक्षस्य वचनं चोदकस्य बाधकम्। न चात्र विरोधोऽस्ति। पूर्वेद्युः प्रातरादिषु क्रमेण तिसृणामपीष्टीनां क्रमेणान्वाधानादिकर्म [1]कृत्वा परेद्युः प्रातरादिषु क्रमेण तिसृणामपीष्टीनां समापनेन द्व्यहकालत्वप्रापकचोदकस्य प्रातरादिकर्तव्यत्वविधेश्चाविरोधात्। सति प्रमाणे कर्ममध्येऽपि कर्मान्तरारम्भो युज्यते, दर्शकर्ममध्ये निशीष्टेर्द्वादशे वक्ष्यमाणत्वात्। तस्मादेता इष्टयो द्व्यहकाला स्युरित्याशङ्क्य निराकरोति—

**कालोत्कर्ष इति चेन्न सम्बन्धात्॥ १९॥**

पूर्वेद्युः प्रातरादिषु क्रमेणोपक्रम्य परेद्युः, प्रातरादिषु क्रमेण इष्टयस्समाप्यन्त इत्येवमिष्टीना कालोत्कर्षः—कालभेदः द्व्यहकालत्वमस्तु। चोदकस्य प्रातरादिविधेश्चाविरोधात् न प्रातरादिवाक्यादेकमहर्गम्यत इति युक्तम्, अपदार्थत्वात्। लोके तात्पर्यवशात्तथा क्वचिद्भानेऽपि वेदे [2]तन्नियमाभावादिति चेत्तन्न; कुतः ? सम्बन्धात्—कालस्य प्रयोगापरनामधेयसाङ्गप्रधानभावनान्वयात्। अङ्गप्रधानानामेककाल सम्बन्ध इत्येकादशे वक्ष्यते। तदिदं द्व्यहकालत्वे बाध्येत। न चैकस्मिन्नहनीत्युपपदाभावात् दिनद्वयसम्बन्धिप्रातरादिग्रहण वा किं न स्यादिति वाच्यम्। कर्मणि हि चिकीर्षिते प्रयोगाय कालस्सङ्गृह्यते। चिकीर्षा च समस्ताङ्गसहितप्रधानभावनाया एव। तादृश्या एव फलं प्रति पर्याप्तत्वात्। तथा च सर्वचिकीर्षायां विधीयमानस्य प्रातरादिकालस्याविशेषात् सर्वार्थत्वप्राप्त्या उपपदाभावेऽप्येकदिनसम्बन्धित्वं लभ्यते। ततश्च सद्यस्काला एवैता इष्टय। एवञ्च "द्व्यह साकमेधैर्यजते" इत्यपि न विरुध्यते। एतासां द्व्यहकालत्वे तु प्रथमदिने प्रातरादिष्वन्वाधानादि, द्वितीयदिने तद्यागाः, त्रितीयदिने कैडिनमहाहविरादय इति त्र्यहत्वं स्यात्॥

इत्येकादश विकृतीष्टीना सद्यस्कालत्वाधिकरणम्॥ ११॥

---

१. कर्म नास्ति. अ. २. तथा अ.

१२

ज्योतिष्टोमे सवनीयपशौ अनूयाजानामुत्कर्षश्श्रूयते। "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति। पश्विडाभक्षणान्ते [1]प्रकृतित प्राप्तान् पाशुकाननूयाजान् स्वस्थानात् प्रच्याव्याग्निमारुताख्यशस्त्रप्रचारादुत्तरकाले तैरनूयाजैः प्रचरितव्यमित्यर्थः। स्वस्थानात् प्रच्यावितस्य कतिपय[2]पदार्थान्तरानुष्ठानोत्तरकाले समावेशनमुत्कर्षः। तत्र संशय —किमिहानूयाजानामेवोत्कर्ष., न तु तदुत्तरभाविनां सूक्तवाकादीनाम्; ते तु स्वस्थान एव पश्विडाभक्षणान्ते कार्या? उत अनूयाजोत्तरकालं सूक्तवाकादयोऽप्युत्कृष्यन्ते? इति। तत्र पूर्वपक्षयति--

**अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २० ॥**

उत्कर्षविधावस्मिन् यथोक्तं-यथाश्रुतमेवोत्कर्षोऽवगन्तव्य. न तु तदुत्तरपदार्थानामपि, तेषामिहाश्रुतत्वात्। ननु प्रकृतौ सूक्तवाकादीनामनूयाजोत्तरकालकत्वादनूयाजोत्कर्षे तेषामप्युत्कर्षस्सिध्यतीत्यत आह-अङ्गाना मुख्यकालत्वादिति। अनूयाजमात्रस्योत्कर्षे सति तदुत्तरविहितानां सूक्तवाकादीनामङ्गानामिडाभक्षणान्ते स्वकाले प्रयुक्तानामेव मुख्यप्रत्यासन्नकालकत्वसम्भवात्, अन्यथात्यन्तव्यवधानापत्तेः॥

अथ सिद्धान्तयति—

**तदादि वाभिसम्बन्धात्तदन्तमपकर्षे स्यात् ॥ २१ ॥**

वा शब्दोऽवधारणे। तदादि-अनूयाजादि पदार्थजातं सर्वमेवोत्कृष्यते, न त्वनूयाजमात्रम्। कुतः? अभिसम्बन्धात्। प्रकृतौ सूक्तवाकानामनूयाजोत्तरकालसम्बन्धात्। न च प्रधानप्रत्यासत्तिविरोधश्शङ्क्यः। प्रयोगवचने हि सर्वेषामङ्गानामविशेषेण प्रधानप्रत्यासत्तिं बोधयन् युगपत् सर्वेषामङ्गाना प्रयोगाशक्तेः क्रमाकाङ्क्षाया प्रकृतिक्लृप्तक्रमाविरोधेनैव प्रधानप्रत्यासत्तिं बोधयति, न त्वन्यादृशीम्। तदुक्तम्—

'क्लृप्तश्च प्राकृतश्श्रेयान् प्रकल्प्याद्वैकृतात्क्रमात्।
न हि क्लृप्तविरोधेन कल्प्यं कल्पयितु क्षमम्'॥ इति।

---

१ प्रकृतितः नास्ति. ग.
२ पदार्थानुष्ठानोत्तर. अ.
३. तेषामुत्कर्षे . अ.

दुत्तरकालमेव प्रोक्षणावघातादीनामनुष्ठानमिति वाच्यम्। एककर्तृकत्वेनानूयाजैस्सूक्तवाकाद्युपस्थितिनियमेऽपि प्रकृते निर्वापेण प्रतिप्रस्थातृकर्तृकेणाध्वर्योः प्रोक्षणाद्युपस्थितिनियमाभावात् समाख्यया प्रोक्षणादिष्वध्वर्योरेव कर्तृत्वात्। न चाध्वर्योः प्रातरनुवाकप्रतिगरकर्मणि व्यापृतस्य कथं प्रोक्षणादिकर्तृत्वमिति वाच्यम्। प्रातरनुवाकप्रतिगरस्य वैकल्पिकत्वेन प्रतिगराभावपक्षेऽध्वर्योः प्रोक्षणादिकर्तृत्वाविरोधात्। एव[1] प्राप्ते, सिद्धान्तयति—

## *प्रवृत्त्या कृतका नाम् ॥ २२ ॥

कर्मणि क्तिन्। कृतकालानां—[2]निर्वापोत्तरनिर्ज्ञातकालकानां प्रोक्षणादीनाम्। प्रवृत्त्या-प्रवृत्तेन प्रथमोपस्थितेन निर्वपणेन, उपस्थितिनिय यात्। यद्यपि निर्वापे प्रतिप्रस्थाता कर्ता तथाप्यध्वर्योरपि तत्र सम्प्रेषितुः प्रयोजककर्तृत्वमिति निर्वापेण तस्य प्रोक्षणाद्युपस्थितिनियमान्निर्वापोत्तरमेव प्रोक्षणादयः पदार्थाः कर्तव्याः। भाष्ये तु प्रातरनुवाके समाप्ते प्रचरणीहोमात्प्राक् प्रोक्षणादय उद्वासनान्ता पदार्था अध्वर्युणा कर्तव्या', ततः प्रचरणीहोमादयस्सौमिकाः पदार्थाः कर्तव्या इति सिद्धान्तयामासुः। प्रातरनुवाककालेऽध्वर्योः प्रतिगरे व्यापृतत्वादिति तदाशय·। तदिदं भाष्यमनुपपन्नम्; प्रतिगरपक्षेऽध्वर्योस्तत्र व्यापृतत्वेन प्रोक्षणादिषु 'इतरमन्यस्तेषां यत्राविशेषस्स्यात्' इति न्यायेन ()प्रतिप्रस्थातुरध्वर्युपुरुपस्यैव कर्तृत्वापत्तौ निर्वापेण तस्य प्रोक्षणोपस्थितिसम्भवे पूर्वपक्षानुन्मेषप्रसङ्गात्। प्रातरनुवाकात्प्रागेव निर्वापप्रैषं दत्तवतोऽध्वर्यो प्रातरनुवाकप्रतिगरेण सम्प्रैपजनितनिर्वापोपस्थितेश्चिरनिर्वृत्तत्वेन निर्वपणतः प्रोक्षणाद्युपस्थित्यसम्भवेन सिद्धान्तासिद्धेश्च। तस्मात् प्रतिगराभावपक्षे उक्तरीत्यैवाधिकरणं प्रवर्तनीयम्। वस्तुतस्तु "प्रतिप्रस्थातस्सवनीयान्निर्वप" इति सम्प्रैपे निर्वपतिर्हविरुत्पादनं लक्षयति, न तु निर्वपणमेव तत्र विवक्षितम्। पयस्याया निर्वपणाभावात्। अतः प्रोक्षणादिष्वपि प्रातरनुवाककालकत्वमेव, प्रतिप्रस्थातैव च कर्ता इति याज्ञिका.। अधिकरणप्रवृत्तिस्तु चिन्त्या ॥

---

१. अविरोध इति प्राप्ते. अ, फ.

* प्रवृत्त्या कृतकालानां प्रवृत्तिशब्देनोपस्थितिनियमस्यादिति कतुस्तकसूत्रपाठ. ।

२. निर्वापोत्तरज्ञान. ग.

अलङ्करणकाले प्रोक्षणादिषु क्रियमाणेषु बाधकमप्याह—

**शब्दविप्रतिषेधाच्च ॥ २३ ॥**

अलङ्करण ( काले प्रोक्षणादिषु क्रियमाणेषु अलङ्कुर्विति शब्दो विरुध्यते । प्रोक्षणादि कुरु इत्येव प्रैष आम्नायते । तस्मात् प्रातरनुवाककाल एव ) प्रोक्षणादयः पदार्था उद्वासनान्ताः कर्तव्याः, बहिष्पवमाने स्तुतेऽलङ्करणमिति ॥

इति द्वादश प्रोक्षणादीना सौमिकपूर्वभाविताधिकरणम् ॥ १२ ॥

१३

अस्ति ज्योतिष्टोमे प्राग्वंशे शालामुखीयो नामाग्निः । अस्ति च तत्रैवासन्यामासादितस्सोमो राजा । तस्य चाग्नेरेकदेशस्याग्नीध्रमण्डपे सोमस्य च हविर्धानशकटे प्रणयनमाम्नायाग्नीषोमीयपशोस्तन्त्रमाम्नातम् "वैष्णव्यर्चा हुत्वा यूपमच्छैति यूपं छिनत्ति" इत्यादि । अच्छ अभिमुखम् एति गच्छतीत्यर्थः । तस्य च [1]यूपच्छेदनस्यापकर्षश्श्रूयते—"दीक्षासु यूपञ्छिनत्ति" इति । तदिदं यूपच्छेदनमपकृष्यमाणमग्नीषोमप्रणयनादिपूर्वपदार्थानप्यपकर्षति ? उत न ? इति संशयः । बद्धक्रमत्वाविशेषेण 'तदन्तमपकर्षं स्यादि' ति न्यायादपकर्षतीति प्राप्ते, सिद्धान्तयति—

**असंयोगात्तु वैकृतन्तदेव प्रतिकृष्येत ॥ २४ ॥**

तुर्वैपम्ये । प्रकृतिप्राप्ताः पश्वङ्गभूता· प्रयाजा अपकृष्यमाणास्तदर्वाचीनान् पश्वङ्गाघारादिपदार्थानपकर्षतीति युक्तम् । वैकृतन्तु दर्शविकारेऽग्नीषोमीयपशावुपदिष्टन्तु यूपच्छेदनम् । तदेव-श्रुतमेवापकृष्येत न [2]त्वग्नीषोमीयप्रणयनादिसौमिकपूर्वपदार्थानप्यपक्रष्टुं प्रभवति । कुतः ? [3]असंयोगात्—सौमिकपदार्थैस्सह पाशुकयूपच्छेदनस्य क्लृप्तक्रमत्वाभावात्, एकप्रयोगवचनपरिगृहीतानामेव क्रमापेक्षायां पाठादिना क्रमः कल्प्य· । ततश्च [4]भिन्नप्रयोगवचनपरिगृहीतयोरग्नीषोमप्रणयनयूपच्छेदनयो· क्रमस्यैवाकल्प्यत्वेनानङ्गतया यूपच्छेदनेनाग्नीषोमप्रणयनोपस्थित्यभावात् । [5]कथञ्चित्तदुपस्थितावपि तदपकर्षेऽप्यवैगुण्यात् । प्रत्युत प्रमाणं विना

---

( ) अपुस्तके ग्रन्थपात ,
१. यूवच्छेदस्य. अ.
२. त्वग्नीषोम. क.
३. असम्प्रयोगात्. अ
४. भिन्न वचन. अ.
५. कथञ्चिदुप. क.

तदपकर्ष एव वैगुण्याद्यूपच्छेदनस्यैवापकर्षः। महाप्रयोगवचनन्त्वपकर्षविधानानन्तरमेव प्रवर्तते, न तु ततः प्राक्। ततश्च महाप्रयोगवचनगम्यक्रमक्लृप्तेरपकर्षविधानदशायामभावान्न तत्क्रममादाय तदन्तापकर्षोऽत्र सम्भवति॥

इति त्रयोदश ज्योतिष्टोमे यूपच्छेदनमात्रापकर्षाधिकरणम्॥ १३॥

१४

अस्ति सोमे सवनीयपशुः। स च "वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने" इति वचनात् सवनत्रयव्यापी। तदीयतन्त्रमध्ये च सवनीयहवींषि विहितानि "अनुसवनं पुरोडाशा निरुप्यन्ते" इति। तेषु च सवनीयहविष्षु पाशुकान्यङ्गानि प्रयाजानूयाजादीन्युपकुर्वन्ति इति न पृथगनुष्ठेयानि। यानि तु पशावविद्यमानानि पिष्टलेपफलीकरणहोमादीनि तानि तु [1]सवनीयपुरोडाशार्थं कर्तव्यानीति द्वादशे वक्ष्यते। दर्शपूर्णमासयोश्च पेषणानुनिष्पन्नदृषदुपलाश्लिष्टलेपाना फलीकरणानुनिष्पन्नातिसूक्ष्मतण्डुलकणानाञ्च होमौ विहितौ "दक्षिणाग्नौ पिष्टलेपफलीकरणहोमौ जुहोति" इति। तौ च होमौ पशौ न प्राप्नुतः, तत्र पेषणाद्यभावात्। सवनीयपुरोडाशेषु तु तौ चोदकतः प्राप्तौ, तदर्थं कर्तव्यौ। तयोश्च होमयोरनूयाजानन्तर्यं प्रकृतौ क्लृप्तम्। सवनीयपश्वर्थाश्चानूयाजाः "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति वचनादुत्कृष्टाः। तत्र किमेतौ होमावपि तदाद्युत्कर्षन्यायाद्युत्कर्षणीयौ न वेति संशयः। भिन्नप्रयोगवचनपरिगृहीतयोरग्नीषोमप्रणयनयूपच्छेदनयोः क्रमस्याक्लृप्तत्वाद्यूपच्छेदनापकर्षेणाग्नीषोम[2]प्रणयनापकर्षणाभावेऽपि प्रकृते दाक्षिणाग्निकहोमयोरनूयाजोत्तरकालकत्वस्य प्रकृतौ दर्शपूर्णमासयोरेव क्लृप्तत्वादनूयाजोत्कर्षे तदुत्कर्षस्स्यादेव। अन्यथा वैगुण्यादिति प्राप्ते, सिद्धान्तयति—

## प्रासङ्गिकञ्च नोत्कर्षेदसंयोगात्॥ २५॥

वैकृत यूपच्छेदनमपकृष्यमाणं नाग्नीषोमप्रणयनमपकर्षतीत्युक्तम्। प्रासङ्गिकञ्च—सवनीयपुरोडाशेषु प्रसङ्गादुपकारकं पाशुकानूयाजकर्माप्युत्कृष्यमाणं [3]दाक्षिणाग्निकहोमौ नोत्कर्षेत्। कुतः? असंयोगात्—अनूयाजानां सवनीयपुरोडाशार्थतया

१. सवनीये अ, सवनीयेषु. म.   २ अग्नीषोमीय. ग.

३. दक्षिणाग्निहोमौ. अ.

अनुष्ठानसंयोगाभावात् पश्वर्थतयैव तेषामनुष्ठानात्। न च सवनीयपुरोडाशार्थतया अनूयाजानामनुष्ठानाभावेऽपि तदुपकारकत्वात्तदुत्कर्षे तयोरुत्कर्षस्स्यादिति वाच्यम्। प्रकृतौ हि स्वशेष्यर्थानूयाजानन्तर्यमेव तयोः क्लृप्तम्, न त्वन्यार्थानूयाजानन्तर्यमिति पाशुकानूयाजोत्तरकालत्वलोपेऽपि न वैगुण्यमित्यनुत्कर्षः। तस्माद्दाक्षिणाग्निकहोमादिकं[1] पौरोडाशिकं पशावविद्यमानं प्रसङ्गादुपकाराभावे सति पौरोडाशिकप्रयोगविधिना पुरोडाशार्थतया कर्तव्यत्वबोधनात्तदिडाभक्षणान्ते स्वस्थाने कार्यम्॥

इति चतुर्दश सोमे दाक्षिणाग्निकहोमानपकर्षाधिकरणम्॥ १४॥

१५

दर्शपूर्णमासयोस्तावत् "पूर्वेद्युरग्निं गृह्णाति" इत्यादिना "पुरोडाशं साङ्गारभस्मनाभिवासयति, पात्रीनिर्णेजनमाप्येभ्यो निनयति" इत्यन्तेन हविःश्रपणान्तान् पदार्थाननुक्रम्य वेदिकरणमाम्नातम्। तदधिकृत्य श्रूयते—"पूर्वेद्युरमावास्यायां वेदिं करोति" इति। तदिदं वेदिकरणमपकृष्यमाणमाप्यनिनयनान्तान् पदार्थानपकर्षति न वेति संशयः। अनूयाजानामन्यशेषित्वात्तदुत्कर्षेण दाक्षिणाग्निकहोमानुत्कर्षेऽपि प्रकृते आप्यनिनयनान्तपदार्थानां वेदिकरणस्य चैकदेशकर्मशेषितया वेदिकरणेनापकृष्यमाणेन[2] तदन्तापकर्षो युक्तः। नाप्यत्राग्नीषोमप्रणयनयूपच्छेदनयोरिव प्रयोगवचनभेदोऽस्ति। येन यूपच्छेदनेनापकृष्यमाणेनाग्नीषोमप्रणयनमिव नापकृष्येत। न च वेदिकरणस्याप्यनिनयनोत्तरकालत्वानुपदेशादक्लृप्तक्रमत्वान्नापकर्ष इति वाच्यम्, पाठतः क्रमक्लृप्तेरिति प्राप्ते, सिद्धान्तयति—

## तथापूर्वम्॥ २६॥

प्रासङ्गिकानूयाजोत्कर्षेण दाक्षिणाग्निकहोमयोर्यथा नोत्कर्षः, तथा अपूर्वं प्राकृतं वेदिकरणमपकृष्यमाणमाप्यनिनयनान्तान् पदार्थान्नापकर्षति, अक्लृप्तक्रमत्वात्। यावद्धि पाठादाप्यनिनयनोत्तरकालता वेदिकरणस्य कल्प्यते ततः प्रागेव "पूर्वेद्युरमावास्याया वेदं कृत्वा वेदिं करोति" इति क्त्वाश्रुत्या वेदिकरणापकर्षविधिप्रवृत्तेर्नापकर्षसमये क्लृप्तक्रमतेति नार्वाचीनानामपकर्षः। अस्तु वा पाठादपकर्ष-

१. होमादि. अ. क.     २. अपकृष्यमाणेन नास्ति. ग.

तदपकर्ष एव वैगुण्याद्यूपच्छेदनस्यैवापकर्षः। महाप्रयोगवचनन्त्वपकर्षविधानानन्तरमेव प्रवर्तते, न तु ततः प्राक्। ततश्च महाप्रयोगवचनगम्यक्रमक्लृप्तेरपकर्षविधानदशायामभावान्न तत्क्रममादाय तदन्तापकर्षोऽत्र सम्भवति ॥

इति त्रयोदशं ज्योतिष्टोमे यूपच्छेदनमात्रापकर्षाधिकरणम् ॥ १३ ॥

१४

अस्ति सोमे सवनीयपशुः। स च "वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने" इति वचनात् सवनत्रयव्यापी। तदीयतन्त्रमध्ये च सवनीयहवींषि विहितानि "अनुसवनं पुरोडाशा निरुप्यन्ते" इति। तेषु च सवनीयहविष्षु पाशुकान्यङ्गानि प्रयाजानूयाजादीन्युपकुर्वन्ति इति न पृथगनुष्ठेयानि। यानि तु पशावविद्यमानानि पिष्टलेपफलीकरणहोमादीनि तानि तु [1]सवनीयपुरोडाशार्थं कर्तव्यानीति द्वादशे वक्ष्यते। दर्शपूर्णमासयोश्च पेषणानुनिष्पन्नदृषदुपलाश्लिष्टलेपानां फलीकरणानुनिष्पन्नातिसूक्ष्मतण्डुलकणानाञ्च होमौ विहितौ "दक्षिणाग्नौ पिष्टलेपफलीकरणहोमौ जुहोति" इति। तौ च होमौ पशौ न प्राप्नुतः, तत्र पेषणाद्यभावात्। सवनीयपुरोडाशेषु तु तौ चोदकतः प्राप्तौ, तदर्थं कर्तव्यौ। तयोश्च होमयोरनूयाजानन्तर्यं प्रकृतौ क्लृप्तम्। सवनीयपश्वर्थाश्चानूयाजाः "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति वचनादुत्कृष्टाः। तत्र किमेतौ होमावपि तदाद्युत्कर्षन्यायादुत्कर्षणीयौ न वेति संशयः। भिन्नप्रयोगवचनपरिगृहीतयोरग्नीषोमप्रणयनयूपच्छेदनयोः क्रमस्याक्लृप्तत्वाद्यूपच्छेदनापकर्षेणाग्नीषोम[2]प्रणयनापकर्षणाभावेऽपि प्रकृते दाक्षिणाग्निकहोमयोरनूयाजोत्तरकालकत्वस्य प्रकृतौ दर्शपूर्णमासयोरेव क्लृप्तत्वादनूयाजोत्कर्षे तदुत्कर्षस्स्यादेव। अन्यथा वैगुण्यादिति प्राप्ते, सिद्धान्तयति—

## प्रासङ्गिकश्च नोत्कर्षेदसंयोगात् ॥ २५ ॥

वैकृत यूपच्छेदनमपकृष्यमाणं नाग्नीषोमप्रणयनमपकर्षतीत्युक्तम्। प्रासङ्गिकश्च—सवनीयपुरोडाशेषु प्रसङ्गादुपकारक पाशुकानूयाजकर्माप्युत्कृष्यमाणं [3]दाक्षिणाग्निकहोमौ नोत्कर्षेत्। कुतः? असंयोगात्—अनूयाजानां सवनीयपुरोडाशार्थतया

१. सवनीये अ, सवनीयेषु. क. २ अग्नीषोमीय. ग.
३. दक्षिणाग्निहोमौ. अ.

स्ताङ्गसहितप्रधानप्रयोगावधारणानन्तरमवतरति। ततश्च प्रणयनानुग्रहाय जघन्यस्य कालस्य[1] युज्यते बाधः। तस्मादग्निहोत्रकाले सान्तपनीयां समाप्य पश्चात् प्रणयनादिसमस्ताङ्गसहितमग्निहोत्रं कर्तव्यम् ॥

इतोऽप्येवमित्याह—

**अव्यवायाच्च ॥ २८ ॥**

स्वकालेऽग्निहोत्रं कृत्वा सान्तपनीया समाप्यमाना अग्निहोत्रेण व्यवेता स्यात्। तस्मादप्यग्निहोत्रस्योत्कर्षो युज्यते ॥

अथ सिद्धान्तयति—

**असम्बन्धान्नोत्कर्षेत् ॥ २९ ॥**

सान्तपनीया अग्निहोत्रं नोत्कर्षेत्, किन्तु सायमग्निहोत्रं हुत्वा पश्चात् सान्तपनीया समापनीया। कुतः ? असम्बन्धात्—भिन्नप्रयोगवचनपरिगृहीतत्वेनासम्बद्धक्रमत्वात् ॥

ननु प्रणयनानुग्रहाय जघन्यकाल एव बाधनीय इत्यत आह—

**प्रापणाच्च निमित्तस्य ॥ ३० ॥**

यद्यपि कालो जघन्योपस्थितिकमङ्गं, तथापि कालोऽनुपादेयत्वात्तस्मिन् सति कर्तव्यमिति निमित्तत्वेन प्राप्यते। तस्य च [2]कर्तृविशेषणत्वात् निमित्तवत एव कर्माधिकारादसति तस्मिन्नधिकाराभावात् प्रणयनादिसमस्ताङ्गसहितं कृतमप्यकृतं भवेत्। ततश्च कालवशेन [3]साङ्गप्रणयनाभावेऽपि इष्ट्यर्थप्रणयनेनैव तज्जन्योपकारस्य प्रसङ्गात् सिद्धेस्सायमग्निहोत्रं कृत्वा सान्तपनीया समापनीया। न चैव सति सान्तपनीयापदार्थानामग्निहोत्रेण व्यवधानात् क्रमहानिरिति वाच्यम्। कालबाधे सत्यकाले कृतस्याग्निहोत्रस्याकृतत्वापत्त्या क्रमहानेर्ज्यायस्त्वात् ॥

अथ यदुक्तं सवनवदिति, तत्राह—

**सम्बन्धात् सवनोत्कर्षः ॥ ३१ ॥**

एकप्रयोगवचनपरिग्रहात् प्रातस्सवनोत्कर्षेण तदुत्तरं सवनोत्कर्षो युज्यते।

---

१. कालस्य नास्ति. ग.　　२. कर्तव्य. क.

३. स्वप्रणयन अ, स्वाङ्गप्रणयन. क.

प्रकृते च भिन्नप्रयोगवचनपरिग्रहान्नोत्कर्षः। अतोऽग्निहोत्रं कृत्वैव सान्तपनीया समाप्या ॥

इति षोडश सान्तपनीयाधिकरणम् ॥ १६ ॥

१७

ज्योतिष्टोमे षोडशिनं प्रकृत्याम्नायते —"प्रातस्सवने उक्थं गृहीत्वा षोडशिनं गृह्णाति" इति, "तं पराञ्चमुक्थेभ्यो गृह्णाति" इति च। तृतीयसवने उक्थैः प्रचर्य षोडशिना प्रचरतीत्यर्थः। "समयाध्युषिते सूर्ये षोडशिनस्स्तोत्रमुपाकरोति" इति च। तत्र यदा दैवान्मानुषाद्वा प्रतिबन्धात् तृतीयसवने उक्थ्यप्रचारोत्कर्षोऽस्तमिते सूर्ये भवति, तदा षोडशिप्रचारः किं तदनन्तरमुत्कृष्यते ? न वा ? इति संशयः। तत्र यथा पूर्वत्राग्निहोत्रस्य स्वकालबाधादनुत्कर्षः, तथा षोडशिप्रचारोऽपि 'समयाध्युषितस्तोत्रकालबाधादनुत्कर्षमर्हति। न च समयाध्युषिते षोडशिनस्स्तोत्रं कृत्वा उक्थ्यैः प्रचर्य षोडशिना प्रचरितव्यम्। एवञ्च षोडशिप्रचारस्योक्थ्यप्रचारानन्तर्यं[1] तत्स्तोत्रस्य च स्वकाल इत्युभयमनुगृह्यत इति वाच्यम्। यदि हि षोडशिग्रहयागाभ्यास उत्कृष्येत, तदा अङ्गानां मुख्यकालत्वात्तदङ्गभूतं स्तोत्रमप्युत्कृष्येत। ततश्च तस्य समयाध्युषितकालो बाध्येत। तदनुत्कर्षे तु उक्थ्यानन्तर्यं बाध्यते। तत्तु युक्तम्, अनुपादेयकालबाधस्यायुक्तत्वात्। तस्मादुक्थ्योत्कर्षेऽपि षोडशी स्वकाले समयाध्युषित एव क्रियत इति प्राप्ते, सिद्धान्तयति—

षोडशी चोक्थ्यसंयोगात् ॥ ३२ ॥

तुपर्यायश्चकारः। अग्निहोत्रं स्वकालबाधात् न सान्तपनीयया उत्कर्षमर्हति। षोडशिप्रचारस्तूत्कृष्यते। उक्थ्यसंयोगात्—षोडशियज्याभ्यासस्य तार्तीयसवनिकोक्थ्यप्रचरानन्तर्यसंयोगात्। 'तं पराञ्चम्' इत्यत्र हि पराक्त्वन्तावदव्यवहितत्वात्मकमानन्तर्यं वा उत्तरकालकत्वं वा स्यात्। उभयथापि प्रधानाङ्गत्वात्तस्य बाधो न युज्यते। अतस्तदङ्गभूतस्तोत्रकालस्यैव बाधो युक्तः। ननु "तं पराञ्चमुक्थ्येभ्यः" इत्यत्र षोडशिग्रहणस्यैवोक्थ्यपराक्त्वं विधीयते, न तु तद्यज्यभ्यासस्य, गृह्णातेर्लक्षणाप्रसङ्गात्। ग्रहणञ्चाङ्गमेव, न तु प्रधानम्। तथा च नोक्थ्यपराक्त्वस्य

१ समयाविषोषित. अ, समयाविहीन. क, समयाविषित. ग.

प्रधानाङ्गत्वमिति चेत् न; अगृहीत्वा यागासम्भवेन 'ग्रहणस्यावदानवद्यागोपक्रमरूपतया च ग्रहणे विधीयमानस्योक्थ्यपराक्त्वस्य तद्ग्रहयज्यभ्यासे पर्यवसानादिति केचित्।

वस्तुतस्तु "प्रातस्सवने गृह्णाति इति" वचनेन षोडशिग्रहणस्य प्रातस्सवनकालया तत्र तार्तीयसवनिकोक्थ्यप्रचारपराक्त्वासम्भवेन तं पराञ्चमित्यत्र गृह्णातेः प्रचारलक्षणाया आवश्यकत्वान्न दोषः। एतेनाङ्गगुणविरोधन्यायेन गतार्थत्वन्निरस्तम्। अधिकाशङ्कापरिहारार्थत्वात्। तस्मादुक्थ्योत्कर्षे षोडशिप्रचारस्योत्कर्षस्सिद्धः॥

इति सप्तदशं ज्योतिष्टोमे षोडश्युत्कर्षाधिकरणम्॥ १७॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ पञ्चमाध्यायस्य प्रथमः पादः॥



१. अत्र 'अ' 'क' पुस्तकयोरशुद्ध पाठ उपलभ्यते।

# अथ पञ्चमाध्यायस्य द्वितीयः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

वाजपेये "सप्तदश प्राजापत्यान् पशूनालभते" इति विहितप्राजापत्यपशूनामुपाकरणनियोजनादयो धर्माश्चोदकतः प्राप्ताः । ते किमेकस्यादित आरभ्य 'सर्वान् धर्मान् कृत्वा अन्यस्यादित आरभ्य सर्वे कर्तव्याः एवमितरेषामिति काण्डानुसमयः ? उत एकस्योपाकरण कृत्वा अन्यस्योपाकरणं ततोऽन्यस्येत्येवं क्रमेण सप्तदशानामुपाकरणं कृत्वा तत्क्रमेण सप्तदशानां नियोजनम् । ततः प्रोक्षणादयोऽप्येवमिति पदार्थानुसमयः ? इति संशयः । [2]पदार्थानामेकैकस्मिन् पशौ गणशोऽनुष्ठानं काण्डानुसमय । एकैकस्य पदार्थस्य सप्तदशसु पशुषु क्रमशोऽनुष्ठानं पदार्थानुसमयः । तत्र पूर्वपक्षयति—

**सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥**

प्रधानानां-प्राजापत्ययागानां सन्निपाते-सहप्रयोगे सति गुणानाम्-उपाकरणादिधर्माणां सर्वकर्म-सर्वशः कृत्स्नशः काण्डश अनुष्ठानं स्यात, प्रयोगवचनावगतप्रत्यासत्तिवशात । न तु पदार्थानुसमय, प्रत्यासत्तिविरोधात । प्रकृतौ चोपाकरणादयो धर्मा अव्यवहिता एव स्थिता । इहापि तथैव प्राप्तुमुचिताः । ननु प्राजापत्यपशूना सम्प्रतिपन्नदेवताकत्वात् सह प्रक्षेप श्रूयते—"एकया वपया जुहोति एकदेवत्या हि एते" इति । यागानुष्ठानञ्च प्रक्षेपकालीनमिति सर्वप्रदानाधिकरणे निर्णीतमिति प्रधानानुष्ठानमपि तन्त्रेणेत्यवगतम् । तथाच कण्डानुसमयेऽपि प्रथमस्योपाकरणादीन् प्रधानानुष्ठानप्राक्तनधर्मानेकैकस्य काण्डश. कृत्वा सर्वान्ते 'प्रजापतय

---

१. सर्वधर्मान् क.　　२. पदार्थानामेकैकस्मिन्. अ.

इदं न मम'' इति प्रधानानां सहानुष्ठानं फलितम्। ततश्च पूर्वपशुयागीयगुणकाण्डस्योत्तरोत्तरगुण[1]काण्डेन व्यवधानमवर्जनीयमेव। पदार्थानुसमये तु पूर्वपूर्वपशुयागीयगुणस्योत्तरगुणेन व्यवधानम्। एवञ्च काण्डानुसमयेऽपि प्रधानव्यवधानस्यावर्जनीयत्वात् कथं प्रयोगवचनबलात् काण्डानुसमय इति चेत्—यद्यप्युभयत्राङ्गानां प्रधानव्यवधानसाम्य, तथापि पदार्थानुसमये एकपशुसम्बन्धिनामङ्गानां प्रकृतौ मिथश्श्लिष्टानां पश्वन्तराङ्गव्यवधानं दोषो भवेत्। काण्डानुसमये तु नायन्दोष इति स एवानुसर्तव्यः॥

अत सिद्धान्तयति—

## सर्वेषां वैकजातीयः कृतानुपूर्व्यात्॥ २॥

वाशब्दोऽवधारणे। सर्वेषां–सप्तदशानामपि पशूनाम् एकजातीय –उपाकरणादिपदार्थः (एकैकश एव कर्तव्य., न तु काण्डानुसमयः। कुत. ? कृतानुपूर्व्यात्–पदार्थानुसमयेन प्राप्तक्रमकत्वादित्यर्थ।) ''वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति'' इत्यत्र हि चरतिः प्रयोगवाची। प्राजापत्यैरिति तन्त्राभिधानशक्त्या च साहित्यं गम्यते। क्त्वाप्रत्ययेन च वैश्वदेव्युत्तरकालकत्वम्। तथा च वैश्वदेव्युत्तरकाले सप्तदशानामपि पशूनामुपाकरण प्राप्तमशक्यत्वात्तस्मिन् क्षण एकस्य कृत्वा तदुत्तरक्षणेष्वितरेषामपि षोडशानां क्रमेण क्रियते। तदुत्तरपदार्था नियोजनादयोऽप्येवमेव कार्याः। यद्यप्युपाकरणादीनां मिथो नैरन्तर्यं प्रकृतावस्ति, तथापि प्रत्यक्षावगतसाहित्यबलात्सदतिदेशो बाध्यते। एवमन्यत्रापि क्वचित् ''पौर्णमास्या पौर्णमास्या यजेत'' इति कालविधानेन, क्वचित् ''प्राचीनप्रवणे वैश्वदेवेन यजेत'' इति देशविधानेन, क्वचित् ''स्वर्गकामो यजेत'' इत्यादिफलवाक्यावगतमन्त्राभिधानानुसारिप्रयोगवचनेनैकादशे वक्ष्यमाणरीत्या प्रधानानां साङ्गानां साहित्यावगमात्तन्निर्वाहाय निर्वपणादिषु पदार्थानुसमय एवादर्तव्यः॥

इति प्रथमं पदार्थानुसमयाधिकरणम्॥ १॥

---

१. काण्डमवर्जनीयमेव. अ.

( ) अपुस्तके ग्रन्थपात

२

"यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत" इति विहिता इष्टिर्यदा शताद्यश्वप्रतिग्रहे शतादिहविष्का भवति तदा निर्वपणादिवदधिश्रयणप्रथनादिकमुद्वासनान्तं पूर्वाधिकरणरीत्या पदार्थानुसमयेनेति प्राप्ते, सिद्धान्तयति—

**कारणादभ्यावृत्तिः ॥ ३ ॥**

यदि पदार्थानुसमयेनात्र प्रथनादि क्रियेत, तर्हि प्रथमादिक्रमेण शततमे पुरोडाशेऽधिश्रिते प्रथमादिक्रमेणाधिश्रयण[1]प्रथनाङ्गाराध्यूहनादि कार्यं स्यात्। तत्र शततमस्याधिश्रयणे कृते प्रथमादयश्शुष्येयु. ततः प्रथनं कर्तुं न शक्येत। शततमस्याङ्गाराध्यूहने कृते प्रथमादयो दह्येरन्। ततश्च प्रधानविरोधात् कारणादिहाधिश्रयणाद्युद्वासनान्तस्य काण्डश एवाभ्यावृत्ति कार्या। शतग्रहणञ्चाविवक्षितम्। यावत्सु पुरोडाशेषु पदार्थानुसमये प्रधानविरोधस्तावत्सु काण्डानुसमय आदर्तव्यः। दर्शपूर्णमासादिषु तु द्वित्रादिपुरोडाशकेषु विरोधाभावान् पदार्थानुसमय एव ॥

इति द्वितीयं पदार्थानुसमयापवादाधिकरणम् ॥ २ ॥

३

तत्रैवं बाधकाभावे सति पदार्थानुसमय इति स्थितम्। इदानीं कियानेक पदार्थ इति चिन्त्यते। दर्शपूर्णमासयोश्श्रूयते—"चतुरो मुष्टीन्निर्वपति" इति, "कपालान्युपदधाति" इति, "मध्यादवद्यति पूर्वार्द्धादवद्यति" इति च। तत्र किमाग्नेयस्य प्रथमं मुष्टिं निरुप्याग्नोषोमीयस्य प्रथमं मुष्टिं निर्वपति, तत आग्नेयस्य द्वितीय मुष्टिं निरुप्याग्नीषोमीयस्य द्वितीय मुष्टिं निर्वपति। एव तृतीयञ्चतुर्थञ्च मुष्टिमित्येवमेकैकमुष्ट्यनुसमयः; तथाग्नेयस्य ( प्रथमकपालमुपधायाग्नीषोमीयस्य प्रथमकपालमुपदधाति, तत आग्नेयस्य द्वितीयकपालमुपधायाग्नीषोमीयस्य द्वितीयकपालमुपदधाति, एव तृतीयादीनीत्येवमेकैककपालानुसमय. ); तथाग्नेयस्य मध्यादवदायाग्नीषोमीयस्य मध्यादवद्यति, तत आग्नेयस्य पूर्वार्द्धादवदायाग्नीषोमीयस्य पूर्वार्द्धादवद्यतीत्येकैकावदानानुसमयः ? उत आग्नेयस्य चतुरो मुष्टीन्निरुप्याग्नीषोमीयस्य

१. प्रथनाङ्गारोद्वहनादि. अ.

( ) 'अ क' पुस्तकयोर्ग्रन्थपातः.

चतुरो मुष्टीन्निर्वपतीति चतुर्मुष्ट्यनुसमयः; तथाग्नेयस्याष्टौ कपालान्युपधायाग्नीषोमीयस्यैकादशकपालान्युपदधातीति कृत्स्नकपालानुसमयः; तथाग्नेयस्य द्विरवदायाग्नीषोमीयस्य द्विरवद्यतीति द्विरवदानानुसमयः ? इति त्रयस्संशयाः। तथा ज्योतिष्टोमे श्रूयते—"त्रिराङ्क्ते त्रिरभ्यङ्क्ते त्रिर्वपते उपपक्षावग्रेऽथ श्मश्रूण्यथ केशान्, एकविंशत्या दर्भपुञ्जीलैः पवयति" इति। एतानि चाञ्जनादीनि चोदकतो बहुयजमानके सत्रे प्राप्नुवन्ति। तत्र किमेकस्य यजमानस्य प्रथमाञ्जनं कृत्वान्यस्य प्रथमाञ्जनं ततोऽन्यस्य, ततः प्रथमस्य द्वितीयाञ्जनं कृत्वान्यस्य द्वितीयाञ्जनमित्येवमेकैकाञ्जनानुसमयः, एवमभ्यञ्जनस्यापि;तथा प्रथमो यजमान उपपक्षवापनं कृत्वा द्वितीय उपपक्षवापनं करोति, ततस्तृतीयादय ; तत प्रथमादिक्रमेण श्मश्रुवापनं ततस्तेनैव क्रमेण केशवापनमित्येवमेकैकवापनानुसमयः; तथा एकैकेन दर्भपुञ्जीलेनैकैकं पवयित्वा पुनरन्येनैकैकेनैकैकं पवयतीत्येवमेकैकदर्भपुञ्जीलपावनानुसमयः ? इति चत्वारस्संशयाः। तत्र पूर्वपक्षयति—

**मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ ४ ॥**

"चतुरो मुष्टीन्निर्वपति" इत्यादिष्वेकेन मुष्ट्यादिना अनुसमयः, न तु चतुर्मुष्ट्यादिना; एकैकमुष्टिनिर्वापादेर्लोके प्रयत्नतो भेदावगमेन पृथक्पदार्थत्वात् ॥

अथ सिद्धान्तयति—

**सर्वाणि त्वैककर्म्यादेतेषान्तद्गुणत्वात् ॥ ५ ॥**

तुः पूर्वपक्षव्यावृत्तौ। सर्वाणि-समस्तानि चतुर्मुष्ट्यादीन्येवानुसमेतव्यानि, न त्वेकैकमुष्ट्यादीनि। कुतः ? ऐककर्म्यात् चतुर्मुष्टिनिर्वापादीनामेवैकैकपदार्थत्वात्। यद्यपि निर्वापो लोके स्वरूपतो भेदेनावगम्यते, 'तथापि न पदार्थत्वेन, अङ्गत्वपर्यायपदार्थत्वस्य शास्त्रैकसमधिगम्यत्वात्। विहितमेव²ह्यङ्गं भवति। चतुर्मुष्टिनिर्वाप एव च विधीयते "चतुरो मुष्टीन्निर्वपति" इति। अत्र हि निर्वापानुवादेन गुणविधिर्न भवति, निर्वापस्याप्राप्तत्वात्। न च निर्वापस्य धान्यराशितो यागोपयुक्तमात्रपृथक्करणात्मकत्वादर्थादेव तत्प्राप्तिरिति वाच्यम्। यत्र यागोपयुक्तमात्रा व्रीहय नाधिकास्तत्र निर्वापस्याप्राप्तेरवश्यविधेयत्वात्। अत एव च निर्वापानुवादेन मुष्टिविधिरपि न भवति। निर्वापस्याप्राप्तत्वेन तदनुवादायोगात्। नापि

---

१. न तथापि ग.    २. हि नास्ति अ, क.

मुष्ट्यनुवादेन सङ्ख्याविधिर्निर्वापविधिर्वा, मुष्टीनामप्राप्तत्वात्। अतो द्वितीयां सक्तुन्यायेन भङ्क्त्वा चतुर्भिर्मुष्टिभिर्निर्वपेदिति सङ्ख्यामुष्ट्युभयविशिष्टनिर्वापविधानाच्चतुर्मुष्टिनिर्वाप एवात्र विधीयत इति तावानेक पदार्थः, न त्वेकैकमुष्टिनिर्वापः। कुत ? एतेषां तद्गुणत्वात्—एतेषाञ्चतुर्णां मुष्टीना तद्गुणत्वात् चतुर्मुष्टिनिर्वापावयवत्वात्। प्रयोगविधिर्ह्यङ्गग्राहित्वादङ्गपौर्वापर्यमेवापेक्षते, न तु तदेकदेशपौर्वापर्यमपि। तथा कपालानामुपधानसंस्कार्यत्वमङ्गत्ववेषेण, न तु कपालत्ववेषेण। अङ्गत्वञ्च तेषामष्टाकपालमिति मिलितानामवगम्यते, न प्रत्येकमिति। व्रीहीणां प्रोक्षणादिकमिव मिलितानामेव कपालानामुपधानसंस्कारः। अतस्तथैवानुसमयः। "मध्यादवद्यति, पूर्वार्द्धादवद्यति" इत्यत्र च "द्विर्हविशेषोऽवद्यति" इति विहितावदानानुवादेन देशमात्रं विधीयते, न त्ववदानमिति नैकैकावदानं शास्त्रार्थः, किन्तु द्विरवदानमिति तेनैवानुसमयः। "त्रिराङ्क्ते" इत्यादिषु च तत्सङ्ख्यायुक्तानामेवाञ्जनादीनां विधानात्तथैवानुसमय ॥

इति तृतीय मुष्टिकपालाद्यनुसमयाधिकरणम् ॥ ३ ॥

४

पूर्वत्र नैकैकावदानेनानुसमय इति स्थितम्। तर्हि किं द्विरवदानेन केवलेनानुसमय ? उत होमान्तेन ? इति संशय । "द्विर्हविषोऽवद्यति" इति द्विरवदानस्य विहितत्वात्तावानेव पदार्थ इति तेनैवानुसमय इति प्राप्ते, सिद्धान्तयति—

**संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥**

न केवलं द्विरवदान पदार्थ किन्तु होमान्तमेव द्विरवदानम्। कुतः ? संयुक्ते इतरस्य प्रक्रमात्। इतरस्य—'उपस्तृणाति, द्विर्हविषोऽवद्यति, अभिघारयति' इति चतुरवदानस्य चतुरवत्तरूपसंस्कार्यसंयुक्तहोमे आद्यावयवत्वेन विधानात्। ननु होमवदवदानानामपि द्रव्यसंस्कारत्वात् कथन्तेषां होमावयवत्वमित्यत आह—तदर्थत्वादिति। होमेन चतुरवत्तसंस्कारस्यावदानं विनानुपपत्त्या सामर्थ्यादेव तस्य होमार्थतया तदवयवत्व सम्भवतीति भाव इति भाष्यानुसारी पन्थाः। वार्तिककृतस्तु "द्विर्हविषोऽवद्यति" इत्यत्र द्विरित्येव विधीयते, न तु हविष इति, "चतुरवत्तञ्जुहोति" इत्यनेनैव तत्प्राप्तेः। तत्र हि[1] जुहोतीति प्रक्षेपाधिकयागवाचिना देवतोद्देश्यकत्यागा-

1. हि नास्ति. अ.

शानुवादेन प्रक्षेपावत्तसंस्कारो विधीयते। स च प्रक्षेपो हविष एव सकाशादवत्तस्य भवति, नान्यस्मात्। अन्यथा देवतोद्देश्यकत्यागाप्राप्त्या तदनुवादायोगात्। एवञ्च हविष इति न विधेयम्। तथा अवद्यतीत्यपि न विधेयम्। चतुरवत्तवाक्येऽवदान-विशिष्टहोमविधिबलेनार्थादवदानस्य विशेषणस्य प्राप्तेः। अतो द्विरित्येव विधेयमिति न द्विरवदानं पदार्थः, किन्त्ववदानादिहोमान्तमेवेति तेनैवानुसमय इत्याहुः। सूत्रार्थस्तु—अवदानसंयुक्ते होमे विधीयमानेऽवदानस्य होमार्थत्वादवदानेनैव होम-प्रक्रमादवदानादिहोमान्तमेव पदार्थस्स्यात्, न तु द्व्यवदानमिति प्रत्येतव्यः।

ननु पूर्वाधिकरणे द्व्यवदानं पदार्थ इत्युक्तम्। इह तु द्व्यवदानन्न पदार्थ इत्युच्यत इति विरुद्धमेतदिति चेन्न; पूर्वाधिकरणे हि एकैकावदानन्न पदार्थ इत्येतावदेव विवक्षितम्। ( इह तु द्व्यवदानन्न पदार्थ इति वर्ण्यत इति न दोषः। वस्तुतस्तु पूर्वाधिकरणसूत्रस्थमवदानपदमिडावदानपरम्। 'दक्षिणार्द्धान् प्रथममिडामवद्यति सम्भेदात् द्वितीयम्' इत्येकैकावदान पदार्थ इति पूर्व पक्षः। "सर्वेभ्यो हविर्भ्यो द्विर्द्विरिडामवद्यति" ) इति विहितत्वात् द्व्यदानं पदार्थ। दक्षिणार्द्धादित्यादि[ तु ]देश-विधानमिति सिद्धान्त इति युक्तमित्यलम्॥

इति चतुर्थं द्व्यवदानानुसमयाधिकरणम्॥ ४॥

५

अग्नीषोमीये पशौ यूपधर्माः श्रुताः—"यूपमनक्ति" "यूपमुच्छ्रयति" "यूपं सम्मिनोति" "यूपं परिव्ययति" इत्यादयः। ते तावद्यूपैकादशिन्याञ्चोदकतः प्राप्ताः। तत्र किमञ्जनादीनामेकैकेनानुसमयः? उताञ्जनादिपरिव्याणान्तेन? इति संशये, सिद्धान्तेनोपक्रमते—

**वचनात्तु परिव्याणान्तमञ्जनादि॥ ७॥**

यद्यप्यञ्जनादय[१] पृथक्पदार्थाः, तथापि अञ्जनादिपरिव्याणान्तं काण्डमेकैकस्यानुसमेतव्यम्। कुतः? 'आञ्जनादि यूप यजमानो नोत्सृजत्या परिव्याणात्' इति वचनात्। न ह्येकादशसु यूपेषु पदार्थानुसमयेनाञ्जनादिषु क्रियमाणेषु 'यजमानान्वारम्भस्सम्भवतीति॥

( ) चिह्नान्तर्गतो भागः स्खलित- अपुस्तके. १. यजमानस्य. ग.

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**[1]कारणाद्वानवसर्गस्स्याद्य पात्रविवृद्धिः ॥ ८ ॥**

वा शब्दः प्रत्यवस्थाने। अन्वारम्भस्ता यूपैकादशिन्यामुपदिष्टः, किन्तु प्रकृतावग्नीषोमीयपशावुपदेशः। स चानुवादमात्रम्। अन्येनाधृते यूपे अञ्जनादीनामसुकरतया अञ्जनादीन् कुर्वतोऽध्वर्योस्साहाय्याचरणाय तस्यार्थप्राप्तत्वात्। न चार्थिकं चोदकः प्रतिदिशति। न चातिदेशाभावेऽपि प्रकृतिवत् साहाय्यकरणाय तदन्वारम्भस्य प्राप्तत्वान्न प्रत्येकानुसमय इति वाच्यम्। विकृतौ प्रयोगवचनावगतसाहित्येन पदार्थानुसमयस्य न्याय्यत्वे सति तद्विरोधेन कारणेन साहाय्यकरणसौकर्यायात्रान्वारम्भस्यानादर्तव्यत्वात्। ततश्च पदार्थानुसमयभङ्गात् [2]कारणादत्रानवसर्गः—अनन्वारम्भः स्यात्। यथा "पृषदाज्येनानूयाजान्यजति" इति पृषदाज्यस्यैकस्मिन् पात्रे उपभृति प्रयाजार्थेन केवलाज्येन सह ग्रहणविरोधात् पात्रविवृद्धिः—उपभृद्भेदः, तद्वत् ॥

अथ सिद्धान्ती प्रत्याचष्टे—

**न वा शब्दकृतत्वान्न्य मात्रमितरदर्थात् पात्रविवृद्धिः ॥ ९ ॥**

वा शब्दोऽवधारणे। नैवात्र पदार्थानुसमयः, किन्त्वञ्जनादिपरिव्याणान्तमेकैकस्य[3] भवति। कुतः? शब्दकृतत्वात्—प्रकृतौ याजमानस्य यूपान्वारम्भस्य वाचनिकत्वात्। न हि प्रकृतौ तदन्वारम्भणमार्थिकं, येन [ तद् यूपगणे ना ] तिदिश्येत। अध्वर्योरतिकुशलत्वे सति सहायानपेक्षणेन, प्रतिप्रस्थात्त्रादिना अन्येनापि सहायकरणसम्भवेन च याजमानस्यान्वारम्भस्य प्रकृतौ नियमतोऽप्राप्ततया तद्विधानावश्यम्भावात्। नन्वेवमप्यन्वारम्भ(विधेरदृष्टार्थत्व स्यादित्यत आह—न्यायमात्रमितरदिति। न्यायेति कर्मणि घञ्। इतरन सहायकरणाय प्राप्तमन्वारम्भ)ण न्यायमात्रम्—अर्थादेव लभ्यमित्यन्वारम्भवचनमनुवादो भवेत्। तत्र 'नोत्सृजेत्' इति विधिप्रत्ययश्रवणमनर्थकमेव स्यात्। ततश्च प्रकृतौ यूपान्वारम्भस्य विहितत्वात्तस्य च यूपगणेऽतिदेशात्तदनुरोधेनाञ्जना-

---

१. कारणाद्वावसर्गं.    २. कारणादत्रावसर्गं अन्वारम्भ· क.

३. एकैक सम्भवति क.

( ) अपुस्तके ग्रन्थपात·.

दिपरिव्याणान्तं काण्डमेकैकस्य भवति। पृषदाज्ये तु—उपभृल्लक्षणपात्रभेदोऽर्थाद् भवति। केवलाज्यग्रहणस्य पृषदाज्यग्रहणस्य चैकस्यामुपभृत्यनुपपत्तेः। नैवमग्नीषोमीये पशौ यजमानानन्वारब्धस्य यूपस्याञ्जनादिकं नोपपद्यत इत्यस्ति, येन तदन्वारम्भस्यार्थिकत्वं स्यात्, यूपगणे च नातिदेशस्स्यात्, न विरुध्येत च पदार्थानुसमय इति वैषम्यम्। वेञो ल्युटि आत्वे परिव्याणमिति रूपम्। व्ययगताविति धातोः परिव्ययणमिति रूपम्॥

इति पञ्चममञ्जनादीनां पशुगणे काण्डानुसमयाधिकरणम्॥ ५॥

६

दर्शपूर्णमासयोराग्नेयादीनामेकैकस्यावदानादि होमान्तं कृत्वा सौविष्टकृतस्य समवदानादि होमान्तमिति स्थितिः। ततश्चाग्नीषोमीये पशौ हृदयादिहविर्योगे चोदकतस्तथैव प्राप्तम्। तत्रेदमाम्नायते "दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति, सौविष्टकृतान्यवदाय न तावत्येव होतव्यम्[1] ऐडान्यवद्यति" इति। तथा च हृदयादीनां दैवतान्यवदाय त्र्यङ्गाणां सौविष्टकृतान्यवदाय अवशिष्टहृदयादीनामैडान्यवदाय दैवतानि हुत्वा सौविष्टकृतानि जुहोतीत्यग्नीषोमीयपशौ स्थितिः। ततश्च वाजपेयिकसप्तदशप्राजापत्यपशौ[2] हृदयादिहविर्योगेषु किमेकैकस्य पशोर्दैवतान्यवदाय तत एकैकस्य सौविष्टकृतान्यवद्यति, तत एकैकस्यैडान्यवद्यति, तत एकैकदैवतानि हुत्वा सौविष्टकृतानि जुहोतीत्येकदैवतसौविष्टकृतैडावदानैरनुसमयः? उत सर्वेषां दैवतान्यवदाय ततस्सौविष्टकृतानि तत ऐडानीत्येवं दैवतैर्दैवतानामनुसमयस्सौविष्टकृतैस्सौविष्टकृतानामैडैरैडानाम्? इति संशये पूर्वपक्षयति—

## पशुगणे तस्य तस्यापवर्जयेत् पश्वेकत्वात्॥ १०॥

प्राजापत्यपशुगणे तस्य तस्यैकैकस्य पशोः दैवताद्यवदानत्रिकमपवर्जयेत्—काण्डशः कुर्यात्। कुतः? पश्वेकत्वात् प्राजापत्यपशूनां प्रत्येकमेकत्वात्। तावग्नीषोमीयपशावेकस्मिन् दैवताद्यवदानत्रिकस्य काण्डश एव दर्शनादत्रापि चोदकत एकैकत्र तथैव प्राप्ते। यदि ह्येकैकस्य [3]पशोर्दैवतान्यवदायैकैकस्य सौविष्टकृतान्य-

१. पौरोडाशिकान्यवद्यति क. २. पशुहृदयादि. क.
३. पशो. नास्ति. अ.

वदाय तथैवैडान्यवदीयेरन्, तदा दैवतान्यवदाय सौविष्टकृतान्यवद्यति सौविष्टकृतान्यवदायैडान्यवद्यतीति प्रथमस्य[1] पशोरवदानानामानन्तर्यञ्चोदकप्राप्तं बाध्येत। तस्मादिह काण्डानुसमयः॥

अथ सिद्धान्तयति—

## दैवतैर्वैककर्म्यात् ॥ ११ ॥

वाशब्दोऽवधारणे। दैवतैरित्युपलक्षणम्। दैवतैरवदानैर्दैवतानां सौविष्टकृतैस्सौविष्टकृतानामैडैरैडानामिति पदार्थानुसमय एव भवति, न तु काण्डानुसमयः। कुतः? ऐककर्म्यात् "वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति" इति प्राजापत्याना सहप्रयोगस्य पादादावुपपादितत्वात्। प्रकृतौ ह्यवदानानामानन्तर्यं न वाचनिकम्। दैवतान्यवदायेति सौविष्टकृतान्यवदायेति च ल्यपो न तावत्येव होतव्यमित्यनेनान्विततया अवदानस्य न्यायप्राप्तप्रदानान्ततानिषेधोपक्षीणत्वेन तस्य दैवताद्यवदानानन्तर्यप्रतिपादनाशक्तेः। न चैवमपि प्रकृतौ प्रयोगवचनेनानन्तर्यबोधनाद्वाचनिकमेव तदानन्तर्यमिति वाच्यम्। प्रयोगवचनस्य हि दैवतसौविष्टकृतत्वादिविशेषेणानन्तर्ये न तात्पर्यम् किन्तु सकलपदार्थग्राहिणस्तस्य ये स्वग्राह्यपदार्थास्ते निरन्तरं कर्तव्या इत्येतावन्मात्रे[2]। तत्र च प्रकृतौ पशोरेकत्वात्तदवदानानां दैवतत्वादिप्रातिस्विकरूपेणानन्तर्यमर्थात् सम्पन्नम्। न तदिहार्थिकत्वाच्चोदकतः प्राप्येत। अतः प्रयोगवचनावगतसाहित्यसम्पत्तये पदार्थानुसमय एवादर्तव्यः। स्फुटं फलम्॥

फलान्तरमप्याह—

## मन्त्रस्य चार्थवत्वात् ॥ १२ ॥

अवदानानां पदार्थानुसमये सति "त्वं ह्यग्ने प्रथमो मनोता" इति मनोतासूक्तानुवचनस्य दैवतावदानार्थस्य सकृत्कृतस्यैवार्थवत्वं भविष्यति, कालैक्यात्। काण्डानुसमये तु कालभेदात्तदावृत्तिस्स्यात्। कालभेदे तदावृत्तेरेकादशान्ते वक्ष्यमाणत्वात्॥

इति पशु प्राजापत्यपशुषु दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ॥ ६ ॥

---

१. प्रथमपशोः अ, फ.

२. इत्येतावानत्र क.

७

अस्ति राजसूये[1] नानाधान्येष्टिः । "अग्नये गृहपतये पुरोडाशमष्टाकपालन्निर्वपति कृष्णानां व्रीहीणां, सोमाय वनस्पतये श्यामाकञ्चरुं, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणां, रुद्राय पशुपतये गावीधुकञ्चरुं, बृहस्पतये[2] वाचस्पतये नैवारञ्चरुं, इन्द्राय ज्यैष्ठ्याय पुरोडाशमेकादशकपालं महाव्रीहीणां, मित्राय सत्याय यवानाञ्चरुं, वरुणाय धर्मपतये यवमयञ्चरुम्" इति । दर्शपूर्णमासयोश्च श्रुतम् "कृष्णाजिनमास्तृणाति, तस्मिन्नुलूखलमधिवर्तयति, तस्मिन् बीजान्यावपति, मुसलमादत्ते, अवहन्ति, शूर्पमुद्वपति, शूर्पेण परापुनाति, विविनक्ति, पात्र्यां तण्डुलान् प्रस्कन्दयति, त्रिःफलीकरोति" इति । तदिमानि कृष्णाजिनोलूखलमुसलानि किं नानाबीजेषु प्रतिबीजं भिद्यन्ते ? उत न भिद्यन्ते तन्त्रेणैवोपकुर्वन्ति ? इति संशये, सिद्धान्तेनोपक्रमते—

**नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥**

उलूखलमित्युपलक्षणम् । नानाबीजेषु एकमुलूखलं कृष्णाजिनं मुसलञ्च, न तु प्रतिबीज भिद्यन्ते । कुतः ? विभवात्—तन्त्रेणोपकारसम्भवात् । न चैकस्मिन्नुलूखले कथन्नानाबीजानामवघातसम्भव, साङ्कर्यप्रसङ्गादिति वाच्यम् । एकस्य बीजस्य कृष्णाजिनास्तरणादि पात्र्यां तण्डुलप्रस्कन्दनान्तं कृत्वा द्वितीयबीजस्योलूखले आवपनादि प्रस्कन्दनान्तम्, एवमन्येषामपि बीजानामित्येवमावपनादि प्रस्कन्दनान्तकाण्डानुसमये सति साङ्कर्याभावात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात् ॥ १४ ॥**

वा शब्द. प्रत्यवस्थाने । कृष्णाजिनोलूखलमुसलानां विवृद्धिः—प्रतिबीजं भेद एव स्यात् । कुतः ? नियमादानुपूर्व्यस्य—पदार्थानुसमयेनानुष्ठानक्रमस्य पादादौ नियमात्—नियमनात् । कृष्णाजिनास्तरणोलूखलाधिवर्तनादयश्च पृथक्पदार्थाः । कुतः ? तदर्थत्वात्—'कृष्णाजिनमास्तृणाति, उलूखलमधिवर्तयति' इत्यादिपदैस्तेषां पृथगेवाभिधेयत्वात्, विधिभेदेन पृथक्पदार्थत्वादिति यावत् । ततश्चैकस्य कृष्णा-

१. राजसूयेषु ग. २. वाचस्पतये नास्ति ग.

जिनास्तरणं कृत्वान्यस्य तत् कर्तव्यं, तत इतरस्येत्येवं प्रतिबीजं[1] कृष्णाजिनास्तरणं पृथक् कर्तव्यम्। एवमुलूखलाधिवर्तनाद्यपि। तच्च कृष्णाजिनादिभेदे सत्येव घटते, नान्यथा। तस्मात् प्रतिबीजं कृष्णाजिनादि भिद्यते ॥

अथ सिद्धान्ती परिहरति--

**एकं वातण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥**

वा शब्दोऽवधारणे। कृष्णाजिनास्तरणप्रभृति आतण्डुलभावात्--तण्डुलनिष्पत्तिपर्यन्तमवहननं प्रत्येतव्यं, न तु मुसलाघातमात्रम्। कुतः ? हन्तेस्तदर्थत्वात्-अवघातस्य तण्डुलनिष्पत्त्यर्थत्वात्। "व्रीहीनवहन्ति" इत्यत्र हि[2] अवहननेन व्रीहीन् तण्डुलीकुर्यादिति विधीयते, [3]न त्ववहननस्वरूपमात्रं विधीयते। तथा सति सर्वौषधावहननवददृष्टार्थत्वप्रसङ्गात्। एवञ्चावहननकरणकतण्डुलभावनायाः पदार्थत्वे कृष्णाजिनास्तरणादीनां तदवयवत्वेन स्वातन्त्र्याभावान्न पृथक्पदार्थत्वम्। यथा-अवदानस्य विधिभेदेऽपि होमावयवत्वान्न पृथक्पदार्थत्वं तद्वत्। न च दृष्टार्थत्वमात्रेणावयवत्वेऽवहननादेर्यागावयवत्वापत्तावत्रवघातादियागान्तेनानुसमयस्स्यादिति वाच्यम्, वैषम्यात्। यथा अधिश्रयणप्रभृत्य [वस्रावण] पर्यन्तव्यापारः पचेरर्थः, तथा कृष्णाजिनास्तरणादितण्डुलनिष्पत्तिपर्यन्तव्यापारोऽवहन्तेरर्थ इति कृष्णाजिनास्तरणादीनां तण्डुलभावनावयवत्वम्। अवहननादेस्तु देवतोद्देश्यकद्रव्यत्यागात्मकयागशब्दार्थासस्पर्शान्न तदवयवत्वमिति। एतेन 'संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात्' इत्यधिकरणेन गतार्थत्वन्निरस्तम्, अधिकशङ्कापरिहारार्थत्वात्। तदेवं कृष्णाजिनास्तरणादि. पात्र्यां तण्डुलप्रस्कन्दनान्त एकः पदार्थः। तत्र कृष्णाजिनास्तरणमुलूखलाधिवर्तनञ्च सकृत्कृतमेवोपकरोति। बीजावापनादिप्रस्कन्दनान्तन्तु काण्डं प्रतिबीजमावर्तते सामर्थ्यादिति भाष्यानुसारी पन्थाः, याज्ञिकाश्चैवम्। केचित्तु कृष्णाजिनास्तरणादिफलीकरणान्तोऽवहन्त्यर्थ इति तदन्तेनानुसमयमाहुः, तन्न; वितुषीकरणेन तण्डुलनिष्पत्तेरवहननफलत्वात्। निष्पन्नेषु तण्डुलेषु तन्निर्मूलकरणफलकमुसलाघातस्यैव फलीकरणशब्दार्थत्वात्, अन्यथा प्रक्षालनस्यापि तदन्तर्भावापत्तिः ॥

इति सप्तमं नानाबीजेष्ट्यधिकरणम् ॥ ७ ॥

---

१. प्रतिबीज नास्ति. क. २. हि नास्ति. अ.

३. वाक्यमिद नास्ति. अ.

८

दर्शपूर्णमासयोः "अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्" इति प्रयाजार्थचतुर्गृहीतद्वयमेकस्यामुपभृति सहगृहीतम्, तथैवाग्नीषोमीयपशौ प्राप्तम्। तत्र श्रूयते—"पृषदाज्येनानूयाजान् यजति" इति। दधिमिश्रमाज्यं पृषदाज्यमित्युच्यते। तत्र प्रयाजार्थं केवलमाज्यमनूयाजार्थं पृषदाज्यञ्चैकस्यामेवोपभृति ग्राह्यम्? उत उभयोरुपभृतोः पृथक्? इति संशये[1] चोदकादेकस्यामिति ब्रूमः। नन्वेवं सत्युभयोरसाङ्कर्यापत्तिः। न च मर्यादाकरणेन[2] ग्राहकद्वययुक्तायामेकस्यामुपभृति ग्रहणे सति न साङ्कर्यमिति वाच्यम्। मर्यादाकरणे सति पाणिमात्रैकपुष्करत्वबाधापत्त्या जुह्वा समानयनसमये पृषदाज्यस्यापि प्रच्यवे सति साङ्कर्यापत्त्या च यथाप्रकृत्येकस्यामुपभृत्युभयोर्ग्रहणासम्भवादिति चेन्न; उपभृति प्रयाजार्थमाज्यं गृहीत्वा प्रयाजेषु हुतेषु तत्रैव पृषदाज्यग्रहणे बाधकाभावात्। न चैवं सति प्राकृतक्रमबाध इति वाच्यम्। एकत्वं हि 'अष्टावुपभृति' इति श्रुतम्, पदार्थश्च। क्रमस्तु पदार्थानां गुणः, पाठकल्प्यश्च। ततः प्राकृतक्रममुपेक्ष्यैकस्यामेवोपभृति कालभेदेनोभयोराज्ययोर्ग्रहणमिति प्राप्ते, सिद्धान्तयति—

**विकारे त्वनूयाजानां पात्रभेदोऽर्थभेदात् स्यात् ॥ १६ ॥**

तुर्वैषम्ये। नानाबीजेषु विभवान्मा भूदुलूखलादिभेदः। दर्शविकारे त्वग्नीषोमीयपशावनूयाजानां सम्बन्धिनः पृषदाज्यस्य ग्रहणे उपभृद्भेदस्स्यादेव। कुतः? अर्थभेदात्—[3]प्रयाजार्थाज्यात् पृषदाज्यस्य भेदात्। न हि भिन्नयोस्तयोरेकत्र ग्रहणं सम्भवति, साङ्कर्यप्रसङ्गात्। न तावदुपभृदेकत्वं पदार्थः, नापि क्रमः। उभयोरपि ग्रहणाङ्गत्वात्। ततश्च परस्परं गुणप्रधानत्वाभावादुभयोस्तुल्यत्वमेव। अश्रौतत्वमपि, पाठक्रमकल्प्यक्रमवदुपभृदेकवस्याप्यविशिष्टम्। उपभृदेकत्वं हि प्रकृतावेव श्रुतं, न त्वग्नीषोमीये पशौ। न च शास्त्राणामप्यतिदेशाद्विकृतावप्युपभृदेकत्वं श्रुतमेवेति वाच्यम्, विकृतावुपकारमुखेन सर्वपदार्थप्राप्त्यनन्तरमेव तत्पृष्ठभावेन शास्त्रातिदेशाभ्युपगमेन[4] तत्र सतोऽपि श्रौतत्वस्य प्राबल्यहेतुत्वाभावात्। ततश्चात्र प्राकृतस्योपभृ-

---

१. सशय अ, क.  २ ग्रहणेन. अ.

३. प्रयाजार्थाज्यात् नास्ति. अ.  ४. अतिदेशाधिगमेन अ.

देकत्वस्य क्रमस्य चाविशेषे सति प्रयाजाज्यग्रहणानन्तरमुपस्थितानूयाजाज्यग्रहणे बाधकाभावात्तदैवोपभृदन्तरे ग्राह्यम् ॥

इत्यष्टमं पाशुकप्रयाजानूयाजयोः पात्रभेदाधिकरणम् ॥ ८ ॥

९

सन्ति नक्षत्रेष्टयः—"अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालन्निर्वपेत्" इत्यद्‌यः। सन्ति च तासूपहोमाः—"सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यस्स्वाहा" इत्यादयः। ते किं प्रधानानन्तरं प्रकृतिप्राप्तनारिष्ठाख्यानुपहोमान् हुत्वा होतव्याः? उत प्रधानानन्तरमेतान् हुत्वा नारिष्ठहोमा होतव्याः? इति संशये, सिद्धान्तेनोपक्रमते—

**प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥**

हि यत, अचोदितस्य—अनुत्पन्नस्य विकृतिकर्मण शेषाम्नानं—धर्माम्नान न सम्भवति। कुत? वैकृतोपहोमाद्याम्नानस्योत्पत्यनन्तरभावित्वे सति प्रकृतेः—प्राकृतस्य नारिष्ठहोमादेः पूर्वोक्तत्वात्—प्रथमपठितत्वेन पूर्वमवगततया उत्पत्तिदशायामेवान्वयस्य दशमे वक्ष्यमाणत्वात्, अपूर्वं—वैकृतमुपहोमादि नारिष्ठहोमान्ते स्यात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**मुख्यानन्तर्यं आत्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात् प्राकृतानां व्यवायः स्यात् ॥ १८ ॥**

वैकृतोपहोमाना मुख्यानन्तर्यं—प्रधानानन्तर्यम् आत्रेय आचार्यो मन्यते। प्रधानेन प्रत्यक्षश्रुतेन[1] सह वैकृतोपहोमाना तुल्यश्रवणकत्वात्। प्रधानानन्तरं वैकृतोपहोमानां प्रत्यक्षपठितत्वादिति यावत्। यद्यपि प्रथमं प्राकृतपदार्थान्वयः, तथापि प्रत्यक्षप्राबल्यात् 'प्रत्यक्षं पाठावगतक्रमेणानुमानिकः क्रमो बाध्यः। ननु प्रथमं प्राकृतपदार्थान्वये प्रकृतिवच्छब्दस्य प्रधानविधिदेशत्वसम्पत्त्या वैकृताना पाठोऽपि [2]प्राकृतानन्तरमेव सम्पन्न इति पाठादेव प्राकृतप्राथम्यमित्यत आह—अशब्दत्वादित्यादि।

---

१. प्रत्यक्षपाठा. अ, क.    २. प्राकृतानामेव. अ.

प्राकृतानां वैकृतैर्व्यवायः-व्यवधानं स्यात्। प्रधानानन्तरं वैकृतानुपहोमान् कृत्वा प्राकृता कर्तव्या इति यावत्। कुतः? अशब्दत्वात्-प्राकृतानां प्रधानानन्तरं प्रत्यक्षपाठाभावात्। उत्पत्तिपाठो हि क्रमनियामकः। प्राकृताश्च प्रकृतावेवोत्पन्नाः। अतः प्रधानदेशपाठे सत्यपि न तस्य क्रमनियामकत्वम्॥

अथ सिद्धान्ती प्रत्याचष्टे—

**अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात्॥ १९॥**

तुरवधारणे। प्राकृतनामन्ते वैकृतानां प्रयोग इति बादरायण आचार्यो मन्यते। तदेव युक्तम्। कुतः? तेषां प्रधानशब्दत्वात्-तेषां प्राकृतानां वैकृतान्वयतः प्रागेव विकृतिविध्यन्वयित्वात्। विकृतिभावना हीतिकर्तव्यतामपेक्षमाणा प्रत्यक्षश्रुतमपि सन्निहितमक्लृप्तोपकारत्वात् परित्यज्य [1]प्राकृतक्लृप्तोपकारानेव पदार्थान् प्रथमं गृहीत्वा पश्चात् स्वसन्निध्याम्नातपदार्थान् गृह्णाति। प्राकृतान्वयतो [2]नैराकाङ्क्ष्येऽपि स्वसन्निध्याम्नातपदार्थानां प्रयोजनाकाङ्क्षावशेन पुनर्विकृतिविधेराकाङ्क्षोत्थापनात्। ततश्चावगतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्तव्यम्। न च प्रत्यक्षपाठविरोधश्शङ्क्यः। विकृतिविधिविशेषणप्रकृतिवच्छब्देन प्राप्तप्राकृतपदार्थतः पश्चाद्वैकृतपाठस्य सम्पन्नत्वात्। न चोत्पत्तिपाठ एव क्रमनियामक इति वाच्यम्। प्रकृतावुत्पन्नानामपि विकृतौ पुनरवगमस्यैवोत्पत्तिस्थानीयतया ईदृशस्यापि पाठस्य क्रमनियामकत्वाद् गुणविधानार्थपाठस्यापि क्रमनियामकताया अनुपदमेव वक्ष्यमाणतया उत्पत्तिपाठस्यैव क्रमनियामकत्वमित्यस्यासिद्धेश्च[3]।

उक्तो न्यायो वेदसम्मत इत्याह—

**तथाचान्यार्थदर्शनम्॥ २०॥**

अन्यार्थो वाक्यशेषोऽप्यमुमर्थं दर्शयति—"अध्वरस्य पूर्वमथाग्नेरुपाधिर्ह्येतत् कर्म यदाग्निकम्" इति साग्निचित्ये क्रतौ, "आकूत्यै प्रयुजेऽग्नये स्वाहा" इति सौमिकदीक्षाहुत्यादिकर्मणाम्, "आकूतिमग्निं प्रयुजं स्वाहा" इत्याग्निकदीक्षाहुत्यादिकर्मणाञ्च सन्निपाते अध्वरस्य सोमस्य कर्म पूर्वं कर्तव्यम्, पश्चादाग्निकम्। हि

---

१. प्राकृत नास्ति. अ. २. नैराकाङ्क्ष्ये सति. अ.

३. च नास्ति. अ.

यतः एतद् आग्निकं कर्म उपाधिः औपाधिकम् । अग्नौ निमित्ते पश्चात् समाम्नातमिति तदर्थः । अत्र च पश्चात् समाम्नातत्वस्य पश्चात् प्रयोगहेतुत्वोक्त्या उक्तो न्यायस्सूचितो भवति ॥

इति नवमं नक्षत्रेष्टिषूपहोमाना नारिष्ठोत्तरभाविताधिकरणम् ॥ ९ ॥

१०

राजसूये अभिषेचनीयाख्यं सोमयागं विधाय "अक्षैर्दीव्यति" "शौनश्शेपमाख्यापयते" इत्युपक्रम्य "अभिषिच्यते" इत्यन्तेन विदेवनादयोऽभिषेकान्ताः पदार्था स्समाम्नाता । तत्राभिषेकस्य तावत् प्राकृताङ्गमध्येऽपकर्षो विहितः–"माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इति । तत्राभिषेकव्यतिरिक्ता विदेवनादयः ( पदार्थाः किमभिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्तव्याः ? उत तदङ्गमध्येऽभिषेकात् प्राक् ? इति संशय. । ) अभिषेचनीयसकलप्राकृताङ्गोत्तरकाल इति ब्रूम., 'अन्ते तु बादरायणः' इति पूर्वाधिकरण ( न्यायात् । न च 'तदादि वाभिसम्बन्धात्तदन्तमपकर्षस्स्यादि'ति पूर्वपादीयाधिकरण ) न्यायेन "तिष्ठन्तं पशुं प्रयजन्ति" इति प्रयाजापकर्षेण तत्पूर्वपदार्थानामिवाभिषेकापकर्षेण तत्पूर्वपदार्थानां विदेवनादीनामप्यपकर्षात् कथं तेषां प्राकृतसकलाङ्गान्ते प्रयोग इति वाच्यम् । 'तथापूर्वम्' इति तदग्रिमाधिकरणे हि प्रकृतिप्राप्त एव पदार्थ पूर्वपदार्थानपकर्षति न त्वपूर्वः पदार्थः "पूर्वेद्युरमावास्याया वेदिं करोति" इति वेदिकरणमपकृष्यमाणं न तत्प्राचः पदार्थानपकर्षतीति व्यवस्थापितम् । तथाचात्राभिषेकस्योपदिष्टस्य प्रकतिप्राप्तत्वाभावेनापूर्वत्वादपकर्षेऽपि न तत्पूर्वपामपकर्ष. । तथाचाभिषेकमात्रं माहेन्द्रस्तोत्रकाले कार्यम् । विदेवनादयस्तु प्राकृतसकलाङ्गान्ते कार्या इति प्राप्ते, सिद्धान्तयति—

**कृतदेशात्तु पूर्वेषां स देशस्स्यात्तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् ॥ २१ ॥**

तुर्वपक्षे । अस्तु नारिष्ठहोमादि वैकृतान्ते कृतदेशात्—"माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इति विहितदेशकात् भविष्यतः अभिषेकात् पूर्वपठितानां विदेवनादीनामभिषेकदेश एव स्यात् । कुतः ? तेन प्रत्यक्षसंयोगात् । तेन—अभिषेकेण तेषां

( ) अपुस्तके ग्रन्थपात.

( ) अपुस्तके ग्रन्थपातः

प्रत्यक्षपूर्वपाठसंयोगात्। ततश्च विदेवनादीनामभिषेकात् पूर्वत्वं प्रत्यक्षपाठसिद्धम्। इतरत् प्राकृतेभ्यः परत्वन्तु न्यायमात्रम्, 'अन्ते तु बादरायणः' इति न्यायगम्यत्वादानुमानिकमेव। न चाभिषेचनीयभिषेकोभयमध्यगतस्य प्रत्यक्षपाठस्याभिषेचनीयानन्तर्येऽप्युपपत्त्या ततः कथं विदेवनादीनामभिषेकपूर्वत्वविधिरिति वाच्यम्। अभिषेचनीयप्रधानेनैव हि विदेवनादीनां प्रत्यक्षपाठ न तदङ्गै॰, तेषामिहातिदेशिकत्वात्। तथाचाभिषेचनीयप्रधानविधेश्चोदकेन विना पर्यवसानाभावाच्चोदकस्य च[1] प्रधानविधिवाक्यशेषत्वादभिषेचनीयानन्तरपाठोऽपि तदीयचोदकानन्तरं पर्यवसितः। चोदकश्चानुमानिक इति चोदकगम्याभिषेचनीयप्राकृताङ्गोत्तरकालत्वमानुमानिकमेव न प्रत्यक्षमिति प्रत्यक्षपाठान्यथानुपपत्त्यभावाद्विदेवनादीनामभिषेकपूर्वत्वमेव। वेद्यान्तु प्रत्यक्षपाठस्य पौर्णमास्याञ्चरितार्थत्वान्न तद्बलेनामावास्यायां वेदेर्हविःश्रपणोत्तरकालकत्वमिति वैषम्यम्। तथाच विदेवनादीनामभिषेकात् पूर्वमेवानुष्ठानम्॥

इति दशमं विदेवनादीनामभिषेकपूर्वभावित्वाधिकरणम्॥१०॥

११

अस्त्यग्निः "य एव विद्वानग्निञ्चिनुते" इति। तत्र श्रूयते—"सावित्राणि जुहोति, उखां सम्भरति, वायव्येन पशुना यजेत, इष्टकाः करोति, त्रिहविषं (दीक्षणीयान्निर्वपति, आग्नावैष्णवमेकादशकपालन्निर्वपति, अदित्यै घृते चरु, वैश्वानरं द्वादशकपालम्" इति। किमत्र) दीक्षणीयां कृत्वा सावित्रहोमादयः कर्तव्याः? उत सावित्रहोमादीन् कृत्वा दीक्षणीया? इति संशयः। तत्र दीक्षणीयायाः प्राकृतत्वात्तदन्ते वैकृतास्सावित्रहोमादयः कर्तव्याः, 'अन्ते तु बादरायणः' इति न्यायात्। न च दीक्षणीयाया इह प्रत्यक्षपाठात् केवलानुमानिकत्वाभावान्नात्रान्ते तु बादरायण इति न्यायप्रवृत्तिरिति वाच्यम्। न ह्यत्र दीक्षणीया विधीयते, येन तस्याः प्रत्यक्षपाठस्स्यात्। किन्तु त्रिहविषमित्यादिगुणविधानाय सा पुनरश्रुता। न च गुणाना प्रत्यक्षपाठात्तद्देशत्वे सति तेषां स्वतस्तद्देशत्वासम्भवादर्थात् गुणिनोऽपि तद्देशत्वं स्यादिति वाच्यम्, गुणानां परतन्त्रतया यत्र गुणी तत्र तेषां सन्निवेशौ-

१. च नास्ति ग.    () अपुस्तके ग्रन्थपात॰.

चित्यात्। अतः प्राकृतं दीक्षणीयाकर्म पूर्वं पश्चाद् वैकृतास्सावित्रहोमादय इति प्राप्ते, सिद्धान्तयति—

**प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥**

स देशस्स्यादित्यनुकर्षणार्थश्चकारः। 'यत्'[1]-वैकृतं सावित्रहोमादि, प्राकृतात् दीक्षणीयाकर्मणः पुरस्तात् पठितन्तस्यापि स एव देशः स्यात्, न तु प्राकृतदीक्षणीयान्ते। गुणवाक्ये दीक्षणीयायाः वैकृतसावित्रहोमाद्यनन्तरमेव पाठात्। न चोत्पत्तिपाठस्यैव नियामकत्वम् तस्यैव कर्मस्वरूपोपस्थितिनियामकत्वादिति वाच्यम्। उपस्थापकत्वमेव हि पाठस्य क्रमनियामकतायां तन्त्रम्। तच्च गुणार्थस्याप्यविशिष्टमित्यन्यार्थस्यापि तस्य तन्नियामकत्वमुपपन्नम्। न चैवमप्यनन्यार्थत्वाद् गुणार्थपाठापेक्षयोत्पत्त्यर्थपाठस्य[2] प्रबलत्वाच्चोदकप्राप्तेश्चोत्पत्तिस्थानीयत्वाच्चोदकानुसारेण प्रथमत एव दीक्षणीया स्यादिति वाच्यम्। चोदकपाठस्यानुमानिकतयोत्पत्तिस्थानीयस्यापि तस्य बाध्यत्वात्। तस्मादादौ सावित्रहोमः पश्चाद्दीक्षणीयेति ॥

इत्येकादशं सावित्रहोमानां दीक्षणीयापूर्वभावित्वाधिकरणम् ॥ ११ ॥

## १२

अग्नौ "त्रिहविषं दीक्षणीयां निर्वपति" इति विधाय "उखायाञ्जीर्णतृणानि [3]शकृच्चूर्णानि सम्प्रकीर्य[4] तामाहवनीये प्रवृणक्ति। तत्र सन्तापादग्निस्सम्भवति" इति प्रस्तुत्य "एकविंशतिनिर्बाधं रुक्मं सूत्रप्रोतं कण्ठे प्रतिमुच्योरःप्रदेशे रुक्ममन्तरं कृत्वा कृष्णाजिनमुपरि प्रतिमुच्य शिक्ये आसन्द्यां निहितस्य उख्याग्नेश्शिक्यापाशं कण्ठे आसज्य उख्यमग्निमुद्यच्छन् विष्णुक्रमान् क्रमते" इत्याम्नातम्। प्रकृतावपि दीक्षणीयानन्तरं वपनस्नानाञ्जनादयो दीक्षितसंस्कारा आम्नाताः। तेऽपि चोदकतस्साग्निचित्ये क्रतौ प्राप्ताः। तत्र किमुखाप्रवृञ्जनादि कृत्वा वपनादिसंस्काराः कार्याः? विपरीता वा? इति संशयः। यद्यपि प्रकृतौ दीक्षाहुतिभ्यः प्रागेव वपनादयस्संस्कारा आम्नाताः। उखाप्रवृञ्जनादयस्तु दीक्षाहुत्यनन्तरमग्नावाम्नाता इत्युभयेषां सन्निपात एव नास्तीति कथमयं संशय इति, तथापि तथाविधं शाखान्तरमनुरुध्य

---

१. यत्. अ. २. पाठस्यैव बल. अ, दुर्बलत्वात्. क.
३. ईषच्चूर्णानि. अ. ४. विकीर्य. अ.

भवत्ययं[1] संशयः। तत्राग्नौ दीक्षणीयानन्तरमुखाप्रवृञ्जनादीनां प्रत्यक्षपाठात् प्रथमं तदनुष्ठानं पश्चाच्चोदकप्राप्ता दीक्षितसंस्कारा वपनादय इति प्राप्ते, सिद्धान्तयति--

**सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥**

तैत्तिरीयादिशाखारीत्या वपनादिसंस्काराणाम् उखाप्रवृञ्जनादीनाञ्च नास्त्येव सन्निपातः। यदि तु शाखान्तररीत्या सन्निपातस्स्यात्, तदाप्यन्ते वैकृतमिति यथोक्तमेव स्यात्। प्रकृतिक्लृप्तक्रमवशेन दीक्षणीयानन्तर (मुपस्थितान् [2]दीक्षित संस्कारान् कृत्वा पश्चादुखाप्रवृञ्जनादिषु क्रियमाणेष्वपि पाठस्याविरोधात्। न च पाठादानन्तर्यप्रतीतेर्न पश्चाद्भावमात्रेण तदुपपत्तिरिति वाच्यम्।) दीक्षणीयानन्तरं पठनीयस्याग्निकधर्मान्तरस्याभावेनावर्जनीयतदनन्तरपाठस्योपपत्तेः। सावित्रहोमादि- पाठस्तु नैव, कुत· ? तत्र हि त्रिहविषमित्यादिदीक्षणीयागुणानामाग्निकाना सद्भा- वात् सावित्रहोमादीनान्दीक्षणीयाया· पश्चादनुष्ठाने तेषां तत्त पूर्वपाठासम्भवाच्च। भाष्ये तु दीक्षणीयानन्तरं प्राकृतवपनादिसंस्काराणां वैकृतानामुखाप्रवृञ्जनादीनाञ्च सन्निपातस्य नित्यत्वाच्चेदिति यद्यनुवन्धोऽनुपपन्न इत्याशङ्क्य,

"ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः।
शास्त्राणि चेत् प्रमाण स्युस्ते यान्ति परमा गतिम् ॥

इतिवदसन्दिग्धे सन्दिग्धवचनं चेच्छब्द इति समाहितम्। तत्तु तैत्तिरीयादि- शाखासु तदुभयेषां सन्निपाताभावाद्विचार्यमिति दिक् ॥

इति द्वादशं यजमानसंस्काराणा रुक्मप्रतिमोकपूर्वभाविताधिकरणम् ॥ १२ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमासा
कुतूहलवृत्तौ पञ्चमाध्यायस्य द्वितीयः पादः ॥



---

१. तथा. क.
२. दीक्षितसस्कारान् नास्ति. ख.
() गपुस्तके ग्रन्थपातः.
३. हि. नास्ति. ग.

# अथ पञ्चमाध्यायस्य तृतीयः पादः

निर्मथ्य निगमसून्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तदेवं [1]पादद्वये नानापदार्थाश्रितः क्रमश्चिन्तितः । तृतीयपादेऽस्मिन्नभ्यासाश्रित. क्रमश्चिन्त्यते । दर्शपूर्णमासयोस्सन्ति पञ्च प्रयाजाः । ते चाग्नीषोमीये पशौ चोदकतः प्राप्ताः । तत्र श्रूयते—"एकादश प्रयाजान्यजति" इति । सा चेयमेकादशत्वसङ्ख्या किं प्रयाजेषु पञ्चसु प्रकृतिप्राप्तेषु प्रत्येकान्वयिनी ? उत समुदितान्वयिनी ? इति संशये, पूर्वपक्षयति—

**विवृद्धिः कर्मभेदात् पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥**

विवृद्धि–प्राकृतपञ्चत्वसङ्ख्यापेक्षया अधिका एकादशत्वसङ्ख्या तस्य तस्य एकैकस्य प्रयाजस्योपदिश्येत । कुतः ? कर्मभेदात्—प्रयाजलक्षणप्रधानकर्मभेदात् । प्रकृतौ हि प्रयाजास्समिदादिसंज्ञाभेदाद् भिद्यन्ते सङ्ख्यया वेत्युक्तं 'संज्ञा चोत्पत्तिसंयोगात्' इत्यत्र । तांश्च प्रयाजान् प्रति विधीयमाना सङ्ख्या प्रतिप्रयाजं भिद्यते, प्रति प्रधानं गुणावृत्तेर्न्याय्यत्वात् पृषदाज्यवत् । यथा "पृषदाज्येनानूयाजान् यजति" इति प्रत्यनूयाजं पृषत्त्वगुणो भिद्यते तद्वत् ॥

अथ सिद्धान्तयति—

**अपि वा [2]सर्वसङ्ख्या तद्विकारः प्रतीयेत ॥ २ ॥**

अपिवेत्यवधारणे । सर्वसङ्ख्यैव समुदितान्वयिन्येवैकादशत्वसङ्ख्या स्यात् । द्वित्वादिसङ्ख्यान्वयो हि काञ्चित् क्रियामपेक्ष्य भवति । तत्र द्वौ घटावनीयेतामित्यादौ सिद्धरूपाणां घटादीनामानयनादिक्रियामपेक्ष्य तदन्वयदर्शनादेवमिहापि

---

१. पादद्वयेन. अ.

२. सर्वसङ्ख्यात्वात्

काचित् क्रियामपेक्ष्य ) सङ्ख्यान्वयो वाच्यः। तत्र च प्रयाजानां निष्पन्नरूपाणामभावेनोत्पत्तिव्यतिरिक्तक्रियान्तरावच्छेदकतया सङ्ख्यान्वयानुपपत्त्या दश घटाः कर्तव्या इतिवदुत्पत्तिलक्षणक्रियावच्छेदकतयैव सङ्ख्यान्वयो वाच्य । स च प्रयाजस्वरूपे न सम्भवति । प्रत्येकस्वरूपे तदन्वये (हि [1]एकैकः प्रयाज एव दश कर्तव्य इति स्यात्। (समुदितस्वरूपे तदन्वये) च ये प्रकृतिप्राप्ताः पञ्चप्रयाजाः ते एकादश एकादश कर्तव्या इति स्यात्।) न चैकस्य सत प्रयाजस्य पञ्चानां वा सता तेषामेकादशत्वेन क्रिया सम्भवति, अशक्यत्वात्। ततश्च स्वरूपे सङ्ख्यान्वयासम्भवात् सङ्ख्यान्वयसिद्धये प्रयाजाः स्वप्रयोगं लक्षयन्ति । ते च प्रकृतौ [2]एकादशन्यायेन तन्त्राभिधानशक्त्या समुदिता एव प्रयोगेऽवगताः[3] तथैव प्रयोगं लक्षयन्तीति समुदितान्वयिन्येवैकादशत्वसङ्ख्या, न तु प्रत्येकान्वयिनी। ननु समुदितानां प्रयाजानां प्रयोगा एकादश इत्यन्वये समुदितानां पञ्चानामेकादशवारं ( प्रयोगस्स्यात् । किञ्च प्रयोगे सङ्ख्यान्वये सङ्ख्या प्रयोगाङ्गमेव स्यात्, न प्रयाजाङ्गमित्यत आह—तद्विकारः प्रतीयेतेति । एकादश प्रयोगाः कर्तव्या इत्येवं प्रयोगे साक्षान्न सङ्ख्यान्वयः, किन्तु एकादशवारं ) प्रयाजाः प्रयोज्या इत्येवं प्रयोगमुखेन प्रयाजेष्वेव सङ्ख्यान्वय' प्रत्येतव्य. । एवञ्च प्रयोगद्वारा सङ्ख्याया' प्रयाजान्वयात्तस्याः प्रयाजाङ्गत्वमुपपद्यते । न च प्रयुज्यमानत्ववेषेण प्रयाजानामुद्देश्यत्वात्तद्गतसाहित्यस्य कथमविवक्षितत्वमिति वाच्यम्, द्वित्वादिसङ्ख्याया व्यासज्य वृत्तितया प्रत्येकनिवेशित्वाभावेन [सहत] निवेशित्व ( स्वभावतया विधेयैकादशत्वसङ्ख्यानुसारेणोद्देश्यत्वात् प्रयाजगतसाहित्यस्य "यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयन्तस्य प्रायश्चित्तिः" इति द्वित्ववद्विवक्षितत्वात्। पृपत्वस्य तु द्वित्वादिवत् संहतनिवेशित्व ) स्वभावत्वाभावेन साहित्यविवक्षाकारणन्न किञ्चिदस्ति, प्रत्येकान्वय एवेति वैषम्यम् । न चैवं सति "पञ्चदशान्याज्यानि" इति सङ्ख्यापि चतुर्णामाज्यस्तोत्राणा समुदितानामेव स्यात् न त्वेकैकस्येति वाच्यम् । पञ्चदशशब्दो

---

( ) गपुस्तके ग्रन्थपात .
( ) गपुस्तके ग्रन्थपात .
१. यत्रैक अ
( ) अपुस्तके ग्रन्थपातः
२ एकादशत्वन्यायेन. क.
३. अवगन्तव्या., अ.
( ) अ ग पुस्तकयो ग्रन्थपात .

ह्ययं 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति विहितडप्रत्ययान्तः। तेन न स्तोत्रसङ्ख्योच्यते। 'पञ्चदशो माध्यन्दिन पवमान' 'सप्तदश आर्भवः पवमानः' इत्यादौ स्तोत्रैकत्वेऽपि पञ्चदशादिशब्दप्रयोगदर्शनात् स्तोत्रसाधनसामाधारस्तोत्रीयाणामृचा सङ्ख्यैव पञ्चदशानीत्यत्र विवक्षिता। ततश्च पञ्चदशभिः ऋग्भि· आज्यस्तोत्राणि सम्पादयेदित्यर्थ। तत्र च पञ्चदशर्चेन सम्पादने आज्यानामुद्देश्यत्वात् प्रत्येकमेव तत्सम्पाद्यत्वमङ्ग भवति। एकादशत्वसङ्ख्या तु प्रयाजगामिनी संहतैरेव तैस्सम्बध्यत इति वैषम्यम्। तत्र चतुर्थपञ्चमप्रयाजयोरभ्यासेन सङ्ख्यापूरणमिति सङ्कर्षे वक्ष्यते ॥

इति प्रथम प्रयाजेष्वेकादशसङ्ख्यायास्सर्वसम्पाद्यत्वाधिकरणम् ॥ १ ॥

२

सन्ति ज्योतिष्टोमे तिस्र उपसद·। ताश्च विकृतिसोमेषु चोदकत प्राप्ताः। तत्र साग्निचित्ये क्रतौ श्रुतम्–"षडुपसदोऽग्नेश्चित्यस्य भवन्ति" इति। तत्र पूर्वाधिकरणन्यायात् सङ्ख्या समुदितनिवेशिनी, न तु प्रत्येकनिवेशिनीति स्थितम्। सा च सङ्ख्या[1] अभ्यासेन पूरणीया। तत्र यथा [क्षेत्र] माने प्रथम क्वचित् कृत्स्नमेव मानदण्डन्निवेश्य तदनन्तरदेशेष्वपि तथैव निवेश्यते, तथा प्रथमां द्वितीयां[2] तृतीयाञ्चेति तिस्र उपसद क्रमेण कृत्वा पश्चात् प्रथमादयस्तिस्र उपसदः कार्या इत्येवं दण्डकलितवदावृत्तिः ? उत प्रथमामुपसद कृत्वा पुनः प्रथमा कार्या, द्वितीयानन्तर पुन· र्द्वितीया, तृतीयानन्तर पुनस्तृतीयेत्येव स्वस्थानविवृद्धि ? इति संशय। लोके तावत् त्रिरनुवाक· पठ्यतामित्युक्ते आदित [3]आरभ्य परिसमाप्य पुनरादित 'आरभ्य दण्डकलितवदावृत्तिर्दृश्यते, तद्वदिहापीति प्राप्ते, सिद्धान्तयति—

**स्वस्थानात्तु विवर्द्धेरन् कृतानुपूर्व्यत्वात् ॥ २ ॥**

तुरवधारणे। प्रथमानन्तरं प्रथमेत्येव स्वस्थानादेव उपसदो विवर्द्धेरन्–[5]अभ्यस्येरन्। कुत ? कृतानुपूर्व्यत्वात्–प्रकृतौ क्लृप्तक्रमत्वात्। प्रथमामुपसद कृत्वा मध्यमा

---

१. निरन्यासेन अ. २. तृतीया नास्ति. अ, क.

३, ४. प्रारन्य. अ. ५. पदमिदं नास्ति. क; त्रिरभ्यस्येरन्. अ.

कर्तव्या, तत उत्तमेति हि प्रकृतौ क्रमः। दण्डकलितवदावृत्तौ तु क्रियमाणायां तृतीयां कृत्वा तदनन्तरोपस्थितप्रवर्ग्योद्वासनादिपरित्यागेन प्रथमा क्रियेत। तत्र प्राकृतक्रमो बाध्येत। अनुवाकशब्दस्य तु वाक्यसन्दर्भविशेषार्थकतया तत्र दण्डकलितवदावृत्तावपि प्रकृते प्रत्येकमुपसच्छब्दवाच्यत्वेनोपदेशस्य स्वस्थानविवृद्धावप्यविरोधादातिदेशिकक्रमबाधो न युक्तः॥

इति द्वितीयं स्वस्थानविवृध्यधिकरणम्॥ २॥

३

दर्शपूर्णमासयोस्सन्ति सामिधेनीकल्पाः—"पञ्चदश सामिधेनीरन्वाह" "सप्तदशानुब्रूयाद्वैश्यस्य" "एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य" "चतुर्विंशमनुब्रूयात् ब्रह्मवर्चसकामस्य" इत्यादयः। [1]समिन्धनार्था ऋचस्सामिधेन्यः। ताश्च "प्रवो वाजा" इत्यादय एकादशाम्नाताः[2]। "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति प्रथमोत्तमयोरावृत्या पञ्चदश सम्पद्यन्ते। सप्तदशैकविंशत्यादिकल्पेषु तु कासाञ्चिदाग्नेयीनामृचामावापेन सङ्ख्यापूरणमिति दशमे वक्ष्यते। ताश्चागन्तुका ऋचः किं "प्रवो वाजा" इत्यादीनां प्राकृतीनामन्ते निवेशनीयाः? उत "समिध्यमानो अध्वरे" इत्यृच उपरिष्टात् "समिद्धो अग्न आहुत" इत्यृचः प्राक् निवेशनीयाः? इति संशयः। तत्रान्ते तु बादरायण इति न्यायादन्ते निवेश इति प्राप्ते, सिद्धान्तयति—

**समिध्यमानवतीं समिद्धवतीश्चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तरालसमर्हणात्॥ ४॥**

"समिध्यमानो अध्वर" इति समिध्यमानशब्दघटिता ऋक्, "समिद्धो अग्न आहुत" इति समिद्धशब्दवती ऋक् तयोरन्तराले धाय्या. धीयमाना आगन्तुका [3]ऋचो निवेशनीयाः स्युः। कुतः? द्यावापृथिव्योरन्तरालसमर्हणात्। "इयं वै समिध्यमानवती, असौ समिद्धवती यदन्तरं तद्धाय्या" इति हि श्रुतम्। अत्र इयमिति [4]पृथिवी (विवक्षिता। असाविति द्यौः, अन्तरमित्याकाशमुच्यते। धाय्या-

१. समिदाधानार्थाः ख.
२. इत्याम्नाताः. ग.
३. ऋच नास्ति. ग.
४. पृथ्वी. ग.

नामागन्तूनामाकाशत्वेन स्तवनञ्च द्यावापृथिवीत्वेन ) सस्तुतयोस्समिद्ध्यमानवतीस-मिद्धवत्योर्मध्ये तासां विधानमनुमापयति। स्तुतेर्विधिशेषत्वेन ततोऽवश्यं विधेः कल्प्यत्वात् ॥

इति तृतीयं धाय्यानामन्तरालनिवेशाधिकरणम् ॥ ३ ॥

४

समिद्ध्यमानवतीसमिद्धवत्योरन्तराल आगन्तूनां निवेश इति स्थितम्। किमिहाविशेषेणागन्तूनां निवेशः ? उत "पृथुपाजास्तं सबाध इति धाय्ये दधाति, मानवीऋचौ धाय्ये कुर्यात्" इत्येवं धाय्याशब्देन विहितानामेव ? इति संशयः। धाय्याशब्दो हि पृथुपाजा इत्यादिषु न रूढः, तन्मात्रानुगतधर्माभावेनानेकार्थत्व-प्रसङ्गात्। अतो धीयमानत्वयोगेन धाय्यात्वाविशेषात् सर्वासामागन्तूनामिह निवेश इति प्राप्ते, सिद्धान्तयति—

तच्छब्दो ॥ ५ ॥

न धीयमानमात्रवचनो धाय्याशब्दः, स्तुतशस्त्राद्यर्थतया धीयमानासु[1] ऋक्षु धाय्यात्वाभावात्। अतो यासु वेदे धाय्याशब्दप्रयोगो दृष्टः ता एव धाय्याशब्देनोच्य-न्ते। ततश्च वैदिकधाय्याशब्दप्रयोगविषयत्वमेव[2] धाय्यात्वमित्यनुगतधर्मस्य सम्भ-वान्न नानार्थत्वप्रसङ्गः। 'पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधे-नीषु' इति व्याकरणसूत्रे सामिधेनीशब्दस्तद्विशेषपर इति न विरोधः ॥

इतोऽप्येवमित्याह—

उष्णिक्ककुभोश्चान्ते दर्शनात् ॥ ६ ॥

त्रैधातवीयेष्टौ श्रुतम्—"अग्ने त्रीते वाजिनेति त्रिष्टुभा परिदधाति" इति। सामिधेनीस्समापयतीत्यर्थः। प्रकृतौ "आजुहोत दुवस्यत" इति गायत्री सामिधेनीनां परिधानीया. इह तु "अग्ने त्रीते वाजिने" ति त्रिष्टुप्परिधानीया कार्येति यावत्। यदि धाय्याशब्दितानामेव धाय्यात्वं तदैव त्रैधातवीयायाम् [3]अधाय्यायास्त्रिष्टुभः

( ) अपुस्तके ग्रन्थपात.

१. धीयमानास्वपि. अ, फ, ग.

२. धाय्याकन्य. अ, फ; धाय्यमित्यनु. ग.

३. धाय्याशब्दितायास्त्रिष्टुभ. फ

परिधानीयात्वदर्शनमुपपद्यते। अन्यथा तस्या अपि मध्ये निवेशेन प्राकृत्या आजुहोतेत्यस्या एव परिधानीयात्वप्रसङ्गात्तदनुपपन्नं स्यात्। अतो धाय्याशब्दितानामेव मध्ये निवेशः। सूत्रे उष्णिक्ककुभोरित्यस्य त्रिष्टुभ इत्यर्थः। "त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभौ" इत्यर्थवादे उष्णिक्ककुप्कारणत्वेन श्रुता त्रिष्टुप् उष्णिक्ककुप्छन्देन कार्यवाचिना विवक्षितेति भाष्यम्। एवंविधार्थवादस्तु क्वचिच्छाखायामन्वेषणीयः। तैत्तिरीये तु "त्रिष्टुभो वा एतद्वीर्यं यत् ककुबुष्णिहौ जगत्यर्थौ" इत्यर्थवादो दृश्यते॥

इति चतुर्थमागन्तूनामन्ते निवेशाधिकरणम्॥ ४॥

५

सन्ति ज्योतिष्टोमे चत्वारस्तोमाः—"त्रिवृत् पञ्चदशस्सप्तदश एकविंशः" इति। सन्ति च विवृद्धस्तोमका[१] विकृतिस्तोमाः—"एकविंशेनातिरात्रेण प्रजाकामं याजयेत्" इत्यादयः। प्रकृतौ च त्रिवृत् बहिष्पवमानं (स्तोत्रम् तस्य च नव स्तोत्रीया ऋचः त्रयस्तृचाः पठिताः। ते च विवृद्धस्तोमकेषु क्रतुषु प्राप्ताः। तत्रैकविंशत्यादिसङ्ख्यापूरणमृगन्त) रागमेनेति दशमे वक्ष्यते। तत्र किमागन्तूनामृचामन्ते निवेशः? उतान्तिमात्तृचात् प्राग्? इति संशयः। तत्र पूर्वपक्षतिः—

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवस्स्युस्तथा हि दृष्टं द्वादशाहे॥ ७॥**

स्तोमाः स्तोत्रीया ऋचः, तासां प्राकृतसङ्ख्यापेक्षया आधिक्ये सति पर्यासात्—अन्तिमात् तृचात् पुरस्ताद् आगान्तव ऋचः आगमयितव्या स्युः, न त्वन्ते तु बादरायण इति न्यायादन्ते निवेशः। हि यतः, द्वादशाहे तथा—पुरस्तात् पर्यासात् तासामागमनं दृष्टम्। अस्ति हि द्वादशाहे पृष्ठ्यः षडहः। तत्र द्वितीयमहः पञ्चदशस्तोमकम्। तत्र बहिष्पवमाने आ [द्यौ तृचौ] पठित्वा आगन्तवो [२]वृषण्वत्य ऋचः पठिताः। ततः पश्चात् प्राकृतान्तिमस्तृचः पर्यासः पठितः। वचनञ्च भवति—"वृषण्वन्तस्तृचा भवन्ति तृच उत्तमः पर्यासः" इति। तदनेन[३] दर्शनेनान्यत्राप्यागन्तूनामृचां[४] तत्रैव निवेशो विज्ञायते॥

() अपुस्तके ग्रन्थपातः.
१. स्तोमाः. ग.
२. वृषण्वत्यर्च. ग.
३. दर्शनेनात्रापि. ग.
४. ऋचामन्ते एव. अ

अथ सिद्धान्तयति—

**अन्ते वा तदुक्तं स्यात् ॥ ८ ॥**

आगन्तूनामृचामन्त एव निवेशस्स्यात्। यतः,तत्-अन्ते निवेशनं उक्तम्-'अन्ते तु बादरायणः' इति ॥

अथ यदुक्तं द्वादशाहे वृषण्वतीनामृचां पुरस्तात् पर्यासात् पाठदर्शनादन्यत्रापि तथा भवितव्यमिति। तत्राह—

**[1]वचनाद् द्वादशाहे ॥ ९ ॥**

द्वादशाहे [2]वचनात्तथा भवति। अन्यत्र तु तथा वचनाभावादन्त एव न्यायतो निवेशः ॥

ननु दर्शपूर्णमासधर्मा यथा तद्विकृतिषु भवन्ति, तथा [3]द्वादशाहिकमप्यागन्तूनां पुरस्तात् पर्यासादागमनमन्यत्रापि स्यादित्यत आह—

**अतद्विकारश्च ॥ १० ॥**

न चायं विवृद्धस्तोमकः क्रतुः द्वादशाहविकारः। अतो न द्वादशाहधर्मास्तत्र भवेयुः। तस्मादन्त एव निवेशः ॥

तर्हि द्वादशाहविकारेष्वागन्तूनामृचां प्राक् पर्यासान्निवेशो (ऽस्तु, तत्राह—

**तद्विकारेऽप्यपूर्वत्वात् ॥ ११ ॥**

योऽपि तद्विकारः, तत्रापि द्वादशाहविकारः नागन्तूनामृचां प्राक् पर्यासान्निवेशः, किन्त्वन्त एव तन्निवेशः।) कुत ? अपूर्वत्वात्-वैकृतत्वात्। वैकृतानाञ्चान्ते निवेशस्य स्थापितत्वात्। ततश्च द्वादशाहविकारेऽपि [4]वृषण्वत्तृचानामेवातिदेशबलात् प्राक् पर्यासान्निवेशः। अन्यासान्त्वागन्तूनामृचामन्त एव निवेशः। ननु पर्यासशब्दोऽन्तवाची लोके दृश्यते। यथा 'क्षेत्रपर्यासो नदीपर्यासः' इति। यदि चागन्तवोऽन्ते स्युः, तर्हि पर्यासमाख्या प्राकृतस्य तृचस्य बाध्येत। सत्यम्; समाख्या तावत् प्रकृतावेव चरितार्थत्वादागन्तूना न्यायप्राप्तमन्ते निवेशनं न बाधेत ॥

इति पञ्चमं विवृद्धस्तोमकक्रतुषु बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ५ ॥

---

१, २ वचनात्त ख. ३ द्वादशाहे कर्मणि. ख.
४. वृषण्वन्नाम्ना. क. () अयमंशोऽत्र ग्रन्थपात.

६

विवृद्धस्तोमकक्रतुषु वहिष्पवमाने आगन्तव इति स्थितम्। तत्रैव माध्यन्दिनार्भवपवमानयोस्सामागमो दशमे वक्ष्यते। तेषां साम्नां किमन्त्ये तृचे निवेशः? उत गायत्रीबृहत्यनुष्टुप्सु? इति संशये, पूर्वपक्षयति—

**अन्ते तूत्तरयोर्निदध्यात् ॥ १२ ॥**

तु· प्रत्यवस्थाने। विवृद्धस्तोमकेषु क्रतुषु वहिष्पवमाने आगन्तुका ऋच इव उत्तरयोर्माध्यन्दिनार्भवपवमानयोरप्यागन्तूनि सामानि अन्तिमतृचे निदध्यात्—निवेशयेत्। 'अन्ते तु बादरायण.' इति न्यायात्। "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यष्टुप्च, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति" इति तु वर्तमानापदेशत्वान्न विधिः॥

अथ सिद्धान्तयति—

**अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात् ॥ १३ ॥**

अपिवेत्यवधारणे। गायत्र्यादिष्वेवात्रागन्तूनां साम्नां निवेशः, न त्वन्तिमे तृचे, "त्रीणि ह वा" इत्यादिवचनात्। 'पवमाने स्यातान्तस्मिन्नावापोद्वापदर्शनात्' इति दशमेऽस्य वचनस्य विधिताया व्यवस्थापयिष्यमाणत्वात्॥

इति षष्ठमागन्तूना साम्ना गायत्र्यादिषु निवेशाधिकरणम् ॥ ६ ॥

७

सन्त्यंश्वदाभ्यादयो ग्रहा अनारभ्याम्नाताः–"अंशुं गृह्णाति अदाभ्यं गृह्णाति" इत्यादयः। ते चानारभ्यन्यायेन ( ) ज्योतिष्टोमं प्राप्ताः। ते किं सवनधर्माः? उत क्रतुधर्मा.? इति संशयः। तथा सन्तीष्टका अनारभ्याम्नाताः–"वज्रिणीरुपदधाति" इत्यादयः। ताः किमग्न्याख्यस्थण्डिलविशेषावयवचितिधर्माः? उताग्निधर्माः? इति संशयः। तत्र पूर्वपक्षयति—

**ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषस्स्यात् ॥ १४ ॥**

अनारभ्यविधिकाण्डमौपानुवाक्यमित्युच्यते। तत्राम्नातमप्यौपानुवाक्यम्। ग्रहा· अंश्वदाभ्यादय, इष्टकाः वज्रिण्यादयः। ग्रहेष्टकमिति समाहारद्वन्द्वः। क्रमेण सवन-

चितिशेषस्स्यात्। ग्रहैस्सवनानामिष्टकाभिश्चितीनाञ्च निष्पत्तेः [१]प्रत्यक्षदर्शनात्। द्वितीयेऽध्याये अश्वदाभ्ययोर्यागानुप्रवेशकथनन्तु सवनद्वारैवोपपद्यते। "इष्टकाभिरग्निञ्चिनुते" इति वचनमपि सामर्थ्यानुसाराच्चितिद्वारैव सम्बन्धमनुमन्यते। सवनचितीना परम्परया फलवत्वात्तादर्थ्येऽपि नानर्थक्यम्। तथाच प्रतिसवनमंश्वदाभ्यादयः प्रतिचिति च वज्रिण्यादयो भवन्ति। न च यत्र पाठक्रमे ग्रहेष्टकमेतदाम्नातं तत्रैव सकृत्तदनुष्ठेयमिति वाच्यम्, अनारभ्याम्नातत्वात्। सूत्रे चैतदर्थमेव औपानुवाक्यमित्युक्तिः॥

अथ सिद्धान्तयति—

**क्रत्वग्निशेषो वा चोदितत्वादचोदना च पूर्वस्य ॥ १५ ॥**

ग्रहेष्टकमौपानुवाक्यं क्रमेण क्रत्वग्निशेष एव स्यात्, न तु सवनचितिशेषः। कुतः? चोदितत्वात्—क्रतोरग्नेश्च फलाय विहितत्वात्। पूर्वस्य च—[२]पूर्वोक्तस्य तु चितिसवनस्य साक्षात् फलाय अचोदना—विधिर्नास्ति। फलवत्क्रत्वर्थतयैव सवनानां फलवदग्न्यर्थत्वेनैव चितीनां विहितत्वात् साक्षात् फलवदर्थत्वसम्भवे परम्पराश्रयणस्यान्याय्यत्वात्। चोदितत्वादित्यस्य ग्रहेष्टकानां क्रत्वग्न्यर्थतयैव विहितत्वादित्यप्यर्थः[३]। तैत्तिरीयके सोमकाण्डसमाख्याते षष्ठकाण्डे षष्ठप्रश्ने ज्योतिष्टोमप्रकरणे "यस्यैवं विदुषोऽशुर्गृह्यते" "यस्यैवं विदुषोऽदाभ्यो गृह्यते" इति वचनाभ्यां क्रत्वर्थत्वमुपांश्वदाभ्ययोरवगतम्। तच्च साक्षात् सम्भवे परम्परया नाश्रयणीयम्। ततश्च[४] सकृदेवाश्वदाभ्यादयो ग्राह्या। इष्टकानाञ्च "इष्टकाभिरग्निञ्चिनुते" इति वाचनिकमेवाग्न्यङ्गत्वम्। न च सामर्थ्यानुसाराच्चितिद्वारकमेवैतद्भवितुमर्हति, सामर्थ्यानुसारेण श्रुत्यन्यथाकरणायोगादग्न्यङ्गत्वेऽपि सामर्थ्याविरोधाच्च। ततश्च सकृदेव तासामुपधानम्॥

इति सप्तमं ग्रहेष्टकाधिकरणम् ॥ ७ ॥

८

अनारभ्याम्नातानामिष्टकानामग्न्यङ्गत्वात् सकृदेवोपधानमिति स्थितम्। किं तासामुत्तमचित्यन्ते निवेशः? उत मध्यमचितौ? इति संशये, पूर्वपक्षयति—

---

१. पूर्वपक्ष इत्यशुद्धः पाठः. ख.
२. प्रयोक्तव्यस्य तु. ग.
३. इत्यर्थः. ख.
४. च नास्ति. ग.

तूत्तमचितौ) [1]यजुष्मतीबाहुल्याभिप्रायम्। कल्पसूत्रेषु त्वनारभ्यविहितानामपीष्टकानां कासाञ्चिदन्यथोपधानमनुक्रान्तं, तत्र वचनान्तराणि स्युः ॥

इत्यष्टममनारभ्येष्टकाना मध्यमचितिनिवेशाधिकरणम् ॥ ८ ॥

९

अनारभ्य विहितानामिष्टकाना मध्यमायाञ्चितौ निवेश इति स्थितम्। किं तासां तत्रान्ते निवेशः ? उत लोकम्पृणोपधानात् प्राक् ? इति संशये, [ य ] जुष्मत्य [ न ] न्तरं लोकम्पृणोपधानस्याम्नानात् क्रमस्याबाधायान्ते निवेशः ॥

सिद्धान्तयति—

**प्राग्लोकम्पृणायाः तस्यास्सम्पूरणार्थत्वात् ॥ १९ ॥**

मध्यमचितौ लोकम्पृणोपधानात् प्रागेवानारभ्य विहितानान्निवेशः। कुतः ? तस्यास्सम्पूरणार्थत्वात्। जातावेकवचनम्। लोकम्पृणानां यजुष्मतीपूरितावशिष्टक्षेत्रपूरणार्थत्वात्। एव हि श्रूयते—"यच्छिद्र तदेतया पूरयति लोकम्पृणा च्छिद्रम्पृणा" इति। अप्राप्तार्थत्वाद्विधिरेवायम्। प्रकृते च लोकम्पृणाभावादुपधानेन क्षेत्रस्य पूर्णत्वादवकाशाभावात् कथं तत्रानारभ्य विहितानामन्ते निवेशस्स्यात्। ननु लोकम्पृणानां पूरणार्थत्वस्य चित्यन्तरे सावकाशत्वान्मध्यमचितौ लोकम्पृणानामभावात्कथं तत्र प्राग्लोकम्पृणा तत्समावेशवर्णनमिति वाच्यम्। अविशेषश्रुतस्य यच्छिद्रमिति वचनस्य सङ्कोचायोगात् ॥

इति नवममनरभ्येष्टकाना लोकम्पृणात. पूर्वमुपधानाधिकरणम् ॥ ९ ॥

१०

पूर्णाहुत्यन्तमाधानमनुक्रम्य श्रूयते—"पवमानहवींपि सद्योऽनुनिर्वपेत् द्वादशाहे द्व्यहे त्र्यहे चतुरहे ऽर्द्धमासे मास्यृतौ संवत्सरे वा" इति। तत्रासद्यः पक्षे किमग्निहोत्रादिकर्माणि आधानानन्तरं पवमानहविर्भ्यः (प्रागारब्धव्यानि ? उत पवमानहविरुत्तरकाल एव ? इति संशय.। अग्निहोत्रादिकर्मणां[2] गार्हपत्याहवनीयाद्यग्नि-

१. यजुष्मतीबाहुल्याभिप्रायम्। कल्पसूत्रेषु तु नास्ति. ग.

२ कर्मणो. अ. () गपुस्तके ग्रन्थपात.

साध्यत्वादग्नीनाञ्चाधानमात्रेण निष्पन्नत्वादाधानानन्तरं पवमानहविर्भ्यः ) प्रागेवारब्धव्यानीति प्राप्ते, सिद्धान्तयति—

**संस्कृतेषु कर्म संस्काराणां तदर्थत्वात् ॥ २० ॥**

पवमानहविस्संस्कृतेष्वेवाग्निहोत्रादिकर्म प्रवर्तते, न तु ततः प्राक्। कुतः ? संस्काराणां पवमानहविर्जनितानामपि तदर्थत्वात्—गार्हपत्यादिशब्दार्थप्रविष्टत्वात् ॥

नन्वाहिताग्निः क्लिन्नं दारु नादध्यादित्यादिव्रतमपि पवमानहविरनन्तरमेव स्यात्, न तु ततः प्रागपीत्यत आह—

**अनन्तरं व्रतं तद्भूतत्वात् ॥ २१ ॥**

आधानानन्तरमेव पवमानहविर्भ्यः प्रागप्याहिताग्निव्रतं भवति। कुतः ? तद्भूतत्वात्। तान् आहितानग्नीन् प्राप्तः तद्भूतः। आहिताग्निकत्वं व्रते निमित्तं तच्चाधानानन्तरमेव सम्पद्यते। अतस्तदनन्तरमेव व्रतं स्यात्, आम्नातत्वात्। अग्निहोत्रादिकर्माणि तु गार्हपत्याद्यग्निसाध्यानि। गार्हपत्यादिशब्दाश्च संस्कारनिमित्ताः। अतः पवमानहविस्संस्कृतेष्वेवाग्निषु कर्माणि भवन्ति ॥

अथ पूर्वपक्षी शङ्कते—

**पूर्वश्च लिङ्गदर्शनात् ॥ २२ ॥**

आहितमात्रेष्वग्निषु पवमानहविर्भ्यः पूर्वमप्यग्निहोत्रादिकर्माणि स्युः। कुतः ? लिङ्गदर्शनात्। "अग्निं वै सृष्टमग्निहोत्रेणानुद्रवति" इत्याहितमात्रेष्वग्निष्वग्निहोत्रं दर्शयति। तदिदमन्येषामपि कर्मणां पवमानहविर्भ्यः प्राक् प्रवृत्तौ लिङ्गम् ॥

अथ सिद्धान्ती प्रत्याचष्टे—

**अर्थवादो वार्थस्य विद्यमानत्वात् ॥ २३ ॥**

"अग्निर्वै सृष्टम्" इत्यर्थवाद एव, न त्वाहितमात्रेष्वग्निष्वग्निहोत्रविधिः। अतो न लिङ्गमन्येषामपि कर्मणां पवमानहविर्भ्यः प्राक् प्रवृत्तौ। कुतः ? अर्थस्य विद्यमानत्वात्। विद्यते हि आधाने तूष्णीमग्निहोत्रम् तत्प्रशंसेयम् ॥

ननु "गार्हपत्यमादधाति" "आहवनीयमादधाति[1]" इत्यादिद्वितीयाश्रुत्या आधानमात्रेण गार्हपत्यादि[2] निष्पत्तेस्तदाधानसंस्कारमात्रं गार्हपत्यादिशब्दप्रवृत्ति-

१. आहवनीयमादधाति. नास्ति. अ, क.　　२. गार्हपत्याद्यग्नि. अ, क.

निमित्तम्, न तु पवमानेष्टिसंकारा अपीत्यत आह—

**न्यायविप्रतिषेधाच्च ॥ २४ ॥**

तृतीयस्य षष्ठे 'इष्ट्यर्थमग्न्याधेयं प्रकरणान्न वा तासां तदर्थत्वात्' इत्यत्र पवमानेष्टि ( जनितसंस्काराणामपि गार्हपत्यादिशब्दार्थानुप्रवेशे न्याय उक्तः। तद्विरोधान्न पवमानेष्टि ) भ्यः प्रागग्निहोत्रादिकर्मप्रवृत्तिः। चकारोऽनुक्तसमुच्चयार्थः शङ्कान्तरपरिहारार्थः। यथा ननु 'इष्ट्यर्थमग्न्याधेयम्' इत्यत्र भाष्यकारमते पवमानहविषामाधानस्य चाग्न्युत्पादकत्वमिति स्थितम्। तत्राधानस्य पवमानहविषाश्चाग्न्युत्पादने समविकल्पसम्भवादाधानानन्तरमेव कर्मणां प्रवृत्तिरस्तु। पवमानहविषामाधानाङ्गत्वमिति वार्तिकमतेऽपि यथा बृहस्पतिसवस्य वाजपेयाङ्गत्वेऽपि बृहस्पतिसवात् प्रागेव शरदि वाजपेयानुष्ठानमात्रेण तत्साध्यपरमापूर्वमुत्पद्यते, उत्पन्नञ्च तदपूर्वं बृहस्पतिसवेन पश्चात् बलवत् क्रियते, तथा आधानेन निष्पन्ना अग्नयः पवमानहविर्भिर्बलवन्तो भवन्तीति कर्मणामाधानानन्तरमेव प्रवृत्तिरप्रत्यूहा इति चेन्मैवम्, न तावदाधानस्य पवमानहविषाञ्च भाष्यमते समविकल्पस्सम्भवति। "पवमानहवींषि [1]सद्योऽनुनिर्वपेत्। द्व्यहे त्र्यहे वा" इत्यादिना आधानदिने तदारभ्य तृतीयादिदिने पवमानहविषां विधिबलेन तेषामाधानस्य चाग्न्युत्पादने समुच्चयावश्यम्भावात्। वार्तिकमते पवमानहविषामाधानाङ्गत्वादङ्गेन विना प्रधानेन गार्हपत्याद्यग्निलक्षणसाध्यानिष्पत्तेः पवमानहविरनन्तरमेव कर्मणां प्रवृत्तिः। यत्तूक्तमुत्पन्नानामग्नीनां पवमानहविर्भिर्बलवत्करणं बृहस्पतिसवेन वाजपेयस्येवेति, तन्न; वैषम्यात्। वाजपेयेनेष्ट्वेति तृतीयासमभिव्याहृतक्त्वाप्रत्ययेन फलवाक्यावगतवाजपेयकरणकफलार्थव्यापारसम्पादनानन्तर बृहस्पतिसवविधानायुक्ता बृहस्पतिसव विनापि वाजपेयपरमापूर्वनिष्पत्तिः। इह तु तथाविधनियामकाभावान्नाङ्भूतपवमानहवींपि विना गार्हपत्याद्यग्निनिष्पत्तिरिति तदनन्तरमेव कर्मणां प्रवृत्तिः॥

इति दशमं पवमानहविरूर्ध्वमग्निहोत्रानुष्ठानाधिकरणम्॥ १० ॥

११

"अग्निचिद्वर्षति न धावेत्" इत्यादिव्रतानि चयनानन्तरमेवासमाप्तेऽपि क्रतौ प्रवर्तन्ते ? उत साग्निचित्ये क्रतौ समाप्त एव ? इति संशयः। तत्र पूर्वपक्षयति—

() पुस्तके ग्रन्थपात. 1. सद्यो निर्वपेत् क.

## सञ्चिते त्वग्निचि ॱ प्रापणान्निमित्तस्य ॥ २५ ॥

यथा "क्लिन्नं दारु नादध्यात्" इत्याद्याहिताग्निव्रतानि आधानानन्तरमेव निमित्तसत्वात् भवन्ति, तद्वदग्निचिद्व्रतानि चयनानन्तरमेव निमित्तप्राप्तेः प्राप्नुवन्ति। तुः प्रत्यवस्थाने। क्रत्वन्तेऽग्निचिद्व्रताङ्गीकारे आहिताग्निव्रतान्यप्यग्निसाध्यक्रत्वन्ते स्युरिति ॥

अथ सिद्धान्तयति—

## क्रत्वन्ते प्रयोगवच ात् ॥ २६ ॥

साग्निचित्यक्रतुसमाप्तावेवाग्निचिद्व्रतानि भवन्ति, न तु चयनानन्तरमसमाप्तेऽपि तस्मिन्। तदानीञ्चयनेनाग्न्याख्यस्थण्डिलविशेषं निष्पादयेदित्यग्निकर्मकचयनकरणकभावनावाक्यस्य प्रयोगवचनस्य पर्यवसानाभावात्। तथाहि—'भूते' 'कर्मणि' इत्यधिकारे 'अग्नौ चेः' इति क्विप्प्रत्ययान्तः अग्निचिच्छब्द.। [तेन] अग्नेः कर्मत्वमवगतम्। तच्च भावनानियतं, धात्वर्थश्चयनञ्च तत्र करणम्, भावार्थाधिकरणन्यायात्। भूतत्वञ्च भावनायामन्वेति। तथाचाग्निकर्मकचयनकरणकभावनां कृतवानग्निचित्। भावना च फलनिष्पत्तौ सत्यामेव भूता भवति, क्रियायाः फलापवर्गित्वात्। फलञ्चात्राहवनीयाग्निधारणरूप उपकारः। आहवनीयश्चाङ्गप्रधानार्थः। तथा च साङ्गक्रतुसमाप्तिपर्यन्तं चयनकरणकाग्निसंस्कारभाव्यकभावनानिष्पत्त्यभावेन निमित्ताभावाच्चयनानन्तरमेवाग्निचिद्व्रतप्रवृत्तिरिति न युक्तम्। आधानस्य तु चयनवत् क्रत्वर्थत्वाभावेन क्रत्वपूर्वसाधनसंस्कारत्वाभावात् स्वतन्त्रमेवाग्निगतादृष्टं फलमिति नाहिताग्निव्रतानां क्रतुसमाप्तिप्रतीक्षा। न चैवमप्याधानफलभूताहवनीयादिनिष्पत्तेः पवमानहविरनन्तरभावित्वात्ततः पश्चादेवाहिताग्निव्रतानि स्युरिति वाच्यम्। न ह्याहिताग्निव्रतेषु आहवनीयादिनिष्पत्तिर्निमित्तं, किन्त्वाहिताग्नित्वम्। तच्चाधानमात्रेणाग्निगतादृष्टनिष्पत्त्या भवति। तथा च पवमानहविर्भ्यः पूर्वमाधानेनोत्पत्त्यपूर्वतुल्ययोगक्षेमस्याग्निगतादृष्टस्य जननात्तन्मात्रेणाहिताग्नित्वरूपनिमित्तसद्भावादाहिताग्निव्रतानि पवमानहविर्भ्यः प्रागपि प्रवर्तन्ते। अग्निचिद्व्रतानि त्वग्न्याख्यस्थण्डिल [1]कर्मचयनकरणभूतभावनस्याग्निचितो विहि

१. कर्मकचयनकरणक. अ क

तानि, चयनमात्रेण स्थण्डिलनिष्पत्त्या अग्निचित्त्वाभावात् क्रत्वन्त एव प्रवर्तन्त इति वैषम्यम्* ॥

इत्येकादशमग्निचिद्व्रताधिकरणम् ॥ ११ ॥

१२

ज्योतिष्टोमे श्रूयते—"आग्नावैष्णवमेकादशकपालन्निर्वपेद्दीक्षिष्यमाण" इति । "[१]कृष्णाजिनेन यजमानं दीक्षयति, [२]मेखलया दीक्षयति, वाससा दीक्षयति, कृष्णविषाणया दीक्षयति, दण्डेन दीक्षयति, अदीक्षिष्टायं ब्राह्मण इति देवमनुष्येभ्य आवेदयति" इति । तत्र किमिष्ट्यैव दीक्षितो भवति ? उत इष्ट्या कृष्णाजिनादिभिश्च सर्वैः ? इति संशयः । तत्र पूर्वपक्षयति—

**परेणावेदनात् दीक्षितस्स्यात् सर्वैर्दीक्षाभिसम्बन्धात् ॥ २७ ॥**

'एनपा द्वितीया' इत्यत्र एनपेति योगविभागात् मी । 'अदीक्षिष्ट' इत्यावेदनादुत्तरकाल एव दीक्षितस्स्यात्—दीक्षाख्यपुरुषसंस्कारयुक्तो[3] भवेत्, न तु दीक्षणीयेष्ट्यन्ते । कुतः ? सर्वैर्दीक्षाभिसम्बन्धात्—इष्ट्या कृष्णाजिनादिभिश्च सर्वैर्दीक्षानिष्पत्तेश्श्रवणात् । दीक्षिष्यमाण इति हि लृटश्शानजादेशः 'लृट्शेषे च' इति सूत्रेण च लृड्विधीयते । भविष्यदर्थाद्धातोः लृट् स्यात्, क्रियार्थायां क्रियायां सत्यामिति तदर्थः । ततश्च दीक्षिष्यमाण इति समभिव्याहारेण वाक्यप्रमाणेनेष्टेर्दीक्षार्थत्वमवगतम् । कृष्णाजिनादीनान्तु तृतीयाश्रुत्या तदवगतम् ।[4] न च कृष्णाजिनदण्डादीनामक्रियात्वात् कथं दीक्षासंस्कारजनकत्वमिति वाच्यम् । 'कृष्णाजिनमारोहति नान्यत्र कृष्णाजिनादासीत कृष्णाजिनाद्दण्डाद्य न व्यवच्छिद्येत' इत्यादिना आरोहणासनाधारणाद्यवगमेन तदवलम्ब्य तेषां संस्कारार्थत्वोपपत्तेः । न चैकार्थत्वादिष्टे कृष्णाजिनादीनाञ्च व्रीहियववद् विकल्पस्स्यात् । ततश्च कथं सर्वान्ते दीक्षितत्वमिति वाच्यम् । 'एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात्' इत्यत्रादृष्टार्थाना समुच्चयस्य द्वादशे वक्ष्यमाणत्वात् । अत आवेदनान्ते दीक्षितो भवति, न त्विष्ट्यन्ते ।

---

* 'अग्ने र्यत्यनिर्देशात्' इति सूत्र भाष्यादावुपलभ्यते । तस्य वृत्तिर्मातृकासु नोपलभ्यते ।

१. अजिनेन. अ. २. मेखलया दीक्षयति. नास्ति. ग.

३. महन्तारो भवेत्. अ. ४. न च दण्डादीना. ग.

अथ सिद्धान्तयति—

**इष्ट्यन्ते वा तदर्था ह्यविशेषाच्चार्थसंयोगात् ॥ २८ ॥**

इष्ट्यन्त एव दीक्षितो भवति, न त्वावेदनान्ते । कुतः ? हि यतः, इष्टिः तदार्था निरपेक्षमेव 'दीक्षार्था[1] श्रुता दीक्षिष्यमाण इति, क्रियार्थायां क्रियायामिति निरपेक्षक्रियार्थत्वावगमात् । ननु 'कृष्णाजिनेन दीक्षयति' इत्यादिवाक्यैरिष्टेर्नैरपेक्ष्यं बाध्यताम्, तत्राह—अविशेषात्-अविशिष्टत्वात् । साधारण्यादविरोधादिति यावत् । कुतः ? अर्थसंयोगात्—अर्थान्तरत्वात् । कृष्णाजिनादिवाक्येषु हि सहार्थे तृतीया । दीक्षधातुश्च सम्पन्नार्थकः । ( कृष्णाजिनादिभिस्सम्पन्नं करोतीत्यर्थः । तच्च दीक्षाभिव्यञ्जनार्थं, कृष्णाजिनादिभिर्दीक्षामभिव्यञ्ज्यादिति वाक्यार्थः । ) कृष्णाजिनादिभिर्दीक्षा कुर्यादिति यथाश्रुते हि कथं कुर्यादिति तत्प्रकाराकाङ्क्षायां तदनुपदेशादपरिपूर्णमेव वाक्यं स्यात् । न हि कृष्णाजिनादीनि द्रव्याणि व्यापारानाविष्टानि दीक्षासंस्कारञ्जनयितुमीशते । न चारोहणधारणादिक्रिया तदाश्रयस्तदितिकर्तव्यता भवितुमर्हति, दण्डस्य सोमक्रयपर्यन्तं कृष्णाजिनादीनाञ्चावभृथपर्यन्तन्धार्यत्वेन ततः प्राग्दीक्षानिष्पत्त्यभावप्रसङ्गात् । न च धारणोपक्रममात्रेण[2] दीक्षोत्पत्त्यवगमकं किञ्चित् प्रमाणमस्ति । न चालौकिकदीक्षासंस्कारस्य कथमभिव्यक्तिरिति वाच्यम्, अतीन्द्रियस्याप्यर्थस्य लिङ्गादभिव्यक्तिदर्शनात् । 'यावदुक्त पत्न्या दीक्षितव्यञ्जनानि' इति वदन्नापस्तम्बोऽपि कृष्णाजिनादीना दीक्षाभिव्यञ्जकत्वमेव मन्यते ॥

इतोऽप्येवमित्याह—

**समाख्यानञ्च तद्वत् ॥ २९ ॥**

इष्टेर्दीक्षणीयासमाख्या श्रुता—"आग्नावैष्णवमेकादशकपालं दीक्षणीयं निरवपन्" इति, "पत्नीसयाजान्ता दीक्षणीया सन्तिष्ठते" इति च । नपुंसकत्व हविरपेक्षम् । स्त्रीत्वन्तु इष्ट्यपेक्षम् । दीक्ष्यते अनयेति करणे अनीयर् प्रत्ययः । [3]इय समाख्यापि पूर्वोक्तहेतुवदुक्तमर्थं साधयति । तस्मादिष्ट्यन्ते दीक्षोत्पत्ति । ततश्च "दीक्षितो न ददाति न जुहोति न पचति" इत्यादिधर्मास्तत एवारभ्य प्रवर्तन्ते ।

---

१. दीक्षार्या, अतो. अ, क. () अपुस्तके ग्रन्थपात..

२. न्यायेन. अ. ३. इयमपि. अ.

याज्ञिकास्तु केचित् प्रायणीयादिवत् साक्षात् क्रत्वर्थैव दीक्षणीयेष्टिः, न तु दीक्षार्था प्रमाणाभावात्। 'लट् शेषे च' इति लट्प्रत्ययस्तु न क्रियार्थत्व नियतः, चकारेण क्रियार्थत्वाभावेऽपि तद्विधानात्। यथा "सोमेन यक्ष्यमाणोऽग्नीनादधीत" इति। तथा च दीक्षिष्यमाण इति कालार्थ एव संयोगः, "दीक्षिष्यमाणस्सप्तहोतारञ्जुहोति" इतिवत्। दीक्षा तु कृष्णाजिनादिभिरेव भवति, तृतीयाश्रुतिबलात्। सहार्थे तृतीयाश्रवणन्तु क्लिष्टमेव, कारकविभक्तेर्बलीयस्त्वात्। कृष्णाजिनादिभिर्दीक्षामभिव्यञ्जयेदित्यपि न युक्तम्, दीक्षधातोर्लक्षणाप्रसङ्गात्। कृष्णाजिनादीनामक्रियात्वेऽपि धारणक्रियावलम्बनेन [1]दीक्षाकरणत्वं सूपपादम्, "दध्ना जुहोति" इत्यादिषु दध्यादिवत्। यद्यपि धारणक्रिया अवभृथे परिसमाप्यते, तथापि तदुपक्रममात्रेण दीक्षा निष्पद्यते, "अदीक्षिष्ट" इति लिङ्गात्, "दीक्षितो द्वादशाहं भृतिं वन्वीत" इत्यादिलिङ्गाच्च। दीक्षणीयेति समाख्यापि [2]दीक्षाप्राक्कालत्वादुपपाद्या, 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात्। न हि दीक्षाकरणत्वं दीक्षणीयाशब्दस्य प्रवृत्तिनिमित्तम्, अनीयरप्रत्ययस्य कृत्यप्रत्ययत्वात्। कृत्यानाञ्च 'तयोरेव कृत्यक्त खलर्थाः' इति भावकर्मणोरेवानुशासनात्। तस्मात् क्रत्वर्थैव दीक्षणीया, न तु दीक्षार्था। सा च कृष्णाजिनादिभिरुत्पद्यते। अतएवास्थियज्ञे दीक्षणीया 'पुरुषसंस्काराशीर्वर्जम्' इत्याह कात्यायनः। दीक्षणीयाया दीक्षारूपपुरुषसंस्कारार्थत्वे[3] पृथक् दीक्षणीयाग्रहणमनर्थक स्यात्। तस्मादावेदानान्ते दीक्षितत्वमिति। तत एवारभ्य दीक्षितधर्मा इत्याहुः ॥

इति द्वादश दीक्षानिमित्तप्रतिपादनाधिकरणम् ॥ १२ ॥

१३

सन्ति काम्या इष्टिपशुसोमाः। तेषां किं पाठक्रमेण प्रयोगः ? उतानियमेन ? इति संशये, पूर्वपक्षयति—

**अङ्गवत् क्रतूनामानुपूर्व्यम् ॥ ३० ॥**

यथा अङ्गेषु पाठक्रमेण प्रयोगक्रमो नियम्यते, तद्वत् काम्यकर्मणामपि पाठक्रमेण प्रयोगक्रमो नियम्यते।

---

१. दीक्षापरत्व. क

२. दीक्षाप्राक्कालकत्वात्. क.

३ सम्यागार्थत्वे हि ख, ग.

अथ सिद्धान्तयति—

**न वासम्बन्धात् ॥ ३१ ॥**

नैवास्ति पाठक्रमात् काम्यकर्मणां प्रयोगक्रमः । कुतः ? असम्बन्धात् एकप्रयोगवचनसङ्ग्रहाभावात्[1] । एकप्रयोगवचनसङ्गृहीतानामेव ह्यङ्गानां युगपदुत्थितकथम्भावाकाङ्क्षावशाद्युगपदनुष्ठानं प्रसक्तं, एकेन च कर्तुं युगपत्तदनुष्ठानं न सम्भवतीति तन्निबन्धनक्रमापेक्षा । प्रयोगवचनभेदे च पृथगेव कथम्भावाकाङ्क्षोत्थानान्न युगपदनुष्ठानं प्रसक्तमिति न क्रमापेक्षा । अतो नात्र पाठक्रमात् क्रमनियमः ॥

इतोऽप्येवमित्याह—

**काम्यत्वाच्च ॥ ३२ ॥**

काम्यानां कामानुसारेणानुष्ठेयतया स्वर्गपश्वादिकामानाञ्चोत्पत्तेरनियतक्रमतया [2]तद्बलेनानियतक्रमेणैव तदनुष्ठानस्य वाच्यत्वादपि नात्र [3]पाठक्रमो नियामक इत्यर्थः ।

नन्वेवं सति काम्यानां कर्मणां पाठक्रमोऽनर्थक एव स्यात् । [4]अतस्तदन्यथानुपपत्त्या पाठक्रमादेव तदनुष्ठानक्रम आदर्तव्यः । यद्यपि कामानामुत्पत्तिरनियतक्रमा, तथापि यस्य पाठक्रमानुरोधिनी कामोत्पत्तिः तद्विषयाः काम्यविधयो भविष्यन्तीत्याशङ्क्य निराकरोति—

**आनर्थक्यादिति चेत्स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३३ ॥**

काम्यानां कर्मणामनियतक्रमानुष्ठाने पाठक्रमानर्थक्यापातात् पाठक्रमादेव तदनुष्ठानमिति चेद् ब्रूषे, तत्रेदमुत्तरम्—काम्यानामनियतक्रमानुष्ठानेऽपि पाठक्रमोऽर्थवान् स्यात् । कुतः ? विद्यार्थत्वात् । काम्यपाठस्याध्ययने चरितार्थत्वादित्यर्थः । सर्वस्वारो नाम मरणफलकस्सोमक्रतुविशेषः । क्रतुमध्य एव मरणं तस्य फलम् । ततः परे ये क्रतवः पठिताः तेषां सर्वस्वारेण यः क्रमः तस्याध्ययनार्थत्वमवश्यं यथा कल्पनीयं तथेतरेष्वपि काम्यकर्मसु कल्प्यम् । अत्र काम्यग्रहणं नैमित्तिकानामप्युपलक्षणम् तुल्यन्यायत्वात् ।

इति त्रयोदशं काम्यानामनियमेनानुष्ठानाधिकरणम् ॥ १३ ॥

---

१. सङ्ग्रहणाभावात्. क.  २. तद्बलेनैव. अ.
३. पाठ. नास्ति. क.  ४. ततः अ, क.

१४

ज्योतिष्टोमे श्रूयते—"एष वाव प्रथमो यज्ञो यज्ञानां यज् ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजेत गर्तपत्यमेव तज् जीर्यते वा प्र वा मीयते । तस्मादेतेनेष्ट्वान्येन यजेत" इति । गर्तपत्यमिति गकारश्छान्दसः । नरकपतनसाधनमिति यावत् । जीर्यते क्षीयते, प्र वा मीयते प्रमीयते वा म्रियते वा । स्पष्टमन्यत् । अत्रैतच्छब्देन किं अग्निष्टोमोक्थ्यषोडश्यतिरात्राख्यचतुस्संस्थो ज्योतिष्टोमो विवक्षितः ? उताग्निष्टोमसंस्थ एव ? इति संशयः । "त्रिवृत् पञ्चदशस्सप्तदश एकविंशः एतानि वा व तानि ज्योतींषि य एतस्य स्तोमाः" इति [१]प्रवृत्तिनिमित्तस्य चतुस्संस्थे ज्योतिष्टोमे सत्वात् स एव ज्योतिष्टोमशब्देन पूर्वमुपात्तः । स एव च सर्वनाम्ना प्रकृतपरामर्शिना एतच्छब्देन विवक्षित इति प्राप्ते, सिद्धान्तयति—

**य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३४ ॥**

य एतेनेत्येतच्छब्देनाग्निष्टोमसंस्थ एव ज्योतिष्टोमो विवक्षितः । कुतः ? प्रकरणात् । आकाङ्क्षा हि प्रकरणन्नाम । तच्च नित्यत्वादग्निष्टोमस्यैव, ज्योतिष्टोमशब्देन तस्यैवोपस्थितत्वात् । सर्वनाम्नाञ्च सन्निहितपरामर्शित्वात् ज्योतिष्टोमशब्दश्च तावच्छ्रुतः क्रत्वविनाभूतत्वान्नित्याग्निष्टोमसंस्थामेव ज्योतिष्टोममुपस्थापयति, न त्वितरसंस्थामपि । उक्थ्यादिसंस्थानां काम्यत्वेनानित्यतया[२] नित्यक्रत्वविनाभावविरहादिति वार्तिककृत । तदनुपपन्नम् ; अग्निष्टोमसंस्थाया नित्यत्वेऽपि काम्येन संस्थान्तरेण कदाचित् क्रतुसम्बन्धविघटनेन तस्या अपि क्रत्वविनाभावविरहेण संस्थान्तरतुल्यत्वात् । अतः कैश्चिदन्यथा व्याख्यातम् ।

एतेनेति अग्निष्टोम उच्यते । कुतः ? प्रकरणात्—कथम्भावाकाङ्क्षालक्षणप्रकरणपरिग्रहात् । इतिकर्तव्यतान्तर्गतत्वादिति यावत । यद्यपि ज्योतिष्टोमशब्दस्त्रिवृदादिचतुष्टोमयोगेन चतुस्संस्थासाधारण, तथापीह[३] एतेनेत्यनेनाग्निष्टोमसंस्थ एव परामृश्यते, करणविभक्तिनिर्देशात् । करणत्व हि भावनानियतम् । तथा च "एतेनेष्ट्वा" इत्यनेन ज्योतिष्टोमकरणकस्वर्गफलभावना निर्वर्त्यत्यर्थस्सम्पद्यते । इतिकर्तव्यतायुक्तमेव च क्रतुफलभावनाकरण भवति । तथाच या संस्था ज्योतिष्टोमस्य तत्फल-

१. प्रवृत्तिनिमित्तस्य. नास्ति. ग.
२. अनियतता. क.
३. इह नास्ति अ, ग.

भावनैकदेशेतिकर्तव्यतायुक्ता तत्संस्थाक एव करणविभक्त्या गृह्यते। न चोक्थ्यादिसंस्थानां क्रतुफलभावनान्तर्भावोऽस्ति, तासां फलान्तरार्थत्वात्। तस्मात् क्रतुफलभावनैकदेशेतिकर्तव्यतान्तर्गताग्निष्टोमसंस्थ एवात्र ज्योतिष्टोम एतेनेत्यनेन कथ्यते न तु संस्थान्तरयुक्तोऽपि ॥

इतोऽप्येवमित्याह—

## लिङ्ग ॥ ३९ ॥

'एतेनेष्ट्वान्येन यजेत" इत्यनन्तरं "तस्य नवतिशतं स्तोत्रीयाः" इति श्रुतम्। तस्य ज्योतिष्टोमस्य नवत्यधिकं शतमृचः स्तोत्राधारभूता इत्यर्थः। तथाहि—"त्रिवृत् बहिष्पवमानम्" तस्य नव स्तोत्रीयाः ; पञ्च दशान्याज्यानि चत्वारि" तेषां षष्टिः ; "पञ्चदशो माध्यन्दिनः पवमानः" तस्य पञ्चदश ; "सप्तदशानि पृष्ठानि चत्वारि" तेषामष्टषष्टिः ; "सप्तदश आर्भवः पवमानः" तस्य सप्तदश ; "एकविंश यज्ञायज्ञीयम्" तस्यैकविंशतिः। आहृत्य नवतिशतं भवन्तीत्यर्थः। अत्र हि ज्योतिष्टोमपरामर्शिनस्तच्छब्दस्य सर्वसंस्थज्योतिष्टोमपरत्वे सति नवतिशतमिति विरुध्यते[1] उकथ्यादिषु स्तोत्रीयाणामाधिक्यात्। अग्निष्टोमे तु नवतिशतमेव स्तोत्रीया इति तत्परत्वमेव ज्योतिष्टोमशब्दस्य तत्रास्थेयम्। (ज्योतिष्टोमसंशब्दितस्य नवतिशतस्तोत्रीयानुवादो लिङ्गमत्रापि ज्योतिष्टोमशब्दस्याग्निष्टोममात्रपरत्वे। अतो य एतेनेत्यग्निष्टोम एव विवक्षित इति स्थितम्। अनेन न्यायेन "वसन्ते वसन्ते ज्योतिष्टोमेन यजेत" इत्यादावपि) ज्योतिष्टोमशब्दस्याग्निष्टोमपरत्वं सिध्यति। 'वसन्तेऽग्निष्टोमम्' इत्येव कात्यायनः। भारद्वाजस्तु-'वसन्ते ज्योतिष्टोमेन (यक्ष्यमाणः' इत्युपक्रम्य 'इत्यग्निष्टोमः, इत्युक्थ्यः, इति षोडशी, इत्यतिरात्रः, इत्यप्तोर्यामः' इति पञ्चापि संस्था अनुक्रम्य तदन्ते अनूयाजाद्युदवसानीयान्तं यज्ञपुच्छमनुक्रम्य, 'वसन्ते वसन्ते ज्योतिष्टोमेन) यजेत तन्त्रस्य तिस्रो दक्षिणा इति विज्ञायते, सन्तिष्ठते ज्योतिष्टोमः' इत्युपसंहृतम्। तस्यायमाशयः—क्रत्वविनाभावादग्निष्टोम एव ज्योतिष्टोमशब्देनोच्यत इति वार्तिकमनुपपन्नम्, अग्निष्टोमसंस्थायाः काम्येन संस्थान्तरेण कदाचित् क्रतुसम्बन्धविघटनादित्युक्तमेव। यदपि एतेनेति करणविभक्तिनिर्देशात् क्रतुभावनैकदेशेतिकर्तव्यतान्तर्गता अग्निष्टोमसंस्थैव

१. विरुध्यति. अ, क.　　() गपुस्तके ग्रन्थपात.

() गपुस्तके ग्रन्थपात.

गृह्यत इति, तदपि न ; अग्निष्टोमसंस्थाया इवोक्थ्यादिसंस्थानामपि क्रतुभावनीयकथम्भावाकाङ्क्षापरिगृहीतत्वेन तदितिकर्तव्यतान्तर्गतत्वात्। न च क्रतुभावनीयकथम्भावाकाङ्क्षाया नित्यत्वात् सा काम्या उक्थ्यादिसंस्थाः कथं परिगृह्णीयादिति वाच्यम्। अग्निष्टोमसंस्थावदुक्थ्यादिसंस्थानामपि नित्यत्वात्। यद्यपि "उक्थ्येन पशुकामो यजेत, षोडशिना वीर्यकामोऽतिरात्रेण प्रजाकामः, अप्तोर्यामेण सर्वान् कामानवाप्नोति" इति काम्यत्वमवगतम्, तथापि "उक्थ्येन यजेत" इत्याद्यकामसंयुक्तवाक्यान्तरैः [1]नित्यत्वमपि तासाम् 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायादवगम्यत इत्यदोषः। अकामसंयुक्ततथाविधवचनानि च शाखान्तरेऽन्वेष्टव्यानि। न ह्यकस्मात् प्रमाणभूतभारद्वाजमुनिर्ब्रवीति। अतएव [2]गौतमादिधर्मशास्त्रेषूक्थ्यादीनामपि नित्येषु परिगणनमप्युपपन्न भवति। संस्थास्तु समानविधाना। 'प्रकरणाविशेषात्' इत्यधिकरणन्तु शाखान्तरोपसंहारस्यानित्यत्वादुपपाद्यम्। तस्य नवतिशतमिति तच्छब्दस्तु अगत्या अग्निष्टोमपरः, संस्थान्तरे तदभावात् ॥

इति चतुर्दशं सोमानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १४ ॥

१५

तदेवम् "एतेनेष्ट्वाथान्येन यजेत" इत्यत्र एतच्छब्दार्थे विचारिते, "अथ अन्येन" इत्यन्यशब्दार्थो विचार्यते। एतेन अग्निष्टोमसंस्थाकेन ज्योतिष्टोमेनेष्ट्वा अन्येन ज्योतिष्टोमं उक्थ्यादिसंस्थाकेन यजेतेत्येवमन्यशब्द उक्थ्यादिसंस्थापरः? उत एतेनाग्निष्टोमेनेष्ट्वा अन्येन सर्वेण क्रतुना ज्योतिष्टोमतदितररूपेण एकाहाहीनसत्रात्मना यजेतेत्येवमुक्थ्यादिसंस्थातदितरसमस्तक्रतुसाधारण ? इति संशये, पूर्वपक्षयति—

**अथान्येनेति संस्थानां वादस्सन्निधानात् ॥ ३६ ॥**

अन्येनेति उक्थ्यादिसंस्थानां वादः—अभिधानम्, न तु तदितरेषामेकाहाहीनसत्राणामपि। कुतः ? सन्निधानात्। एतेनेति पूर्वप्रकृतस्याग्निष्टोमस्य हि उक्थ्या-

१. नित्यत्वमपि तासाम्] आपयान्तरान्नित्यत्व. क.        २. गौतमादिधर्म] गौतमादिषु. ग.

दिसंस्था एव ज्योतिष्टोमशब्देन सन्निहिताः, न क्रत्वन्तराणि। ततश्च पूर्वप्रकृतादग्निष्टोमाद् इतरो यो ज्योतिष्टोमः तद्वाचिना अन्यशब्देनोक्थ्यादिसंस्थानामेव निर्देशः[1] ॥

अथ सिद्धान्तयति—

## तत्प्रकृतेर्वापत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ३७ ॥

अग्निष्टोम एव धर्मग्राही नोक्थ्यादय इत्युक्तम् 'संस्थास्तु समानविधानाः' इत्यत्र। तत्प्रकृतेरिति सामान्याभिप्रायमेकवचनम्। अग्निष्टोम[2]प्रकृतिकानामुक्थ्यादीनां तदन्येषाञ्चैकाहानामहीनसत्राणाञ्चैवात्रान्यशब्देन निर्देशः, न तूक्थ्यादीनामेव। कुत ? हि यतः, आपत्तिविहारौ श्रुतौ। "प्रजापतिर्वा अग्निष्टोमस्स उत्तरानेकाहानसृजत" इत्युपक्रम्य "यथावाग्नेर्जाता एवमेतस्मादन्ये यज्ञक्रतवोऽप्यह्रियन्त, यो हि त्रिवृदन्य यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशस्स तं यस्सप्तदशस्स तं य एकविंशस्स तम्" इति। अत्र हि वाक्यशेषे त्रिवृदादिस्तोमानामग्निष्टोमान्निर्गमनरूप विहरणं, त्रिवृदादीनां विकृतिभूतसर्वसोमक्रतुप्राप्तिरूपा आपत्तिश्चावगम्यते। तावेतावापत्तिविहारौ तुल्येषु ज्योतिष्टोमशब्दवाच्यत्वविषयेऽग्निष्टोमादवशिष्टेषूक्थ्यादिष्वेव, तेनापद्यते 'अन्ये यज्ञक्रतव.' इत्यविशेषोपक्रमात्। न च सन्निधानादुक्थ्यादीनामेव ग्रहणमिति वाच्यम्, 'यज्ञानामि'ति शब्देन सर्वयज्ञानां सन्निहितत्वात्। तस्मादत्रान्यशब्देन सर्वेषां विकृतिसोमानां निर्देशः। अत्र "एतेनेष्ट्वान्येन यजेत" इति विकृतिसोमानामग्निष्टोमोत्तरत्वमङ्गं विधीयते, क्त्वाश्रवणात्। न चाग्निष्टोमप्राथम्यमेवात्र विधेयम्, प्रकरणानुग्रहात्। इष्ट्वेति क्त्वाप्रत्ययस्य पूर्वकालतायां विहितस्याग्निष्टोमप्राथम्यविधावप्यविरोधादिति वाच्यम्। इष्ट्वेति क्त्वाप्रत्ययेन एतच्छब्दार्थेऽग्निष्टोमे प्राथम्यविधावत्यन्तपारार्थ्यात्। विकृतिसोमानामग्निष्टोमोत्तरत्वविधौ च धात्वर्थे किञ्चिद्विधिलाभेन श्रुत्यनुग्रहात्। अतः प्रकरणमनादृत्याग्निष्टोमोत्तरत्व विकृतिसोमानां विधीयते। न च प्रयुक्तप्रकृतेरेव विकृतिष्वधिकारात् 'एतेनेष्ट्वान्येन यजेत' इति व्यर्थमिति वाच्यम्। न हि विकृत्यनुष्ठाने प्रकृत्यनुष्ठानं प्रयोजकं, किन्तु विकृतिज्ञानमेव तत्प्रयोजकम्। इदमेव च

१. निवेश., ख. २. प्रकृतीना. ग.

वाक्यमत्र ज्ञापकम् । ततश्च द्वादशाहाद्यननुष्ठानेऽपि तद्विकृतिभूतपौण्डरीकाद्यनुष्ठानं न विरुध्यते ॥

अत्राशङ्कते—

**प्रशं ा वा विहरणाभ ात् ॥ ३८ ॥**

विहरणापत्तिवाक्यशेषः प्रशंसैव । कुतः ? विहरणाभावात् । विहरणग्रहणमापत्तेरप्युपलक्षणम् । विकृतिसोमानां हि नाग्निष्टोमान्निर्गमनरूपं विहरणमस्ति । न हि तेऽग्निष्टोमान्निर्गच्छन्त उपलभ्यन्ते । नापि त्रिवृदादयोऽग्निष्टोमादन्यान् यज्ञक्रतून् प्राप्नुवन्त उपलभ्यन्ते । ततश्च कथमापत्तिविहारौ अन्यशब्दस्य विकृतिसर्वसोमक्रतुपरत्वमवगमयतः ॥

परिहरति—

**विधिप्रत्ययाद्वा न ह्यकस्मात् प्रशंसा स्यात् ॥ ३९ ॥**

वा शब्द एवार्थे । आपत्तिविहारौ विद्येते एव । यद्यपि तौ प्रत्यक्षं नोपलभ्येते, ( तथापि विधिप्रत्यात्—चोदकवचनात् तावुपलभ्येते । ) हि यतः, प्रशसा[1] अकस्मात्—अनवलम्बना न स्यात् । अतो विहरणापत्तिवाक्यशेषादन्यशब्दस्य विकृति सर्वसोमपरत्वाध्यवसानं युक्तम् ॥

इति पञ्चदश विकृतिसोमानामग्निष्टोमोत्तरकालकत्वाधिकरणम् ॥ १५ ॥

१६

"एतेनेष्ट्वान्येन यजेत"—इत्यत्रान्यशब्दस्सर्वविकृतिसोमक्रतुपर इति स्थितम् । विकृतिसोमाश्च सन्ति केचिदेकस्तोमकाः "त्रिवृदग्निष्टुत्" "पञ्चदशोऽग्निष्टुत" "सप्तदशोऽग्निष्टुत्" "एकविंशोऽग्निष्टुत्" इत्यादय । सन्ति च केचिदनेकस्तोमकाः गोष्टोमायुष्टोमादय· । तत्र किम् "एतेनेष्ट्वान्येन यजेत" इत्यन्यशब्देन एकस्तोमका एव सोमक्रतवो विवक्षिता· ? उत एकानेकस्तोमकास्सर्वे विकृतिसोमाः ? इति संशये पूर्वपक्षयति—

**एकस्तोमो वा क्रतुसंयोगात् ॥ ४० ॥**

वाशब्द· प्रत्यवस्थाने । यदि आपत्तिविहरणवाक्यशेषादन्यशब्दस्य सर्वविकृतिसोमपरत्वाध्यवसायः, तर्हि अन्यशब्देनैकस्तोमक एव क्रतुः प्रतीयेत, न त्वनेकस्तोम-

() वपुस्तके ग्रन्थपात .

१. प्रशसा. नास्ति. ग.

कोऽपि। कुतः? क्रतुसंयोगात्। "त्रिवृदन्यं यज्ञक्रतुमापद्यत इति" इत्यादिवाक्यशेषे एकैकस्य त्रिवृदादेः क्रतुसंयोगश्रवणात्। यः त्रिवृदादिस्तोमोऽग्निष्टोमादन्यं यज्ञक्रतुमापद्यते–प्राप्नोति, सः तं यज्ञक्रतुं दीपयति प्रकाशयतीत्येवं वाक्यशेषे यज्ञक्रतुमिति द्वितीयया कार्त्स्न्येन त्रिवृदादेः क्रत्वन्तरदीपकत्वं श्रूयमाणं कृत्स्नव्याप्तिं विना न सम्भवतीति त्रिवृदादेः कृत्स्नक्रतुव्याप्त्यावगमादिति यावत्॥

अथ सिद्धान्तयति—

**सर्वेषां वा चोदनाविशेषात् प्रशंसार्थस्स्तोमानाम्॥ ४१॥**

एकानेकस्तोमानां[1] सर्वेषामेव विकृतिसोमानामन्यशब्देन निर्देशः। कुतः? चोदनाविशेषात्—अन्येन यजेतेति विधावन्यशब्दस्यैकानेकस्तोमक्रतुसाधारणत्वात्। ननु वाक्यशेषे त्रिवृदाद्येकस्तोमकानामेव निर्देशादन्यशब्दस्य तत्परत्वमित्यत आह—प्रशंसार्थस्स्तोमानामिति। अग्निष्टोमप्राथम्ये तत्राभ्यस्तास्त्रिवृदादयः पश्चाद्विकृतिसोमेष्वनुष्ठीयमानाः स्वभ्यस्तत्वात् क्रत्वन्तरं दीपयन्ति। अन्यथा तु विकृतिसोमेषु त्रिवृदादीनां प्रथमानुष्ठानापत्त्यानभ्यस्तत्वात् क्लेशेन प्रयुज्यमानैस्तैस्तेषां दीप्तिर्न स्यादित्येवमग्निष्टोमप्राथम्यप्रशंसार्थ एवायं वाक्यशेषे त्रिवृदादिस्तोमानां क्रत्वन्तरदीपकत्ववादः[2]। ततश्चैकदेशसम्बन्धिनामपि[3] त्रिवृदादीनां ज्योतिष्टोमेऽभ्यस्तत्वाविशेषात् स्वसम्बन्धिक्रत्वन्तरदीपकत्वमुपपद्यत इति वाक्यशेषस्य सर्वसाधारण्येनोपपत्तेर्न ततो विशेषपरत्वम्। तस्मादन्यशब्द एकानेकस्तोमकसर्वविकृतिसोमसाधारण इति सिद्धम्॥

इति षोडशमेकानेकस्तोमकानामग्निष्टोमपूर्वकत्वाधिकरणम्॥ १६॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ[4]
पञ्चमाध्यायस्य तृतीयः पादः॥



---

१. एकानेकस्तोमानां. नास्ति. थ.　　२. अनुवादः अ.
३. सम्बन्धिनीनामपि. अ.　　४. कौतूहलवृत्तौ. थ.

# अथ पञ्चमाध्यायस्य चतुर्थः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अथास्मिन् पादे पाठक्रमस्य श्रुत्यर्थाभ्यां सह बलाबलविचारः प्रस्तूयते। ज्योतिष्टोमे श्रुतम्—"आश्विनो दशमो गृह्यते तं तृतीयञ्जुहोति" इति । तत्र किं "ऐन्द्रवायव गृह्णाति" "मैत्रावरुणं गृह्णाति" "आश्विनं गृह्णाति" इति पाठक्रमान्मैत्रावरुणग्रहणोत्तरमाश्विनस्य ग्रहण "दशमो गृह्यते" इति वचनाच्च ध्रुवग्रहणोत्तरमपि ? उत दशमत्ववचनाद् ध्रुवग्रहणोत्तरमेव ? इति संशय. । तत्र श्रुतिपाठयोः प्रामाण्याविशेषादुभयत्रापि स्थाने ग्रहणमिति प्राप्तम् । तथा "अग्निहोत्रञ्जुहोति" "यवागूं पचति" इत्यत्र किं पाठक्रमादग्निहोत्रहोमानन्तर[१] यवागूपाक ? उत प्रयोजनवशात्तत. पूर्वम् ? इति सशय.। तत्राप्यनियम इति प्राप्तम् ।

तत्र सिद्धान्तयति—

**क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥**

अर्थशब्दाभ्या–वचनप्रयोजनाभ्यां पाठक्रमस्यात्र बाधो भवति । कुतः ? श्रुतिविशेषात्—श्रुतीति कर्मणि क्तिन् । श्रुतस्य प्रत्यक्षविहितस्य दशमत्वस्य पाठकल्प्यक्रमापेक्षया विशेषाद् आधिक्यात्, यवागूपाकस्याग्निहोत्रार्थत्वाच्च । न हि [२]प्रत्यक्षवचनतो ग्रहणस्य दशमस्थानकत्वेऽवगते सति पाठत. क्रमान्तरकल्पनमुदेति । यवागूःपाकश्चाग्निहोत्रोत्तरं क्रियमाणोऽनर्थकस्स्यात् । अदृष्टार्थत्वकल्पनायान्तु स एव दोष' । तस्मादुभयत्रापि पाठक्रमो बाध्यते ॥

इति प्रथमं पाठक्रमापेक्षया श्रुत्यर्थक्रमयोर्बलीयस्त्वाधिकरणम् ॥ १ ॥

---

१. अग्निहोत्रानन्तर. अ.

१ प्रत्यक्षतो. अ.

२

दर्शपूर्णमासौ तावद् द्व्यहकालौ। तत्र दर्शे पूर्वेद्यु· शाखाहरणवत्सापाकरणादयो दधिधर्मास्समाम्नाता। परेद्युः प्रातराग्नेयधर्मा निर्वपणादयः श्रुताः। तदुभयेऽपि[1] तथैव प्रक्रान्ता:। पाठक्रमात् प्रदानन्त्वाग्नेयस्य प्रथमं भवति, पश्चाद्दध्न, याज्यानुवाक्यामन्त्रक्रमादिति स्थितमाद्यपादे। तत्र शाखाहरणादिषु निर्वपणादिषु च पाठक्रमस्य प्रत्यक्षत्वान्नैव प्रवृत्तिमुख्यक्रमाववतरत·। तत्र सर्वेषां हविषाम् "उत्तरार्धात् सकृत् सकृत् स्विष्टकृते समवद्यति" इति स्विष्टकृते समवदानम्, "प्रयाजशेषेण हवींष्यभिघारयति" इत्यभिघारणम्, "वेद्यां हवींष्यासादयति" इत्यासादनञ्च श्रुतम्। एतेषु चाग्नेयमासाद्य सान्नाय्यमासादयतीत्येवं [2]पाठक्रमाभावात् किं प्रवृत्तिक्रमेण दध्नः प्रथमं भवति? उत प्रधानलक्षणमुख्यक्रमेण? इति संशये, पूर्वपक्षयति—

**अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥**

अवदानादिषु प्रवृत्त्यैव क्रमस्स्यात्। प्रयोगवचनेन हि तावदङ्गाना मिथस्साहित्यं गम्यते। तच्च प्रवृत्तिक्रमादरे घटते। मुख्यक्रमादरे प्रथमप्रवृत्तदधिधर्माणां शाखाहरणादीना पश्चात् क्रियमाणतदासादनस्य च तद्धर्मस्य च[3] मध्ये [4]आग्नेयासादनापत्त्या दधिधर्माणां मिथः प्रत्यासत्तिभङ्गप्रसङ्गात् [5]मुख्यक्रमादरे पूर्वेद्युश्शाखाहरणादयो दधिनिष्पादनान्ता·, ततश्श्वोभूत आग्नेयनिर्वापादय[6], तत आग्नेयासादन, ततस्सान्नाय्यासादनं तत आग्नेयस्यासन्नाभिमर्शनं, ततस्सान्नाय्यस्येत्येवं प्रदानपर्यन्ता धर्मा·; तत आग्नेययागः ततस्सान्नाय्ययाग इत्यनुष्ठानक्रम। तत्र दधिनिष्पादनान्तधर्माणां स्वप्रधानेन सान्नाय्ययागेन प्रत्यासत्तिर्बाध्यते। प्रयोगवचनेन ह्यङ्गाना प्रधानसाहित्येऽवगते आग्नेयसान्नाय्ययागयोः प्रयोगवचनैकत्वबलात् सान्नाय्ययाग· प्रतिपदार्थमेकैकाग्नेयपदार्थव्यवधानं सहते। ततश्च [7]मुख्यक्रमादरे सान्नाय्ययागाद्दधिनिष्पत्त्यन्तपदार्थानां शास्त्राननुमतो [वि] प्रकर्षो

१. अपि. नास्ति. ग.
२. तेषु पाठक्रमस्य ग.
३. च. नास्ति अ. ग.
४. आग्नेयस्य. अ.
५. मुख्यक्रमात्. घ.
६. निर्वापणादय. ग.
७. मुख्यक्रमात्. घ.

भवति, आग्नेयनिर्वापाद्यनन्तरमाग्नेयासादनस्याधिकस्य प्रवेशात् । तथा प्रवृत्तिक्रमा- [ दरेऽपि ] प्रथमं शाखाहरणादयः, ततो निर्वापादयः, ततस्सान्नाय्यस्यासादनं, तत आग्नेयस्येत्येवं प्रदानपर्यन्ता धर्माः; तत अग्नेययागः ततस्सान्नाय्ययाग[१] इत्यनुष्ठान- क्रमः । आन्नाय्याग्नेयादिधर्मस्याग्नेयादिप्रधानस्य च समावेशात् सान्नाय्यधर्माणां स्वप्रधानाद्विप्रकर्षः । ततश्च प्रवृत्तिक्रमान्मुख्यक्रमस्य न [२]प्रधानप्रत्यासत्तिकृतं प्राबल्य- मस्ति । तथाचाङ्गानां मिथः प्रत्यासत्त्यनुग्रहवशात् प्रवृत्तिक्रमादर एव युक्त । एव स्विष्टकृदवदानप्रयाजशेषाभिधारणयोरपि ॥

अथ सिद्धान्तयति—

**यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥**

प्रदानं यागः तमनतिक्रम्य यथाप्रदानम् मुख्यक्रमेणैवावदानादिषु क्रमः प्रत्येतव्यः, न तु प्रवृत्तिक्रमेण । कुतः ? तदर्थत्वात्—अङ्गानां प्रधानार्थत्वात् । साङ्ग- प्रधानविधायकेन हि प्रयोगवचनेनाङ्गानां प्रधानसाहित्य गम्यते । मिथस्साहित्यन्तु तेषा पश्चात्तद्द्वारेणाङ्गाना प्रधानार्थत्वात् । ततश्च मिथः प्रत्यासत्त्यपेक्षयाङ्गानां प्रधानप्रत्यासत्तिर्बलीयसीति प्रधानप्रत्यासत्त्यनुसारेणैव [३]बलाबलनिर्णयः कार्यः । मुख्यक्रमादरे च यद्यप्युक्तरीत्या दधिनिष्पादनान्तकतिपयपूर्वेद्युर्धर्माणां स्वप्रधानाद्वि- प्रकर्षो भवति । आग्नेयनिर्वापाद्यनन्तरमाग्नेयासादनस्याधिकस्य प्रवेशात्, तथापि परेद्युरनुष्ठेया आसादनादयस्स्वप्रधानेन[४] सान्नाय्ययागेन सन्निहिता एव भवन्ति । अन्तराग्नेयपदार्थद्वयसमावेशाभावेन शास्त्राननुमतविप्रकर्षाभावात् । प्रवृत्तिक्रमादरे तु शाखाहरणादयस्सर्वे सान्नाय्यया[गात्] स्वप्रधानाद्वि[प्रकृष्टा] एव भवन्ति । अन्तिमसान्नाय्यधर्मानन्तरमाग्नेयान्तिमधर्मस्याग्नेयप्रधानस्य च समावेशेन शास्त्रा- ननुमतव्यवधानस्यावर्जनीयत्वात् प्रधानपश्चाद्भाविषु स्विष्टकृदिडाद्यवदानादिषु प्रवृत्तिक्रमादरे सान्नाय्ययागानन्तरं सान्नाय्यस्विष्टकृदवदानम्, तत आग्नेयस्येत्येव- मनुष्ठाने सति सान्नाय्ययागस्य तदीयस्विष्टकृदवदा ( नस्य च नैरन्तर्यादाग्नेयधर्माणा स्विष्टकृदवदानादि ) सर्वेषामुत्तरेषा स्वप्रधानाग्ने[ययागा]दत्यन्तविप्रकर्षापाताच्च[५] ।

---

१. नासान्नाय्यस्य. क.
२. प्रधान. नास्ति. अ.
३. बलाबलस्य, अ,
४. असादनाद्यव्यवधानेन. अ.
() वपुस्तके ग्रन्थपात.
५. विप्रकर्षाच्च. क.

तस्मात् प्रधानप्रत्यासत्यनुग्रहाय मुख्यक्रम एवादर्तव्यः। न च प्रधानावदानाभिघारणयोरुदाहरणत्वसम्भवे[1] तदतिलङ्घ्य किमिति स्विष्टकृदवदानप्रयाजशेषाभिघारणे उदाहृते इति वाच्यम्। [2]अवदानादिप्रदानान्तस्यार्थस्यैकपदार्थतायाः प्राचीनपादे व्यवस्थापितत्वेन प्रधानावदानस्य प्रधानाभिघारणस्य च प्रधानात् पृथग्भावासम्भवेन तत्र विचारायोगात्। उक्तञ्च वार्तिके—'प्रदानोपक्रमा एते न तु पृथक् पदार्था इत्युक्तम्' इति ॥

इतोऽपि मुख्यक्रम एवादर्तव्य इत्याह—

## लिङ्गदर्शनाच्च ॥ ४ ॥

"स वै प्रयाजानिष्ट्वा ध्रुवामेवाग्रेऽभिघारयति। ततो हि प्रथममाज्यभागौ यक्ष्यन् भवति" इति प्रधानक्रमस्य क्वचिद्धेतुत्वानुवाददर्शनाल्लिङ्गादितरत्रापि तथा विज्ञायते, तुल्यन्यायत्वात् ॥

इति द्वितीय मुख्यक्रमप्राबल्याधिकरणम् ॥ २ ॥

३

"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति सोमस्य दर्शपूर्णमासपूर्वकत्व श्रुतम्। किमेतन्नियतम्? उतानिष्ट्वापि दर्शपूर्णमासौ सोम कर्तुं शक्यते? इति संशये, पूर्वपक्षयति—

## वचनादिष्टिपूर्वत्त्वम् ॥ ५ ॥

"दर्शपूर्णमासाभ्यामिष्ट्वा" इति वचनात् सोमस्य दर्शपूर्णमासपूर्वकत्वन्नियतम्। न च "सोमेन यक्ष्माणोऽग्नीनादधीत" इति वचनेन[3] दर्शपूर्णमासयोस्सोमपूर्वकत्वलाभादस्तु विकल्प इति वाच्यम्। विरोधे [4]हि सति विकल्पः। न ह्यत्र विरोधोऽस्ति। "सोमेन यक्ष्यमाण" इत्यत्र हि सोमस्याधानोत्तरकालत्वं शाब्दमर्यादया गम्यते, यक्ष्माण इति लटो भविष्यति विधानात्। ( आधानोत्तरकालत्वञ्च

१. सम्भवेऽपि अ

२. अवदानादिप्रदानस्यार्थस्य. क, अवदानादिप्रदानान्तस्यैक. ग.

३. वचनात्. अ.  ४. सति हि. अ.

सोमस्य दर्शपूर्णमासपूर्वकत्वेऽप्यविरुद्धम्। एवमपि सोमस्य ) आधानोत्तरकालकत्वानपायात् लङ्विधौ भविष्यतः [1]कालस्याव्यवहितत्वविशेषणे गौरवात् प्रमाणाभावाच्च। [2]लोके क्वचिदव्यवहितत्वप्रतीतिस्त्वौत्सर्गिकी, प्रकरणाद्युन्नीततात्पर्यवशाद् भवति। इह तु न तथाविधतात्पर्योन्नायकं प्रमाणं किञ्चिदुपलभामहे। अत एव लोके भोजने[3] [ कृते ] द्वित्रादिघटिकोत्तरं व्रजत्यपि पुरुषे भुक्त्वा व्रजतीति प्रयोग उपलभ्यमान उपपद्यते। अतो दर्शपूर्णमासपूर्वकत्वं सोमस्य नियतम्॥

अथ सिद्धान्तयति—

**सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्राति वचनात्तदर्थेनानर्थकं हि स्यात्॥ ६॥**

चकार उक्तसमुच्चये। वचनात् सोमस्येष्टिपूर्वत्वम्, सोमश्च दर्शपूर्णमासाभ्यां पूर्वं प्रयोज्यः। नन्वेकस्मिन् पुरुषे कथमेतदुभयमित्यत आह—एकेषामिति। एकशब्दोऽन्यवाची। 'एके मुख्यान्यकेवलाः' इति कोशः। केषाञ्चित् पुरुषाणामिष्टिपूर्वस्सोमः। अन्येषान्तु विपर्ययः। ननु "दर्शपूर्णमासाभ्यामिष्ट्वा" इति वचने जाग्रति कथं दर्शपूर्णमासयोस्सोमपूर्वकत्वम्। "सोमेन यक्ष्यमाण" इति वचनन्तु सोमस्याग्न्याधेयोत्तर [4]कालत्वमात्रपरम्। तच्च दर्शपूर्णमासाभ्यां व्यवधानेऽप्यविरुद्धमित्यत आह[5]—अग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनादिति। सन्त्यग्न्याधेये वसन्ताद्या ऋतवः—"वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति। सन्ति च [6]तत्र नक्षत्राणि—"कृत्तिकास्वग्निमादधीत, रोहिण्यामग्निमादधीत" इत्यादीनि। तेषामनादरश्श्रूयते—"यस्सोमेन यक्ष्यमाणोऽग्नीनादधीत स नर्तून् सूर्क्षेन् न नक्षत्रम्" इति। अत्र चोपक्लृप्तसोमसम्भार ऋतुनक्षत्राण्यनादृत्याधाय तदानीमेव सोमेन यजेतेत्यानन्तर्यं गम्यते। न चैतद्दर्शपूर्णमासप्रतीक्षायामुपपद्यते। ननु "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति वाक्यानुसारेण ऋतुनक्षत्रातिक्रमवचनं दर्शपूर्णमासोत्तरकालमेव सोमेन यक्ष्यमाणस्य

( ) गपुस्तके ग्रन्थपात

1. कालस्य च. अ, क.

2. लोके नास्ति. अ.

3. भोजने तु. मातृकापाठ.

4. उत्तर. नास्ति. ग.

5. इत्याह. क.

6. तत्र. नास्ति. ग.

इतोऽप्येवमित्याह—

**अयक्ष्यमाणस्य पवमानहविषां कालनिर्देशानन्तर्याद्विशेषस्स्यात् ॥८॥**

सोमेनायक्ष्यमाणस्य पवमानहविषां कालो निर्दिश्यते—"यस्सोमेनायक्ष्यमाण आदधीत न स पुरा संवत्सरात् पवमानहवींषि निर्वपेत्, यक्ष्यमाणस्तु द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि सद्यो वानु निर्वपेत् इति"। न हि[1] कश्चित् सोमेनायक्ष्यमाणो भवति, सर्वस्यापि नित्यतया तद्विधानात्। तस्मादाधानानन्तरमेव यक्ष्यमाण इति गम्यते। पवमानेष्टयस्तु अङ्गत्वान्न व्यवधायिका। "ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आ तृतीयात् पुरुषात् सोमं न पिबेत्" इति व्रात्यपशुरपि सोमाधिकारार्थत्वान्न व्यवधायकः। वस्तुतस्तु विच्छिन्नत्रिपुरुषसोमपीथस्य सोमाधानमेव नास्ति, इष्टिपूर्वकत्वन्तस्य नियतम्। सोमात्प्रागन्वारम्भणीयासम्भवेन व्रात्यपशोरसम्भवात्। तत्राग्नावैष्णवस्याग्नीषोमीयविकारत्वेन तस्य सोमात्प्रागनुपपत्तेः, 'सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्' इति () वक्ष्यमाणन्यायादित्यलम् ॥

अथाधिकरणफलं निर्दिशति—

**इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम् ॥ ९ ॥**

अग्नीनाधायानन्तरमेव सोमेनायक्ष्यमाणस्य आधानादूर्ध्वं दर्शपूर्णमासाविष्टिः प्रथमं प्रयोज्या, ततः पश्चात् सोमः। फलैकत्वादिष्टिरित्येकवचनम्। अत एवैकादशेऽध्वरकल्पाधिकरणे सूत्रकारो वक्ष्यति—'फलैकत्वादिष्टिशब्दो यथान्यत्र' इति। तादर्थ्ये—तस्य [2]इष्टिपूर्वत्वस्याभावः तदर्थं। अर्थशब्दो निवृत्तौ। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति कोशः। 'मशकार्थो धूमः' इति यथा। मशकानामर्थो निवृत्तिर्यस्मादिति तदर्थः। आधानानन्तरमेव सोमयागाभिसन्धौ सोमपूर्वकत्वमिष्टेरिति यावत्। तादर्थ्ये आधानस्य सोमार्थत्वे सति सोमपूर्वकत्वमिष्टेरिति व्याख्यानन्त्वनुपपन्नम्, आधानस्य सर्वार्थत्वेन कालार्थसंयोगस्यैवात्र विवक्षितत्वात्। यद्यप्यत्र प्रयोजनभेदः स्पष्टः, अथापि मन्दबुद्धिं प्रति सूत्रप्रवृत्तिः ॥

इति तृतीयमिष्टिसोमयोः पौर्वापर्यनिर्णयाधिकरणम् ॥ ३ ॥

---

१. हि. नास्ति. ग.     २. इष्टिपूर्वकत्वस्य. क.

४

इष्टिपूर्वत्वं सोमपूर्वत्वं वेति स्थितम्। तत्र किं ब्राह्मणस्य सोमपूर्वत्वमेव, क्षत्रियवैश्ययोस्तु द्वौ कल्पावित्येवं व्यवस्थितो विकल्पः ? उत त्रयाणामपि वर्णानां द्वौ कल्पौ ? इति संशये, पूर्वपक्षयति--

## उत्कर्षाद् ब्राह्मणस्य तु सोमस्स्यात् ॥ १० ॥

क्षत्रियवैश्ययोर्द्वौ कल्पौ, ब्राह्मणस्य तु सोम एव प्रथमं प्रयोज्यः स्यात्, ततो दर्शपूर्णमासौ। कुतः ? उत्कर्षात्--ब्राह्मणस्य सोमादूर्ध्वमेव दर्शपूर्णमासविधानात्। एवं हि श्रूयते--"आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाग्नीषोमीयो भवति। यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवति" इति, "स मुखतस्त्रिवृत निरममीत, तमग्निर्देवतान्वसृज्यत गायत्री च्छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणाम्" इति। प्रजापतिमुखादग्नेर्ब्राह्मणस्य च सृष्टत्वाद् ब्राह्मणस्याग्निरभिमानिदेवता। सः ब्राह्मणः सोमयागादुर्ध्वमग्नीषोमदेवताकः। तर्हि तस्माद् यत्पौर्णमासं हविः तद् अनुनिर्वपेत्--सोमादूर्ध्वं[1] निर्वपेत् न तु ततः पूर्वम्, यतः तर्हि--सोमादूर्ध्वमेव ब्राह्मणोऽग्नीषोमदेवताक इत्यर्थः। अत्र[2] यद्यपि पौर्णमासं हविरित्येतद्वचनात्[3] अग्नीषोमीयस्यैव सोमादूर्ध्वकालता गम्यते, तथापि तदविनाभूतत्वाद्दर्शपूर्णमासयोरेव सोमोर्ध्वकालता लभ्यते। ततश्च ब्राह्मणस्याधानानन्तरं सोम एव प्रयोज्यः, ततो दर्शपूर्णमासाविति नियमः। क्षत्रियवैश्ययोस्तु इष्टिपूर्वत्वं सोमपूर्वत्वं वेति विकल्पः।

अथ त्रयाणामपि वर्णानामिष्टिपूर्वत्वं सोमपूर्वत्वं वेति सिद्धान्तकोटिरपि त्रेधा। तत्र प्रथमसिद्धान्तकोटिमवलम्ब्य कश्चिदेकदेशी प्रत्यवतिष्ठते--

## पौर्णमासी वा श्रुतिसंयोगात् ॥ ११ ॥

"आग्नेयो वै ब्राह्मणो देवतया" इत्यादिवाक्ये पौर्णमासीकर्मैव सोमादूर्ध्वं विधीयताम्, न तु दर्शोऽपि। कुतः ? श्रुतिसंयोगात्--कर्मणि क्तिच्। पौर्णमासशब्देनैव श्रुतेन संयोगात्, दर्शशब्दस्य चाश्रुतत्वात्। उपलक्षणत्वे च प्रमाणा-

---

१. ऊर्ध्वंन्तु. अ. क.
२. अत. अ. क.
३. इत्येकवचनात् ग.

भावात्। ततश्च दर्शेष्टिपूर्वत्वं सोमपूर्वत्वं वा ब्राह्मणस्य भवति। इतरयोस्तु दर्शपूर्णमासपूर्वत्व सोमपूर्वत्वं वेति फलति॥

तदिमां प्रथमसिद्धान्तकोटिं पूर्वपक्षी प्रतिक्षिपति—

## सर्वस्य वैककर्म्यात्॥ १२॥

वा शब्द एवार्थे। "आग्नेयो वा" इत्यादिवाक्ये पौर्णमासीमात्रस्य न सोमोर्ध्वकालविधिः, किन्तु दर्शस्य पूर्णमासस्य च सर्वस्यैव। कुतः? ऐककर्म्यात्—क्रियते इति कर्म फलम्। एकफलकत्वादित्यर्थः। "दर्शपूर्णमासाभ्यां स्वर्गकामः" इति समुदितयोरेव दर्शपूर्णमासयो फलश्रवणात्। अफलायाश्च केवलपौर्णमास्यास्सोमादूर्ध्वं (तत प्राग् दर्शस्य चानुष्ठानासम्भवात्। 'पौर्णमास्युपक्रमौ दर्शपूर्णमासौ' इति वचनेन पौर्णमासीकर्मण' प्रथमं प्रयोज्यतया सोमादूर्ध्वं) पौर्णमासीकर्म ततः प्राग् दर्शकर्मेत्यनुपपत्तेश्च। ततश्च पौर्णमासीमात्रस्य न सोमोर्ध्वताविधिः, किन्तूभयोरपि दर्शपूर्णमासयोः। ततश्च प्राक् सोमाद् ब्राह्मणस्य दर्शपूर्णमासाभावात् सोमपूर्वत्वमेव ब्राह्मणस्य भवति, इतरयोस्तु द्वौ कल्पौ॥

अथ द्वितीयसिद्धान्तकोटिमवलम्ब्यान्य एकदेशी प्रत्यवतिष्ठते—

## स्याद्वा विधिस्तदर्थेन॥ १३॥

वा शब्द प्रत्यवस्थाने। "आग्नेयो वा" इत्यादिवाक्ये तदर्थेन—ब्राह्मणोद्देशेन सोमादूर्ध्वं 'पौर्णमासीनामककर्मान्तरस्य विधिरस्तु, "मासमग्निहोत्रञ्जुहोति" इत्यग्निहोत्रवत्। एवञ्च समानपदोपात्तधात्वर्थविधानाच्छ्रुतिरनुगृहीता भवति। दर्शपूर्णमासयोर्भिन्नपदोपात्तसोमोर्ध्वकालविधौ तु वाक्यप्रमाणमेवानुसृतं स्यात्, न तु श्रुतिः। अश्रुतस्य दर्शस्यापि सोमोर्ध्वकालता न भवति। अतः ब्राह्मणस्य प्रथमं सोमः दर्शपूर्णमासौ वा, उभयथाप्यश्रुतस्य दर्शस्यापि सोमादूर्ध्वं प्रतिपौर्णमास पौर्णमासनामककर्मान्तरं नित्यञ्च² पौर्णमासं कर्तव्यमित्येवमिष्टिसोमपूर्वत्वकल्पौ भवतः। क्षत्रियवैश्ययोस्तु द्वावेव कल्पौ न कर्मान्तरमिति विशेषः॥

---

( ) अपुस्तके ग्रन्थपातः

1. पूर्णमासनामक. ग.

२. नियतञ्च. श.

तामिमां द्वितीयकोटिं पूर्वपक्षी प्रतिक्षिपति—

**प्रकरणात्तुल्यकालस्स्यात् ॥ १४ ॥**

प्रकरणात् प्रकृतप्रत्यभिज्ञानबलान्नित्यस्यैव पौर्णमासस्य "पौर्णमासं हविः" इत्यनेन परामर्शे सति एकफलतया दर्शस्य तदविनाभावादुभयोः तुल्यस्सोमोर्ध्वकालस्स्यात्। कर्मान्तरविधौ हि पौर्णमासं नाम कुर्यात्, तच्च सोमादूर्ध्वमिति भवेद्वाक्यभेदः, विशिष्टविधौ च गौरवम्, पौर्णमासनाम्नश्चानेकार्थता स्यात्; धर्मलक्षकता[1] च, प्रकृतप्रत्यभिज्ञाबाधश्च, फलान्तरञ्च कल्प्येत। मासाग्निहोत्रविधौ तु प्रकृतप्रत्यभिज्ञाविरहादगत्या कर्मान्तरत्वमाश्रितम्। ततश्च नित्यपौर्णमासकर्मण एवात्र कालविधिः, तत्संयोगाद्दर्शस्यापि। तथाच ब्राह्मणस्य सोमादूर्ध्वमेव दर्शपूर्णमासाविति तस्य सोमपूर्वत्वमेव न त्विष्टिपूर्वत्वम्। इतरयोस्तु द्वौ कल्पाविति पूर्वपक्षस्स्थितः॥

अथाधिकरणान्तरं प्रक्रम्यते—अनन्तरसूत्रोपजीवनेन[2] तत्पूर्वपक्षप्रवृत्ति[3]सौकर्यात्। तथाहि—"सोमेन यक्ष्यमाणोऽग्नीनादधीत नर्तून् सूर्क्षेत्र नक्षत्रम" इत्यत्र किमाग्न्याधेयिकानामृतुनक्षत्राणामनादरो विवक्षितः? उत सौमिकानाम्? इति संशये पूर्वपक्षयति—

**स्वकालस्स्यादविप्रतिषेधात् ॥ १५ ॥**

पूर्वसूत्रात् प्रकरणादित्यनुवर्तते। आधानप्रकरण इद वाक्यं श्रुतम न तु सोमप्रकरणे। ततश्च यथा "आग्नेयो वै ब्राह्मणः" इत्यादिवाक्ये प्रकरणात्[4]प्रसिद्धस्य पौर्णमासस्य सोमोर्ध्वकालविधिः, तथा प्रकरणादाधानस्यैवात्र ऋतुनक्षत्रानादरो विधीयते। सोमस्तु स्वकालस्स्यात्—"वसन्ते ज्योतिष्टोमेन यजेत, पर्वणि शुक्लपक्षस्य देवनक्षत्रेषु वा[5] सुत्या भवति" इति विहितकालक एव स्यात्, न तु तत्राप्यृतुनक्षत्रानादरः, सोमप्रकरणे तद्विध्यभावात्। नन्वेव सत्याधाने ऋतुनक्षत्रविधिविरोधः। तत्राह—अविप्रतिषेधादिति। आधाने ऋतुनक्षत्रविधेरसोमाधानविषये सावकाशत्वेन तद्विरोधाभावादित्यर्थः॥

---

१. लक्षणकता. ग. २. उपजीवित्वेन. अ.

३. प्रवृत्ति. नास्ति. अ. ४. प्रसिद्धपौर्ण. अ.

५. नक्षत्रे. क.

सिद्धान्तयति—

**अपनयो वाधानस्य सर्व त्वात् ॥ १६ ॥**

वा शब्द एवार्थे। "नर्तून् सूर्क्षेन्न नक्षत्रम्" इति सोमकालस्यैव ऋतुनक्षत्रस्यातिक्रमविधि., न त्वाधानकालस्य। आधाने ऋतुनक्षत्राणि विधाय 'यदैवैनं यज्ञ उपनमेत्तदथादधीत'' इति शतपथब्राह्मणे पक्षान्तरवचनेनैव तदतिक्रमसिद्धेः। एवञ्च सोमे वसन्तादिविधिरिष्टिपूर्वत्वे पर्यवस्यति। न च सोमे य इष्ट्यादिवाक्येन पर्वकालकत्वावगमान्नक्षत्रकालकत्वस्याश्रवणान्नक्षत्रानादरविधिर्व्यर्थ इति वाच्यम्। ''यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात्' इति तैत्तिरीयशाखायां सोमे नक्षत्रश्रवणादिति तन्त्ररत्ने स्थितम्। अनारभ्याधीतस्य नक्षत्रकालस्य दर्शपूर्णमासयोरुत्पत्तिशिष्टकालकत्वात्[1] सोमादिविषयत्वमिति भवस्वामी ॥

ब्राह्मणस्य सोमादूर्ध्वमेव दर्शपूर्णमासाविति पूर्वाधिकरणपूर्वपक्षः स्थितः। तत्र प्रथमसिद्धान्ती पुनः प्रत्यवतिष्ठते—

**[2]पौर्णमास्यूर्ध्वं सोमाद् ब्रा णस्य वचनात् ॥ १७ ॥**

"आग्नेयो वा" इत्यादिवाक्ये ब्राह्मणस्य पौर्णमास्येवोर्ध्वं सोमाद्विधीयते, न तु दर्शोऽपि। कुत. ? वचनात्-'पौर्णमासं हविः" इति पौर्णमासशब्दस्यैव तत्र पाठात्। अस्मादेव वचनाद्विहृतादपि पौर्णमासादर्शाच्च फलसम्भवात् दर्शप्राथम्यस्यापि वचनादेवोपपत्तेश्च ॥

तामिमा शङ्कान्निराकुर्वन् तृतीयसिद्धान्तकोटिं स्थिरयति—

**एकं वा शब्दसामर्थ्यात् प्राक् कृत्स्नविधानात् ॥ १८ ॥**

वा शब्द एवार्थे। एकमेवाग्नीषोमीयं हविस्सोमादूर्ध्वं विधीयते। सोमादूर्ध्वमेव पौर्णमासकर्मण्यग्नीषोमीयं भवति, न तु प्रागिति। न तु कृत्स्नपौर्णमासस्य सोमोर्ध्वकालताविधिः। कुत. ? शब्दसामर्थ्यात्। अदश्शब्दस्य सर्वनाम्नः प्रकृतपरामर्शितयोपक्रमोपात्ताग्नीषोमदेवताकस्यैव वोधने [3]समर्थत्वात् ॥

---

१. उत्पत्तिकालविशिष्टकत्वात्. ग. २. पूर्णमासादूर्ध्वं.

३. सामर्थ्यात्. अ.

[ नन्वग्नीषोमीयस्य ] सोमोर्ध्वकालताविधौ सति तत्साहचर्यात् कृत्स्नपौर्णमासस्योत्कर्षस्सिध्यतीत्यत आह—प्रागिति । "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति सोमात् प्राक् कृत्स्नयोर्दर्शपूर्णमासयोर्विधानेन तदानीं [1]दर्शमात्रस्यानुपपत्तेरित्यर्थः । ततश्च [2]ब्राह्मणस्य प्राक् सोमयागादग्नीषोमीयवर्जं दर्शपूर्णमासौ, ततस्सोमः, आदौ वा सोमः, ततो दर्शपूर्णमासौ । उभयथापि ( सोमादूर्ध्वमग्नीषोमीयेण सह दर्शपूर्णमासावित्येवमिष्टिपूर्वत्वं ब्राह्मणस्य, इतरयोस्तु ) सोमात्प्रागूर्ध्वं वा दर्शपूर्णमासौ । उभयथाप्यग्नीषोमीयेण सहैवेति सिद्धम् ॥

इति चतुर्थं ब्राह्मणस्याग्नीषोमीयहविरुत्कर्षाधिकरणम् ॥ ४ ॥

५

"आग्नेयो वै ब्राह्मणः" इत्यादिवाक्ये पौर्णमासकर्मण्यग्नीषोमीयमेकमेव हविस्सोमादुत्कृष्यत इति स्थितम् । पौर्णमासकर्मणि चास्त्यग्नीषोमीयः पुरोडाशः । अस्ति चाग्नीषोमीय आज्यहविरुपांशुयाजो वैष्णवोऽग्नीषोमीयः प्राजापत्यो वेति । तत्र किं पुरोडाश एव सोमादूर्ध्वमुत्कृष्यते ? उताज्यमपि ? इति । तत्र सिद्धान्तेनोपक्रमते—

## पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥

तुरवधारणे । 'पौर्णमासं हविरि'ति पुरोडाशस्याज्यस्य वा विशिष्य निर्देशेऽसत्यपि पुरोडाश एवोत्कृष्यते, [ न त्वा ] ज्यमपि । कुतः ? तद्युक्ते देवताभावात् । पुरोडाशसंयुक्ते यागेऽग्नीषोमयोर्नित्यं देवतात्वात् । आज्ये च तस्य पाक्षिकत्वात् । वैष्णवत्वपक्षे प्राजापत्यपक्षे च तदभावात् । तस्मादिहाग्नीषोमीयपुरोडाश एव सोमादूर्ध्वमुत्कृष्यते ॥

स्यादेतत्, एकमेवाज्यं कदाचित् प्राजापत्यं कदाचिद्वैष्णवं कदाचिदग्नीषोमीयञ्च भवति । आज्यस्य हविषो भेदाभावाद् आकृतेरेव शब्दार्थत्वात् । तथा चाग्नीषोमीयं हविस्सोमादूर्ध्वं कर्तव्यमित्युक्ते आज्यस्यापि कदाचिदग्नीषोमीय-

---

१. दर्शस्य. अ, २. ब्राह्मणस्य. नास्ति. ग.

() अपुस्तके ग्रन्थपातः.

सम्बन्धसत्वादुत्कर्षस्सिध्यति[१]। तथा च सोमात् प्रागुपांशुयाज एव न सम्भवतीति पूर्वपक्षमुपक्षिप्य प्रतिक्षिपति—

**आज्यमपीति चेन्न मिश्रदेवतात्वादैन्द्राग्नवत् ॥ २० ॥**

आज्यमप्युक्तयुक्त्योत्कृष्येत इति चेन्न; कुतः ? मिश्रदेवतात्वात्—विष्णुप्रजापतिलक्षणदेवतान्तरमिश्राग्नीषोमदेवताकत्वादित्यर्थः। ब्राह्मणस्य सोमादूर्ध्वं हविष उत्कर्षे "आग्नेयो वै ब्राह्मणो ( देवतया स सोमेनेष्ट्वाग्नीषोमीयो भवति" इति हेतुरुक्तः। सोमादूर्ध्वमग्नीषोमदेवताकयागार्हो भवतीत्यर्थः। ततश्च सोमादूर्ध्वं ब्राह्मणस्याग्नीषोमयागार्हत्वात् पौर्णमासं हविस्सोमादूर्ध्वं निर्वपेदित्युक्ते अग्नीषोमीयमिति गम्यते। तत्र च देवता ) तद्धितान्निरपेक्षाग्नीषोमदेवताकमेव पुरोडाशहविर्गम्यते, न तु देवतान्तरसापेक्षमाज्यमपि, ऐन्द्राग्नवत्। "आग्नेयं चतुर्धा करोति" इत्याग्नेयशब्देन यथा केवलाग्निदेवत्यो गम्यते नैन्द्राग्नः, तद्वत्। एवञ्च केवलाग्नीषोमदेवताकः पुरोडाश एवोत्कृष्यते, न तु देवतान्तरसम्बन्ध्याज्यमपि, तदुत्कर्षे हेतोरसामर्थ्यात्। तस्मादसोमयाजिनो ब्राह्मणस्य पौर्णमास्यां वैष्णवः प्राजापत्योऽग्नीषोमीयो वा उपांशुयाजो भवत्येव। अग्नीषोमीयपुरोडाशस्तु पौर्णमास्यामेवेति स्थितम् ॥

इति पञ्चममग्नीषोमीयपुरोडाशोत्कर्षताधिकरणम् ॥ ५ ॥

६

"ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इत्यादय इष्टयः, "वायव्यं श्वेतमालभेत" इत्यादयः पशवश्च दर्शपूर्णमासविकृतयः किं य इष्ट्यादिवाक्यात् सद्यस्कालाः ? उत पर्वणि पूर्वेद्युरन्वाधानादि कृत्वा परेद्युर्यजत इति प्रकृतिवद् द्व्यहकालाः ? इति संशयः[२]। तत्र सिद्धान्तेनोपक्रमते—

**विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तरा ततिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ २१ ॥**

उत्तरा ततिरिति विकृतिरुच्यते। जातावेकवचनम्। विकृतयः सद्यस्कालाः एकदिनसाध्या, न तु प्रकृतिवद् [३]द्व्यहकालाः। कुतः ? विकृ[तेः प्रकृ]तिकालत्वात्।

---

१. सिध्यतीति. अ,

() अपुस्तके ग्रन्थपातः.

२. ?तिं.

३. द्व्यहकालसाध्याः. क.

विकृतेरिति जातावेकवचनम्। द्व्यहकालत्वे विकृतीनां प्रकृत्या सहैककालत्वापातात् (तस्य च विरोधेनासम्भवात्)। न हि प्रकृतिविकृत्योरुभयोरपि युगपदेव पूर्वेद्युः प्रातरन्वाधानं परेद्युः प्रातर्यागश्च सम्भवति। 'ततश्च [1]विकृतिषु प्रकृतिप्राप्तद्व्यहकालत्वमपोद्य य इष्ट्यादिवाक्यात् सद्यस्कालत्वं (विधीयते, एकादशद्वितीयाद्याधिधिकरणन्यायेन()तृतीयया साङ्गस्य कर्मणः कालसम्बन्धप्रतीतेः। ननु "पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया" इति वचनात् प्रकृतेरेव ) सद्यस्कालत्वमस्तु। 'पूर्वेद्युरन्वाधानादि कृत्वा परेद्युर्यजेत' इति वचनान्तरानुसारेण य इष्ट्यादिवाक्यमन्वाधानाद्येकदेशविषय भविष्यति। ततश्च विकृतय एव द्व्यहकालाः कुतो न स्युः, तत्राह—तयोः प्रत्यक्षशिष्टत्वादिति। दर्शपूर्णमासयोः द्व्यहकालत्वस्य प्रत्यक्षशिष्टत्वात् तत्र द्व्यहकालत्वबाधो न युक्तः। विकृतिषु तु द्व्यहकालत्वस्य चोदकप्राप्तत्वेनानुमानिकत्वात्तत्रैव तद्बाधो युज्यते। ततश्च प्रकृतिर्द्व्यहकालैव। "पौर्णमास्यां पौर्णमास्या" इत्यादिवचनस्य 'पूर्वेद्युरन्वाधान' इत्यादिवचनान्तरानुरोधेनान्वाधानादिविषयत्वात्। विकृतयस्तु य इष्ट्यादिवाक्यात् सद्यस्काला एव॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## द्वैयहकाल्ये वा यथान्यायम् ॥ २२ ॥

वा शब्दः प्रत्यवस्थाने। विकृतीनां द्व्यहकालत्वेऽपि य इष्ट्यादिवाक्यं यथान्यायं चोदकन्यायमनतिक्रान्तं भवति, तदविरुद्धमिति यावत्। यथा "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादिवचनं 'पूर्वेद्युरन्वाधानादि कृत्वा परेद्युर्यजेत' इति वचनान्तरानुरोधेन पूर्वेद्युरन्वाधानाद्येकदेशविषयमाश्रितम्, एवं य इष्ट्यादिवाक्यमपि चोदकतः प्रकृतिप्राप्ते द्व्यहकालत्वानुसारेण परेद्युः कर्तव्ययागविषये योजयित्वा द्व्यहकालत्वमाश्रयणीयम्। एवञ्च [2]विकृतेश्चतुर्दश्यामुपक्रम. (पर्वणि यागः तदनन्तरं पर्वणि प्रकृतेरुपक्रमः।) परेद्युः प्रतिपदि याग इत्यविरोध.। न च विपर्ययशङ्क्य, विकृतेश्चतुर्दश्यामुपक्रमे प्रधानस्य पर्वकाललाभात् पर्वसूपक्रमे च तद्-

---

() चिह्नान्तर्गतो भाग स्खलित. अ.　　१. ततश्च नास्ति. अ.

२. विप्रकृष्ट.क.　　() अपुस्तके ग्रन्थपातः

() गपुस्तके नास्ति.

सम्भवात्; प्रकृतेस्तु 'पर्वणि प्रातरन्वादधाति परेद्युः प्रतिपदि यजते' इति वचनात् पर्वण्येवोपक्रमः। न च य इष्ट्येत्यादिवाक्ये तृतीयया साङ्गकर्मण कालसम्बन्धस्य प्रत्यक्षश्रुतस्यानुमानिकचोदकप्राप्तद्व्यहकालत्वानुरोधेन सङ्कोचो न युक्त इति वाच्यम्। न हि य इष्ट्यादिवाक्ये पौर्णमास्यमावास्याकालयोर्विधिरस्ति, येन तस्य प्रत्यक्षश्रुतत्वाच्चोदकप्राप्तद्व्यहकालत्वानुसारेण सङ्कोचो न युज्येत। पौर्णमासविकारा पौर्णमास्याममावास्याविकारा अमावास्यायामिति व्यवस्थानिवृत्त्यर्थमेव हि य इष्ट्येत्यादिवचनम्। एवञ्चान्यार्थं प्रवृत्ते य इष्ट्यादिवाक्ये उपात्तस्य पौर्णमास्यमावास्याकालस्य एकदेशसङ्कोचो न दोषाय, तात्पर्यविषयव्यवस्थानिवृत्तेरविरोधात्। तस्माद्विकृतयोऽपि द्व्यहकालाः॥

अथ सिद्धान्ती प्रत्याचष्टे—

**वचनाद्वैककाल्यं स्यात् ॥ २३ ॥**

वा शब्द एवार्थे। विकृतीनां सद्यस्कालत्वमेव स्यात्। य इष्ट्यादिवाक्ये तृतीयया साङ्गस्य कर्मणः कालवचनात् पर्वद्वयसम्बन्धबलाद्[1] यथा व्यवस्थानिवृत्त्यर्थमिदं[2] वचनं, तथा साङ्गस्य कर्मण कालसम्बन्धबलात् सद्यस्कालतार्थमपीदं वचनम्; न तु व्यवस्थार्थमेव, विनिगमनाविरहात्। एवञ्च कालस्य य इष्ट्यादिवाक्यतात्पर्यविषयत्वेन प्रत्यक्षश्रुतस्य चोदकप्राप्तद्व्यहकालत्वानुसारेणैकदेशसङ्कोचो न युज्यत इति सद्यस्काला एव विकृतयः।

ननु यस्मिन् क्षणे चन्द्रमास्स[म्पूर्णः] तस्मिन् क्षणे[3] पौर्णमासीशब्दो मुख्यः। यस्मिन् क्षणे सूर्याचन्द्रमसावत्यन्तं सह वसतस्तस्मिन् क्षणेऽमावास्याशब्दो मुख्यः। तस्मिंश्च क्षणे साङ्गस्य कर्मणोऽनुष्ठातुमशक्यत्वाद्य इष्ट्यादिवाक्यश्रुतकालस्यैकदेशसङ्कोचोऽवश्यमभ्युपेयः। तथा च परेद्युः कर्तव्यप्रयोगविषये सङ्कोचमाश्रित्य द्व्यहकालत्वाश्रयणे किं बाधकमिति चेत्, अत्र तन्त्ररत्ने—'सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन् तासाममावास्याञ्च पौर्णमासीञ्च नोपैत्" इति वैदिकप्रयोगाल्लौकिकप्रयोगाच्च पञ्चदश्यात्मकतिथिविशेषवाचकावेव पौर्णमास्यमावास्याशब्दौ, 'पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा। अमावास्या

१. बलाच्च यथा. अ.

२. इद नास्ति ग.

३. क्षणे. नास्ति ग.

त्वमावस्या' इत्यादिकोशाच्च। तथाच य इष्ट्यादिवाक्यश्रुतस्य कालस्य सङ्कोच आवश्यक इत्यसिद्धमेवेति समाहितम्।

याज्ञिकास्तु 'सूर्याचन्द्रमसोः परो विप्रकर्षः पौर्णमासी परस्सन्निकर्षोऽमावास्या' इत्यादिस्मृत्या क्षणविशेषवाचकावेवामावास्यापौर्णमासीशब्दौ, तिथिविशेषवाचित्वेऽपि तादृशक्षणसंयोगस्यावश्यं प्रवृत्तिनिमित्तत्वस्य वाच्यत्वात्। ततश्चैकस्मिन् क्षणे कर्मकरणाशक्त्या तद्वदहोरात्रयोर्निरूढलक्षणया शक्तितुल्यया 'तत्क्षणसंयुक्ताहोरात्र-[1]परौ। वैदिकलौकिकव्यवहारश्च प्रायेण पञ्चदश्यां तत्क्षणयोगादुपपन्नः। एवञ्च मध्यदिनात् प्राक् पश्चाद्वा पर्वप्रतिपत्सन्धिर्यत्र [2]तत्रैव दिने विकृतयः कार्या इत्याहुः। [3]उक्तञ्चैतत् सङ्कर्षकाण्डे ( [4]प्रथमस्य द्वितीये 'उत्तरस्मिन् [5]पर्वणि दृश्यमाने प्रतीयेत सन्निकर्षोऽभिप्रेत' इत्यधिकरणे "अमावास्यायामपराह्णे पितृयज्ञेन यजेत" इत्यमावास्याशब्दः [परस्ताद] होरात्रे गौण इत्युक्त्वा तृतीयाद्याधिकरणे 'विक्रमसन्निपाते दर्शपूर्णमासयोरिज्याकाल' इत्यत्र पौर्णमासीशब्दस्यापि ) तथैव वक्ष्यमाणत्वात्॥

इति षष्ठं विकृतीनां सद्यस्कालताधिकरणम्॥ ६॥

७

"यः पाप्मना गृहीतस्स्यात्तस्मा एतां मैत्रावरुणीं पयस्या निर्वपेत्" इत्यादयस्सन्ति सान्नाय्यविकाराः। आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्" इत्यादयश्चाग्नीषोमीयविकाराः। ते किं सोमादूर्ध्वं प्राग्वा कार्याः? उत सोमादूर्ध्वमेव? इति संशय। अविशेषादनियम इति प्राप्ते, सिद्धान्तयति—

**सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्॥ २४॥**

"नासोमयाजी सन्नयेत् सोमयाज्येव सन्नयेत्" "आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वा अग्नीषोमीयो भवति" इति वचनाभ्यां सान्नाय्याग्नीषोमीययोस्सोमोत्तरकालत्वमङ्गमवगतम्। अतस्तद्विकाराणामपि प्रकृतिवत् सोमोत्तरकालत्वमङ्गमतिदेशात् भवति। अतो न सोमात्प्राक् सान्नाय्याग्नीषोमीयविकाराः। अत्र भाष्ये पशुरप्युदाहृत। तत्र किं सोमान्तर्गतः प्रकृतिभूतोऽग्निषोमीयः पशुर्विवक्षितः? उत निरूढपशुबन्धा-

१. तत्क्षणयुक्त. ग.  २. तद्दिने. अ; दिने नास्ति. क.
३. युक्तञ्चैतत्. अ, क  ४. प्रथमद्वितीये. अ.
५. द्वितीये पर्वणि. अ.  () गपुस्तके ग्रन्थपातः.

दयः ? नाद्यः; तस्य सोमप्रयोगमध्ये "स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्यते" इति विहितकालविरोधेन सोमोत्तरकालत्वस्य चोदकतस्सिद्धान्तयितुं शक्यत्वात्। न द्वितीयः; निरूढपशुबन्धादीनामपि हि सोमान्तर्गतोऽग्नीषोमीयः पशुः प्रकृतिभूतः, तस्मिन्नेव पशौ पाशुकानां धर्माणामुपदेशात्। ततश्च प्रकृतिभूतेऽग्नीषोमीयपशावविद्यमानस्य सोमोत्तरकालत्वस्य कथं निरूढपशुबन्धादिषु चोदकतः प्राप्तिसम्भवः। तस्मादिह पशुर्नोदाहरणमिति टुप्टीकावार्तिके 'तन्त्ररत्ने च[1] स्थितम्। अत्रेदं वक्तव्यम्-तैत्तिरीयशाखायामग्नीषोमीयपशौ सोमान्तर्गत आध्वर्यवं तन्त्र समाम्नातं[2], हौत्रन्तु बह्वृचब्राह्मण आम्नातमिति भवत्यग्नीषोमीयः प्रकृतिः। कापिलशाखायान्तु नित्य ऐन्द्राग्ननिरूढपशुबन्धे आध्वर्यवं तन्त्रमाम्नातम्। तस्मिन्नेव च तैत्तिरीयशाखायां हौत्रमाम्नातमिति भवति निरूढपशुबन्धः प्रकृतिः। (तत्रेयं व्यवस्था सादृश्यात् कल्प्यते—अग्नीषोमोयः पशुस्सौमिकानां सवनीयादिपशूनां प्रकृतिः,) निरूढपशुबन्धस्तु सोमात् निरुह्य-पृथक्कृत्य बहिः क्रियमाणाना सौत्रामण्यादिनित्य[3]-काम्यनैमित्तिकपशूनां प्रकृतिरिति। तदेतदापस्तम्बीयकपर्दिस्वामिभाष्ये स्पष्टम्। तथाच भारद्वाजसूत्रम्—'ऐन्द्राग्नो निरूढपशुबन्धः काम्यानां प्रकृतिरग्नीषोमिय इतरेषाम्' इति। [4]तत्र काम्यानामिति सोमबहिर्वर्तिनां सर्वेषामपि पशूनामुपलक्षणम्। ततश्चैन्द्राग्नो निरूढपशुबन्धो नाग्नीषोमोयपशुप्रकृतिकः, किन्तु 'सान्नाय्यं वा तत्प्रभवत्वात्' इत्याष्टमिकन्यायेन सान्नाय्यविकार एव। ततश्च सान्नाय्यवत् सोमोत्तरकालत्वं तस्य न्याय्यमिति सम्भवत्येव पशुरप्युदाहरणम्। याज्ञिकास्तु प्रागपि सोमान्निरूढपशुबन्धमाचरन्ति। तत्र 'दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेनोर्ध्वं दर्शपूर्णमासाभ्या यथोपपत्त्येके' इत्याश्वलायनसूत्र शरणमित्यलम्॥

इति सप्तम सान्नाय्यविकाराणा सोमोदूर्ध्वकालत्वाधिकरणम्॥ ७॥

८

प्रकृतिभूतस्सोमो दर्शपूर्णमासाभ्या प्रागूर्ध्वं वेति स्थितम्। विकृतिसोमा अपि किं दर्शपूर्णमासाभ्यां प्रागूर्ध्वं वेत्यनियमः ? उत नाभ्यामूर्ध्वमेव ? इति संशये, प्रकृतिसोमवदनियम इति प्राप्ते, सिद्धान्तयति—

---

१. तन्त्ररत्नेऽप्यवस्थितम् क. २. तन्त्रमाम्नात. ग. ( ) अपुस्तके ग्रन्थपातः.
३. काम्य नास्ति. अ. ४. तत्र काम्यानामिति. नास्ति. अ, क.

## तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २९ ॥

यथा सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमाद् भवन्ति तथा विकृतिसोमा अपि ऊर्ध्वमेव सोमाद् भवन्ति। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति हि सोमस्य दर्शपूर्णमासोत्तरकालत्वं विहितम्। अतो विकृतिसोमेषु तदतिदेशमर्हति। दर्शपूर्णमासप्राग्भावित्वन्तु सोमस्य न विहितम्, किन्तु "सोमेन यक्ष्यमाणोऽग्नीनादधीत" इति तस्याधानानन्तर्यविधिवलादर्थसिद्धम्। न चार्थिकञ्चोदकः प्रतिदिशति। न च प्रकृतिसोमे वाचनिकस्याधानानन्तर्यस्य विकृतिसोमेषु चोदकप्राप्तेस्तेषां दर्शपूर्णमासप्राग्भावित्वमार्थिकमिति वाच्यम्, व्याघातात्। (आधानानन्तर्यं हि प्रकृतिसोमस्यैव सम्भवति, न तु विकृतिसोमस्यापि। "एष वाव प्रथमो यज्ञो यज्ञानां यज् ज्योतिष्टोम" इति) विकृतिसोमानां ज्योतिष्टोमोत्तरकालत्वेन तेष्वधानानन्तर्यस्य प्रकृतिसोमेन व्याहतत्वात्। ततश्च दर्शपूर्णमासोत्तरकालकत्वमेव विकृतिसोमानाम्। ततश्च सोमपूर्वत्वपक्षेऽप्याधानानन्तरमेव कृतज्योतिष्टोमस्य दर्शपूर्णमासारम्भात् प्राक् न विकृतिसोमा इति सिद्धम्॥

इत्यष्टमं विकृतिसोमाना दर्शपूर्णमासोत्तरकालत्वाधिकरणम्॥ ८ ॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमान-
महाग्निविलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजिशरभजितुक्कोजिभो-
सलचोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौ-
मस्य पञ्चपुरुषीपोष्येण बाल्य एव तद्दयानिर्वर्तितापरिमित महा-
ग्निविजृम्भितसर्वपृष्ठाप्तोर्यामवाजपेयादिप्रमुखसोममख-
सन्तर्पितशतमुखप्रमुखबर्हिर्मुखेन श्रीमहादेववाजपे-
ययाजिसुतेनान्नपूर्णागर्भजातेनापारपदवाक्य-
प्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवा-
जपेययाजितो लब्धविद्यावैशद्येन
श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसा
कुतूहलवृत्तौ[1] पञ्चमाध्यायस्य चतुर्थः पादः॥

**पञ्चमाध्यायस्समाप्तः॥**

---

() चिह्नान्तर्गतो भाग खण्डितः अ.   १. [illegible]

# अथ षष्ठाध्यायस्य प्रथमः पादः



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

प्रथमेऽध्याये धर्मस्वरूपन्तत्प्रमाणञ्च निरूप्य द्वितीयतृतीयचतुर्थपञ्चमैर्भेदाभेद-शेषिभाव-प्रयोज्यप्रयोजकभाव-क्रमयुक्तेषु कर्मसु निरूपितेषु, कस्य कस्मिन् कर्मण्यधिकार इति चिन्ता षष्ठाध्यायेऽस्मिन् प्रस्तूयते। अधिकार ईश्वरभावः, 'अधिरीश्वर' इति व्याकरणसूत्राल्लिङ्गात् '[1]कर्मजन्यस्वर्गादिफलभोक्तृत्वरूपं फलस्वाम्यमिह विवक्षितम्। तन्निरूपणञ्च कर्मणां फलवत्वाभावे न सम्भवतीति फलवत्वन्तावत् कर्मणा प्रथमन्निरूप्यते। "स्वर्गकामो यजेत" "पशुकामो यजेत" "प्रजाकामो यजेत" "स्वर्गकामो जुहुयात्" इत्यादिवाक्येषु किं धात्वर्थयागादिकं प्रति स्वर्गकामादिपदोपात्तं स्वर्गादिकं साधनत्वेनोपदिश्यते, धात्वर्थस्तु स्वर्गादिसाध्यत्वेन ? उत स्वर्गादिफलं प्रति धात्वर्थस्साधनत्वेनोपदिश्यते, स्वर्गादि तु साध्यत्वेन ? इति संशये, पूर्वपक्षयति—

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥**

कामपदोपात्ताना स्वर्गपश्वादिद्रव्याणां यागादिकर्मसयोगे श्रूयमाणे यागादिधात्वर्थं प्रति गुणत्वेन-साधनत्वेन अभिसम्बन्धः-अन्वय प्रत्येतव्यः। तथाहि—यजेतेति भावनाया भाव्याकाङ्क्षायां समानपदश्रुत्या धात्वर्थो यागादिरेव भाव्यत्वेनान्वेति, न तु स्वर्गादि। [तस्य स्वर्गादि] पदलभ्यत्वेन वाक्यप्रमाणगम्यत्वात्। [2]कामपदोपात्तस्वर्गादिद्रव्यन्तु तत्र साधनत्वेनान्वेति। तथाहि—'शीलिकामिभक्ष्याचारिभ्यो णः' इति वार्तिकेन स्वर्गकाम इति कर्तरि णप्रत्यय। स्वर्गादिद्रव्य साधनत्वेन कामयमान. पुरुषोऽभिधीयते, न तु साध्यायमान इति, 'सिद्ध

---

१. कर्मजन्य. नास्ति. ग.     २. काम नास्ति. क.

साध्यायोपदिश्यते[१]' इति न्यायात्। स्वर्गादिद्रव्यस्य च[२] प्रातिपदिकोपात्ततया सिद्धरूपेण प्रतीयमानत्वात्। यागादेश्च धातुना साध्यरूपेणैव प्रतीयमानत्वात्। नन्वत्र क्षुत्पिपासादिदुःखासंवलितो[३] रम्भाद्यप्सरस्सम्भोगः तस्मिन् लोकान्तरे[४] स्वर्गशब्दः प्रसिद्धः। तस्य तु यागादिकं प्रति साधनत्वमसम्भवपराहत-मिति चेन्न ; स्रजस्स्वर्गः चन्दनं स्वर्गः षोडशवर्षा· स्त्रियस्स्वर्ग इत्यादिलौकिकप्रयोगा-नुसारेण प्रीतिकरद्रव्येष्वपि स्वर्गशब्दस्य प्रवृत्ते, पश्वादेस्त्वसन्दिग्धमेव यागादि-साधनत्वम्। स्वर्गकाम इति च [न] पुरुष सामान्यविधि·, (कर्तृपुरुषं विना क्रियानुप-पत्त्यैव तत्सिद्धेः। नापि 'ब्राह्मणो बृहस्पतिसवेन' इत्यादिवत् पुरुषविशेषविधिः,) एकस्यैव पुरुषस्य कदाचित् स्वर्गकामनायाः कदाचिदस्वर्गकामनायाश्च सम्भवेन स्वर्गकामशब्दस्य ब्राह्मणादिशब्दवत् पुरुषविशेषसमर्पकत्वाभावात्। यदा स्वर्गकाम-स्तदा यजेतेति काललक्षणायान्तु स एव दोषः। कामयतिश्च [५]साधनकामानुवादः, स्वक्रियाक्षेपादेव यत्किञ्चिद्द्रव्यस्य साधनत्वेन कामनासिद्धे। ततश्च स्वर्गकामादिपदं लोहितोष्णीपादिपदवद्विशेषणभूतस्वर्गादिपरमेव ()। ततश्च स्वर्गपश्वादिद्रव्येण यागं कुर्यादित्यर्थः पर्यवस्यति। एवञ्च विधेर्दृष्टार्थत्वं लभ्यते, स्वर्गादिद्रव्यस्य दृष्टविधयैव यागसाधनत्वात्। यागेन स्वर्गं कुर्यादित्यभ्युपगमे[६] तु यागस्यादृष्टार्थतयैव विधि-स्स्यात्। न हि स्वर्गपश्वादिद्रव्यं प्रति दृष्टविधया यागस्साधनं भवितुमर्हति। न चोत्पत्तिशिष्टपुरोडाशादिद्रव्यान्तरावरुद्धत्वात्[७] न स्वर्गपश्वादीनां यागसाधनत्व-सम्भव इति वाच्यम्, पुरोडाशादिष्वेव स्रक्चन्दनाद्यासज्य सौरभ्यादिसम्पादनेन पुरोडाशादीनामेव स्वर्गकामादिशब्दैर्विधानात्। तस्माद्याग एव भावनाभाव्यः, न तु ततोऽन्यत् फलमस्ति। ततश्च फलस्वाम्यरूपाधिकार एव नास्तीति तद्विचारो नारम्भणीयः। नन्वफले कर्मणि कोऽपि न प्रवर्तेतेति चेत्, नैव प्रवर्तताम्। प्रवर्त-नागमकत्वेनैव प्रामाण्योपपत्तेः। न हि प्रवृत्त्यधीनं वेदस्य प्रामाण्यम्। तथा सति प्रमाणभूतवेदविहितस्यानुष्ठानम्, अनुष्ठानायत्तञ्च तत्प्रामाण्यमिति परस्पराश्रयापत्तेः।

---

१. उपयुज्यत इति अ, ग
२. च नास्ति. अ.
३. दुःखासङ्कुलित अ, क, ग.
४. लोकोत्तरे अ, क.
५. पशुसाधन. अ, क.
() अपुस्तके ग्रन्थपातः.
६. इत्युपगमे. ग.
७. द्रव्यावरुद्धत्वेन. अ; द्रव्येणावरुद्धत्वात्. क.

न चाफलानां कर्मणां कथं धर्मत्वम्, अलौकिकश्रेयस्साधनताकस्यैव धर्मत्वादिति वाच्यम्। माभूदेव तेषां धर्मत्वम्। तावता का हानिः? ततश्च धर्मविचारात्मकमिदं[1] शास्त्रं कृत्स्नमेव नारब्धव्यमिति प्राप्ते, सिद्धान्तयति—

**असाधकन्तु तादर्थ्यात्॥ २॥**

तुः पक्षव्यावृत्तौ। स्वर्गकामादि[2]पदोपात्तं स्वर्गपश्वादिकं यागादेर्धात्वर्थस्य साधकं न भवति, किन्तु स्वर्गादिकं प्रति धात्वर्थो यागादिस्साधनत्वेन विधीयते— स्वर्गादिकं साध्यत्वेन कामयमानो यजेतेति। कुतः? तादर्थ्यात्—पुरुषप्रवृत्तेः पुरुषाभिलषितार्थत्वात्। पुरुषो हि स्वाभिलषितस्य फलस्य सम्पत्तये व्याप्रियते। अतः फले कामना स्वाभाविकी मुख्या। तत्साधने [3]त्वौपाधिकी गौणी। ततश्च कामपदोपात्तानां स्वर्गपश्वादीनां स्वारसिकमेव काम्यत्वं गम्यत इति फलत्वसिद्धिः। [4]किञ्च यत् साधनभूतं द्रव्यं तस्य [5]कामपदमन्तरेणापि कामनार्थलभ्या। यथा "व्रीहिभिर्यजेत" इति। ततश्च स्वर्गादिद्रव्यसाधनतया विधौ कामपदमनर्थकं स्यात्। स्वर्गादिफलाय धात्वर्थविधौ तु तदर्थवत्। यदि हि कामशब्दो नोच्चार्येत[6] तदा स्वर्गपश्वादिकमस्य समीहितमिति नैव विज्ञायेत[7]। अतः फलत्वप्रतिपिपादयिषया कामपदमर्थवत्। किञ्चोत्पत्तिशिष्टपुरोडाशाद्यवरुद्धत्वात् स्वर्गादिद्रव्यस्य न यागसाधनत्वेन विधिसम्भवः। स्रक्चन्दनाद्यासज्य सौरभ्यादिसम्पादनेन [8]समाधानन्तु शिष्यदन्धनमेव। [9]पुरोडाशादिद्रव्यस्य सौरभ्यादिमतः कथञ्चित् स्वर्गशब्दवाच्यत्वसम्पादनेऽपि [10]सौरभ्यादिविशिष्टपुरोडाशादिद्रव्यस्य विशेष्यांशे स्वर्गकामशब्देन विधानासम्भवात्, तस्योत्पत्तिवाक्यत एव प्राप्तत्वात् सौरभ्यादिविशेषणांशस्य च स्वर्गपदवाच्यत्वाभावेन तन्मात्रविध्यसम्भवात् स्वर्गशब्दस्य प्रीतिकरद्रव्यवाचित्वाभ्युपगमात्। अतस्सौरभ्यादिविशिष्टं द्रव्यान्तरमेव स्रक्चन्दनादि विधेयमिति वक्तव्यम्। ततश्चोत्पत्तिशिष्टद्रव्यविरोधो दुष्परिहरः। न च दर्शपूर्णमासा-

---

१. इद नास्ति. ग.
२. पदोपात्तस्वर्गादिक. क.
३. तु तदुपाधिका ग.
४. किञ्च नास्ति. ग.
५. कामभूतपद. ग.
६. नोच्चार्यते. ग.
७. विज्ञायते. ग.
८. तत्समाधानन्तु. अ, ग.
९. पुरोडाशादिकस्य. क.
१०. सौरभ्यादिद्रव्य. अ.

दिनामकं स्वर्गादिद्रव्यसाधनकं कर्मान्तरमेवेह स्वर्गकामादिवाक्येषु विवक्षितमिति नोक्तदोष इति वाच्यम्, सन्निधिवशेन बुद्धौ विपरिवर्तमानस्य यदाग्नेयादिवाक्योत्पन्नकर्मण एव फलाय विधिसम्भवे कर्मान्तरविध्ययोगात्। न च 'गुणश्चापूर्वसंयोगे वाक्ययोस्समत्वात्' इति गुणाधिकरणन्यायेन वाजिनयागवद्गुणाद्भेदस्सम्भवति। [स्वर्गका]मादिशब्दस्य फलपरत्वेनैवोपपत्तेः। किञ्च—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्॥"

इत्यादिवेदवाक्येन साधनदुःखेन क्षुत्पिपासादिदुःखेन च [रहि]ते स्वदारनियमभ्रंशादिप्रयुक्तभाविनरकाग्रस्ते सङ्कल्पमात्रोपनतस्रक्चन्दनवनितादिसाधनप्रभवे पारत्रिकसुखविशेषे आहितशक्तिकस्य स्वर्गशब्दस्य तत्रैव वैदिकसमयसिद्धतया स्रक्चन्दनादिद्रव्यपरत्वं न लौकिकप्रयोगानुसारेणाश्रयितुं युज्यते। त्रिवृच्चर्वश्ववालाधिकरणन्यायेन () वैदिकप्रसिद्धेर्बलवत्वात्। किञ्च स्वर्गादिफलं प्रति धात्वर्थविधौ समानपदश्रुत्यनुग्रहः। स्वर्गादिद्रव्यस्य साधनतया विधौ वाक्यानुग्रहः। वाक्याच्च श्रुतिर्बलीयसी। ततश्च स्वर्गादिकं साधयितुकामो यागेनाभिलषितं कुर्यादिति वचनव्यक्तिः। स्वर्ग एव च[1] तस्याभिलषित इति यागेन स्वर्गं कुर्यादित्यर्थः पर्यवस्यति॥

अथ यदुक्तमेकपदश्रुत्या यागस्य भाव्यत्वावगमान्न वाक्यात् स्वर्गकामपदोपात्तस्य भाव्यत्वमिति, तत्राह—

**प्रत्यर्थञ्चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धस्तस्मात् कर्मोपदेशस्स्यात्॥ ३॥**

हिरवधारणे। स्वर्गादीनां कर्मभिः कर्मभाव्यत्वेनैव अभिसम्बन्धः—अन्वयः, न तु साधनत्वेन। कुतः? प्रत्यर्थञ्चाभिसंयोगात्। चोऽवधारणे। अर्थ्यत इत्यर्थः। पुरुषेणाभिलष्यमाणं स्वर्गादिकं प्रति विधे अभिसंयोगात्—अन्वयात्। लिङ्प्रत्ययस्य हि प्रवर्तना वाच्या। सा च प्रवृत्त्यनुकूलव्यापारात्मिका प्रवर्तयितृनिष्ठव्यापारांशो विधिः। प्रवृत्तिस्तु अर्थभावना। सा च भाव्यादिभिस्त्रिभिरंशैरविनाभूता सती प्रथमं समानप्रत्ययोपात्तविधावन्वेति, न तु समानपदोपात्ते धात्वर्थे,

१. च नास्ति. अ.

एकपदश्रुत्यपेक्षया एकप्रत्ययश्रुतेरन्तरङ्गत्वेन बलवत्त्वात्। सा च पुरुषप्रवृत्तिरूपार्थभावना पुरुषाभिलषितमेव भाव्य सामान्यतो लब्ध्वा प्रथमं विधावन्वेति, अपुरुषार्थे [1]पुरुषं प्रवर्तयितुमशक्यत्वात्। ततश्च विधिबलात् सामान्यतो लब्धफला भावना किं तत्पुरुषाभिलषितमिति तद्विशेषमपेक्षमाणा एकपदोपात्तमपि धात्वर्थमपुरुषार्थत्वादुल्लङ्घ्य कामपदोपात्तैस्स्वर्गादिभिरन्वेति—स्वर्गादिकं पुरुषाभिलषितं कुर्यादिति। कथन्तर्हि धात्वर्थस्यान्वय', तत्राह—तस्मादिति। [2]तस्मात्—विशिष्य भाव्यांशस्यान्यतो लाभात्, सामान्यत एव च साधनलाभात् कर्मोपदेशस्स्यात्—धातुभिः कर्मणा [3]धात्वर्थानां विशिष्य साधनतया विधिस्स्यात्। ततश्च कर्मणां फलवत्त्वे सिद्धे फलस्वाम्यपर्यायोऽधिकारश्चिन्तयितुं शक्यत इति ॥

इति प्रथमं स्वर्गकामाधिकरणम् ॥ १ ॥

२

तदेवं कर्मणां फलवत्त्वे सिद्धे तेषु किं जन्तुमात्रस्याधिकारः ? उत मनुष्याणामेव चक्षुराद्यङ्गवैकल्यरहितानाम् ? इति संशये, पूर्वपक्षयति—

**फलार्थित्वात्तु कर्मणश्शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥**

तुराक्षेपे। कर्मणो विधायकं शास्त्रं सर्वाधिकारं स्यात्। [4]सर्वस्य जन्तुमात्रस्याधिकार कर्मजन्यफलस्वाम्यं बोध्यतया यस्य तथाविध स्यात्। जन्तुमात्रस्य यागादिकर्मस्वधिकारस्स्यादिति यावत्। कुत ? फलार्थित्वात्—जन्तुमात्रस्य स्वर्गादिफलकामत्वात्। ननु पशुपक्षिकृमिकीटपतङ्गादीनां नास्ति कालान्तरदेशान्तरभाविस्वर्गादिफलकामना। आसन्नमेव हि ते कामयन्त इति चेत्—व्याध्यादिनिमित्ताभावेऽपि सत्यपि खाद्यलाभे शुनश्चतुर्दश्यामुपवसतः पश्याम', श्येनांश्चाष्टम्याम्। ततश्च व्यवहितफलकामना[5] तिरश्चामप्यनुमीयते। सम्भवति च जन्मान्तरवासनावशात् स्वर्गादिकामना, जातस्य स्तन्यपानादिकामनावत्। यद्यपि तिरश्चां मन्त्रोच्चारणादिकं न सम्भवति, तथापि प्रधानमात्र ते कर्तुं शक्नुयुरेव । न चाङ्गविधि-

---

१. पुरुषस्य. अ, क.
२. तस्मात् नास्ति. क.
३. यागादीना अ, ग.
४. सर्वस्य. नास्ति. ग.
५. कामनापि अ
६. ह्यपनुवन्त्येव. अ, ग.

सामर्थ्यान्न तिरश्चां प्रधानमात्रात् फलसम्भव इति वाच्यम्, अङ्गविधीनां शक्तविषये[1] चरितार्थत्वात्। प्रधानवाक्यस्य फलकामत्वांशे प्रवृत्तस्याङ्गानुसारेण सङ्कोचे सोमद्रव्यस्य "इन्द्राय [2]त्वा वृत्रघ्ने" इत्यादिमन्त्रबलादैन्द्रप्रदानसङ्कोचापत्तेः। यद्यपि 'अग्नय इदं न मम' इत्युच्चारणसामर्थ्यं तिरश्चां नास्ति, तथापि मान[स] सङ्कल्प एव यज्यर्थः न तूच्चारणमपि। अतस्तिरश्चामपि प्रधानमात्रे शक्तिरविकला। तथा मनुष्येष्वन्धपङ्ग्वादीनां यद्यप्याज्यावेक्षणविष्णुक्रमणादि न सम्भवति, तथापि यथासम्भवन्तदितराङ्गकलापास्सन्तीति प्रधानकर्मणि शक्तिरविकलैव, अङ्गविधीनां पुरुषशक्तिमनुसृत्यैव प्रवृत्तेः। 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यधिकरणे 'आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी' इति व्यवस्थापितत्वात्। देवानान्तु स्वयंप्रभातविद्यानां सङ्कल्पमात्रसिद्धसमस्तसाधनसम्पत्सम्पन्नानां[3] साङ्गप्रधानकर्मसु शक्तिरविकलैव। न च त्रैवर्णिकविहितोपनयानाधानयोरभावेनाग्निविद्ययोरभावेन कथन्तेषां साङ्गप्रधानशक्तिरिति वाच्यम्। "ब्रह्म वाग्नि. क्षत्रमिन्द्रः ब्रह्म वै नाम बृहस्पति." इत्यादिश्रवणेन देवानामपि त्रैवर्णिकत्वावगमात्, ऋषीणामपि मनुष्यविशेषत्वात् शक्तिरविकलैव। तस्मात् जन्तुमात्रस्याधिकार इति प्राप्ते, सिद्धान्तयति—

## कर्तुर्वा श्रुतिसंयोगाद्विधिः [4]कार्त्स्न्येन गम्येत ॥ ५ ॥

वा शब्दोऽवधारणे। सर्वाङ्गोपेतप्रधानं य. कर्तुं शक्नोति तस्यैवाधिकारः, न त्वन्यस्य। कुत श्रुतिसंयोगात्—श्रुतीति कर्मणि क्तिच्। साङ्गस्यैव प्रधानस्य श्रुतेन फलेन सयोगात्। 'अङ्गानि तु प्रधानेनोपदिश्येरन्' इत्येकादशे वक्ष्यमाणत्वात्। तस्मात् ( विधि·—विधानमनुष्ठानम्, कार्त्स्न्येन-अङ्गकलापसहितप्रधानस्य गम्येत-प्रत्येतव्यम्। अयं भाव·—यदि कर्तारं प्रत्यङ्गानि स्वातन्त्र्येण विधीयेरन् तदा कर्तु·शक्तिमनुसृत्य तानि व्यवतिष्ठेरन्। नैवमस्ति, अङ्गवाक्याना प्रधानवाक्यशेषत्वात्। ततश्चाङ्गवाक्ययुक्तेन प्रधानवाक्येन [ अङ्गकलापयुक्तः ? ] क्रतुः कर्तारं प्रति विधीयमानस्तत्समर्थान् पुरुषान् लब्ध्वा असमर्थान्नापेक्षते। ततश्च तिरश्चामन्धपङ्ग्वादिमनुष्याणाञ्चासमर्थानां कर्मैव न विहितमिति न तेषामधिकारः। न चाविशेषप्रवृत्तप्रधानवाक्यस्य कथमङ्गवाक्यानुसारेण सङ्कोचः, प्रत्युत प्रधानवाक्यानु-

१. शक्तिविषये. ग. २. [illegible]

३. साधनसम्पन्नाना. क, ग. ४. [illegible]

सारेणैवाङ्गवाक्यानां यथाशक्ति विनियोजकत्वमेव युक्तमिति वाच्यम् । तथा सति हि समस्ताङ्गसहित कर्म समर्थाना फलसाधनम् असमर्थानान्त्वन्धपङ्ग्वादीनामाज्यावेक्षणादिरहितमिति पर्यवस्येत् । ततश्चाङ्गानां नित्यवदाम्नान बाध्येत । अतो[ना]ङ्गवाक्यानुसारेणैव प्रधानवाक्यसङ्कोच , अङ्गानुसारेण प्रधानसङ्कोचस्यायुक्तत्वात् । प्रकृते तु नित्यवदाम्नानबाधवशादङ्गवाक्यानुसारेण प्रधानवाक्यसङ्कोचो न दोषाय । ततश्च समस्ताङ्गसहितप्रधानादेव फलमिति तदसमर्थानामन्धपङ्ग्वादीनां नाधिकारः । तिरश्चान्तु प्रधानमात्रेऽप्यसामर्थ्यान्नाधिकारः । न हि केवल मानससङ्कल्प एव याग , किन्तु तदुच्चारणसहित , 'अवश्यन्तु त्यजेद्द्रव्यं मनसा वचसापि च' इति स्मरणात्, द्रव्याभावाच्च । द्रव्यदेवते हि यागस्वरूपम् । न च तिरश्चां पुरोडाशादिद्रव्यमस्ति । तस्मादविकलाङ्गानां मनुष्याणामेवाधिकार ॥

अस्तु तर्हि ऋषीणामधिकारः, तत्राह—

**नर्षीणामार्षेयाभावात् ॥ ६ ॥**

न चर्षीणां प्रवराध्यायप्रसिद्धानां भृग्वादीनां कर्मस्वधिकार । कुतः ? आर्षेयाभावात् । दर्शपूर्णमासयोस्सामिधेन्यनन्तरम् "अग्ने महां असि ब्राह्मण भारत, भार्गवच्यावनाप्नवानौर्वजामदग्न्याङ्गिरसबार्हस्पत्यभारद्वाज" इत्येवं भृग्वाद्यृषिजयजमानजातत्वेनाहवनीयाग्नेरभिमन्त्रणरूपं वरणमाम्नातम् "आर्षेयं वृणीते" इति । तदिदमार्षेयवरणं भृग्वादीनां न सम्भवति । न हि भृग्वादीनां भृग्वादयस्स्वगोत्रर्षयस्सन्ति, स्वर्गादावुत्पन्नेभ्यो भृग्वादिभ्य पूर्वं भृग्वाद्यन्तराभावात् । तदेव सूत्रभाष्यच्छायया प्रपञ्चस्य सृष्टिप्रलयास्तित्वं गम्यते । 'नित्य कश्चिदर्थस्स्यात् प्रजापतिर्वायुराकाशम् आदित्यो वा' इत्यादिभाष्येऽर्थवादाद्यधिकरणे तत्र तत्र प्रपञ्चनादिति वादस्तु प्रौढिवाद एतत्सूत्रविरोधात ॥ )

अस्तु तर्हि देवानां स्वयम्प्रभातविद्यानां सङ्कल्पमात्रोपनतसमस्तसाधनसम्पन्नानामधिकारस्तत्राह—

'न देवाना देवतान्तराभावात्' 'नर्षीणामार्षेयाभावात्' इतीद सूत्रद्वयं सूत्रपाठे नोपलभ्यते । भाष्ये वाक्यद्वयमुपलभ्यते । ग्रन्थकारस्सूत्रत्वेन परिगृह्य व्याख्यातीति प्रतिभाति ।

() 'विधिः' इत्यारभ्य 'एतत्सूत्रविरोधात्' इत्यन्तस्य ग्रन्थस्य पात. ख. ग. पुस्तकयोः ।

## न देवतानां देवतान्तराभावात् ।। ७ ।।

देवतानामपि नाधिकारः । कुतः ? देवतान्तराभावात् । न हीन्द्रादिभ्योऽन्य इन्द्रादयस्सन्ति । येन तानुद्दिश्य [इन्द्रादयो देवा यजेरन् ।] नापीन्द्रादीनां स्वस्वोद्देशेन द्रव्यत्यागात्मकयागानुष्ठानं सम्भवति । स्वस्मै सङ्कल्प्यमानस्य द्रव्यस्य स्वत्वत्यागायोगादिति भाष्यम् । न च कल्पान्तरवर्तीन्द्रादीनुद्दिश्यैतत्कल्पवर्तीन्द्रादयो यजन्तामिति वाच्यम् । कल्पान्तरवर्तिदेवानामतीतत्वेन तदुद्देश्यकयागस्याकिञ्चित्करत्वात् । यागो हि देवताराधनात्मकः 'यजदेवपूजायाम्' इति स्मरणात् । स च देवताप्रसादजननमुखेन फलसाधनम् । कल्पान्तरवर्तिनाञ्च देवानामतीतत्वान्न तत्प्रसाद एतत्कल्पवर्तियागात् सम्भवति । तथा च प्रधानासम्भवादेव देवानामपि तिरश्चामिव नाधिकार इति भाव. । येषान्तु मते चतुर्थ्यन्तशब्द एव,[1] येषाञ्च विग्रहचैतन्यादिरहितोऽर्थ एव देवता, तर्हि शब्दस्यार्थस्य वाचेतनत्वादेवानधिकारे सिद्धे 'देवतान्तराभावादि'ति [2]प्रयत्नवैयर्थ्यात्तेषामेतत्सूत्रभाष्यविरोधो दुष्परिहरः ।

यत्तु नवमे 'देवता वा प्रयोजयेत्' इत्यधिकरणे देवतानां विग्रहादिपञ्चकं निराकरिष्यते भाष्ये, तत्तु प्रौढिवादमात्रम् । अतएव वार्तिके देवताविग्रहादिपञ्चकमनाघ्रायैव तदधिकरणन्नवमे प्रवर्तयिष्यते, स्पष्टीकरिष्यते चास्माभि । शब्द एव देवता न त्वर्थ इति हि बौद्धप्रलपितमेव । तथासति इन्द्रादिशब्दानामनर्थकतया प्रातिपदिकार्थतद्गतकर्मत्वादिकारकसङ्ख्याभिधायिन्यस्सुब्विभक्तयो न स्यु । ततश्चेन्द्रादिशब्दघटितसमस्तवेदवाक्यान्युन्मत्तप्रलपितान्येवापद्येरन् । तथा विग्रहादिपञ्चकरहितोऽर्थो देवतेत्यपि प्रच्छन्नबौद्धप्रलपितमेव । न हि वेदप्रामाण्यमभ्युपगच्छद्भिर्वैदिकैर्देवतानां विग्रहादिपञ्चकं नास्तीति शक्यमभ्युपगन्तुम् । यागविधिसामर्थ्यादेव तद्विग्रहादिलाभात् । यागा हि देवताराधनरूपाः । 'यजदेवपूजायाम्' इति स्मरणात् । फलकामिनाञ्च ( देवताराधनानि राजाराधनवत् फलार्थानि । राजाराधनञ्च राज्ञि प्रसादजननमुखेन फलसाधनम् । प्रसन्नश्च ) राजा फलन्ददाति । तद्वदेव यागैराराध्यमानानां देवतानां फलदातृत्वं गम्यते । न च फलस्यानीशानानां फलदातृत्वं सम्भवति । नाप्यप्रसन्नाः

---

१. एव देवता अ, क. २. वैयर्थ्यापत्तेश्च अ.

() अपुस्तके ग्रन्थपातः

फलं प्रयच्छन्ति। नापि दत्तं हविरभुञ्जाना प्रसीदन्ति। न चैतत्सर्वमचेतनानां विग्रहरहितनां घटते। [1]ततश्च यागविधिसामर्थ्यादेव विग्रहवत्त्वं हविर्भोक्तृत्वं प्रसादवत्त्वं फलैश्वर्यवत्व फलदातृत्वं चेति विग्रहादिपञ्चकं देवतानां कल्प्यते। "सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं ददातु" "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" "इन्द्रो राजा जगतश्चर्षणीनां मधि क्षमि विषुरूपं यदस्ति। ततो ददाति दाशुषे वसूनि।"

'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैश्शुभैः' ॥

इत्यादिमन्त्रार्थवादेतिहासपुराणेषु देवतानां विग्रहादिपञ्चकस्य स्पष्टमभिधानाच्च। तेषां विध्येकवाक्यत्वेऽप्यवान्तरपदसंसर्गतः प्रतीयमानदेवताविग्रहादित्यागे कारणाभावात्। 'न सुरां पिबेत्' इत्यत्र पदत्रयस्यापि विभागे साकाङ्क्षतया 'अर्थैकत्वादेक वाक्य साकाङ्क्षञ्चेद्विभागे स्यात्' इति न्यायेन पदैकवाक्यत्वात् सुरां पिबेदिति पदद्वयसंसर्गतोऽर्थप्रतीतिरेव नास्तीति [2]तदनभ्युपगमः। मन्त्रादीनान्तु विधिभिर्नास्त्येकवाक्यतेति तेभ्योऽवान्तरार्थप्रतीतिस्सर्वानुभवसिद्धा न प्रत्याख्यातु शक्यते। अतएव भगवता जैमिनिना 'अविशिष्टस्तु वाक्यार्थः' 'अर्थैकत्वादेकं वाक्यम्' इत्यादिभिस्सूत्रैर्मन्त्राणां वाक्यत्वमर्थवत्वञ्च दर्शितमुपपद्यते। मन्त्रवाक्यार्थप्रतीतिमुपजीव्यैव 'छागो वा मन्त्रवर्णात्' इत्याद्यधिकरणप्रवृत्तिः। "बर्हिर्देवसदनन्दामि" इत्यादिमन्त्राणा लैङ्गिकश्च विनियोगस्सिध्यति। अर्थवादानामर्थवत्वविरोधिनश्च शास्त्रदृष्टविरोधादयोऽर्थवादाधिकरणे 'गुणवादस्तु' 'रूपात्प्रायात्' इत्यादिभिस्सूत्रैर्गौण्या वृत्त्या परिहृता। "यजमान प्रस्तरः" इत्यादौ तत्कार्यकरत्वादिगुणयोगादर्थवत्वं तत्सिद्धिपेटिकायां निरूपितम्। किं बहुना। कृत्स्नमप्यध्वरमीमांसाशास्त्रं मन्त्रार्थवादलिङ्गान्युपजीव्यैव प्रवृत्तं तेषामर्थवत्वाभावे व्याकुलं स्यात्। न च विध्येकवाक्यतया तत्र तात्पर्यवता मन्त्रार्थवादानां देवताविग्रहादिरूपेऽर्थे तात्पर्याभावान् कथं तत्र तेषा प्रामाण्यमिति वाच्यम्। यागादिविधिभिर्वाक्यैकवाक्यतया तेषु महातात्पर्यवतामपि मन्त्रार्थवादाना प्रधानविध्येकवाक्यताकप्रयाजादिवाक्यानामिव स्वस्वार्थेष्ववान्तरतात्पर्यसम्भवात्।

---

१. तस्मात्. फ.        २. नाभ्युपगम अ. फ.

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥"

इत्यर्थवादस्य विधेयस्तुतितात्पर्यकत्वेऽपि स्तुत्यवलम्बनभूतस्वर्गशब्दार्थप्रतिपादनेऽप्यवान्तरतात्पर्यस्य सर्वसम्प्रतिपन्नतया तद्वदेवार्थवादमात्रस्यासति विरोधे स्वार्थावान्तरतात्पर्यकताया आश्रयणीयत्वाच्च । न च स्वर्गार्थवादस्य फलविध्यपेक्षितत्वात् स्वार्थेऽवान्तरतात्पर्यं नान्यस्येति वाच्यम् । 'देवता आवाहयति' इत्याह्वानविधिर्हि [1]दृष्टार्थत्वाय देवतानामागमनमपेक्षते । तदागमनञ्च हविषां स्वीकरणाय । तत्स्वीकरणञ्च भोजनाय । भोजनञ्च तृप्तये, फलकामेन क्रियमाणञ्च देवतानां तृप्तिजननं फलदातृत्वसिद्धये । फलदातृत्वञ्च फलैश्वर्यादिति साक्षात्परम्परया वा देवतागमनादीनामाह्वानविध्यपेक्षितत्वात्तद्विग्रहादौ तात्पर्यमनिवार्यम् । किञ्च विश्वसृजामयनाख्यस्य सत्रस्य फलं श्रुतम्—'ब्रह्मणस्सायुज्यं सलोकतां यन्ति एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतां यन्ति, य एतदुपयन्ति" इत्यादौ कञ्चित् कालं समानलोकता—एकलोकताप्राप्तिः, ततस्सार्ष्टिता—समानदेहभोगवत्त्वम् । 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' [ इति ] शरीरनिमित्तको भोगः मूर्तिभावः । तत्र विद्यमानादृच्छेः क्तिन् । 'समानस्य छन्दसि' इति सभावः । तस्य छान्दसमुपसर्गत्वम् । 'उपसर्गादृतिधातौ' इति वृद्धिः । समानो ऋष्टिर्दिव्यशरीरायत्तो स्रक्चन्दनवनितादिभोगः येषान्ते सार्ष्टयः, तेषां भावस्सार्ष्टिता । सायुज्यं तदेकत्वम् । यदि देवाः [2]तत्तल्लोकविशेषेषु दिव्यशरीरायतनभोगातिशयवन्तो न स्युः, तदा तत्फलार्थत्वेन विधानमुन्मत्तप्रलपितमेव स्यात् । तथा सामविधिब्राह्मणे "अयाचितमेतेन कल्पनमिति द्वितीयं प्रयुञ्जानो देवान् पश्यति" () इति देवदर्शनार्थसामविशेषजपविधिसामर्थ्यादपि देवानां विग्रहवत्त्वं सिध्यति । न च देवदर्शनार्थं युगपदेव सामजपं कुर्वत्सु विग्रहवतामपि देवानां कथं दर्शनसम्भव इति वाच्यम्, अत एव तेषां सङ्कल्पमात्रोपनतकायव्यूहादिकल्पनात् । एवञ्च बहुभिर्यजमानैर्युगपदाहूतानां देवतानां युगपत्सन्निधानमपि नानुपपन्नम् । यज्ञवाटेषु देवतानामदृश्यत्वन्तु योगिवदैश्वर्यवशादुपपाद्यम् । "कस्य वाह देवा यज्ञमागच्छन्ति, कस्य वा न, बहूनां यजमानानां यो वै देवताः पूर्वं परिगृह्णाति स एनाः श्वोभूते यजते" इत्यर्थवादस्तु 'अग्नि-

---

१. दृष्टार्थत्वात् क. २. तत्तल्लोकविशेषेष्वदिव्य. क.

होत्रं हुत्वा प्रातरन्वादधाति" इति विधेस्तावको न विवक्षितस्वार्थः। न च वाजसनेयके "ते वा एते आहुती उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षं प्रयतस्ते दिवमाविशतस्ते दिवन्तर्पयतः ते आवर्तेते ते इमामाविशतस्ते पुरुषमाविशतस्ते स्त्रियमविशतस्ततः पुत्रो जायते" इति श्रवणेन,

'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥'

इत्यादिस्मृत्या च हुतानां हविषां परलोकोत्क्रमणप्रत्यावृत्यवगमात् कथं यज्ञवाटे देवानां हविर्भोक्तृत्वमिति वाच्यम् । हुतस्य हविषः कश्चिदंशस्तृप्तिपर्याप्तो देवैर्भुज्यते । कश्चिदंशो वृष्ट्यन्नादिरूपेण परिणतः प्रत्यावर्तत इत्युभयविधवचननिर्वाहात् । न च "त्रिंशदस्या जघनं योजनानि उपस्थ इन्द्रस्थविरं बिभर्ति" इत्यतिस्थूलदेहानां देवानां कथमल्पेन हविषा तृप्तिरिति वाच्यम्, "यावदेका देवता कामयते तावदाहुतिः प्रथते" इति हुतस्य हविषो वृद्धिश्रवणेन तदुपपत्तेः। यद्यपि हुतं हविः भस्मीभवति तथा [ पि ततो ] निर्गतस्य तदीयसूक्ष्मरसांशस्यैव वृध्यभ्युपगमान्न दोषः। 'अवाङ्व्यानि सुरभीणि कृत्वा' इति हविरवस्थान्तरनयनलिङ्गात्, पर्यग्निकरणोत्सृष्टपशूनामपि सूक्ष्मांशापगमान्मधुकरभुक्तरसानां [1]पुष्पादीनामिव तादवस्थ्यदर्शनमपि नानुपपन्नम् । कुशकाशदारुशकलादिष्वपि हविष्षु कश्चिद्भक्ष्यांशस्तत्तदास्वादनयोग्यरूपेण [2]परिणमत इति न तेषामनदनीयत्वदोषः। अत्र च लिङ्गम्—"एतद्वै दैव्यं मधु यद् घृतम्" इति । उक्तञ्च वार्तिके लोकवेदाधिकरणे—

'यच्चैतद् घृतमस्माकं देवानां मध्विदं यदि ।
रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा [3]भवेत्' ॥

इति । येषु देवतावाहनमस्ति तेष्वागत्य भुञ्जते । (इतरेषु तु कर्मस्वग्निना नीत भुञ्जते) इत्यागमनश्रुतिर्हविर्नयनश्रुतिश्च विरुध्यते । आहूतसन्निहितानपि देवान् प्रति तदास्वादनीयरसीकृतांशनयनसम्भवाच्च । यद्यपि श्राद्धेऽतीतपितॄणां स्थावरतिर्यङ्मनुष्यनारकजन्म प्राप्तानामागमनासम्भवादावाहनं न सम्भवति, फल-

१. पुष्परसानामिव. ग.  २. परिणत अ, क.  ३. पतेत् ग

( ) चिह्नगतो भागः खण्डित अ, कपुस्तके चानन्वित पाठः । अतः परिकल्पित पाठो निवेशित ।

दातृत्वञ्च, तथापि यथा गर्भवृद्धये सुहृद्भिर्दत्तमभीष्टमन्नं गर्भवती भुक्त्वा तृप्ता सती गर्भन्तर्पयित्वा पोषयति सुहृद्भ्यश्च प्रत्युपकरोति, तथा श्राद्धीयमन्नं भुक्त्वा तदधिष्ठातृदेवास्तृप्ता. श्राद्धकर्तु. पित्रादीनपि तर्पयन्ति, श्राद्धदात्रेऽपि फल प्रयच्छन्ति। वसुरुद्रादितिसुताः पितर श्राद्धदेवताः।

'प्रीणयन्ति मनुष्याणा पितॄन् श्राद्धेषु तर्पिताः।
सर्वान् कामान् प्रयच्छन्ति शतशोऽथ सहस्रशः॥'

इत्यादि स्मरणात, "जगृहा ते दक्षिणमिन्द्रहस्तम्" इति मन्त्रे हे इन्द्र ते दक्षिणहस्तं रक्षकत्वेन ग्रहीष्याम इत्यथ इति न प्रत्यक्षविरोध.। "ओषधीभ्यस्स्वाहा मूलेभ्यस्स्वाहा" इत्यादौ तत्तदधिष्ठात्र्यो देवता इति न विरोधः। न च देवताप्रसादादेव यागस्य कालान्तरभाविफलसाधनत्वनिर्वाहसम्भवात् किमपूर्वकल्पनयेति वाच्यम्। प्रसन्नानामपि देवानां कल्पान्तरभाविफलदातृत्वस्यासम्भवेनापूर्वद्वारैव देवताप्रसादस्यापि फलजनकत्वस्य वक्तव्यतया अन्यत्रापि तथा कल्पनात 'त विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति विद्यापूर्वस्य [1]कर्मापूर्वस्य पूर्वानुभवजनितसंस्कारस्य च जीवेन सहोत्क्रान्तिश्रवणेन कर्मजन्यापूर्वस्यावश्याभ्युपेयत्वाच्च। एवमन्येष्वपि मन्त्रार्थवादादिषु देवताविग्रहादिविरोधाः परिहर्तव्या'। तद्विस्तरस्तु ब्रह्ममीमासायां वाचस्पत्यपरिमलन्यायरक्षामण्यादिमहाग्रन्थेषु द्रष्टव्यः। [2]कर्ममीमासका निरीश्वरवादिनः, तेषा देवताविग्रहादिपञ्चकं नास्तीति प्रवादस्तु प्रच्छन्नबौद्धतदेकदेशिविषयः। 'न देवताना देवतान्तराभावात्' इत्येतत्सूत्रभाष्ये वार्तिकेषु तद्विग्रहाभ्युपगमात्।

'विशुद्धज्ञानदेहाय　　त्रिवेदीदिव्यचक्षुषे।
श्रेय'प्राप्तिनिमित्ताय नमस्सोमार्धधारिणे॥'

इति वार्तिकारम्भे भट्टाचार्यैरीश्वरस्वरूपाभिधानाच्च।

'विरोधे गुणवादस्स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥'

इति भूतार्थवादानामपि स्वार्थे प्रामाण्याभिधानपुरस्सरं देवतिर्यङ्मनुष्यादिजगत्सृष्टिप्रलयतत्कर्तृपरमेश्वरस्य देवतादिव्यविग्रहादेश्च वार्तिके तत्र तत्राभिधानाच्च। शास्त्रदीपिकायां तृतीयस्य द्वितीयपादे 'लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समा-

---

१. कर्मापूर्वस्य नास्ति. अ.　　　　२ कर्ममीमासागमात्. ग

म्नानम्' इत्यधिकरणे 'मन्त्रार्थवादेतिहासपुराणादिषु स्वर्गाधीश्वरत्वलोकपालत्वासुरविजेतृत्वादिरूपेण प्रतिपादितानां कर्मणो बहिरपि सद्भावावगमादिन्द्राग्न्यादीनान्न क्त्वव्यभिचारः' इत्यभिधानाच्च[1]। तस्माद्वैदिकानामास्तिकानामस्ति देवताविग्रहादिपञ्चकमित्यास्तान्तावत् ॥

इति द्वितीयं तिर्यगधिकरणम् ॥ २ ॥

३

"स्वर्गकामो यजेत" इत्यादौ किं पुंस एव फलभोक्तृत्वलक्षणोऽधिकारः ? उत स्त्रिया अपि ? इति संशये, पूर्वपक्षयति—

**लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ८ ॥**

स्वर्गकामादिवाक्यविहितं कर्म [2]पुंसैवाधिकारिणा युक्तमैतिशायनो नाम कश्चिदाचार्यो मन्यते। कुतः ? लिङ्गविशेषनिर्देशात्—स्वर्गकाम इत्यादिपुंल्लिङ्गनिर्देशात्। न च ग्रहैकत्ववदुद्देश्यविशेषणत्वाल्लिङ्गमविवक्षितमिति वाच्यम्। न ह्युद्देश्यविशेषणमात्रस्य न विवक्षा, तथासति ग्रहव्यक्तेरेवोद्देश्यतया तद्विशेषणग्रहत्वस्याप्यविवक्षाप्रसङ्गात्। ततश्च विशेषणस्यापि प्रातिपदिकार्थस्य विवक्षा वाच्या। लिङ्गञ्च प्रातिपदिकार्थ इति तद्विवक्षा युक्ता। तस्मात् पुंस एवाधिकारः ॥

इतोऽप्येवमित्याह—

**[3]तद्युक्तत्वाच्च दोषश्रुतिरविज्ञाते ॥ ९ ॥**

"गर्भेणाविज्ञातेन भ्रूणहा भवति" इति स्त्रीत्वेन पुंस्त्वेन [4]वा विशिष्यानिर्धारिते गर्भे हते सति भ्रूणशब्दवाच्ययज्ञमध्यस्थः पुमानपि कदाचिद्धन्येतेत्येवं गर्भविधेर्यज्ञाधिकृतपुरुषवधकर्तृत्वप्रयुक्तो भ्रूणहत्यादोषश्श्रूयते। यदि स्त्रीपुंसयोरधिकारस्स्यात् तदा स्त्रीगर्भे पुंगर्भेऽपि हते भ्रूणहत्या स्यात्। तत्राविज्ञातग्रहणमनर्थकं स्यात्। तस्मादपि विवक्षितं पुंस्त्वम् ॥

---

१. 'इन्द्रादीनामपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः' इति शास्त्रदीपिकापङ्क्तिः। तस्या व्याख्यानरूपमिदम्। अत्रत्यमयूखमालिका द्रष्टव्या।

२. एव नास्ति. ग.     ३. तद्युक्तित्वाच्च     ४. च. क.

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**द्रव्यवत्त्वात्तु पुंसां स्यात् द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं ीणां द्रव्यैस्समानयोगित्वात् ॥ १२ ॥**

तु· प्रत्यवस्थाने। अस्तु स्वर्गकामादिपदे लिङ्गं विवक्षितं, तथापि पुंसामेव व्रीहियवादिद्रव्यसयुक्त कर्म स्यात्, न तु स्त्रीणाम्। कुतः? पुंसामेव द्रव्यस्वामित्वात्। तथा च द्रव्यत्यागात्मकप्रधानानुष्ठानेऽसामर्थ्यान्न तासामधिकार.। 'शास्त्रफल प्रयोक्तरि तल्लक्षणत्वात्' इति ( ) न्यायेनानुष्ठातुरेव फलस्वाम्यात्। ननु पित्रा भर्त्रा वा उपार्जितद्रव्ये स्वामित्वं सम्भवतीत्यत आह अद्रव्यत्वं स्त्रीणामिति। स्त्रीणान्न द्रव्यस्वामित्वम्। कुत·? क्रयविक्रयाभ्याम्। क्रयविक्रयौ हि स्त्रीणां श्रूयेते। 'दुहितृमतेऽधिरथं शतं देयम्' इति। कन्यापित्रे रथाधिक गवां शतं दद्यादित्यर्थः। न चादृष्टार्थमिद दानमिति वाच्यम्, सम्भवति दृष्टार्थत्वेऽदृष्टार्थत्वाश्रयणस्यान्याय्यत्वात्। तथा च पित्रा विक्रीतत्वान्न तासां पितृधनस्वामित्वम्। भर्त्रा क्रीतत्वान्न भर्तृधनस्वामित्वम्। ननु स्वयमुपार्जिते तासां स्वामित्वमस्तीत्यत आह—द्रव्यैस्समानयोगित्वादिति। व्रीहियवादिद्रव्यैस्तुल्यत्वादित्यर्थः। भर्त्रधीनत्वादिति यावत्। न हि स्वामिन कर्म परिहाप्य[1] द्रव्यार्जनायान्यस्मै कर्म कर्तुं शक्नुवन्तीति फलितम्॥

अधिरथशतदान क्रयार्थमित्यत्र लिङ्गमाह—

**तथाचान्यार्थदर्शनम् ॥ १३ ॥**

"यथा पत्या क्रीता सत्यन्यैश्चरति" इति वाक्यशेषे क्रयदर्शनन्तत्र[2] लिङ्गमित्यर्थ॥

ननु स्वामिकर्माविरोधेन[3] द्रव्यार्जनं ता[4] कर्तुं शक्नुवन्ति, तत्राह—

**तादर्थ्यात् कर्मतादर्थ्यम् ॥ १४ ॥**

तादर्थ्यात्—भर्त्रधीनत्वात् स्त्रीणां तदीयस्य द्रव्यार्जनकर्मण तादर्थ्यं भर्त्रर्थत्वम्। स्त्रीभि· कथञ्चित् स्वयमुपार्जितमपि हि द्रव्यं यस्य ता स्वभूता तस्यैव स्वं भवितुमर्हति। तथाच स्मरन्ति—

१. परिसमाप्य. क

२. तत्र नास्ति. ख

३. धर्मानुरोधेन. अ.

४. ता. नास्ति. अ. क.

'भार्या पुत्रश्च दासश्च त्रय एतेऽधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्' ॥ इति ॥

अथ सिद्धान्ती निराचष्टे—

## फलोत्साहाविशेषात् ॥ १५ ॥

कृत्स्नार्थे नैतदेवम्–निर्धनत्वान्न स्त्रीणामधिकार इति । कुतः ? फलोत्साहाविशेषात्-पुंसामिव स्त्रीणामपि फलकामत्वाविशेषात् । स्वर्गकामादिपदेषु हि उक्तन्यायात् पुस्त्वमविवक्षितम् । ततश्च न्यायानुगृहीतेन श्रुतिवाक्येन स्त्रीणामप्यधिकारेऽवगते सति तदनुसारेण स्त्रिया अपि धनस्वामित्वं कल्प्यते । भार्या पुत्रश्च इत्यादिस्मृतिस्तु श्रुतिविरोधादप्रमाणम्, अस्वातन्त्र्यपरं[1] वा व्याख्येयम्, 'न स्त्री स्वातन्त्र्यमर्हति' इति स्मरणाच्च ॥

इतोऽपि तासां द्रव्यस्वामित्वमित्याह—

## अर्थे च समवेतत्वात् ॥ १६ ॥

'धर्मे चार्थे च कामे च नातिचरितव्या' इति दानसमये दम्पत्योस्संवादस्मरणादपि द्रव्यस्वामित्वं स्त्रीणाम् ॥

यत्तु अधिरथशतदानेन क्रीतत्वान्न तासां स्वामित्वमिति तत्राह—

## क्रयस्य धर्ममात्रत्वम् ॥ १७ ॥

क्रयत्वेनाशङ्कितस्याधिरथशतदानस्य धर्ममात्रत्वम्—अदृष्टार्थत्वमेव । क्रयो हि शोभनामशोभनाञ्च कन्यां प्रति कदाचिदुच्चपणः कदाचिन्नीच [ पणश्च ] स्यात् । नियत त्विद दानमधिरथशतमिति । तस्मान्नेदं दानं क्रयः ॥

(इतोऽपि तासां द्रव्यस्वामित्वमित्याह—

## स्ववत्ताश्चापि दर्शयति ॥ १८ ॥

"पत्नी हि पारीणह्यस्येशे" इति वाक्यशेपश्च स्त्रिया अपि धनस्वामित्वं दर्शयति—'परित. सर्वतः नह्यते बध्यत इति परिणत् गृहम् । 'नहि वृति' इति दीर्घः ।) तत्रभवं व्रीहियवपश्वादिधनं पारीणह्यम्' इति भट्टभास्करो-

१ फल. अ. () गपुस्तके ग्रन्थपात .

थवेदभाष्यम्[1]। अतो द्रव्यवत्त्वात् स्त्रीणामप्यधिकार इति स्थितमेतदपर्यवसितमधिकरणम् ॥

इति तृतीयं स्त्रीणामप्यधिकाराधिकरणम् ॥ ३ ॥

४

अथैतदधिकरणोपोद्बलनायान्तरा अधिकरणान्तरं प्रस्तूयते—

स्वामिनौ दम्पती किं पृथग्यजेयाताम्? उत सह? इति संशयः। यद्यपि स्वर्गकामादिपदेषु लिङ्गवत् सङ्ख्याप्यविवक्षिता, तथापि यजेतेत्याख्यातोपात्तसङ्ख्या विवक्षितैवेति वक्ष्यते। तथाच सहानुष्ठाने "ऋद्धिकामास्सत्रमासीरन्" इतिवत् कर्तृभेदेन यजेतेत्येकवचनविरोधाद्दम्पती पृथग्यजेयाताम्। पृथक्त्वे च सति वेदाध्ययनाभावान्न स्त्रिया अधिकारः। न च पुंसस्समन्त्रः प्रयोगः स्त्रियास्त्वमन्त्र इति युक्तं, मन्त्राणान्नित्यवदाम्नानबाधप्रसङ्गात् इति प्राप्ते, सिद्धान्तयति—

**स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १९ ॥**

तुरवधारणे। स्ववतोः स्वामिनोस्स्त्रीपुंसयोः ऐककर्म्यं स्यात्—एकं कर्म ययोस्तावेककर्माणौ, ततो भावे ष्यञ्। सम्भूयैव कर्माधिकारित्वमिति यावत्। कुतः? वचनात्—'यजमान आज्यमवेक्षते' 'पत्न्याज्यमवेक्षते' इति वचनात्। ततश्च दम्पतीभ्यामवेक्षितमाज्यमङ्गमवगतम्, एकावेक्षणे च वैगुण्यं स्यात्। न च पृथगेव प्रयुञ्जानः पुमान् परिक्रयेणाध्वर्य्वादी [ निवा ] ज्यावेक्षणाय पत्नीं सम्पादयिष्यति स्त्री च पुमांसमिति वाच्यम्। न हि परिक्रीता स्त्री पत्नीशब्दवाच्या भवितुमर्हति। 'पत्युर्नो यज्ञसंयोगे' इति स्वामिपर्यायात् पतिशब्दाद्यज्ञसंयोगोपाधौ व्युत्पादितस्य पत्नीशब्दस्य यज्ञस्वामिन्यामेव वृत्तेः। एवं परिक्रीतोऽपि पुमान्न यजमानशब्दवाच्यो भवितुमर्हति। 'पूङ्यजोश्शानन्' इति यजमानशब्दस्य कर्तृगामिक्रियाफलोपाधौ विहितात्मनेपदादेशशानन्तस्य क्रियाफलभोगिनस्स्वामिन एव वाचकत्वात्। न च पुंसो यजमानस्य कर्मणि यजमानावेक्षितमाज्यमङ्गं, पत्न्यास्तु कर्मणि पत्न्यवेक्षितमाज्यमिति वाच्यम्। नित्यवदाम्नातयोर्यजमानपत्न्यवेक्षितयोः पाक्षिकत्वायोगात्। अतोऽङ्गसाकल्यालोचनया दम्पत्योस्सम्भूयाधिकारित्वमध्यय-

---

१. भाष्ये. ज.

स्यामः। किञ्च 'धर्मे चार्थे च कामे च नातिचरितव्या' इति धनस्य [1]संसृष्टत्व स्मरणात् 'जायापत्योर्न विभागो विद्यते' इति दायविभागप्रतिषेधस्मरणाच्च, दम्पत्योर्धनं संसृष्टमेव। तच्च सम्भूयैवोभाभ्यां वक्तव्यम्, न त्वन्यतरेण। तस्मात् पृथक् प्रयोगाशक्तेरपि न दम्पत्योः पृथगधिकारः। किन्त्वग्नीषोमयोर्देवतात्वमिव तयोर्व्यासक्तमेव कर्तृत्वम्। कर्तृत्वरूपैक्याच्च यजेतेत्येकवचनमुपपद्यते। अग्नीषोमौ देवतेति व्यासक्त [2]देवतारूपाभिप्रायमेकवचनं यथा। तस्माद्व्यासक्त एव दम्पत्योरधिकारः॥

इतोऽप्येवमित्याह—

लिङ्गदर्शनाच्च ॥ २० ॥

"मेखलया यजमानं दीक्षयति, योक्त्रेण पत्नीं मिथुनत्वाय" इति मिथुनत्वसंस्तवस्सहाधिकार [3]एव घटते। पृथगधिकारे तु पुंसः प्रयोगे मेखलया यजमानं दीक्षयति, स्त्रियास्तु प्रयोगे योक्त्रेण पत्नीमिति स्यात्। तत्र मिथुनत्वसंस्तवो नोपपद्येत। तस्माद्व्यासक्तमेव तयोः कर्तृत्वम्। "ऋद्धिकामास्सत्रमासीरन्" इत्यत्र तु पृथग्द्रव्यवत्वात् पृथगेव कर्तृरूपमस्ति। तत्र कर्तॄणां साहित्यमात्रं वाचनिकम्, न तु दम्पत्योरिव व्यासक्तं कर्तृत्वमिति वैषम्यम्। एवञ्च दम्पत्योः कर्तृत्वस्य व्यासक्तत्वात् फलभोगोऽपि तयोस्सहैव भवति। तत्र दम्पत्योरन्यतरस्य एकस्य पूर्वं मृतौ परलोके, फलभोगायेतरस्याप्यागमनं प्रतीक्ष्यते। स्मरन्ति हि—'पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च' इति। सत्रे तु कर्तृसहत्वेऽपि कर्तृत्वरूपस्य व्यासक्तत्वाभावान्न फलभोगे सहत्वम्। यद्यपि स्त्रीणां वेदाध्ययनं नास्ति, 'न स्त्रीशूद्रौ वेदमधीयेयाताम्' इति तन्निषेधात्, तथापि "महीनां पयोऽसीति पत्न्याज्यमवेक्षते" इत्यादिविधिबलात्तदुपयुक्तमात्राध्ययनं कल्प्यते। एवञ्चैकस्मिन्नेव प्रयोगे यजमानमन्त्राणां पत्नीमन्त्राणाञ्च समावेशान्न तेषां [4]नित्यवदाम्नानं विरुध्यते। तस्मात्कर्तृत्वं दम्पत्योर्व्यासक्तमेव॥

इति चतुर्थं स्त्रीपुंसयोर्व्यासक्ताधिकाराधिकरणम्॥ ४॥

---

१. संसृष्टसाधारणत्वात्. अ. २. देवता. नास्ति. ग.
३. च घटते. क. ४. नित्यतया अ.

अथ पूर्वाधिकरणे यदुक्त "पत्नी हि पारीणह्यस्येशे" इति स्त्रियाः 'धनस्वामित्वं श्रुतम् , अधिरथशतदानन्त्वदृष्टार्थमेव, न तु क्रय इति । तत्र प्रत्यवतिष्ठते—

**क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ २१ ॥**

तुः प्रत्यवस्थाने । अधिरथशतदानेन स्त्रियाः क्रीतत्वात् 'पत्नी हि पारीणह्यस्येशे' इति स्त्रियां स्वामित्वं भक्त्या—संरक्षकत्वगुणयोगेनोच्यते । यथा 'गोपालकोऽय गवामीष्टे' इति । अन्यथाऽधिरथदानस्यादृष्टार्थत्वापातात् सम्भवति च दृष्टे तदयोगात् ।

अथ समाधत्ते—

**फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २२ ॥**

"उपहूतेयं यजमाना उत्तरस्यां देवयज्यायामुपहूता भूयसी हविष्करणमुपहूता दिव्ये धामन्नुपहूता इदम्मे देवा हविर्जुषन्ताम्" इति तस्मिन्नुपहूतेत्यादिमन्त्रे स्त्रिया अपि फलार्थित्वश्रवणात् स्वामित्वेनैवाभिसम्बन्धः—अन्वयः । उच्चनीचपणत्वाभावादधिरथशतदानन्न क्रय इत्यप्युक्तमेव ।

'क्रयक्रीता तु या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीन्तां काश्यपोऽब्रवीत्' ॥

इत्यादिस्मृतिस्तु अधिरथदानव्यतिरिक्तोच्चनीचपणकासुरविवाहविषया ॥

इतोऽपि स्त्रीणामप्यधिकार इत्याह—

**फलवत्तां च दर्शयति ॥ २३ ॥**

"सम्पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य" इत्ययं मन्त्रोऽपि पत्न्याः फलवत्त्वं साक्षादेव दर्शयति । पत्या सह पत्नी यज्ञस्य सुकृतेन सङ्गच्छतामित्यन्वयः । तस्मात् स्त्रिया अप्यस्त्यधिकार इति पूर्वाधिकरणशेषः । यत्तु 'या यजमानस्य पत्नी साऽभि हुत्यावहन्ति, यो वा कश्चिदविद्यमानायाम्' इत्यापस्तम्बसूत्रव्याख्यावसरे रुद्रदत्त आह—"युक्ता मे यज्ञमन्वासाता इति यजमानः पत्नीं सम्प्रेष्यति" इत्यत्र 'मे यज्ञम्' इति षष्ठ्या यजमानस्यैव यज्ञस्वामित्वं, पत्न्यास्तु अध्वर्यो-

---

१. धन, नास्ति, अ, फ.

दिवत्साहाय्यमात्रम्' इति, तदेतदधिकरणाज्ञानविजृम्भितमेव। 'मे यज्ञमि'ति षष्ठ्या उभयस्वामिकस्य यज्ञस्यान्यतरसम्बन्धिपरकत्वेनापि[1] व्यपदेशोपपत्तेः। यदप्यन्वासनवचनात् पत्न्या अप्राधान्यमिति, तन्न; तथासति "सम्पत्नी पत्या सुकृतेन गच्छताम्" इति मन्त्रे तृतीयया पत्युः पत्न्यपेक्षया अप्राधान्यापत्तेः। एतेन 'पत्नीवदस्याग्निहोत्रं भवति' इत्यापस्तम्बवचनं व्याख्यातम्। तस्य वचनस्य 'सायं प्रातरेवैषा पत्न्यन्वास्ते, सायं सायमित्येके' इति कल्पान्तरमतनिरासमात्रे तात्पर्यात्। 'पाणिग्रहणाद्धि सहत्वं कर्मसु, तथा पुण्यफलेषु, द्रव्यपरिग्रहेषु च' 'काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम्', 'निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते' 'अग्निहोत्रमतिथयो यच्चान्यदेवं युक्तम्' 'यावत्यो ग्राममर्यादा नद्यश्च ता अतिक्रामन्तौ स्वामिनावग्नी अन्वारभेयातामनन्वारम्भणे लौकिको भवति' इत्येवं सूत्रयतामापस्तम्बाचार्याणां पत्न्याः स्वामित्वाभावे तात्पर्यवर्णनस्यातिसाहसत्वाच्च। 'यो वा कश्चिदन्निमानाशयम्' इत्यापस्तम्बवचनन्त्वनालम्भुकाविषयमित्यविरोधः। यदपि श्रीरामादीनां पत्नीं विना अश्वमेधाद्याचरणान्न पत्न्यास्स्वामित्वमिति, तदप्ययुक्तम्;

'तेषान्तेजोविशेषेण प्रत्यवायो न विद्यते।
तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यविवरूथवत्' ॥

इत्यापस्तम्बाचार्यैरेव तदाचारस्याप्रामाण्यवर्णनात्। 'अपत्नीकोऽप्यग्निहोत्रमाहरेत्' इत्यादिवचनन्तु विधुरविषयम्। किमिह वचनन्न कुर्यान्नास्ति वचनस्यातिभारः। यदपि 'यद्वावाङ्गेन विधुरतान्नीयात्' इति पुनराधेयापस्तम्बसूत्रव्याख्यावसरे 'अङ्गं पत्नी' इति धूर्तस्वामिभाष्यं, पत्न्या न स्वामित्वमित्यत्र प्रमाणमुपन्यस्त तदप्यापाततः; अत्र सूत्रेऽङ्गशब्देन पत्नी विवक्षिता "अर्धो वा एष आत्मनो यत्पत्नी" इति यजमानार्धाङ्गत्वमस्त्वादिति हि तद्भाष्यार्थः। न ह्यध्वर्य्वादिसाधारणमङ्गत्वमनधिकृतत्वे सति क्रतुशेषत्वलक्षणं तद्भाष्याभिमतम्, 'स्वामिनावन्वारभेयाताम्' इत्याद्युदाहृतापस्तम्बसूत्रविरोधात्। 'यजमानमरणोपदिष्टं पत्नीमरणेऽपि स्वामित्वाविशेषात्' इति प्रायश्चित्तसूत्रस्थतद्भाष्यविरोधात्। अध्वर्य्वादिमरणेऽपि पुनराधानापत्तेश्चेत्यास्तान्तावत्॥

इति तृतीयाधिकरणशेषः॥

---

१. सम्बन्धिकत्वेनापि. क.

५

'क्षौमे वसानावग्निमादधीयाताम्" इति श्रुतम्। क्षुमा नाम अतसीपर्यायस्सस्यविशेषः नर्मदोत्तरदेशे 'करूड' इति प्रसिद्धः। 'जवसी' इति [1]महाराष्ट्रदेशे प्रसिद्धो धान्यवर्गः। 'उमा स्यादतसी क्षुमा' इत्यमरः। तद्वल्कलरज्जुनिर्मितं वस्त्रं क्षौममित्युच्यते। किमिह द्वौ पुमांसौ सस्त्रीकावादधीयाताम्? उतैकः पुमान् सस्त्रीकः? इति संशये पूर्वपक्षयति—

## द्व्याधानञ्च द्वियज्ञवत् ॥ २४ ॥

चस्त्वर्थे प्रत्यवस्थाने। यजेतेत्येकवचन स्त्रीपुंसव्यासक्तकर्तृरूपैक्याभिप्रायमिति पूर्वाधिकरणे स्थितम्। तथासति द्व्याधानं स्यात्—आधान द्वाभ्यां स्त्रीपुंसयुगलाभ्यां कर्तव्य स्यात्। न तावदाधानमिह विधेयम्, "अग्निमादधीत" इत्युत्पत्तिवाक्यत एव तस्य प्राप्तत्वात्। नापि द्वित्वम्, आदधीयातामिति पदस्यैकप्रसरतया तत्र धात्वंशेनाधानमुद्दिश्य प्रत्ययांशेन कर्तृरूपद्वित्वविधेरनुपपत्तेः। किन्तु 'आदधीयाताम्' इत्याधानमुद्दिश्य 'वसानौ' इति कर्तृरूपद्वयं विधीयते। वसन आच्छादन इत्यस्मात् कर्तरि शानजन्तो हि वसानशब्दः। तत्र वसान इत्युक्ते पुंस्त्वमेकत्वञ्च प्रतीयते। वसानेत्युक्ते स्त्रीत्वमेकत्वञ्च प्रतीयते। 'वसाने' इत्युक्ते स्त्रीत्वं द्वित्वञ्च प्रतीयते। वसानौ इत्युक्ते पुंस्त्वं द्वित्वञ्च प्रतीयते। ततश्चान्वयव्यतिरेकाभ्यां वसानशब्दौकारस्य प्रत्ययस्य वसनकर्तृगत पुंस्त्वं द्वित्वञ्चार्थः। तयोश्चैकप्रत्ययोपात्तत्वात् परस्परमन्वये द्वौ पुमासौ कर्तारावित्यर्थोऽवगत। तत्र वसनन्तु प्राप्तत्वान्न विधेयम्, नग्नस्य कर्मानर्हत्वस्मरणात्। अतो न वाक्यभेदः। कर्ता च सस्त्रीक पुमानिति पूर्वाधिकरणे स्थितम्। तथा च सस्त्रीकौ द्वौ पुमांसौ[2] इत्यवगतम्। क्षौमशब्दश्च क्षर शब्दे इत्यस्मान्निष्पन्नः। कर्मणि च व्याम्रियमाणे वस्त्रे शब्दायमानत्वमर्थसिद्धमिति सोऽप्यनुवाद। यद्वा क्षौमशब्दो मालिन्ये वर्तते, क्षौमवस्त्रस्य प्रायेण मलिनत्वात्! कर्मणि च व्याम्रियमाणे वस्त्रे मालिन्यमर्थसिद्धमिति सोऽपि शब्दोऽनुवादः। अतो न वाक्यभेद। आधाने सस्त्रीकपुद्वयकर्तृकत्वमेवाप्राप्तत्वाद्विधेयम्। "अग्निमादधीत" इत्युत्पत्तिवाक्ये एकवचनन्तु न विवक्षितार्थकम, उत्पत्तिवाक्यस्य तस्याधानविधिमात्रपरत्वात्। न च वसानश्च वसाना च वसानाविति 'पुमान्स्त्रिया' इति कृतैकशेपाच्छ्रूयमाण द्विवचन

१. महाराष्ट्रे देशे ख, ग.     २. पुमान्सौ नास्ति अ.

स्त्रीपुंसगतमेव द्वित्वमभिधत्ते, न तु पुंद्वयगतमिति वाच्यम्। एवंविधविरूपैकशेषविधेर्लाक्षणिकार्थानुशासनत्वात्। न चैवं सति लक्षणयैवोपपत्तौ विरूपैकशेषविधिर्व्यर्थ एव स्यादिति वाच्यम्, इष्टापत्तेः, (एकशेषप्रकरणस्य कृत्स्नस्यैव महाभाष्ये प्रत्याख्यातत्वात्। अतएव तृतीयस्य तृतीये 'द्वित्वबहुत्वयुक्तञ्चाचोदनात्तस्य' इत्यधिकरणे 'एकशेषः) पुमांस्त्रियेति, असावपि लक्षणाशब्द एव' इति शाबरभाष्येऽभिहितं सङ्गच्छते। ततश्च वसानाविति पुंद्वयमेवाधाने कर्तृतया विधेयम्, द्वियज्ञवत्। यथा "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इति सस्त्रीकपुंद्वयस्यैको यज्ञः तद्वत्॥

अथ सिद्धान्तयति—

**गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दस्स्यात्॥ २५॥**

तुरवधारणे। आधानन्तावदुत्पत्तिवाक्यसिद्धत्वात् 'आदधीयाताम्' इति न विधेयम्। यद्यपि मुख्यवृत्त्या द्विवचनं सस्त्रीकपुद्वयगतं कर्तृरूपद्वित्वाभिप्राययुक्तं, तथापि लक्षणया कर्तृत्वाधिष्ठानस्त्रीपुंसगतद्वित्वाभिप्रायमनुवादमात्रम्। वसानशब्दोऽपि वसानं वसानाञ्च लक्षणयाभिधत्ते। द्विवचनमपि तद्गतद्वित्वाभिप्रायमनुवादमात्रम्। [1]वसनमपि प्राप्तत्वान्न विधेयम्। क्षौममात्रमिह विधीयते—वसानावादधीयातामिति यत् तत् क्षौममिति। न चाधानसम्बन्धिनौ वसानावुद्दिश्य क्षौमविधौ वाक्यभेद इति वाच्यम्। वसानोद्देशेनैव[2] क्षौमविधिः प्रकरणाच्चाधानसम्बन्धिवसानयोर्निवेशः, न त्वाधानसम्बन्धित्वे वाक्यस्य व्यापार इति न वाक्यभेदः। न च वसानाविति पुंद्वयमप्युक्तरीत्या विधेयमस्त्विति वाच्यम्, वाक्यभेदापत्तेः। न च विनिगमनाविरहात् वसानाविति पुंद्वयमात्रं[3] विधीयतां, न तु क्षौमत्वमिति वाच्यम्। सम्भवति प्रथमश्रुतस्य क्षौमशब्दस्य[4] विधायकत्वे जघन्यश्रुतस्य वसानावित्यस्य विधायकताश्रयणस्यायुक्तत्वात्। एतेन क्षौमशब्देन[5] गौण्या वृत्या योगेन वा कर्मव्यापारदशायामर्थप्राप्तमालिन्यं [6]शब्दवत्वञ्चानूद्यत इति प्रत्युक्तम्। प्रथमश्रुते क्षौमशब्दे गौणत्वाश्रयणायोगात् शब्दवत्वाभावदशायामपि क्षौमशब्दस्य

() गपुस्तके ग्रन्थपातः.

१. अपुस्तके वाक्यमिदं नास्ति.

२. उद्देशेनैव हि. अ क.

३. पुंद्वयमेवात्र. अ, क.

४. क्षौमशब्दस्य नास्ति. अ.

५. शब्दे. अ, क.

६. शब्दत्वं. ग.

वस्त्रविशेषे प्रयोगादन्यत्र च शब्दायमाने मनुष्यादावप्रयोगाद्रूढत्वेन[1] सम्प्रतिपन्नस्य योगाश्रयणायोगाच्च। कर्मव्यापारदशायां नियमतश्शब्दवत्त्वमालिन्याभावेन पाक्षिकानुवादत्वापाताच्च। पूर्वपक्षे 'आदधीयाताम्' इत्येव कर्तृरूपे सिद्धे क्षौमवसानपदयोरानर्थक्यापाताच्च। न चादधीयातामिति पदस्यैकप्रसरत्वात्तत्र धातुनाऽऽधानमुद्दिश्य प्रत्ययेन कर्तृरूपद्वित्वविधिर्न सम्भवतीति वसानावित्येतत्तद्विधायकत्वेन सार्थकमिति वाच्यम्। प्रकरणसिद्धाधानमुद्दिश्य विधिप्रत्ययमात्रेण कर्तृरूपद्वित्वविधिसम्भवात्। न च धातूच्चारणं [2]व्यर्थमिति शङ्क्यम्, तस्य प्रत्ययसाधुत्वार्थत्वसम्भवात्। तथाच क्षौमशब्दे क्षौमगुणस्य विधानत्वात्—कर्मणि ल्युट्, विधेयत्वाद् वसानावित्यत्र पुंद्वित्वस्य च विधाने वाक्यभेदापाताद्वसानश्च वसाना चेत्येवमेकशेषेण पत्नीवाचको द्वितीयो वसानाशब्दो लुप्तः प्रत्येतव्यः। लक्षणया स्त्रीपुंसगतमेव द्वित्वं पूर्वाधिकरणसिद्धमनूद्यत इति यावत्। अनुवादस्य यथाप्राप्त्येव प्रवृत्तेः। एवमादधीयातामित्याख्यातप्रत्ययेनापि कर्तृरूपाधिष्ठानलक्षणया स्त्रीपुंसगतमेव द्वित्वमनूद्यते। आख्यातेऽपि जघन्यश्रुते मुख्यार्थपरित्यागस्यादोषत्वात्। यद्यपि वसानाविति द्विवचनस्य विधिप्रत्ययसन्निकर्षोऽस्ति, तथापि प्रथमश्रुतक्षौमशब्दस्य विधित्वे मुख्यार्थत्यागापेक्षया[3] विधिप्रत्ययसन्निकर्षपरित्यागो न दोषाय। "राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इत्यत्र तु राजपुरोहितत्वस्य पुमेकधर्मत्वात् पुंद्वित्वमेव तत्र विधेयम्। न च राजपुरोहितत्वस्यापि विधेयत्वाद्वाक्यभेदश्शङ्क्यः, उत्पत्तिवाक्ये तस्यादोषत्वात्। तस्मात् सस्त्रीकः पुमानेक एव तावदादधीतेति॥

इति पञ्चममाधानस्य दम्पत्योस्सह प्रयोक्तृत्वाधिकरणम्॥ ५॥

६

दम्पत्योस्सहप्रयोक्तृत्वं स्थितम्। तत्र '[4]आर्त्विज्यपदार्थेषु दक्षिणादानद्वारकमुभयोः कर्तृत्वं निर्विवादम्। याजमानेषु कर्मसु किमुभौ कर्तारौ? उत पुमानेव? इति संशये, उभयोरपि यजमानत्वाविशेषात् कर्तृत्वमिति प्राप्ते, सिद्धान्तयति—

---

१. रूढित्वेन. ग. २. असङ्गतमिति वाच्यम्. अ.
३. मुख्यार्थपरित्यागापेक्षया. अ. ४. आर्त्विज. क.

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २६ ॥

तस्याः पत्न्याः यावद् विशिष्योक्तं "पत्न्याज्यमवेक्षते" इत्यादि तावदेव भवति । आशीः ब्रह्मचर्यञ्च नेतरद् याजमानम् । कुतः ? अतुल्यत्वात्—"शक्नं यजमानोऽन्वारभते" इत्यादीनां स्वर्गकामादिवाक्यैरतुल्यत्वात् । [1]स्वर्गकामादेर्ह्युद्देश्यत्वात्तद्गतलिङ्गमविवक्षितमिति युक्तम् । [2]शक्नान्वारम्भणादि तु न यजमानोद्देश्यकम्, किन्तु तत्र यजमानस्योपादीयमानत्वात् तल्लिङ्गं विवक्षितमेवेति भवति वैषम्यम् । ननु याजमानसमाख्याताानि उपस्थानानुमन्त्रणादीनि कर्माणि, तेषु स्यादेवोभयोः ( कर्तृत्वम् । यजमानश्च यजमाना च यजमानौ तयोः कर्म याजमानमित्येवं 'पुमांस्त्रिया' इत्येकशेषेण याजमानसमाख्ययोभयोः ) कर्तृत्वावगमादिति चेन्न; एवं विधैकशेषविधीनां लाक्षणिकार्थानुशासनत्वस्य पूर्वाधिकरण एवोक्तत्वात् । अतुल्यत्वादित्यस्य दम्पत्योर्मन्त्रवत्वामन्त्रवत्वकृतवैलक्षण्यादित्यप्यर्थः । अस्तु वा याजमानसमाख्योभयनिमित्ता, अथापि पत्न्या मन्त्राभावान्न मन्त्रवत्सु कर्मसु कर्तृत्वमित्युक्त भवति, तस्या अध्ययनाभावात् ॥

ननु "स्वाध्यायोऽध्येतव्य" इत्यविशेषश्रवणात् स्त्रिया अप्यध्ययनमस्त्येव । न च "अष्टवर्षं ब्राह्मणमुपनीयीत तमध्यापयेत्" इति पुल्लिङ्गश्रवणादुपनयनमध्ययनञ्च पुंविषयमिति वाच्यम् । उपनयने ब्राह्मणस्य संस्कार्यतया अविवक्षितलिङ्गत्वेनोपनयनाध्ययनयोः स्त्रीपुंसविषयत्वादिति चेन्न; उपनयीतेत्यत्र हि 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निवः' इत्याचार्यकरणे आत्मनेपदं विहितम् । अष्टवर्षब्राह्मणस्योपनयनेन देवदत्त आचार्यत्वं सम्पादयेदित्यर्थः । तत्र चाष्टवर्षब्राह्मणस्य देवदत्तीयमाचार्यत्वं प्रत्युपादीयमानत्वाल्लिङ्गसङ्ख्यं विवक्षितमेव । एवञ्च 'तमध्यापयेत्' इत्यत्रापि तच्छब्देन प्रकृतस्यैवोपनीतस्य परामर्शान्नास्ति स्त्रीणामध्ययनम् । 'न स्त्रीशूद्रौ वेदमधीयेयातामि'ति विशिष्य तासामध्ययनप्रतिषेधाच्च । न च यथा "महीनां पयोऽसि इति पत्न्याज्यमवेक्षते" इत्यादिविधिवशात्तन्मन्त्राध्ययनं कल्प्यते, तथा याजमानसमाख्यातकर्मस्वपि[3] सर्वत्र तस्या अध्ययन कल्प्यतामिति वाच्यम्, वैषम्यात् । यत्र हि पत्न्या विशिष्य मन्त्र-

---

१. स्वर्गकामादेर्ह्युद्देश्यत्वात्. नास्ति. अ.    २. उक्तान्वारम्भणादि तु. अ.

( ) गपुस्तके ग्रन्थपात.    ३. कर्मण्यपि. अ, क.

विधिस्तत्र तदन्यथानुपपत्त्या तदध्ययनकल्पनमिति युक्तं, याजमानसमाख्यातेषु कर्मसु नैवम्, अन्यथानुपपत्त्यभावात्। अध्ययनवता यजमानेनैव कर्मणां मन्त्राकाङ्क्षाशान्तेः। मन्त्रोच्चारणे हि गुणभूतः कर्ता। ततश्चैकेन कर्तव्य मन्त्रोच्चारणमध्ययनवता पुंसैव सिद्धत्वान्नाध्ययन स्त्रियाः कल्पयितुमर्हति। ननु मन्त्रवत्सु कर्मसु मा भूत् पत्न्याः कर्तृत्वं मन्त्राभावात्। ये त्वमन्त्राः पदार्थाः, येषु च मन्त्रवत्सु कर्मसु यजमानस्य नोपादेयता किन्तूद्देश्यता "शुक्रमस्यमृतमसीति यजमानमाज्यमवेक्षयति" इत्यादिषु तत्र पत्न्या अपि कर्तृत्वं स्यादित्यत्राप्येतदेवोत्तरम्—अतुल्यत्वादिति। स्वामिविषये पत्न्याः पतिवैषम्यात् पतिपरतन्त्रत्वादिति यावत्। न हि स्वतन्त्रपतिकर्तृकत्वे सम्भवति परतन्त्रपत्नीकर्तृकत्वमाश्रयितुमुचितम्। आशीश्शब्देन "आयुर्दा अग्नेऽस्यायुर्मे देहि" इत्यादिमन्त्रवचनं नोच्यते, स्त्रिया मन्त्राभावादेव तदनधिकारसिद्धेः। किन्तु अमन्त्रकाः स्नानादयस्संस्कारा लक्ष्यन्त इति वार्तिकम्। ते हि फलिसंस्कारा इति स्थितं तृतीयाष्टमे 'संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन्, याजमानास्तु तत्प्रधानत्वात्' इत्यत्र। ते च पत्न्या अपि भवन्ति, अतुल्यत्वात् समन्त्रकर्मवैलक्षण्यात्। अमन्त्रकत्वादिति यावत्। पत्न्या पतिपरतन्त्रत्वेऽपि [1]फलित्वस्याविशिष्टत्वादित्याशयः। यद्यपि सोमे स्नानाञ्जनाभ्यञ्जनपावनादयस्समन्त्रका [2]एव, तथापि अमन्त्रका एवंविधाः फलिसंस्काराः। अत्रोदाहरण यथा—अश्वमेधे 'केशश्मश्रु वपते' 'नखानि निकृन्तते' 'दतो धावते' स्नाति' 'अहतं वासः परिधत्ते' इत्यादयः, यथा वा आधाने 'द्वादशरात्रमहतवासा यजमानोऽग्नीनामन्ते संविशति' इत्यादयः। तत्र वपनवर्जमेव पत्न्या भवन्ति। तस्या. श्मश्र्वभावात्। न च केशमात्रस्य वपनं शङ्क्यम्। केशश्मश्रु इति हि द्वन्द्वः। प्राण्यङ्गत्वादेकवद्भावः। अपनीतस्य च केशश्मश्रुणो [3]भूतभाव्युपयोगरहिततया संस्कार्यत्वाभावेन वपने उपादेयतया द्वन्द्वावगतसाहित्यस्य विवक्षितत्वात्। नखनिकृन्तनन्तु तस्या भवत्येव, अविरोधात्। यद्यपि ब्रह्मचर्यमपि फलिसंस्कारेष्वेवान्तर्भवति, तथापि ब्रह्मचर्यशब्देनात्र कार्ये कारणवदुपचारात् कामा उच्यन्त इति न पौनरुक्त्यमिति वार्तिककृत.। 'स्वर्गकामो यजेत' इत्यादिफलकामनमपि पत्न्या भवति, अतुल्यत्वात्—समन्त्रकर्मवैलक्षण्यात्। अमन्त्रकत्वादिति योजना। स्वर्गकाम इत्यादौ लिङ्गस्याविवक्षाया उक्तत्वादि-

---

१. फलत्वस्य ग. २. एवंविधा. अ, क.

३. भाव्युप. अ, म.

त्याशयः। न च पतिपरतन्त्रत्वात् पत्न्याः फलकामनमपि नास्तीति वाच्यम्। संसृष्टद्रव्यविषये पतिपारतन्त्र्येऽपि फलकामनाविषये स्वातन्त्र्यसत्त्वात्। न हीच्छा पुरुषनियम्या। अन्यथा तस्याः कर्मण्यप्रवृत्तिप्रसङ्गात् कर्मजन्यफलस्वाम्यभावप्रसङ्गाच्चेत्यलं विस्तरेण॥

इति षष्ठं पत्न्या यावदुक्तकर्मस्वधिकाराधिकरणम्॥ ६॥

७

अग्निहोत्रादिषु किं ब्राह्मणक्षत्रियवैश्यशूद्राणाञ्चतुर्णां वर्णानामधिकारः? उत शूद्रवर्जं त्रयाणाम्? इति संशये, पूर्वपक्षयति—

**चातुर्वर्ण्यमविशेषात्॥ २७॥**

चत्वारो वर्णाश्चातुर्वर्ण्यम्। स्वार्थे ष्यञ् प्रत्ययः। अधिकृतं प्रत्येतव्यमिति शेषः। कुतः? अविशेषात्—फलकामत्वाविशेषात्॥

अथ सिद्धान्ती प्रत्यवतिष्ठते—

**निर्देशाद्वा त्रयाणां स्यादग्न्याधेयेऽप्यसम्बन्धात् क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः॥ २८॥**

वा शब्दः प्रत्यवस्थाने। त्रयाणा—ब्राह्मणक्षत्रियवैश्यानामेवाधिकारस्स्यात्। कुतः? अग्न्याधेयेऽपि निर्देशात्—"वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत" इत्याधानोत्पत्तिवाक्येष्वपि निर्देशात्, वसन्तकालकत्वब्राह्मणकर्तृकत्वादिगुणस्यापि विधानात्। शूद्रस्य चैवं विधगुणकाधानसम्बन्धविरहात् क्रतुषु—अग्निहोत्रादिकर्मविधिषु ब्राह्मणश्रुतिः—ब्राह्मणग्रहणं क्षत्रियवैश्ययोरप्युपलक्षणम्। श्रुतिरवगमः। ब्राह्मणक्षत्रियवैश्यानामेव कर्तृत्वावगमः। क्रतुविधीनामाधानसाध्याहवनीयाद्यग्न्यपेक्षत्वात् शूद्रस्य चाधानाभावादित्यात्रेयो नाम कश्चिदृषिर्मन्यते। इदमेव मतमाद्रियतामिति प्रत्यवस्थितिः॥

अथ पूर्वपक्षी निराचष्टे—

**निमित्तार्थेन वादस्तस्मात् सर्वाधिकारं स्यात्॥ २९॥**

निमित्तार्थेनेति तृतीया चतुर्थ्यर्थे। 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति वचनाद् वसन्तादिवाक्यानि नाधानोत्पत्तिविधयः। किन्त्वविशेषप्रवृत्तक्रतुविधि-

भिराधानसाध्याहवनीयाद्यग्न्यपेक्षैश्चतुर्णामपि वर्णानामाधाने आक्षिप्ते सति ब्राह्मणश्चेद्वसन्ते इत्येवमेतानि वाक्यानि निमित्तविशेषप्राप्तौ प्रयोजनाय भवन्ति। शूद्रस्य तु यदा कदाचित् कृतमाधानमग्नीनुत्पादयितुं शक्नोति। तस्मात् शूद्रस्याप्यग्निमत्वादग्निहोत्रादिकर्म सर्वाधिकारम्—चातुर्वर्ण्याधिकारिक स्यात्॥

अथ पुनस्सिद्धान्ती प्रत्यवतिष्ठते—

## अपि वान्यार्थदर्शनाद्यथाश्रुति प्रतीयेत॥ ३०॥

अपिवेति प्रत्यवस्थाने। वसन्तादिवाक्येषु कालविशेषकर्तृ [1]विशेषश्रवणमनतिक्रम्यैवाधानोत्पत्ति प्रतीयेत। वसन्तादिवाक्यानि प्राप्ते आधाने गुणविधयो न भवन्तीति यावत्। यदि हि पूर्वं क्रतुविधय· प्रवर्तेरन् पश्चाद् वसन्तादिवाक्यानि, तदा अविशेपप्रवृत्तक्रतुविध्याक्षेपात् प्राप्त आधाने [2]तानि गुणविधयस्स्युः। नैवम्, अग्न्यपेक्षा हि क्रतुविधय आधानोत्तरकालीना·। ते च वसन्तादिवाक्यसिद्धवसन्तब्राह्मणादिगुणविशिष्टाधानसिद्धाग्निमुपजीव्य त्रिषु वर्णेषु [3]लब्धप्रवृत्तिका· स्सन्तश्शूद्रसाधारण्येनाधानमाक्षेप्तुन्न प्रभवन्ति, सति विधावाक्षेपायोगात्। तस्मान्नास्ति शूद्रस्याधिकारः। उक्तन्याये लिङ्गमाह—अन्यार्थेति। अन्यमर्थं[4] विधातुं प्रवृत्तेपु वाक्येपु शूद्र वर्जितानामेव त्रयाणां वर्णानामनुक्रमणदर्शनात्। आधाने तावत् "अष्टासु प्रक्रमेपु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य" इति गार्हपत्याहवनीयान्तरालपरिमाणविशेपविधिषु शूद्रवर्जन्त्रय एव वर्णा अनुक्रान्ता·। (तथा ज्योतिष्टोमे "पयो ब्राह्मणस्य व्रत, यवागू राजन्यस्य, आमिक्षा वैश्यस्य" इति व्रतद्रव्यविशेपविधिपु शूद्रवर्जं त्रय एव वर्णा अनुक्रान्ताः।) एवञ्च शूद्रस्यैवञ्जातीयगुणविरहाद्वैगुण्यादनधिकार·॥

अथ पूर्वपक्षी निराचष्टे—

## निर्देशात्तु पक्षे स्युः॥ ३१॥

तुरवधारणे। "य एवं विद्वानग्निमाधत्ते" इत्यविशेषेण चतुर्णामपि वर्णानामाधानविधानात् प्राप्ते तस्मिन्नाधाने 'ब्राह्मणश्चेद्वसन्ते' इत्येव वसन्तादिवाक्यानि

---

१. विशेषमनति. अ, फ. २ तानि नास्ति. अ.

३ लब्धप्रवृत्तिका: अ, फ. ४. अन्यार्थं. अ, फ.

() अ फ पुस्तकयोर्नास्त्ययपाठ .

पक्षे ब्राह्मणादिनिमित्ते वसन्तादिकालविधायकानि स्युः। न च ब्राह्मणश्चेदादधीतेति विशिष्टानुवादाद्वाक्यभेदश्शङ्क्यः। प्रकरणप्राप्तमाधानमुपजीव्य 'ब्राह्मणश्चेद्वसन्ते' इत्येतावन्मात्रविधानात्। ततश्च शूद्रो यस्मिन् कस्मिंश्चिदृतावाहिताग्निः कर्माधिकारी। न च "य एवं विद्वानग्निमाधत्ते" इति यच्छब्दोपबन्धान्न विधायकमिति शङ्क्यम्, यदाग्नेयादिवाक्यवदुपपत्तेः। वस्तुतस्तु निर्देशादित्यस्य "अग्नय आधातव्या" इति तैत्तिरीयशाखायाम् "अग्नीनादधीत" इति वाजसेनयके चाधानोत्पत्तिविधेरित्यर्थः। यथाचैतत्तथा द्वितीयस्य तृतीये 'आधानेऽसर्वशेषत्वात्' इत्यत्रावोचाम। येषान्तु मते द्वितीये वसन्तादिवाक्यानामाधानोत्पादकत्वमिति सिद्धान्तो नाभिप्रेत, तेषामेतत्सूत्रासङ्गतिस्स्पष्टैव। पूर्वपक्षश्चायं कथमुन्मिषेत्॥

अथान्यार्थदर्शनमनूद्य निराकरोति—

## वैगुण्यान्नेति चेन्न काम्यत्वात्॥ ३२॥

(शूद्रस्याष्टत्वादिसङ्ख्याकप्रक्रमवैगुण्याद् व्रतवैगुण्याच्च नाधिकार इति चेन्न; कुत? काम्यत्वात्) 'चक्षुर्विमित आदधीत, नातिदूरमाधेय' इति गार्हपत्याहवनीयान्तरालपरिमाणमात्रं[1] वर्णविशेषमनधिकृत्य श्रुतम्। [मस्तु] शूद्रस्य व्रतमिति क्वचित् सिद्धवदनूदितम्। तदुभयस्य शूद्रेण साधनतया कामयितुं शक्यत्वादित्यर्थ॥

व्रतविषये परिहारान्तरमाह—

## (संस्कारे च तत्प्रधानत्वात्॥ ३३॥

संस्कार व्रतम्। तत्रापि नोक्तदोषः। तत्प्रधानत्वात्—सामर्थ्योपजननद्वारा पुरुषप्रधानत्वात्। यस्य यद्व्रतद्रव्यमुच्यते तस्य तदेव सामर्थ्यञ्जनयति। यस्य तु द्रव्यविशेषो नोच्यते तस्य द्रव्यान्तरेण सामर्थ्यजनने को विरोधः। तस्मात् चातुर्वर्ण्यमधिक्रियते। अस्तु वा शूद्रस्यानग्नित्व, तथापि "यः कामयेत [illegible] स दशहोतारं मनसानुद्रुत्य दर्भस्तम्बे जुहुयात्" इत्यादा[illegible] दुर्निवार इति पूर्वपक्षः स्थित॥

( ) चिन्हान्तर्गतो भाग स्खलित क पुस्तके.

१. परिमाण. ग.

( ) चिन्हान्तर्गतो भागः स्खलित[illegible] [illegible].

अथ सिद्धान्तयति— )

**अपि वा वेदनिर्देशादपशूद्रं प्रतीयेत ॥ ३४ ॥**

अपिवेति पूर्वपक्षव्यावृत्तौ । अपशूद्रं शूद्रवर्जं त्रयाणां वर्णानामधिकारः प्रत्येतव्यः । कुतः ? वेदनिर्देशात्—त्रयाणामेव वर्णानां वेदाध्ययनविधानात् । "वसन्ते गर्भाष्टमे ब्राह्मणमुपनीयत, ग्रीष्मे गर्भैकादशे राजन्यं, शरदि गर्भद्वादशे वैश्यम्" इत्यत्र हि द्वितीयाश्रुत्या उपनयन माणवकसंस्कारार्थं प्रतीयेत । तस्य च संस्कृतस्य कैमर्थ्याकाङ्क्षायां "स्वाध्यायोऽध्येतव्यः" इति '[1]तत्प्रतीयमानमध्ययनमनिर्दिष्टकर्तृकं कर्तारमपेक्षमाणमुपनीतकर्तृकत्वेन निश्चीयते । किञ्च 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निञ' इत्याचार्यकरणे फले उपनयीतेत्यात्मनेपदं विहितम् । माणवकोपनयनेन उपनेता आचार्यत्वं प्राप्नुयादित्यर्थः । आचार्यत्वसाधनञ्चोपनयनस्याध्ययनमुखेन भवति ।

'उपनीय गुरुश्शिष्यं वेदमध्यापयेत्तु यः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥'

इति मनुवचनात् । ततश्चाध्ययनमेवोपनीतस्य कर्तव्यमिति गम्यते । "उपनयीत तमध्यापयेत्" इति तच्छब्देन प्रकृतस्योपनीतस्यैव परामर्शाच्च । तस्मादुपनीतकर्तृकमध्ययनं तच्च ब्राह्मणादिवर्णत्रयसंयुक्तोत्पन्नं न शूद्रस्य विद्यत इति न तस्याध्ययनम् । तदभावाच्च न वैदिककर्मसु तस्याधिकारः ॥

ननु शूद्रस्योपनयनाभावात् स्वाध्यायविधिविहितमध्ययन मा भून्नाम । क्रतुविधिबलात् स्वयमेवोपेत्य शूद्रोऽध्येष्यते । अध्ययनस्य क्रत्वङ्गतया तदभावे तस्य क्रतुविध्यनुपपत्तेरिति प्रत्यवतिष्ठमान पूर्वपक्षिणन्निराचष्टे—

**गुणार्थित्वान्नेति चेत् संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥३५॥**

गुणं क्रत्वङ्गमध्ययनं अर्थयते अनुपनीतोऽपि शूद्रस्स्वयमुपेत्य । अतो नास्यानधिकार इति चेत्—शृणु; ब्राह्मणादिसंयुक्तोत्पन्नस्योपनयनसंस्कारस्याध्ययनार्थत्वाच्छूद्रस्य चोपनयनाभावादध्ययनाभावाच्च नाधिकारः । ननु क्रतुविधिबलादेव क्रत्वङ्गमध्ययनमनुपनीतस्यापि स्वयमुपेतस्य लभ्यते, अन्यथा क्रतोर्वैगुण्यादित्यत आह—विद्यायां पुरुषश्रुतिरिति । 'तमध्यापयीत' इति वेदाध्ययने पुरुषार्थत्वबोधिका [2]द्वितीया

१. तत्प्रकारो निश्चीयमान. अ प.    २. द्वितीया. नास्ति. प.

श्रुतिरस्ति। अतो नाध्ययनं क्रत्वङ्गं, येन क्रतुभिश्शूद्रस्यानुपनीतस्यैव तल्लभ्येत; अध्ययनविधेरनारभ्याधीतत्वाच्च। न चात्रानारभ्याधीतानां प्रकृत्यर्थत्वमिति न्यायः, तस्य क्रत्वव्यभिचरितपदार्थसमभिव्याहार एव प्रवृत्तेः। ततश्च ब्राह्मणादिसंयुक्तोत्पन्नोपनयनाध्ययनसंसिद्धैव विद्या क्रतुविधिभिरुपजीव्यते। शूद्रस्य तु तदभावान्नाधिकारः॥

स्यादेतत्; उपनयनमध्ययनञ्च त्रैवर्णिकानामेव भवतु। शूद्रस्तु तदुभयशून्य एव पुस्तकनिरीक्षणादिना वेदं लब्ध्वा कर्मस्वधिक्रियेत। न चानुपनीतेनानधीतवेदेन च शूद्रेण क्रियमाणस्य क्रतोर्वैगुण्यं शङ्क्यम्। उपनयनाध्ययनयोः पुरुषार्थतया क्रत्वङ्गत्वाभावेन तदुभयलोपेऽपि क्रतुवैगुण्याभावादिति पुनः प्रत्यवतिष्ठमानं पूर्वपक्षिणं निराचष्टे—

## विद्यानिर्देशान्नेति चेदवैद्यत्वादभावः कर्मणि स्यात्॥ ३६॥

विद्यायाः वेदाध्ययनस्य, अनिर्देशात् क्रत्वर्थतया [1]विध्यभावाच्छूद्रस्याध्ययनाभावेऽपि उपायान्तरेण वेदं लब्ध्वा क्रियमाणस्य क्रतोर्न वैगुण्यमिति [2]चेत्—शृणु; अवैद्यत्वात्—वेदाध्ययनरहितत्वाद् अग्निहोत्रादिकर्मणि शूद्रस्याधिकाराभावः। "स्वाध्यायोऽध्येतव्यः" इति हि उपनीतब्राह्मणादिकर्तृकं मधुमांसादिवर्जनसमिदाधानादिव्रतोपेतं यद्यपि पुरुषार्थतया विहितं, तथापि क्रतुविधयस्तदेव प्रसङ्गाद् गृह्णन्ति, न तु वेदग्रहणे उपायान्तरमाक्षेप्तुं प्रभवन्ति, अन्यथानुपपत्त्यभावात्; (स्वाध्यायविधिसंसिद्धविद्योपजीवनेनैवोपपद्यमानत्वात्। ततश्च यथा गोदोहनमाश्रयापेक्षदार्शपूर्णमासिकप्रणयनेन नैराकाङ्क्ष्याल्लौकिकप्रणयनेन विगुणं भवति, न च तावता तत्) प्रणयनं गोदोहनाङ्गं भवति; एवमिहाप्यध्ययनस्य क्रत्वङ्गत्वाभावेऽपि स्वाध्यायविधिसंसिद्धाध्ययनसम्पादितविद्योपजीवित्वादुपायान्तरार्जितविद्यासाधिताः क्रतवो विगुणा भवन्ति। असत्यप्यध्ययनस्य क्रत्वङ्गत्वे विशिष्टाध्ययनसम्पादितविद्याया एव क्रत्वङ्गत्वात्। यथा असत्यपि प्रणयनस्याङ्गत्वे तत्करणभूतमेव गोदोहनं पश्वङ्गन्तद्वदिहापि। अतश्शूद्रस्य विद्याभावान्नाधिकारः। यद्यपि "स्वाध्यायोऽध्येतव्यः" इति पितृपितामहादिपरम्परागतशाखामात्राध्ययनं त्रैवर्णिकानां विहितं, न च तावता

---

१. विध्यभावात् तच्छूद्रस्य. अ. २. चेन्न. अ, क.

( ) गपुस्तके ग्रन्थपातः.

क्रतवोऽनुष्ठातुं शक्या, तेषां सर्वशाखाप्रत्ययत्वात्। ततश्शाखान्तरगततत्तद्वाक्याधिगमं क्रतुविधय एव तेषामाक्षिपन्तीति वक्तव्यम्। तथैव[1] शूद्रस्यापि विद्याक्षेपस्सम्भवति, तथापि शूद्रस्य कार्त्स्न्येन क्रतूपयुक्तवेदभागाधिगम आक्षेप्य.। त्रैवर्णिकानान्तु शाखान्तरगततत्तद्वाक्यमात्राधिगम इत्याक्षेपलाघवात्त्रैवर्णिकानेव [2]क्रतुविधयोऽधिकुर्वन्ति, न तु शूद्रमिति वैषम्यमित्याहुः। वस्तुतस्तु यावता वेदभागेन स्वकर्माणि यस्य सिध्यन्ति तावान् वेदभागस्तस्य स्वाध्यायशब्दार्थ इति तृतीयस्याष्टमे 'ज्ञाते च वाचन न ह्यविद्वान् विहितोऽस्ति' इत्यधिकरणे भाष्यवार्तिकयोः प्रपञ्चितम्। एवञ्च त्रैवर्णिकाना शाखान्तरगतवाक्याधिगमः क्रतुभिराक्षिप्यत इत्युक्तेरेवानवकाशः। स्वशाखाध्ययनन्तु वाक्यान्तरविहितम्। तच्च 'एकां शाखामधीत्य श्रोत्रियो भवति नाश्रोत्रियस्य यज्ञ.' इत्यादावुपयुज्यते। अतश्शूद्रस्य विद्याभावान्नाधिकार' ॥

इतोऽप्येवमित्याह—

**तथाचान्यार्थदर्शनम् ॥ ३७ ॥**

"यद्यु वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसकाशे नाध्येतव्यम्" इति वाक्यशेषे [3]शूद्रस्य समीपेऽध्ययननिषेधो दृश्यते। [4]शूद्रस्य समीपेऽध्ययनं प्रतिषिध्यते चेत्, शूद्रस्य वेदग्रहणप्रतिषेध कैमुतिकन्यायसिद्धः। 'श्रवणे त्रपुजतुभ्यां कर्णपूरणमुच्चारणे जिह्वाच्छेदो धारणे शरीरभेद' इत्यादिस्मरणाच्च। अतः पुस्तकनिरीक्षणादिनापि शूद्रस्य वेदग्रहणासम्भवान्नाधिकारः॥

इति सप्तममपशूद्राधिकरणम् ॥ ७ ॥

## ८

तदेव शूद्रवर्जन्त्रयाणा वर्णानामधिकार इति स्थितम्। त्रयाणामपि मध्ये किं द्रव्यवत एवाधिकार.? उताद्रव्योऽपि कर्मार्थमार्जितद्रव्यः कर्मस्वधिक्रियते? इति संशये, पूर्वपक्षयति—

---

१. ततश्शूद्रस्य अ. २. क्रतु. नास्ति. ग.

३, ४. शूद्रसमीपे. अ, ग.

## त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धत्वात् ॥ ३८ ॥

त्रयाणां वर्णानाम्मध्ये द्रव्यसम्पन्न एवाधिक्रियते नाद्रव्य.। कुतः? कर्मणो द्रव्यसिद्धत्वात्। यथा अविद्यमपि शूद्रमधिकृत्य तस्य तस्य विद्यां क्रतवो नाक्षिपन्ति, एवमद्रव्यमधिकृत्य तस्य द्रव्यार्जनं नाक्षिपन्ति क्रतव., किन्तु द्रव्यसम्पन्नमेवाधिकुर्वन्तीत्यद्रव्यस्य नाधिकारः ॥

अथ सिद्धान्तयति—

## अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ३९ ॥

तुर्वपम्ये। द्रव्यसम्पन्नोऽधिक्रियत इत्येवं न स्यात्। कुतः? अनित्यत्वात् द्रव्यवत्वस्यानवस्थितत्वात्। न द्रव्यवत्वमधिकारिविशेषणम्, प्रमाणाभावात्। यो हि यष्टुं शक्नोति स नियुज्यते। शक्नोति चाद्रव्योऽपि द्रव्यमार्जयित्वा यष्टुम्। न हि जात्या कश्चिदद्रव्योऽस्ति, द्रव्यवत्वस्यानवस्थितत्वात्। न च शूद्रोऽपि विद्यामार्जयित्वाधिक्रियत इति वाच्यम्, तस्य विद्याभावात्, न हि क्रतवस्तस्य विद्यामाक्षिपन्ति, स्वाध्यायविधिसंसिद्धविद्यैस्त्रैवर्णिकैरेव क्रतूनां शान्ताकाङ्क्षत्वेन तदाक्षेपकत्वायोगात्। द्रव्यवत्ता[1] तु न विध्यन्तरेण केषाञ्चित् क्लृप्ता, यतस्तानेव क्रतवोऽधिकुर्युः। न चासत्यपि विध्यन्तरे जीवनायैव द्रव्यं येषामस्ति तेषामधिकारोऽस्तु, तत्राह— अर्थाद्धि द्रव्यसयोग इति। हि यस्माद् अर्थात् पुरुषाभिलषितप्रयोजनाय द्रव्यार्जनं, क्रतूना जीवनस्य च न कश्चिद्विशेषः। येन जीवनमेव प्रयोजनं द्रव्यार्जनस्य, न तु क्रतव[2] इत्युच्येत, उभयेषामपि पुरुषार्थत्वात्। न चैव 'याजनादिभिर्धनमार्जयेत्' इति द्रव्यार्जननियमस्य क्रत्वर्थत्वप्रसङ्गः, तस्यानारभ्यविहितत्वात्। न चानारभ्याधीतन्याय., तस्य क्रत्वव्यभिचरितत्वनियतत्वाद् द्रव्यार्जनस्य च क्रत्वक्रतुसाधारणत्वेनानैकान्तिकत्वात्। तस्मादद्रव्योऽपि द्रव्यमार्जयित्वा कर्मस्वधिक्रियते ॥

इत्यष्टममद्रव्यस्यापि क्रत्वधिकाराधिकरणम् ॥ ८ ॥

९

अन्धपङ्ग्वादीनामङ्गहीनानां किं नैवाधिकार.? उत कथञ्चिदङ्गवैकल्यमौषधादिसेवया प्रतिसमाधाय तेऽपि कर्मस्वधिक्रियन्ते? इति सशयः। द्रव्यन्तावदत्यन्त-

---

१. तु नास्ति. ग. २. इत्युच्यते. ग.

बहिर्भूतम् । अधिकारस्त्वात्मवर्तित्वादन्तरङ्ग । अतो द्रव्यान्वयव्यतिरेकानुविधायित्व-मित्यधिकारस्य न युज्यते । द्रव्याभावे कथञ्चित् द्रव्यं सम्पाद्याधिक्रियत इति युक्तम् । अङ्गसाकल्यन्त्वन्तरङ्गम् । अतोऽङ्गवैकल्यमधिकारं विरुणद्धि । तस्मादङ्गहीनानां नाधिकार इति प्राप्ते, सिद्धान्तयति—

## अङ्गहीनश्च तद्धर्मा ॥ ४० ॥

अङ्गविकलोऽपि द्रव्यहीनकर्म [धर्मक ।] यथा द्रव्यहीनो द्रव्यार्जनेन कर्म-स्वधिक्रियते, तथा अङ्गहीनोऽपि कथञ्चिदौपधादिना अङ्गवैकल्यं प्रतिविधायाधिक्रियत इति यावत् । अङ्गसम्पत्तेर्द्रव्यसम्पत्तेश्चान्तरङ्गबहिरङ्गभावे सत्यपि तदुभयविहीनस्य तदुभयप्रतिविधानेन क्रत्वनुष्ठानस्योभयत्र तुल्यतया अन्तरङ्गत्वस्याकिञ्चित्करत्वा-दिति भाव ।

इति नवममङ्गहीनानामपि क्रत्वधिकाराधिकरणम् ॥ ९ ॥

१०

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यन्तस्याधिकारोऽस्ति नवेति सशयः । अस्तीति ब्रूमः । चक्षुर्हीनोऽप्याज्यावेक्षण विना यष्टुं शक्नोति । विष्णुक्रमान्विना पङ्गु, प्रैपादिश्रवण विना वधिर इति प्राप्ते, सिद्धान्तयति—

## उत्पत्तौ नित्यसंयोगात् ॥ ४१ ॥

अङ्गहीन इत्यनुवर्तते । यस्तावदुत्पत्तौ सत्यामेवाङ्गविकलः जात्यन्धादिः, अप्रति-समाधेयाङ्गवैकल्य' इति यावत्, स नाधिक्रियते । कुतः ? नित्यसंयोगात्—आज्या-वेक्षणादिभिरङ्गै क्रतोर्नित्यसम्बन्धावगमात् । अन्धादीनामाज्यावेक्षणादिभिर्विना क्रत्वनुष्ठाने तेपा नित्यवदाम्नानवाधप्रसङ्गादिति यावत् । काम्यकर्मसु हि सर्वाङ्गोप-सहारसमर्थस्यैवाधिकारस्तृतीयपादे वक्ष्यते । नित्यकर्मसु तु कतिपयाङ्गवैगुण्ये सत्यपि स्यादेवाधिकार[२], तत्रैव पादे सर्वशक्त्यधिकरणे तथा वक्ष्यमाणत्वात् । आधाने तु सर्वाङ्गोपसंहारसमर्थस्याविकलाङ्गस्यैवाधिकार', आधानस्य काम्यत्वात् तस्याग्निसिद्ध्यर्थत्वात । याज्ञिकास्तु 'नानाहिताग्निर्म्रियते' इति श्रवणात्, 'अनाहि-ताग्निता स्तेन्यम्' इत्युपपातकेपु परिगणनस्मरणाच्चाधानस्य नित्यत्वं मन्यन्ते ।

१. वैकल्यपाः. अ, क. २. तत्राधिकार . अ.

तन्मते तत्र किञ्चिदङ्गवैकल्यं न दोषायेति स्यादेवाप्रतिसमाधेयाङ्गवैकल्यकस्याप्याधानम् ॥

इति दशममप्रतिसमाधेयविकलाङ्गानामनधिकाराधिकरणम् ॥ १० ॥

११

दर्शपूर्णमासयोःश्रुतम्—"आर्षेयं वृणीते" इति । प्रवराध्यायप्रसिद्धा भृग्वादयः ऋषयः, तद्वंशजयजमानजातत्वेनाहवनीयस्यामन्त्रणं वरणम्, यथा भार्गवच्यावनाप्नवानेत्यादि । तदिदमार्षेयवरणं प्रकृत्याम्नातम्—"एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते न चतुरो वृणीते । न पञ्चाति प्रवृणीते" इति । आर्षेयवरणे ऋषीणां घटकत्वादेकं वृणीत इत्यादौ तेषां वरणव्यपदेश. । आर्षेयमित्येकत्वमाहवनीयापेक्षम् । वस्तुतस्तु आर्षेयशब्देन प्रवराध्यायप्रसिद्धा भृग्वादय ऋषय एवोच्यन्ते । प्रवराध्यायेषु 'त्र्यार्षेयः प्रवरो भवति' इत्यसकृद्व्यवहारात् । आर्षेयशब्दस्याहवनीयपरत्वे त्रित्वस्य तत्रान्वयासम्भवात् । आर्षेयमिति तु सामान्याभिप्रायमेकवचनं 'परस्तादर्वाचो वृणीते' इत्युत्तरवाक्यानुसाराद् आदौ मूलपुरुषं भृगुं तत स्तदपत्यं च्यवनमित्येव ज्येष्ठक्रमेण वृणीत इत्यर्थ. । 'यजमानस्यार्षेयान् प्रवृणीते ( परं परं प्रथमम्' इत्याश्वलायनः । तत्र दर्शपूर्णमासयोः किम् अत्र्यार्षेयोऽप्यधिक्रियते ? उत त्र्यार्षेय एव ? इति संशयः । तत्र "आर्षेयं वृणीते" इति सामान्येनार्षेयवरणविधि., 'एकं वृणीते द्वौ वृणीते ) त्रीन्वृणीते' इत्यनुवादः । न तु "आर्षेयं वृणीते" इत्येव सामान्यप्राप्तार्षेयवरणे "त्रीन्वृणीते" इत्येव गुणविधिः, 'एकं वृणीते, द्वौ वृणीते' इति त्वनुवादाविति युक्तम् । त्रित्वस्यापि सामान्यविधित प्राप्तत्वाविशेषात्, अत एव "न चतुरो वृणीते, न पञ्चाति प्रवृणीते" इति प्रतिषेधावुपपद्येते । त्रित्वस्यैव विधौ तद्वैयर्थ्यात् । ततश्चतुरार्षेयपञ्चाधिकषडाद्यार्षेयवर्जम् एकद्वित्रिपञ्चार्षेयाणामधिकार इति प्राप्ते, सिद्धान्तयति—

**अत्र्यार्षेयस्य हानं स्यात् ॥ ४२ ॥**

अत्र्यार्षेयस्य हानं दर्शपूर्णमासयागे स्यात् । तत्र नाधिकार इति यावत् । तथाहि—"आर्षेयं वृणीते" इति सामान्यं विशेषाकाङ्क्षं "त्रीन्वृणीते" इति त्रित्वेन विशेष्यते, अन्यथा त्रित्वश्रुतेरानर्थक्यात् । पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधात् ।

( ) गपुस्तके ग्रन्थपातः.

एकत्वादि तु त्रित्वचोदनयैव नित्यप्राप्तत्वादवयुत्यानूद्यते, द्वादशकपालविधावष्टत्वादि श्रवणवत्। 'यदि चैकत्वाद्यपि विधीयेत तर्हि वाक्यभेदस्स्यात्, तद्भेदाच्चादृष्टभेदोऽपि कल्प्येत, अश्रुतविधिकल्पना च प्रसज्येत। न ह्येकं वृणीत इत्यादिषु विधिश्श्रुतः, अनुवादात् स कल्पयितव्यः। स चैक एव कल्पयितुमुचितः।

ननु "आर्षेयं वृणीते" इत्येक एव विधिः। एकत्वादिवाक्यानि सर्वाण्येवानुवादास्सन्तु। एवं सत्यत्यन्तलाघवादिति चेत्–एवमपि "न चतुरो वृणीते" इति "न पञ्चाति प्रवृणीते" इति च प्रतिषेधाद्वाक्यभेदो दुष्परिहरः। न हि प्रतिषेधद्वयस्य परस्परैकवाक्यत्वमार्षेयविध्येकवाक्यत्वं (वा कथञ्चित् सम्भवति। त्रित्वमात्रविधौ तु 'आर्षेयं वृणीते' किंसङ्ख्याकमित्याकाङ्क्षायां त्रीनित्येकवाक्यत्व) लभ्यत इति न दोषः। तस्मान्नैकद्व्यार्षेययोरधिकारः। (चतुराद्यार्षेया अपि त्र्यार्षेयवरणेनैव कर्मण्यधिक्रियन्ते। 'त्रीन् वृणीते' इति हि नात्रार्षेयस्यैवाधिकारबोधकं, किन्तु त्रयाणां वरणं विहितम्। तच्च चतुराद्यार्षेया अपि शक्नुवन्त्येव सम्पादयितुम्। न च यस्य यावन्त ऋषयस्तावन्तस्तस्य वरितव्या इति प्रमाणमस्ति। तथा सत्यनपेक्षितानेकार्थप्रतिपादनाद् गौरवापत्तेः। न ह्यार्षेयं वृणीत इत्यस्य चतुराद्यार्षेया नाधिक्रियन्त इत्येवविधे[2] विशेषेऽपेक्षास्ति, सङ्ख्याविशेषमात्रापेक्षत्वात्। ननु 'न पञ्चाति प्रवृणीते' इति निषेधादस्तु पञ्चार्षेयस्य पञ्चानां वरणम्, अन्यथा 'न चतुरोऽति प्रवृणीते' इत्येवावक्ष्यदिति चेन्नैवम्; त्रित्वविधौ हि[3] 'न चतुरो वृणीते न पञ्चाति प्रवृणीते' इति न चतुर्णां वरणं पञ्चातिवरणञ्च प्रतिषिध्यते, येन पञ्चवरणमनुमीयेत। किञ्च तदुभयं त्रित्वविधितः प्राप्तमनूद्यते। अनुवादाच्च यावत् पञ्चानां वरणमनुमीयते, ततः प्रागेव त्रित्वविधिः प्रवर्तते। तत्प्रवृत्त्या च पञ्चानां वरणे निरस्ते कथं पञ्चातिवरणाभावानुवादमूलकं पञ्चवरणानुमानं[4] प्रवर्तेत। तस्मात्त्रीन्वृणीत इत्येव विधिः। चतुराद्यार्षेयाणामपि आर्षेयवरणत एवाधिकारः। एकद्व्यार्षेययोस्तु नैवाधिकारः। ननु "अपिवा नार्षेयं वृणीते मानवेति होता ब्रूयान्मनुवदित्यध्वर्युः" इति श्रुतम्। अस्मिन् पक्षे एकद्व्यार्षेययोरपि स्यादेवाधिकारः, तथाप्यार्षेयवरणपक्षे तयोरनधिकार-

---

१ यद्येकत्वादीनि. अ, प. () ग्रन्थपात अपुस्तके.

() ग्रन्थपात कपुस्तके. २. एवं विधिविशेषे. अ.

३ हि. नास्ति अ. ४. वरणमनुमानं. अ

प्रदर्शनार्थमधिकरणम्। त्रिचतुराद्यार्षेयाणामप्येकस्य द्वयोर्वा न वरणं, किन्तु त्रयाणामेवेति प्रदर्शनार्थञ्च। अतएव सङ्कर्षणे द्वितीयस्य द्वितीये जमदग्नीनां त्रिआर्षेयाणामधिकारं सिद्धवत्कृत्य 'पञ्चावत्त जमदग्नीनामिति सर्वेषामविशेषात्' इति पञ्चावत्तविचार उपपद्यते ॥ )

इत्येकादशमार्षेयवरणाधिकरणम् ॥ ११ ॥

१२

"वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यश्शरदि वैश्यो वर्षासु रथकारः" इति श्रुतम्। तत्र त्रैवर्णिकानामन्यतम एव रथकारः ? उत त्रैवर्णिकेभ्योऽन्यो रथकार-शब्दवाच्यो जातिविशेषः ? अथवा सौधन्वनाख्यजातिविशेषः ? इति संशयः। तत्र मध्यमपक्षेणोपक्रमते—

**वचनाद्रथकारस्याधानस्य[1] सर्वशेषत्वात् ॥ ४३ ॥**

अत्रैवर्णिकस्य रथकारशब्दवाच्यजातिविशेषस्येदं वर्षाधानम्। कुतः ? वचनात्—'माहिष्योग्रौ प्रजायेते विट्च्छूद्राङ्गनयोर्नृपात्। शूद्रायां करणो वैश्यात्' इति प्रस्तुत्य, 'माहिष्येण करण्यान्तु रथकारः प्रजायते' इति रथकारशब्दस्य रूढिस्मरणात्। किञ्चाधानस्य सर्वशेषत्वात्-पूर्वत्र वसन्तादिवाक्येषु त्रैवर्णिकानामनुक्रान्तत्वेन वर्षाधानस्य सर्वत्रैवर्णिकाधानापेक्षया परिशिष्टत्वात्, तदन्यविषयत्वावधारणादिति यावत् ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**न्यायो वा स्यात् कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४४ ॥**

वा शब्दः प्रत्यवस्थाने। नीयत इति न्यायः। कर्मणि घञ्। रथकर्मसंयोगं प्रवृत्तिनिमित्तमाश्रित्य रथकारशब्दोऽत्र त्रैवर्णिकेष्वेव नेतव्यः। कुतः ? शूद्रस्य प्रतिषिद्धत्वात्—अपशूद्राधिकरणे शूद्रस्याध्ययनाभावेन कर्माधिकारस्य निरस्तत्वात्। यद्यप्युक्तलक्षणरथकारो न शूद्रः सङ्करजत्वात्, तथापि शूद्रधर्मकत्वात्तस्यापि शूद्रत्वव्यपदेशः "शूद्राणान्तु सधर्माणस्सर्वेऽपध्वंसजा स्मृताः" इति स्मरणात्। 'अपध्वंसजास्सङ्करजाः' इति विज्ञानेश्वरीये ॥

---

() गपुस्तके ग्रन्थपातः.

1. आधानेऽस्य.

अथ मध्यमपक्षी समाधत्ते—

**अ [१]त्वात्तु नैवं स्यात् ॥ ४५ ॥**

तुरसमाधानारम्भं द्योतयति । रथकारशब्दो यौगिकस्त्रैवर्णिकेष्वेव वर्तितुमर्हतीत्येव यदुक्तं तन्न भवति । कुतः ? अकर्मत्वात्-त्रैवर्णिकानां रथक्रियाशून्यत्वात् । 'न जीवेयुर्द्विजाः शिल्पैः' इति तन्निषेधस्मरणात् । तस्मादुक्तजातिविशेषवाच्येवात्र रथकारशब्दः ॥

इतोऽप्येवमित्याह—

**आनर्थक्यञ्च संयोगात् ॥ ४६ ॥**

यदि चात्र रथकारस्त्रैवर्णिकस्स्यात् तर्हि वाक्यमिदमानर्थक्यम्-वर्षाशब्देनासाङ्गत्यं प्राप्नुयात् । कुतः ? संयोगात्-ब्राह्मणादीनां वसन्तादिसंयोगनियमात् । तस्मादत्रैवर्णिक उक्तजातिविशेष एव रथकारः ॥

ननु त्रैवर्णिकानां शिल्पजीवनं निषिद्धं, कौतूहलतश्शिल्पाभ्यासस्तु न दुष्यति । अतस्त्रैवर्णिकानां रथक्रियाशिल्पयोगो न दुष्यतीति त्रैवर्णिकपर एव रथकारशब्दः । न च त्रैवर्णिकानां वसन्ताद्याधानावरुद्धत्वाद्वर्षाकालानन्वयश्शङ्क्यः । वसन्तादिवाक्याना रथकर्मशून्यत्रैवर्णिकविषयत्वोपपत्ते., रथकर्मणि निमित्ते विहितेन वर्षाकालेन वसन्तादिकालबाधात् पुरुपार्थसमासक्ते ,काम्यं नित्यस्य बाधकमिति न्यायात् । तथाच त्रैवर्णिक एव रथकारश्चेदादधीत तर्हि वर्षास्विति वचनव्यक्तिः पर्यवस्यतीति पुन पूर्वपक्षिण. प्रत्यवस्थानमुद्भाव्य मध्यमपक्षी समाधत्ते—

**गुणार्थेनेति चेदुक्तमनिमित्तत्वम् ॥ ४७ ॥**

त्रैवर्णिकानामपि गुणार्थेन कौतूहलार्थं रथकर्मास्ति । अतस्तेपामेव रथकर्मणि निमित्ते आधानस्य 'वसन्तादिबाधेन वर्षाकालरूपगुणविधानमिति चेत्— शृणु, "माहिष्येण करण्यान्तु रथकारः प्रजायते' इति स्मृत रथकारशब्दस्य अनिमित्तत्वम्—रथक्रियानिमित्त [२]कर्मकत्वराहित्यमुक्तम् । रूढत्वमुक्तमिति यावत । तथाचावयवार्थापेक्षायोगाद्रूढेर्बलवत्वान्न द्विजातिपरो रथकारशब्द, वचनबलादेव तस्य यावदुपयुक्तविद्या कल्प्यते, अमिमाधिकरणन्यायेन फलमुखगौरवत्या-

---

१ [illegible] ग.     २. [illegible] क.

दोपत्वात्। तस्मादत्रैवर्णिकस्य रथकाराख्यजातिविशेपस्येदं वर्षाधानमिति मध्यमपक्षः[1] स्थित[1]।

भाष्ये तु-वसन्तादिवाक्यानां [2]ब्राह्मणादिसंयोगनिमित्तार्थत्वं नास्ति किन्तु वसन्तब्राह्मणादिविशिष्टाधानोत्पत्तिविधित्वमेवेत्युक्तं प्राक्। अतो रथकारवाक्यस्यापि तत्प्रायपाठाद्रथकारवर्षाविशिष्टाधानोत्पत्तिविधित्वमिति व्याख्यातम्। तन्न; अपशूद्राधिकरणे 'निर्देशात्तु पक्षे स्युः' इति सूत्रे 'य एवं विद्वानग्निमाधत्ते" इत्यादिवाक्योत्पन्ने आधाने वसन्तादिवाक्यानां गुणविधि स्वीकृत्यैव 'अपिवा वेदनिर्देशादपशूद्रं प्रतीयेत' इत्यादिभिस्सूत्रैर्वेदाध्ययनविरहमात्रेण शूद्रानधिकारस्य सिद्धान्तितत्वात्॥

अथ तृतीयपक्षेण सिद्धान्तयति--

**सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन्॥ ४८॥**

तुरवधारणे। सौधन्वना इति 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति बहुवचनम्।

'व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च।
मारूपश्च विजन्मश्च मैत्रस्सात्वत एव च'॥

इति स्मृतेस्सुधन्वाख्य[3] जातिविशेप एवात्र रथकारशब्देन रथक्रियायोगादभिधीयते, "ऋभूणान्त्वा" इत्याधानमन्त्रवर्णात्। 'ऋभव इति हि सौधन्वना उच्यन्ते, "सौधन्वना ऋभवः" इति मन्त्रवर्णात्। अस्ति च ऋभूणां रथक्रिया "तन्नेमिमृभवो यथा नमस्व" इति मन्त्रवर्णात्। ऋभवो यथा रथनेमिं नमयन्ति तथा यज्ञं नमयेत्यग्निं प्रति वर्ण्यते। रथकारश्च नेमिन्नयति। तथाच 'माहिष्येण करण्यान्तु रथकारः प्रजायते' इति भूतजातिविशेपस्य स्मृतिसिद्धरूढ्या रथकारशब्दवाच्यत्वेऽपि मन्त्रवर्णात् प्रबलाद्रूढिं परित्यज्य सौधन्वनामेव रथकरणयोगमाश्रित्य रथशब्देनात्र ग्रहणम्। हीनत्वाच्च—वसन्तादिवाक्येपु हि ब्राह्मणः क्षत्रियो वैश्यश्चोत्तरोत्तरं हीना जातिरनुक्रान्ता। तथाच तत्प्रायपाठाद्वैश्यवाक्यानन्तराम्नातरथकारवाक्येऽपि वैश्यापेक्षया हीनजातिरनुक्रमितव्या। 'माहिष्येण करण्यान्तु रथकारः प्रजायते' इत्युक्तजातिस्तु न वैश्यजातेर्हीना। किन्तु किञ्चिदधिका। वैश्यायां क्षत्रियादुत्पन्नो हि

१. पक्षे अ.
२. ब्राह्मणादिनिमित्तसंयोगार्थत्व. अ, क.
३. सौधन्वाख्य. अ.

माहिष्यः। स च बीजक्षेत्रोत्कर्षनिकर्षाभ्यां वैश्यादीषदधिकः, न तु वैश्यसमः, बीजप्राबल्यात्। या तु स्त्री वैश्याच्छूद्रायामुत्पन्ना सा करिणी नाम। साप्युक्तरीत्या शूद्रादीषदधिका। एवञ्च वैश्यादीषदधिकान्माहिष्यादीषच्छूद्रादधिकायां करिण्यामुत्पन्नस्य रूढ्या रथकारशब्दवाच्यत्वेऽपि तस्य वैश्यापेक्षया हीनत्वाभावान्नात्र रथकारशब्देन ग्रहणम्। 'व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च' इति सौधन्वनास्तु वैश्यापेक्षया किञ्चिद्धीनाः। ततश्च तेष्वेवात्र रथक्रियानिमित्तो रथकारशब्दो वर्तितुमुचितम्॥

इति द्वादश रथकाराधिकरणम्॥ १२॥

१३

अस्ति काचित् काम्येष्टिः—"रौद्रं वास्तुमयञ्चरुन्निर्वपेत्" इति। वास्तुकाख्यशाकविशेषप्रकृतिकमित्यर्थः। एतामिष्टिं प्रकृत्य श्रूयते—"एतया निषादस्थपतिं याजयेत्" इति। ब्राह्मणाच्छूद्रायामुत्पन्नो निषादाख्यः कश्चिज्जातिविशेषः स्थपतिः—प्रभुः। किमिह निषादानां स्थपतिरिति षष्ठीसमासः? उत निषादश्चासौ स्थपतिश्चेति कर्मधारय? इति संशयः। षष्ठीसमास इति भ्रमः। कर्मधारयसमासे स्थपतेर्निषादस्य विद्याभावेनाधिकाराभावात्, विद्याया अपि कल्पने गौरवात्। षष्ठीसमासाश्रयणे तु निषादानां स्थपतिर्विद्यावानेवाधिकारी लभ्यत इति न तत्कल्पनागौरवम्। न च षष्ठीसमासे निषादपदस्य निषादसम्बन्धिनि लक्षणापत्तिरिति वाच्यम्। यथा निषादानां स्थपतिरिति विग्रहवाक्ये लक्षणा नास्ति, तथा समासेऽपि लक्षणाया अभावात्, व्याससमासयोरेकार्थत्वनियमस्य पाणिनिना विभाषाधिकारेण ज्ञापितत्वात्। 'विभाषा' इत्यधिकृत्य हि समासा विहिताः। समासस्य नित्यत्वं मा भूत् विग्रहवाक्यमपि कदाचित्प्रयुज्येतेति। व्याससमासयोरर्थभेदे हि स्वस्वार्थप्रतिपादनाय वाक्यसमासयोरवश्यं पृथक् प्रयोगसिद्धेर्विभाषाधिकारोऽनर्थकस्स्यात्। एकार्थत्वे तु समासेन विग्रहवाक्यस्य निवृत्तिर्मा भूदिति तत्सार्थक्यम्। ततश्च कर्मधारयतत्पुरुषयोर्बलाबलविशेषाभावाद्विद्याशालिनस्त्रैवर्णिकान्यतमस्यैव निषादानां स्थपतिरिति षष्ठीसमासाश्रयणेन स्थपतीष्टावधिकारः, न तु कर्मधारयसमासाश्रयणेन, स्थपतेर्निषादस्य तस्य विद्याभावादिति प्राप्ते, सिद्धान्तयति—

## स्थपतिर्निषादस्स्याच्छब्दसामर्थ्यात् ॥ ४९ ॥

कर्मधारयसमासाश्रयणेन स्थपतिर्यो निषादस्स एवाधिकारी[1] स्यात्। कुतः? शब्दसामर्थ्यात्—कर्मधारये निषादस्थपतिशब्दे निषादशब्दस्य निषादमात्रप्रतिपादनेन स्वार्थवृत्तत्वात्, षष्ठीसमासे तु निषादस्य[2] सम्बन्धिनि स्थपतौ तस्य लक्षणाप्रसङ्गात्। तथाहि—'समर्थः पदविधिः' इति समासस्सामर्थ्यापेक्षः। सामर्थ्यञ्चैकार्थीभावः। नीलोत्पलमित्यत्र हि नीलोत्पलशब्दाभ्यामेक एवार्थः प्रतिपाद्यत इत्येकार्थीभावलक्षणसामर्थ्यसत्त्वात् समासः। एवं षष्ठीसमासोऽपि सामर्थ्यापेक्षः। तत्र यदि निषादशब्देन निषाद एवोच्येत, स्थपतिशब्देन स्थपतिरेव, तदा भिन्नार्थकत्वात् सामर्थ्याभावात् समासो न स्यात्। ततश्च सामर्थ्यसिध्यर्थं निषादशब्दः षष्ठीसमासे स्थपतिलक्षकस्स्यात्। न च निषादानां स्थपतिरिति विग्रहवाक्ये लक्षणाभावात् समासेऽपि न लक्षणा। व्याससमासयोरेकार्थकत्वादिति वाच्यम्। निषादानां स्थपतिरिति विग्रहवाक्ये हि षष्ठ्यैव निषादसम्बन्धिस्थपत्यभिधानान्नास्ति लक्षणा। समासे तु षष्ठी न विद्यते, अनुपलभ्यमानत्वात्। अतो निषादशब्देनैव लक्षणया तत्सम्बन्धी प्रतिपादयितव्यः। न चैतावता व्याससमासयोर्भिन्नार्थकत्वम्, उभाभ्यामपि निषादसम्बन्धिनस्स्थपतेः प्रतिपादनात्। इयांस्तु भेदः—क्वचिच्छ्रुत्या क्वचिल्लक्षणयेति। न त्वेतावतैकार्थत्वहानिः। न च समासे लुप्ता षष्ठी सम्बन्धिनमभिधास्यतीति वाच्यम्, व्याघातात्। न हि लुप्ता षष्ठी शक्नोत्यभिधातुम्, अविद्यमानत्वात्। एतेन षष्ठीलोप एवाभिधास्यतीत्यपि निरस्तम्। लोपस्याभावात्मकत्वेन तस्याभिधायकत्वासम्भवात्। समासे विभक्तिलोपस्यैवासिद्धेश्च। एकदेशविकारे हि नित्यत्वं नोपपद्यत इति वैयाकरणसिद्धान्तात्। एवञ्च () रेखागवयन्यायेनानुशासनाय कल्पिते प्रक्रियावाक्य एव विभक्तिलोपः काल्पनिक इति समासे विभक्तिलोपस्यैवाभावान्न तस्य सम्बन्धाभिधायकत्वसम्भवः। तस्मान्निषादशब्देनैवात्र लक्षणया षष्ठ्यर्थः प्रतिपादनीयः। न चैवं सति षष्ठीसमासोच्छेदः, पदद्वयस्यापि समानाधिकरणतया कर्मधारयप्रसङ्गादिति वाच्यम्। यत्र षष्ठ्यर्थलक्षणया सामानाधिकरण्यं तत्र षष्ठीसमासः। यत्र तु तां विनैव सामानाधिकरण्यं तत्र कर्मधारय इत्यभ्युपगमात्। न चैवमपि राजपुरुष इत्यत्र राजा चासौ पुरुषश्चेति विग्रहस्स्यात्। राजशब्देन राजसम्बन्धिनः पुरुषस्य प्रतिपादनात्। राज्ञः

---

१. अधिकृतः. क. २. निषादसम्बन्धिनि. क.

पुरुष इति विग्रहो न स्यात्, समासे षष्ठ्यभावात् समासान्तर्भूतस्य च विग्रहवाक्ये प्रयोगायोगादिति वाच्यम्, इष्टापत्तेः। कथन्तर्हि राज्ञः पुरुष इति व्याख्यातारोऽपि विगृह्णत इति चेत्—अर्थविस्पष्टीकरणार्थमिति गृहाण। अन्यथा हि कर्मधारयोऽपि सम्भाव्येत। तत्सिद्धं षष्ठीसमासे निषादशब्दस्य लक्षणापातात् ( कर्मधारय एव समासः। अतो निषाद एव स्थपतिरधिक्रियते, न तु निषादानां स्थपतिः। विधिबलादेव निषादस्य विद्यापि कल्प्यते। न च गौरवं, फलमुखस्य तस्यादोषत्वात्। ) यथा चैतत्तथा मन्त्राधिकरणे प्रपञ्चितम् ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ५० ॥**

"कूटं दक्षिणा" इति स्थपतीष्टौ श्रुतम्। व्याधानां मृगग्रहणसाधनयन्त्रविशेषः कूटम्। 'माया निश्चलयन्त्रेषु कूटम्' इत्यमरः। तदेतन्निषादस्यैव स्वम्, न तु त्रैवर्णिकानाम्। अतोऽपि लिङ्गान्निषादस्यैवेयं स्थपतीष्टिरिति सिद्धम् ॥

इति त्रयोदशं निषादस्थपत्यधिकरणम् ॥ १३ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ षष्ठाध्यायस्य प्रथमः पादः ॥



# अथ द्वितीयः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् प्रथमपादे स्वर्गकामादिशब्दैरधिकारी निरूपितः। अथास्मिन् द्वितीयपादे आख्यातेनाधिकारो निरूप्यते। अस्ति बहुयजमानकं सत्रम्—"ऋद्धिकामास्सत्रमासीरन्" इति, "गृहपतिसप्तदशास्सत्रमासीरन्" इति। [१]तत्र किमेकमेव ऋद्धिफलं सर्वेषां व्यासक्तं प्रत्येकन्तु तस्य तस्य ऋद्धेस्सप्तदशोऽशो भवति ? उतैकैकस्य कृत्स्नमेवैकैकत्रर्द्धिफलं भवति ? इति संशयः। [२]न चोभयस्याप्यनुष्ठाने को विशेष इति शङ्क्यम्। यदि हि सर्वेषामेव ऋद्धिफलं व्यासक्तं, तदा ऋद्धेस्सप्तदशमंश काम-यमानो [३]यक्ष्य इति सङ्कल्पयितव्यम्। यदि तु प्रत्येकमेव कृत्स्नं फलं, तदा ऋद्धिकामो यक्ष्य इति तस्य तस्य सङ्कल्प इत्यनुष्ठानभेदः, [४]'क्रतुकाम कामयेत' इति वचनात्। तत्र सर्वेषां व्यासक्तमेव फलमिति ब्रूमः। 'आसीरन्' इति ह्याख्यातेन कर्तृबहुत्वमवगतम्। तच्चोपरितनाधिकरणन्यायेन विवक्षितम्। न चैकस्मिन् कर्मणि बहूनां प्रत्येकं कर्तृत्व सम्भवति, एकेन कृतेऽन्यस्य कर्तृत्वायोगात्। एवञ्च बहूनां प्रत्येकं कर्तृत्वे प्रयोगभेदापत्त्या एकस्मिन् प्रयोगे तदनुपपत्तेरिह कर्तृरूपबहुत्वासम्भवात् कर्तृत्वाश्रयपुरुषबहुत्वमेवाख्यातार्थो वाच्यः। ततश्च कर्तृरूपस्य व्यासक्तत्वात् फलमपि व्यासक्तमेव। येन रूपेण कर्तृत्वं तेन रूपेण फलान्वयस्य स्वारसिकत्वात्। तस्मात् सर्वेषां व्यासक्त फलम्। ततश्चावयवशः फलकामानामेवाधिकार इति प्राप्ते, सिद्धान्तयति—

---

१. तत्र. नास्ति. अ, क.
२. न चोभयथापि अ, क.
३. अपेक्ष्यत इति मातृकासु पाठः.
४. क्रत्वादौ क्रतुकाम कामयेत. अ.

## पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारस्स्यात् ॥ १ ॥

तस्य तस्य प्रत्येकमधिकारः—कार्त्स्न्येन ऋद्धिफलसाम्यं स्यात्, न तु सर्वेषामेकं व्यासक्तं फलम्। कुतः? पुरुषार्थैकसिद्धित्वात्—पुरुषार्थस्य कार्त्स्न्येन ऋद्धिफलस्य प्रत्येकसाध्यत्वात्। ऋद्धिकामशब्देन हि कार्त्स्न्येन ऋद्धिं कामयमाना उच्यन्ते, न त्ववयवशः, ऋद्धिकामानां फलेऽवयवशः कामनाया अस्वारसिकत्वात्, ऋद्धिशब्दस्य ऋद्ध्यवयवे लक्षणापत्तेश्च। बहुत्वञ्चोद्देश्यगतत्वादविवक्षितम्। तन्त्राभिधानशक्त्या एकशब्दावगमितमितरसाहित्यमप्यविवक्षितम्। एवञ्च ऋद्धिकामोद्देशेन विहितं सत्रं प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वादेकैकस्यैव कार्त्स्न्येन ऋद्धिफलं साधयति। न चाख्यातगतबहुवचनेन कर्तृबहुत्वावगमात् प्रत्येकञ्च कर्तृत्वे प्रयोगभेदापत्तेस्समुदितानामेव कर्तृत्वादेकमेव समुदिताना फलं, प्रत्येकन्तु फलावयव इत्युक्तमिति वाच्यम्। ऋद्धिकामशब्देन हि कार्त्स्न्येन ऋद्धिकामानां प्रत्येकमधिकार उक्तरीत्या प्रथममवगम्यते—ये कार्त्स्न्येन ऋद्धिफलं प्रत्येकं कामयमानास्ते सत्रमुपेयुरिति। ततः प्रथमावगतप्रत्येकाधिकारबलादाख्यातगतबहुवचनावगतमपि कर्तृबहुत्वं कर्तृरूपस्यैकत्वात् कर्तृत्वाश्रयेषु विश्राम्यति। ततश्च समुदितानां कर्तृरूपमेकमेव तदाश्रयैस्समुदितैः प्रयुक्तं प्रत्येकमेव ( ऋद्धिफलं साधयति ॥

तदेवं कर्तृत्वस्य व्यासज्यवृत्तित्वमभ्युपगम्योक्तम्। इदानीं वस्तुगत्या स्थितं प्रत्येकमेव) कर्तृत्वमनुसृत्य पक्षान्तरमाह—

## अपि चोत्पत्तिसंयोगाद्यथा स्यात् सत्त्वदर्शनं तथा भावे विभागस्स्यात् ॥ २ ॥

अपिवेति पक्षान्तरे। 'आसीरन' इत्याख्यातं कर्तरि लकारस्य [ बहुवचनञ्च कर्तृ ] बहुत्वे मुख्यम् यदि चैकैक. कर्ता स्यात, 'लः कर्मणि' इत्यादिशास्त्रस्य 'द्व्येकयोः' इत्यादिशास्त्रस्य चैकवाक्यत्वात्। ततो बहुत्वात्कर्तॄणामसीरन्निति बहुवचनमुपपद्यते। यदि तु प्रत्येक कर्तृत्वन्न स्यात् तदा परिषदः कर्तृत्वात्तस्याश्रकत्वादाख्यातोपात्त कर्तृबहुत्वमनुपपन्नं स्यात्। यदि च परिषद्गतकर्तृरूपे श्रुतं बहुत्व तदाश्रयेषु कल्प्येत, तर्हि स एव दोष। तस्मात् प्रत्येकमेव कर्तृत्वम्। नन्वेकस्मिन् प्रयोगे कथ बहूनां कर्तृत्वम्, एकेन कृते कर्मणि परस्य कर्तृत्वा-

---

() [illegible] भाग नास्ति [illegible] अपुस्तके.

योगात्, तत्राह—यथा स्यात् सत्त्वदर्शनं तथा भावे विभागस्यादिति। यथैकस्य सत्त्वस्य-वस्तुनः घटादेः दर्शनमेकैकेन[1] कृत्स्नमभिनिर्वर्त्यते, एवमेव भावे-कर्मणि घञ् भाव्ये साधनीये ऋद्धिफले एकस्मिन्विभागः तदुपायसर्वकर्तृत्वस्य प्रत्येकमेव [वि]श्रमस्स्यात्। एतदुक्तं भवति—कर्तॄणां स्वस्वाग्निषु गार्हपत्यादिषु मिथस्संसृष्टेषु संसृष्टैर्व्रीहियवपश्वादिद्रव्यैस्सत्रं प्रवर्तनीयम्। तत्राहवनीयादौ द्रव्यमध्वर्युणा प्रक्षिप्यते। तत्र सर्वेषामंशास्सन्ति। स्वस्वांशत्यागे च सर्वेषां स्वातन्त्र्यमप्यस्ति। अत एकस्मिन्नेव सत्रप्रयोगे प्रत्येकं कर्तृत्वं न विरुद्धमिति। ननु ऋद्धिफले सत्रस्य सत्रे च कर्तृबहुत्वस्य विधौ वाक्यभेदः। ततश्च ऋत्विग्यजमानात्मकगौणमुख्य[2]कर्तृबहुत्वाभिप्रायमेव बहुवचनम। तच्च प्रकृतिप्राप्तानुवादमात्रमिति न वाक्यभेदः। तस्मादेकस्यैवात्र फलस्वाम्यं न बहूनामित्यत आह—उत्पत्तिसंयोगादिति। 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय' इति () न्यायेनासीरन्निति बहुवचनं मुख्य[3] कर्तृबहुत्व एव स्वारसिकम्। प्राप्तकर्मानुवादेनानेकगुणविधावेव हि वाक्यभेदः, न तूत्पत्तिवाक्ये। यदाग्नेयादिवाक्येऽनेकगुणविशिष्टयागोत्पत्तिस्वीकारात्। "ऋद्धिकामास्सत्रमासीरन्" इति च सत्रस्योत्पत्तिवाक्यम्। अतस्तत्र[4] कर्तृबहुत्वविशिष्टसत्रविधानान्न वाक्यभेददोषः। ( कर्तृबहुत्वे च प्रत्येकमेव कर्तृत्वं पर्याप्तं भवति। व्यासज्य कर्तृत्वे तदाश्रयबहुत्वेऽपि कर्तृबहुत्वाभावात्। अत प्रत्येकमेव कृत्स्नश ऋद्धिफलमिति तथैव कामयितव्यम्॥ )

इति प्रथमं सत्रेषु कर्तृबहुत्वाधिकरणम्॥ १॥

२

"स्वर्गकामो दर्शपूर्णमासाभ्या यजेत" इत्यादौ किमेको द्वौ बहवो वाधिक्रियन्ते? उतैक एव? इति संशये, पूर्वपक्षयति—

**प्रयोगेऽपुरुषश्रुतेर्यथाकामी प्रयोगे स्यात्॥ ३॥**

प्रयोगे-दर्शपूर्णमासादिकर्मणि कर्तृसङ्ख्याविषये यथाकामी-यथेच्छ स्यात्। एको द्वौ बहवो वा कर्तारस्स्युरिति यावत्। कुतः? प्रयोगेऽपुरुषश्रुतेः—प्रयुज्यते

---

१. एकैकस्मिन्. क. २, ३, ४. कर्तृत्व. अ.

() अपुस्तके ग्रन्थपात

प्रवर्त्यतेऽनेनेति प्रयोगः तस्मिन् स्वर्गकामादिवाक्येऽपुरुषश्रुतेः पुरुषस्य गुणभावाश्रवणात्। स्वर्गकामवाक्येन हि न यागः 'कार्य इत्युपदिश्यते, येन तन्निर्वर्तकत्वेन पुरुषस्य ( गुणभूतत्वात् तत्सङ्ख्या विवक्षिता स्यात्। किन्तु यस्स्वर्गं प्राप्तुमिच्छति स यागेन तं प्राप्नुयादित्येव स्वर्गार्थिनं पुरुषं प्रति यागेन तत्प्राप्तिरुपदिश्यते। तत्र च पुरुषस्य स्वर्गफलेन ) व्याप्यमानस्य प्रधानतया उद्देश्यत्वादाख्यातोपात्तापि तत्सङ्ख्या न विवक्षिता। आख्यातोपात्तापि हि सङ्ख्या प्रधानपुरुषगामिन्येव वाच्या। सा च ग्रहैकत्वन्यायेन विवक्षितुं न शक्या। न च यागः कार्य इत्यभावे कथमनुष्ठानसिद्धिरिति, वाच्यम्, यदि नानुतिष्ठामि तत. फलमहं न प्राप्नुयामित्यर्थाद्यागानुष्ठानसिद्धेः। एवञ्च यागे पुरुषस्याचोदितत्वान्न तत्सङ्ख्या विवक्ष्यते॥

स्यादेतत्; यागं कुर्यादिति सत्यं नोपदिश्यते। यागेन फलं कुर्यादिति तूपदिश्यत एव। अन्यथा साध्यसाधनसम्बन्धाभावात् फलमेव न स्यात्। न ह्यविधीयमानस्य यागस्य फलसाधनत्वं सम्भवति। न चासति फलसाधने फलं सिध्यति। ततश्च यस्स्वर्गं प्राप्तुमिच्छति स यागेन तं प्राप्नुयादिति स्वर्गार्थिनं पुरुषं प्रत्यविदितसाधनताकेन यागेन तत्प्राप्त्युपदेशपरत्वे वाक्यमेवेदमुन्मत्तप्रलपितमनर्थकं स्यात्। नापि फलप्राप्तिर्विधेया। 'यस्मिन् प्रीतिः पुरुषस्य' इत्यधिकरणे फलस्य विधेयत्वनिराकरणात्। एवञ्च यागस्य विधेयत्वात्तन्निर्वर्तकपुरुषस्य परिच्छेदिका सङ्ख्या विवक्षितेत्याशङ्क्य निराकरोति—

**प्रत्यर्थं श्रुतिभाव इति चेत्तादर्थ्येन गुणार्थो नानुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात्॥ ४॥**

उक्तरीत्या यागस्य विधेयत्वात्तं प्रति निर्वर्तकतया गुणभूतः पुरुषः। फलं प्रति तु व्याप्यमानत्वात् प्रधानभूतः। ततश्च प्रत्यर्थं-प्रत्येकं गुणभावप्रधानभावरूपार्थद्वये श्रुतिभाव—"यजेत स्वर्गकाम" इति श्रुतस्य वाक्यस्याभिप्रायः²। तत्र प्राधान्यांशेऽविवक्षितापि सङ्ख्या गुणभावांशे परिच्छेदकत्वेनापेक्षिता विवक्षामर्हतीति चेत्तन्न; यत., तादर्थ्येन—तदर्थं नियतेन स्वर्गकामपदेन प्रथममुद्देश्यत्वप्रतीतिवेलायां³ स्वर्गस्य पुरुषाभिलषणीयत्वेऽवगते सति पुरुषस्तद्वोक्ता स्वर्गेण व्याप्यमानत्वात् स्वर्गं तत्साध-

१. कार्य उपदिश्यते. अ, क. () मपुस्तके ग्रन्थपातः.

२. अभिप्रायात्. अ, क. ३. वेलायाश्च. अ, क.

नञ्च यागं प्रति प्रधानभूतः, न गुणार्थः। स्वर्गकामशब्दात् यागं प्रति गुणभूतोऽवगम्यमानोऽपि कर्ता न तत्सङ्ख्या विवक्षामर्हति। अनुक्ते हि न्याये तद्विवक्षा भवेत्। उक्त एव न्यायो ग्रहैकत्वाधिकरणे प्रधानगता सङ्ख्या न विवक्षितेति, गुणगता तु विवक्षितैवेति च। एवञ्चैकस्यैव पुरुषस्य सङ्ख्याया अविवक्षा विवक्षा च प्रसज्येते। नैतत् सम्भवति। कुतः? अर्थान्तरत्वात्–अर्थभेदात्। तत्प्रयुक्तवाक्यभेददोषापातादिति यावत्। पुरुषगतसङ्ख्याया विवक्षाविवक्षयोः पुरुषभेदनिबन्धनत्वादित्यप्यर्थः। प्रकृते च नास्ति पुरुषभेदः। कुतः? कर्तुः प्रधानभूतत्वात्–प्रधानेति भावप्रधानम्। भवतेः प्राप्त्यर्थत्वाच्चौरादिकान्निष्ठा। 'आधृषाद्वा' इति णिजभाव इति प्रमाणभूतशब्दव्याख्यावसरे वृद्धिसूत्रे कैय्यट। यागं प्रति कर्तुः पुरुषस्यैकस्यैव फलभोक्तृत्वलक्षणं प्राधान्यं प्राप्तत्वादित्यर्थः। अन्यथा अन्यो यजते अन्यः फल प्राप्नुयादिति स्यादित्याशयः॥

तदेवं यागं विधेय प्रति कर्तुर्गुणभावावगममभ्युपगम्य तत्सङ्ख्याया अविवक्षा वर्णिता। इदानीं गुणभावावगम एव नास्तीत्याह—

**चोदनैकत्वात् ॥ ५ ॥**

एकैवेयञ्चोदना विधिप्रत्ययः "स्वर्गकामो यजेत" इति। तत्र यः स्वर्गकामः सः यागेन स्वाभिलषित[1] कुर्यादिति यागस्य विधेयत्वं यदा प्रतिपाद्यते, तदा यस्स्वर्गकाम इत्युद्देश्यताप्रतीतिदशायामेव फल तत्साधनञ्च यागं प्रति पुरुषस्य प्राधान्यमवगम्यत इति न तस्य यागं प्रति गुणभावावगमसम्भवः। न ह्येकमेवेद विधिवाक्यमेकस्यैव पुरुषस्य यागं प्रति प्राधान्यं गुणभावञ्च बोधयितुं शक्नोति, गुणत्वप्रधानत्वयोर्विरोधात्। अतः पुरषस्य प्रधान्यमेव, न तु गुणभाव इति तत्सङ्ख्या न विवक्षामर्हति॥

अथ सिद्धान्तयति—

**अपिवा कामसंयोगे सम्बन्धात् प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणवत् ॥ ६ ॥**

यत्र गुणप्रधानभावावुभौ विधित्सितौ भवत. तत्र प्रत्यर्थं—प्रयेक विधिश्रुति – विधायिका श्रुतिरस्ति, विपाणवत्। 'अथ त्रिषु विपाणस्यात्' इति कोशात् त्रिलिङ्गो

---

१. स्वभिलक्षित. अ, फ, ग.

विषाणशब्दः। यथा "कृष्णविषाणया कण्डूयते" "चत्वाले कृष्णविषाणां प्रास्यति" इति। इह तु कामसयोगे-कामसंयुक्ते वाक्ये प्रयोगाय-यागं प्रयोक्तुं पुरुषः कर्तृत्वेनै-कत्वेन चोपदिश्येत, न फलं प्राप्नुयादिति फलव्याप्यत्वलक्षणप्राधानत्वेन। कुतः? सम्बन्धात्-अर्थादेव [1]फलव्याप्तेरवगमसम्भवात्। तथाहि-विधिप्रत्ययेन हि अंशत्रय-विशिष्टा भावनाभिधीयते। तत्र करणांशं यजिर्विशिनष्टि। प्रत्ययोपात्तसङ्ख्या च भावानायामाक्षिप्तकर्तृद्वारान्वेति। स्वर्गशब्दस्तु भाव्यं विशिनष्टि। कामशब्दस्त्वनु-वादः, स्वर्गसुखे इच्छायास्तदेषितुश्च पुरुषस्य स्वरसत एव सिद्धत्वात्। न च कामपदेना-त्मन फलव्याप्यमानत्वरूपेण कामयमानः पुरुषो विधित्सित इति वाच्यम्, स्वरसत आत्मन एव फलव्याप्तपुरुषेणेष्यमाणत्वाद् अशब्दार्थत्वाच्च। तदयमर्थः—एकत्व-विशिष्टः पुरुषो यागेन स्वर्गं कुर्यादिति। ततश्च पुरुषस्य फलप्राप्तिं प्रति प्रधानतया विधित्सितत्वाभावादेकत्वविशिष्टतया गुणभावेनैव विधित्सितत्वात्तत्सङ्ख्या विवक्षिता॥

नन्वेवमपि फलार्थं कर्मण्यधिक्रियत इति निर्विवादम्। फलञ्च पुरुषः प्रायेणा-त्मन एव कामयते। कश्चित्तु दयालुः परस्यापि स्वर्गं कामयमानस्स्यात्। सोऽप्य-धिक्रियेत, तन्निवृत्त्यर्थं यागेन स्वर्गं कुर्यात्, तञ्च स्वर्ग आत्मनः प्राप्तुकाम इति विधातव्यम्। एवञ्च फलव्याप्यमानत्वरूपेण पुरुषस्य विधित्सितत्वात्तत्सङ्ख्या न विवक्षामर्हतीत्याशङ्क्य निराचष्टे—

**अन्यस्य स्यादिति चेन्नार्थाभिसम्बन्धः॥ ७॥**

अन्यस्य फलं कामयमानः कश्चिद्दयालुस्स्यादिति चेन्मन्यसे तत्रेदमुत्तरम्—नार्थाभिसम्बन्धः। अर्थेन अन्यस्य फलेन अभिसम्बन्धः व्याप्यमानत्वं प्रयोक्तुर्न भवति, यजेतेत्यात्मनेपदस्य कर्तृगामिनि फले विहितत्वात्॥

नन्वन्यस्य फलं कामयमानोऽप्यधिक्रियेतैव, नात्मनेपदविरोधश्शङ्क्यः। "आशास्तेऽयं यजमानोऽसावायुराशास्ते सुप्रजास्त्वमाशास्ते" इत्यादिमान्त्रवर्णिक-सूक्तवाकाद्यङ्गगतायुराद्यानुपङ्गिकफलानां प्रयोक्तृगामितया तदुपपत्तेः। तस्मादानु-षङ्गिकाङ्गफलार्थमन्यस्य क्रतुफलं कामयमानो यजेतेत्याशङ्क्य निराचष्टे—

---

1. फलप्राप्ते. ग.

## फलकामो निमित्तमिति चेन्न नित्यत्वात् ॥ ८ ॥

फलकामः—प्रयोक्तृगताङ्गफलकामना आत्मनेपदे[1] निमित्तमिति चेत्तन्न; कुतः ? नित्यत्वात्। क्रतुफलस्य प्रयोक्तृगामितया "अग्नीनादधीत" इत्यात्मनेपदेन नियमितत्वात्। यत्तावदाधानेन साक्षादुत्पाद्य फलमग्निगतादृष्टरूप [2]तदितराधातरि न सम्भवति। अतो यावन्त्याहवनीयाद्यग्निसाध्यक्रतुफलानि तेषां सर्वेषामाधातृगतत्वाभिप्रायमादधीतेत्यात्मनेपदम्। अत आत्मन एव क्रतुफलं कामयमानोऽधिक्रियते; नान्यस्य फल कामयमानः। एवञ्च स्वर्गकामवाक्यस्य स्वर्गं प्रयोक्ता प्राप्नुयादित्यत्र [3]व्यापारात्तावत्फलव्याप्यमानत्वरूपेण पुरुषस्याविधित्सितत्वाद्यागं प्रत्येकत्वविशिष्टकर्तुरेव विधित्सितत्वात्तत्सङ्ख्या विवक्षितैव।

ननु ज्योतिष्टोमस्यैकयजमानकत्वे "युवं हि स्थ. स्वर्पतीति द्वयोर्यजमानयोः प्रतिपदं कुर्यादेते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः" इति विरुध्यत इत्याशङ्क्य निराकरोति—

## कर्म तथेति चेन्न समवायात् ॥ ९ ॥

तथा[4]—तथासत्येव, कर्त्रेकत्वस्याविवक्षितत्वे सत्येव द्विबहुयजमानके ज्योतिष्टोमे प्रतिपद्विशेषयुक्त वहिष्पवमानकर्म श्रूयमाणं सङ्गच्छत इति चेत्तन्न; कुतः ? समवायात्—"मरुतां स्तोमेन द्वौ त्रीन्वा याजयेत्" इत्यादावुक्तविधेस्समावेशसम्भवात्। तस्मात् कर्त्रेकत्वं विवक्षितम् ॥

इति द्वितीय दर्शपूर्णमासादौ कर्त्रेकत्वविवक्षाधिकरणम् ॥ २ ॥

३

"ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादि काम्यफलार्थं प्रक्रान्तं फलस्योपनतत्वान्निर्वेदाद्वा वीतायां फलेच्छायां समापनीय न वा ? इति संशये, सिद्धान्तेनोपक्रमते—

---

१. पदनिमित्त. अ. २. तदेतदाधातरि. ग.

३. व्यापाराभावात्. ग. फ. ४. तथा नास्ति. फ, तथासत्येककर्तृकस्य. अ. फ.

**प्रक्रमात्तु नियम्येतारम्भस्य तन्निमित्तत्वात् ॥ १० ॥**

तुः पूर्वाधिकरणव्यवच्छेदे । प्रक्रमात्—आरम्भात् समाप्तिं नियम्येत आवश्यकत्वेन प्रतीयेत । फलेच्छया प्रक्रान्तं कर्म वीतायामपि फलेच्छायामवश्यं समापनीयमिति यावत् । कुतः ? आरम्भस्य तन्निमित्तत्वात्—आरब्धं कर्मावश्यं समापनीयमिति शिष्टस्मरणेन आरम्भस्य समाप्तिं प्रति ( निमित्तत्वावगमात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**फलार्थित्वाद्वा नियमो यथानुपक्रान्ते ॥ ११ ॥**

वा शब्दः प्रत्यवस्थाने । यथा फलेच्छाविरहादनुपक्रान्ते कर्मणि न कामशास्त्रं न तदुपक्रमं नियमयति, तथा फलेच्छया उपक्रान्तेऽपि कर्मणि फलेच्छायां वीतायान्न समाप्तिनियमः । कुत· ? ) फलार्थित्वात्—प्रयोक्तु· फलार्थित्वनियमात् । फलमीप्समानस्य हि तत्प्राप्तौ याग उपायत्वेनोपदिश्यते । वीतायाञ्च फलेच्छायान्न यागस्तदुपायो भवति, उपेतुमीप्सितस्य फलस्याभावात् । अतः कथन्तत्र व्याप्रियेत । न चारम्भस्समाप्तेर्निमित्तमिति युक्तम् , प्रमाणाभावात् । न हि "प्रजाकामो यजेत" इत्यत्र यद्यपबन्धेन सप्तम्या वा निमित्तत्वमारम्भस्य समाप्तिं प्रत्युपदिश्यते । न च 'आरब्धमवश्यं समाप्यम्' इति स्मरणादारम्भस्य समाप्तिनिमित्तत्वं शङ्क्यम् , मिथ्यासङ्कल्पदोषभ्रान्तिनिमित्तकत्वेन गृह्यमाणकारणकतया तत्स्मरणस्यानादरणीयत्वात् । मिथ्यासङ्कल्पदोषं मन्वाना· 'प्रक्रान्तं समापनीयमिति स्मरन्ति । नात्र परमार्थतो मिथ्यासङ्कल्पदोषोऽस्ति । शास्त्रार्थो ह्यनुष्ठातु सङ्कल्पितः । न च वीतरागस्य समापन शास्त्रार्थ , फलेच्छाया अधिकारिविशेषणत्वात् । ननु कामशब्दो निमित्तपरोऽस्तु । प्रजाकामनाया सत्या यागं कुर्यादिति विधिः, न तु यागेन फलं कुर्यादिति । फलस्य हि कर्तव्यता वाक्याद् गम्यते, यागस्य तु कर्तव्यता समानपदश्रुत्या । अतश्श्रुत्यनुग्रहान्निमित्तपर एव कामशब्दः । फलेच्छारूपनिमित्ते उत्पन्ने प्रक्रान्ते कर्मणि विनष्टेऽपि निमित्ते नैमित्तिक कार्यमेव, गृहदाहादिवत् । न चारम्भमात्रमत्र नैमित्तिकम् , उपक्रमप्रभृत्यपवर्गपर्यन्तक्रियाया आख्यातेन विहितत्वात् । तत्रापि समाप्त्यश एव साक्षाद्विधीयते । तद्विशेषणभूतयोरारम्भमध्ययोस्तद्विधानादेवार्थात् सिद्धे[१] । तस्मात् कामे निमित्ते विहित कर्म वीतायामपि कामनायां समापनीयमिति चेत्—

---

() गपुस्तके प्रन्थपात.

१. अभिप्रान्त. अ.

तदिदं भाष्योत्प्रेक्षितमेकदेशिमतं न रमणीयम्; कामशब्दस्य विध्यपेक्षितफलपरत्वे सम्भवत्यनपेक्षितनिमित्तपरत्वस्यान्याय्यत्वात् फलकामे निमित्ते यागस्य सुखदुःखाभावानात्मकस्य कष्टात्मकस्य कर्तव्यत्वोपदेशानुपपत्त्या ततः फलान्तरकल्पनापत्तेश्च। ततश्च फलार्थिन. कर्मविधानात् प्रक्रान्ते कर्मणि वीतरागस्य न समापननियमः ॥

अथ सिद्धान्ती प्रत्याचष्टे—

## नियमो वा कर्मनिमित्तत्वात् कर्तुस्तत्कारणं स्यात् ॥ १२ ॥

वा शब्दोऽवधारणे[1]। प्रक्रान्तस्य फलेच्छाविरहेऽपि समाप्तिनियमोऽवश्यमास्थेयः। कुत ? कर्मनिमित्तत्वात्—कर्मण आरम्भस्य समाप्तिनिमित्तत्वस्मरणात्। ननु 'प्रक्रान्तमवश्यं समाप्यम्' इति स्मृतिः मन्वादिस्मृतिषु क्वापि नोपलभ्यते। विद्यमानापि मिथ्यासङ्कल्पभ्रान्तिमूलका भविष्यतीत्युक्तन्तत्राह—कर्तुस्तत्कारणं स्यात्—उपक्रममात्रस्य कर्तुः [2]तत् शिष्टविगर्हणं तथाविधस्मृत्युपलब्धौ मूलं स्यात्। यो ह्यारब्धं कर्म न समापयति तं शिष्टा विगर्हन्ते—'प्राक्रमिकोऽयमसंव्यवहार्यः' इति। न च शिष्टा अपि स्वाच्छन्द्येन मूलं विनैव विगर्हन्तामिति वाच्यम्। यदि हि शिष्टा विना शास्त्रेण विगर्हेयुः, ते शिष्टा एव न भवेयुः। न हि सर्वेषां वैदिकधर्मप्रणिहितचेतसां[3] अशिष्टत्वं शक्यमङ्गीकर्तुम्। ततश्च शिष्टविगर्हणरूपादाचारात् स्मृतिरुन्नेया। स्मृतेश्च श्रुतिरुन्नेया। तैत्तिरीयशाखायाञ्च प्रक्रम्यासमापने निन्दा प्रायश्चित्तञ्च श्रूयते—"यो यज्ञविभ्रष्टस्स्यात् तस्मा एतामिष्टिन्निर्वपेत्" इति। प्रक्रम्यापरिसमापयन् यज्ञविभ्रष्ट इत्युच्यते। "देवा वै सत्रमासतर्द्धिपरिमिता यशस्कामास्तेषां सोमं राजानं यश आर्च्छत् स गिरिमुदैत्तमग्निरनूदैत्तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनुपरैत्" इत्युपक्रमात्। 'आरभ्याशक्नुवन्यज्ञविभ्रष्ट' इति सत्याषाढसूत्रे विवरणाच्च। "देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत" इति च श्रुतम्। तथा कारीर्याञ्च वर्षफलायां प्रकान्तायामवाप्तेऽपि फले समाप्तिः श्रूयते—"यदि वर्षेत्तावत्येव होतव्यम्" इति। तस्मात् प्रक्रान्तमवश्य समापनीयम् ॥

इति तृतीयं प्रक्रान्तकाम्यकर्मणा समापनीयत्वाधिकरणम् ॥ ३ ॥

---

१. निर्धारणे. अ.

२. तत् नास्ति. अ, क.

३. मनसा अ.

४

लौकिकं गृहरथशकटादिनिर्माणं प्रक्रान्तं किमवश्यं समापनीयम्? उत यथेच्छम्? इति संशये पूर्वपक्षयति—

## लोके कर्माणि वेदवत्त ऽधिपुरुषज्ञानम् ॥ १३ ॥

लोके गृहादिकर्माणि प्रक्रान्तानि वीतायामपि तत्फलेच्छायां वेदविहितकर्मवदवश्यं समापनीयानि। ननु शास्त्रीयस्य देवतासंयुक्तस्य कर्मणः प्रक्रान्तस्यासमापने शिष्टविगर्हा दृश्यत इति तत्समाप्तिनियमः पूर्वाधिकरणे स्थित। गृहादिकर्माणि तु न शास्त्रीयाणि, नापि देवतासयुक्तानि, नापि तदसमाप्तौ विगर्हन्ते शिष्टाः। अतः कथमिह समाप्तिनियम इत्यत आह—ततोऽधिपुरुषज्ञानमिति। पुरुषमधिकरोतीति व्युत्पत्या लौकिकं गृहादिकर्म अधिपुरुषमुच्यते। तस्य ज्ञानं, ततः-शिल्पशास्त्राद् भवति। गृहादिकर्मापि पुरुषार्थतया शिल्पशास्त्रे विहितमिति यावत्। गृहादिषु 'अस्यां दिश्येता देवताः पूज्याः इतरास्वेताः' इति शिल्पशास्त्रे विहितमस्ति। तथाच गृहादिकर्माणि शास्त्रीयाणि देवतासयुक्तानि च। यद्यपि तदसमापने शिष्टगर्हा नास्ति, तथापि न सा स्वय प्रमाणम्; किन्तु वेदानुमानद्वारा। ततश्च यथा होलाकादिषु प्राच्यादिदेशव्यवस्थितानुष्ठीयमानेष्वपि तत्कल्पितायाश्श्रुतेस्सर्वदेशसाधारण्यमास्थितम् 'अपि वा सर्वधर्मस्स्यात्तन्न्यायत्वाद्विधानस्य' इत्यत्र, तद्वद्वैदिककर्मण्यसमापिते शिष्टगर्हया अनुमेयस्य वेदवाक्यस्य प्रक्रान्तं देवतासंयुक्तविहितं कर्मावश्यं समाप्यमित्येवरूपस्यैव गृहादिसाधारण्यात् गृहादिकर्मापि प्रक्रान्तमवश्यं समापनीयम्॥

इतोऽप्येवमित्याह—

## अपराधे च तैश्शास्त्रम् ॥ १४ ॥

एवञ्जातीयकेषु कर्मसु अपराधे-अपचारे सति तैः-शिल्पाचार्यैः प्रायश्चित्तशास्त्रमुपदिश्यते। तद्यथा रथकर्म प्रकृत्योक्तम्—'आरे भग्ने इन्द्रबाहुर्वर्द्धव्य, पायसं ब्राह्मणो भोजयितव्य' इति। केवल दृष्टार्थत्वे किं प्रायश्चित्तोपदेशेन। अतश्शास्त्रीयमेव गृहादिकर्म। तच्च प्रक्रान्तमवश्य समाप्यमिति॥

अथ सिद्धान्तयति—

**अशास्त्रात्तूपसम्प्राप्तिः शास्त्रं स्यादप्रकल्पकं तस्मादर्थेन गम्येताप्राप्ते शास्त्रमर्थवत् ॥ १९ ॥**

तुर्वैषम्ये। प्रमाणान्तरादप्राप्ते कर्मणि "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम." इत्यादिशास्त्रमर्थवत्। गृहादिकर्मणान्तु अशास्त्रात्—लोकादेवोपसम्प्राप्तिस्सम्भवति। अतः शिल्पशास्त्रं न श्रुतिप्रकल्पकम्। गृहादीनां दृष्टार्थतया शिल्पशास्त्रस्यान्वयव्यतिरेकादिमूलकतया वेदमूलकत्वाभावात्। अस्यां दिशि पाकगृहम् अत्राग्निहोत्रगृहम्, अत्र शय्यागृहं देवतागृहं इदं पूर्वद्वारकं इदन्दक्षिणद्वारकमित्यादि सन्निवेशनीयमित्युक्त, तत्राह—तस्मादिति। भोजनाश्रितप्राङ्मुखत्वादिनियमवददृष्टार्थत्वेऽपि भोजनवद् गृहादिकर्मणां लौकिकत्वात्। [1]अतो गम्यते लौकिकमेव गृहाद्याश्रित्य पुरुषादृष्टार्थतया वास्तुपूजादि विहितम्। तच्च न दृष्टार्थकगृहकर्माङ्गं भवितुमर्हति। अतो [न]वास्तुपूजादिमुखेनापि गृहादिकर्माणि देवतासंयुक्तानि। एव रथावयवे आरे भग्ने प्रायश्चित्तविधानमपि पुरुषार्थमेवेति न ततोऽप्येवञ्जातीयकाना शास्त्रीयत्वम्। अतो न समाप्तिनियमः ॥

इति चतुर्थं प्रक्रान्तलौकिककर्मणा समाप्तिनियमाभावाधिकरणम् ॥ ४ ॥

५

"न कलञ्जं भक्षयेत्" "न सुरां पिबेत्" "न ब्राह्मण हन्यात्" इत्यादिवाक्येषु संशयः—किं स्वर्गकामेन कलञ्जभक्षणादि वर्जयितव्यम् निष्कामस्य त्वनियमः? उत स्वर्गेच्छायां सत्यामसत्यामप्यवश्यं वर्जनीयम्? इति। तत्र पूर्वपक्षयति—

**प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १६ ॥**

प्रतिषेधेषु—नञ्समभिव्याहृतवाक्येषु प्रतिषिद्धानां—वर्जनीयाना कलञ्जभक्षणादीनां कदाचिदसत्यामपि स्वर्गेच्छाया क्रिया स्यात्। कुत ? अकर्मत्वात्—कर्मणि प्रत्ययार्थभावनायां नञो व्यवहितत्वेनान्वयासम्भवात्, भक्षादिधातुभिरेवान्वयात्, भक्षादिधातुभिश्च नञ्समभिव्याहृतैर्गम्यमानस्य भक्षादिप्रागभावस्याननुष्ठेयतया

१. अतो गम्यते. नास्ति. ग.

विध्यनुपपत्तेस्तदविनाभूतस्सङ्कल्पो लक्ष्यते। प्रथमं हि भक्षणाद्यभावं सङ्कल्पयति। ततो भक्षणादि वर्जयति। तथाच भक्षणाद्यभावः स्वयमननुष्ठेयोऽपि भक्षणादिवर्जनात् परिपाल्यत इति भक्षणाद्यभावसङ्कल्प एव नञ्विशिष्टधातुभिर्लक्षितो विधीयते, प्रजापतिव्रतेषु 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्रादित्येक्षणाभावसङ्कल्पवत्। इयांस्तु विशेषः—प्रजापतिव्रतेष्वादित्येक्षणाभावसङ्कल्पस्य 'एतावता हैनसायुक्तो भवति' इति वाक्यशेषश्रुतफलार्थत्वात्तस्य च पापनिबर्हणस्य सर्वदा सर्वैरभिलषणीयत्वान्नित्यमेवोद्यदादित्येक्षणं वर्ज्यते। इह तु तथाविधवाक्यशेषाभावाद्विश्वजिन्न्यायेन स्वर्गफलकत्वकल्पनात्तदिच्छायामेव कलञ्जभक्षणादि वर्ज्यते। तदनिच्छायान्तु न तद्वर्जननियम इति। ननु सर्वपदानामरुणादिवत् सन्निकर्षविप्रकर्षव [त्तन्त्रीकृत्य] धात्वर्थभावनया सम्बन्धान्नञोऽपि 'तथैव सम्बन्धो युक्त इत्यत आह—विभक्तत्वादकर्मणामिति। अकर्मणा—भक्षणाद्यभावानां विभक्तत्वाद् भिन्नपदोपात्तत्वादित्यर्थः। समानपदोपात्तत्वाद् भक्षणाद्यभावसङ्कल्परूपधात्वर्थानामेव विधिसम्बन्धः श्रुतिगम्यत्वान्न्याय्य, न तु वाक्यगम्यो नञो विधिसम्बन्ध इत्याशयः। अकर्मणां भक्षणाद्यभावानां विधिसम्बन्धस्य विभक्तत्वाद् व्याहतत्वादित्यपि व्याख्येयम्। भक्षयेन्नेत्यन्वये हि भक्षयेदिति यत्तन्नेत्येवं भक्षणविधिर्नास्तीत्यर्थस्स्यात्। श्रूयते च भक्षणविधिः भक्षयेदिति। अतो व्याहतमेतत्। भक्षणादिप्रवृत्तिर्नेत्यर्थोऽपि प्रत्यक्षव्याहत[2] एव। तस्मान्नञ्समभिव्याहृतधातुभिर्लक्षितो भक्षणाद्यभावसङ्कल्पः स्वर्गार्थिनानुष्ठेयः। यद्यपि भक्षणाद्यभावसङ्कल्पविधिवादिनः पूर्वपक्षिणः सूत्रे प्रतिषेधेष्विति[3] प्रतिषिद्धानामिति च वचनं विरुद्धं, तथापि सिद्धान्ताभिप्रायन्तदभिधानमित्यदोषः॥

अथ सिद्धान्तयति—

**शास्त्राणान्त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायत्वात्ताद‍र्थ्ये विध्यतिक्रमः॥ १७॥**

तुर्भक्षणवाक्यवैषम्ये। प्रजापतिव्रतेषु त्रीणि शास्त्राणि—'तस्य व्रतम्' इति प्रथमम्। उद् वर्जयेयमिदमचरयं कुर्यामिति [4]मानससङ्कल्पो व्रतमुच्यते।

१. तथैव नास्ति. अ
२. व्याहृत । एतस्मात्. अ, क.
३. [illegible] अ, क.
४. मनसा. अ.

'नेक्षेतोद्यन्तमादित्यम्' इति मध्यमम्। "एतावता ह्येनसायुक्तो भवति" इत्यन्तिमम्। एतेषां शास्त्राणामर्थवत्वेन—एकार्थत्वसिध्यर्थं पुरुषार्थः—पुरुषाभिलषितपापनिवर्हणफलकः अनीक्षणसङ्कल्पो विधीयत इति युक्तम्। इह तु तादर्थ्ये-फलार्थतया कलञ्जभक्षणाद्यभावसङ्कल्पविध्यर्थकत्वे, तयोः—व्रतप्रक्रमफलश्रवणयो', असमवायत्वात्-अश्रुतत्वात्, नञ' विध्यतिक्रमः—विधिप्रक्रिये धात्वर्थमतीत्य क्रमणमन्वयः आश्रयितव्यः—भक्षयेन्न पिबेन्नेत्यादि। न च व्याघातश्शङ्क्यः, 'अत्र हि भक्षणादीनां कर्तव्यतावगता या, सा वस्तुतो नास्ति। लौकिकसुखलवदर्शनात्तु मोहात्तेषा कर्तव्यतावगता। अतस्ततो निवर्तस्वेत्येत्र भक्षणादिक्रियाकर्तव्यताभावप्रतिपादनपूर्वक (भक्षणादिभ्यो निवर्तनैव प्रवर्तनाविपरीतस्वभावनञ्समभिव्याहृतलिङादिप्रत्ययेन प्रतिपाद्यते। ततश्च लिङादिभ्य प्रवर्तनाज्ञानात् प्रवृत्तिरूपनिवर्तनाज्ञानान्निवृत्तिरुपदिश्यते। निवर्तना च निवृत्त्यनुकूलव्यापारात्मिका। सा च पुरुषं) कलञ्जभक्षणादिष्वनिष्टसाधनत्वावगतिमन्तरेण ततो निवर्तयितुमशक्नुवन्ती निषेध्यकलञ्जभक्षणादीनामनिष्टफलकत्वं तद्वर्जनस्य तत्परिहारफलकत्वमपि गमयति। केचित्तु भक्षणवर्जनं कर्तव्यमित्येवं धात्वर्थावच्छिन्ना नञनुरक्ता भावना विधीयत इति मन्यन्ते। नन्वेवं विधिरेवायं वर्जनविषय इति कथं प्रतिषेधता ? नैष दोषः ; न वय विधेरत्यन्तपृथग्भूतं प्रतिषेधं सङ्गिरामहे; किन्तु विधिरेव विषयभेदेन द्वेधा व्यपदिश्यते। यत्र धात्वर्थानुरक्ता भावना विषयो भवति, तत्र विधिरिति शुद्धो व्यपदिश्यते। यत्र तु नञर्थानुरक्ता भावना विषयो भवति, तत्र निषेधव्यपदेश लभत इति तन्त्ररत्ने स्थितम्। निवर्तनावाचित्वपक्षे तु स्पष्ट एव भेदः। उक्तञ्च न्यायसुधायाम्—

'पञ्चधात्यन्तभिन्नत्वाद् भेदो विधिनिषेधयोः।
विधिरिष्टफलोऽनिष्टपरिहारफलोऽपर.॥
प्रेरितोऽस्मीति पूर्वे धीर्वारितोऽस्मीति चापरे।
विषयस्येष्टहेतुत्वं विधिना च प्रमीयते॥
निषेधेन निषेध्यस्य प्रत्यवायनिमित्तत:।
विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम्॥

१. यत्र. क.　　( ) मातृकायां, प्रावधान.,

रागादिना प्रवृत्तन्तु निषेधस्तद्विलक्षणम् ।
नञ्वर्जितो लिङ्गादिश्च विधिबोधस्य कारणम् ॥
लिङादिर्नञ्विशिष्टस्तु निषेधस्यावबोधकः' ॥ इति ॥

न च प्रत्ययस्य धातुव्यवहितत्वान्नञस्तदन्वयानुपपत्तिश्शङ्क्या, भक्षयेन्नेति परिपूर्णस्यैव पदस्य नञा सम्बन्धात् । एवञ्च नञो धातूनाञ्च श्रुतिवृत्तत्वं लभ्यते । पूर्वपक्षे तु तदुभयेषा सङ्कल्पलक्षकत्वन्न श्रुतिवृत्तत्वम् । तस्मात् प्रत्यवायपरिहारार्थं सर्वदा कलञ्जभक्षणादि वर्जनीयमिति ॥

इति पञ्चम कलञ्जभक्षणवर्जनाधिकरणम् ॥ ५ ॥

६

'गुरुमभिवादयीत' 'प्राङ्मुखो भुञ्जीत' उदङ्मुखो मूत्रं कुर्यात्' इत्यादयस्स्मार्तनियमाः, 'नानृत वदेत्' 'न कलञ्जं भक्षयेत्' इत्यादिस्मार्तनिषेधाश्च किं जातो यदा शक्नुयात्तत प्रभृति प्रवर्तन्ते ? उत उपनयनप्रभृत्येव ? इति संशये, पूर्वपक्षयति—

**तस्मिंस्तु शिष्य णानि जननेन प्रवर्तेरन् ॥ १८ ॥**

तुः पूर्वाधिकरणव्यवच्छेदे । तस्मिन्—पुरुषसामान्ये उपनीतत्वापुरस्कारेण शिष्यमाणानि–विधीयमानानि प्राङ्मुखत्वादिविधानानि अनृतवदनादिवर्जनानि च जननेन प्रवर्तेरन्-जननग्रहण सामर्थ्योपलक्षणम् । निमित्तत्वे तृतीया । जातस्य शक्तौ सत्या प्रवर्तेरन, न तूपनयनमपेक्षितव्यम्, साधकप्रमाणाभावात् । अग्निमन्त्रसाध्यत्वलक्षणबाधकाभावाच्च ॥

अथ सिद्धान्तयति—

**अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ १९ ॥**

अपिर्वेति पूर्वपक्षव्यवच्छेदे । उपायः उपायन. उपनयनम् । निमित्तत्वे तृतीया । उपनयने सत्येवञ्जातीयकविधिनिषेधा. स्मार्ता प्रवर्तेरन्, न तु ततः प्रागपि । कुत. ? वेदतुल्यत्वात्—स्मृतीना वेदमूलकत्वात । तासु च 'अथ ब्रह्मचारिधर्मा' इति प्रकृत्याभिवादनादीनामुपनयनोत्तरकालमेवापस्तम्बादिभिस्स्मरणात, 'प्रागुपनयनात कामचारवादभक्षः' इति प्रागुपनयनात् विधिनिषेधानादरस्य

गौतमदिभिः स्मरणाच्च। ब्रह्महत्यादिकन्तु प्रागुपनयनादपि वर्ज्यमेव। तथैव शिष्ट-स्मरणादित्यलम् ॥

इति षष्ठ स्मार्तविधिनिषेधनियमानामुपनयनोत्तरकालताधिकरणम् ॥ ६ ॥

७

"यावज्जीवमग्निहोत्रञ्जुहोति" इत्यत्र संशयः। किं सातत्येनाग्निहोत्रं प्रयोक्तव्यम्? उत सायं प्रातः? इति। तत्र पूर्वपक्षयति—

**अभ्यासो वा कर्मशेषत्वात् पुरुषार्थो विधीयते ॥ २० ॥**

वा शब्दस्सम्भावनायाम्। अभ्यासः—सातत्येन प्रयोगः सम्भाव्यते। प्रयोगे [1]जीवनस्य निमित्तत्वात्, जीवनस्य च निमित्तस्य सदा सत्वात्। ननु "सायञ्जुहोति" 'प्रातर्जुहोति" इति कालविशेषयोरङ्गत्वात्तदन्यस्मिन् काले प्रयोगस्य वैगुण्यान्न सातत्यमित्यत आह—कर्मशेषत्वादिति। अकर्मशेषत्वादित्यपि च्छेदः। सायं प्रातः कालयोः काम्यप्रयोगविषयत्वात्, नैमित्तिकप्रयोगविषयत्वाभावात्, नित्यनैमित्तिकेषु कतिपयाङ्गलोपेऽप्यवैगुण्यस्य काम्यकर्मसु सर्वाङ्गोपसंहारस्य चाग्रिमपादे व्यवस्थापयिष्यमाणत्वात्। ननु "यावज्जीवमग्निहोत्रञ्जुहोति" "अग्निहोत्रञ्जुहुयात्स्वर्गकामः" इत्यनयोरेकवाक्यतया यावज्जीवं स्वर्गकामोऽग्निहोत्रञ्जुहोतीत्येवं काम्यप्रयोगो न नैमित्तिकप्रयोगादतिरिच्यत इत्यत आह—पुरुपार्थो विधीयत इति। प्रत्यवायपरिहारफलकनैमित्तिकप्रयोगादन्यः प्रयोगः पुरुपाभिलपितस्वर्गार्थः स्वर्गकामवाक्याद्विधीयते। अन्यथा स्वर्गकामनाया कादाचित्कत्वेन तदर्थप्रयोगे जीवनस्य निमित्तत्वं व्याहन्येतेति द्वितीयस्य चतुर्थे "यावज्जीविकोऽभ्यास कर्मधर्मः प्रकरणात्" इत्यधिकरणे प्रपञ्चितत्वात्। तस्मात् पुन' पुनर्नैमित्तिकोऽग्निहोत्रप्रयोगस्सातत्येन कार्यः ॥

नन्वेवमाहारादिव्यवहारस्यावर्जनीयत्वात् कथं प्रयोगसातत्यमित्याशङ्क्य अत एव तदविरुद्धकालेपु प्रयोगसातत्यमित्याह—

---

१. जीवनस्य निमित्तत्वात् नास्ति. ग.

## तस्मिन्नसम्भवन्नार्थात् ॥ २१ ॥

तस्मिन्–आहारादिव्यवहारसमये, असम्भवन् प्रयोगः न तदानीं भवति, किन्तु अर्थात्—अवर्जनीयव्यवहारादिकार्यवशात् तदविरुद्धकालेषु प्रयोगसातत्यमित्यर्थः ॥

अथ सिद्धान्तयति—

## काले ह्युपदिश्यते ॥ २२ ॥

हि यतः, "सायञ्जुहोति" "प्रातर्जुहोति" इति कालविशेषाङ्गमुपदिश्यते, अतः तदितरकाले क्रियमाणः प्रयोगो विगुणस्स्यात्। यद्धयङ्गं प्रयोगवचनेन कर्तव्यतया चोद्यते तदेव यथाशक्त्युपबध्यते[1]। न ह्यकर्तव्यं यथाशक्ति कुर्यादिति व्यपदेष्टुं शक्यते। यत्तु सम्पादयितुं शक्यते तदेव च कर्तव्यतामर्हति। तस्य च नित्य-नैमित्तिकेषु सत्यां शक्तावनुष्ठानम्, असत्यां त्याग इति युक्तम्। कालस्तु न सम्पादयितुं शक्यते, किन्तु स्वयमेव प्राप्ते तस्मिन् कर्म विधीयते—साय प्रातश्च काले प्राप्तेऽग्निहोत्र प्रयोक्तव्यमिति। अतो न कालस्य त्यागो युक्तः। न च जीवने निमित्ते विहित. प्रयोगस्साय प्रातःकालाभावेऽपि स्यादेव। अन्यथा जीवनस्य निमित्तत्वव्याघातादिति वाच्यम, कालस्यानुपादेयतया तस्मिन् सत्येव कर्मण. कर्तव्यत्वेन तत्कालावच्छिन्नजीवनस्यैवार्थान्निमित्तत्वपर्यवसानात्। 'न कालो गुणः, निमित्तं ह्येतत्' इति भाष्येऽप्युक्तरीत्या कालस्य जीवनविशेषणत्वान्निमित्तत्वकथनम्। न हि कालो निमित्त कालश्रुते ; कथम्भावापेक्षिताङ्गपरत्वे सम्भवति, अनपेक्षितनिमित्तपरत्वायोगात्। कालश्रुतेर्निमित्तपरत्वे काम्यप्रयोगस्य ( तत्कालत्वासिद्धेश्च, यावज्जीवश्रुतेरानर्थक्यप्रसङ्गाच्च। सायमादिकाले निमित्ते कर्मविधिरेव प्रतिसायमादिकाल ) तत्सिद्धेः "वसन्ते वसन्ते ज्योतिष्टोमेन यजेत" इत्यादौ वीप्साश्रवणानर्थक्यप्रसङ्गाच्च। वसन्तस्य निमित्तत्वादेव प्रतिवसन्तं तत्सिद्धेरित्यलम् ॥

इतोऽपि न प्रयोगसातत्यमित्याह—

## दर्शनात् काललिङ्गानाम् ॥ २३ ॥

सायमादिकालविशेषस्य जीवनविशेषणत्वेन लिङ्गान्यपि दृश्यन्ते सायमादिकालातिक्रमे प्रायश्चित्तविधानानि—"यदि सायमतिपद्येत यदि प्रातरतिपद्येत चतुर्गृहीतमाज्यञ्जुहुयात्" इत्यादीनि। प्रयोगसातत्ये चैतदसङ्गतिस्स्पष्टैव। यद्यपि

---

१. उपपद्यते. अ. ( ) ग्रन्थपात अपुस्तके.

प्रयोगसातत्येऽपि सायंप्रातःकालातिक्रमे इमानि प्रायश्चित्तानि कालान्तरातिक्रमे सर्वप्रायश्चित्तमित्यविरोधः, तथापि सूत्रमन्यथा व्याख्येयम्। काललिङ्गानि जीवनकालनिमित्तानि अन्यान्यपि कर्माणि दृश्यन्ते—"यावज्जीवन्दर्शपूर्णमासाभ्यां यजेत" इत्यादीनि। तेषामप्यग्निहोत्रवत् सातत्येन प्रयोगस्स्यात्। न च सम्भवति बहूनां कर्मणां प्रयोगसातत्यम्। ततश्च सायंप्रातःकालावच्छिन्नजीवनमग्निहोत्रप्रयोगे निमित्तम्। दर्शपूर्णमासादिप्रयोगे तु पौर्णमास्यमावास्यादिकालावच्छिन्नं जीवनं निमित्तमित्येवास्थेयम्। 'कालो ह्युपदिश्यते' इति सूत्रे कालग्रहणं देशस्याप्युपलक्षणम्, तस्याप्यनुपादेयत्वात्। एतेनाग्निविद्ये अपि व्याख्याते। यद्यपि तयोः स्वरूपेणोपादेयत्वादस्ति कालदेशवैषम्य, तथापि प्रयोगविधिना कर्तव्यत्वेनाचोदितत्वमविशिष्टमेव। तयोरध्ययनाधानविधिसिद्धयोरेव क्रतुप्रयोगविधिना स्वीकारात्। न हि विध्यन्तरसिद्धयोरग्निविद्ययोस्स्वयं सम्पादनं प्रयोगविधिः प्रयोजयति, वैधर्म्यात्। एवञ्चानग्नेरविद्यस्याप्राप्तकालदेशस्य च नाधिकार इति स्थितम्॥

इति सप्तममग्निहोत्रादीनां सायं प्रातरनुष्ठेयताधिकरणम्॥ ७॥

८

जीवननिमित्तमग्निहोत्रं सायम्प्रातश्च प्रयोज्यं, न तु सातत्येनेति स्थितम्। किमेकस्मिन्नेव सायङ्काले एकस्मिन्नेव च प्रातःकाले सकृद्धोतव्यम्? उत सर्वेष्वपि सायङ्कालेषु प्रातःकालेषु च पुनः पुनः प्रयोक्तव्यम्? इति संशयः। कालशास्त्रानुरोधेन जीवनस्य [1]निमित्तस्य सङ्कोचः पूर्वाधिकरणे दर्शितः। सकृत्कृतेऽपि कालशास्त्रं कृतार्थं भवतीति नैमित्तिकन्नावर्तयितुमलम्। अन्यथा एकस्मिन्नपि सायङ्काले कर्मावृत्तिस्स्यात्। तथा प्रातरपि। अतस्सकृदेव प्रयोज्यमिति प्राप्ते, सिद्धान्तयति—

**तेषामौत्पत्तिकत्वादागमेन प्रवर्तेरन्॥ २४॥**

तेषां-सर्वसायमादिकालजीवनानाम् औत्पत्तिकत्वात्—उत्पत्तौ प्रयोगे निमित्तत्वात्। आगमेन-तृतीया निमित्ततायाम्, सर्वसायमादिकालावच्छिन्नजीवनानां निमित्तानां प्राप्तौ सत्यां नैमित्तिकप्रयोगाः प्रवर्तेरन्। सायमादिकालशास्त्रन्तावत् यावज्जीववाक्यावगतजीवनं विशिनष्टि। यावज्जीववाक्ये च जीवनस्य

1. निमित्तस्य नास्ति. ग.

निमित्तत्वं यावच्छब्दवदवगम्यत इति यावज्जीविकाधिकरणे प्रपञ्चितम्। ततश्च यथाभूतमेव जीवनं सायमादिशास्त्रं विशिनष्टि। तत्र यदि सकृदेवाग्निहोत्रं प्रयुज्येत, तर्हि निमित्तत्वं व्याहन्येत। ततश्च सायमादिकालावच्छिन्नस्य निमित्तस्यावृत्तौ नैमित्तिकस्याप्यावृत्तिः केन वार्येत। प्रदोषान्तस्सायंहोमकालस्सङ्गवान्तः प्रातरिति स्थूलकालस्य सायं प्रातश्शब्दार्थत्वात्तावत्कालव्याप्तजीवनमेकमेवेति निमित्तावृत्त्यभावान्न तत्र पुनः प्रयोग ॥

इतोऽप्येवमित्याह—

## तथाच लिङ्गदर्शनम् ॥ २५ ॥

"यस्याग्निहोत्रं विच्छिद्येत तद्व्यहे त्र्यहे चतुरहे वाग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् जरामर्यं वा एतदग्निहोत्रम्, अहरहर्यजमानस्स्वयमग्निहोत्रञ्जुहुयात् षष्टिश्च भवेत्त्रीणि च शतानि संवत्सरस्य सायमाहुतयः प्रातराहुतयश्च" इत्यादिक सर्वेष्वेव सायंप्रातःकालेषु होतव्यमित्यत्र लिङ्गं दृश्यते ॥

## इत्यष्टममग्निहोत्रादीनां यावज्जीव सायंप्रातरनुष्ठेयत्वाधिकरणम् ॥ ८ ॥

९

दर्शपूर्णमासयोश्श्रूयते—"भिन्ने जुहोति" "स्कन्ने जुहोति" इत्यादि। किमेतानि भेदनहोमादीनि भेदनादितत्तन्निमित्तावृत्त्यावर्तनीयानि? उत नावर्तयितव्यानि? इति संशये, पुरुषार्थोऽग्निहोत्रादिप्रयोगः प्रति प्रयोगं प्रत्यवायपरिहारलक्षणफलभेदादावर्तयितव्य इति युक्तम्। क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारव्यतिरेकेण फलाभावात्तस्य चैकत्वात् सकृत्प्रयोगादेव तत्सिद्धेर्नावृत्तिर्युक्तेति प्राप्ते, सिद्धान्तयति—

## तथान्तः क्रतुसंयुक्तानि ॥ २६ ॥

क्रतुमध्योपनिपतितभेदनादिनिमित्तकान्यपि जीवननिमित्तकाग्निहोत्रादिप्रयोगवदावृत्तिमर्हन्ति। यथाशास्त्रं हि प्रयोजनं कल्प्यते। "भिन्ने जुहोति" इत्यादिशास्त्राणि चागते आगते निमित्ते नैमित्तिकस्यावश्यकत्वमवबोधयन्ति[1]।

---

१ अवगमयन्ति, ग

ततश्चैकोऽपि क्रतूपकारो यथा '¹असति भेदनादिनिमित्तेऽपि नैमित्तिकाङ्गान्तरैरेव जन्यते, सति तु निमित्ते नैमित्तिकाङ्गमपि सम्भवति, तथैव भेदनादितत्तन्निमित्तावृत्तौ तत्तन्नैमित्तिकैरावृत्तैरेव क्रतूपकारो जन्यत इति कल्पनादेतेपामपि तत्तन्निमित्तावृत्तावावृत्तिरिति युज्यते ॥

इति नवम निमित्तानुसारेण नैमित्तिकावृत्त्यधिकरणम् ॥ ९ ॥

१०

'गुरुरनुगन्तव्यः, अभिवाद्य प्रत्युत्थेय' इति गुर्वनुगमनादीनां गुरुगमनाद्यावृत्तौ नावृत्तिः ? उतावृत्तिः ? इति संशये, अनुगमनादिभि. प्रीतो गुरुस्सम्यग्विद्यां ददातीति तेषा दृष्टार्थानामेव स्मर्तृभिर्निबन्धनाद्यथानुष्ठितेषु गुरुस्तुष्यति, तथा तानि सकृदसकृद्वा कार्याणि, निमित्तत्वबोधकाभावाच्चेति प्राप्ते, सिद्धान्तयति—

**आचाराद् गृह्य णेषु तथा स्यात् पुरुषार्थत्वात् ॥ २७ ॥**

गृह्यमाणेषु—मन्वादिभिस्स्मर्यमाणेषु गुर्वनुगमनादिषु तथा स्यात्—नैमित्तिकाग्निहोत्रादिप्रयोगवद् गुरुगमनाद्यावृत्तावावृत्तिस्स्यात । कुतः ? आचारात्—शिष्टा ह्युपायान्तरेण गुरुप्रीतेस्सम्पादयितुं शक्यत्वेऽपि अवश्यानुगमनादिभिर्गुरुं प्रसादयन्ति । अतस्तन्नियमस्तददृष्टञ्चावश्यमभ्युपेयम् । तस्य च नियमादृष्टस्य शास्त्रैकसमधिगम्यत्वान्नियत (गुर्वनुगमनाद्याचारेण तद्विधिरनुमीयते—गुरुगमनादिनिमित्ते गुर्वनुगमनादि कर्तव्यमिति । एवञ्च गुरुगमनाद्यावृत्तौ ) तदनुगमनाद्यावृत्तिरुचिता । ननु गुर्वनुगमनादौ सति गुरुप्रीतेर्दृष्टार्थत्वकल्पनमन्याय्यमित्यत आह—पुरुषार्थत्वादिति । गुर्वनुगमनादिना प्रत्यवायपरिहारस्य नियततया पुरुषेणार्थ्यत्वात् गुरुप्रीतेश्चानुषङ्गिकत्वादित्यर्थ. । तदुक्त वार्तिके —'गुर्वनुगमनादीना नैमित्तिकत्वादक्रियायां प्रत्यवाय । क्रियायाञ्च तत्परिहारो भवति । दृष्टञ्च प्रीतो गुरुरध्यापयिष्यतीत्यादि अनुनिष्पद्यते । नियमाच्चाविघ्नपरिसमाप्त्यर्थापूर्वसिद्धिः' इति । 'अनुनिष्पद्यते इत्यानुषङ्गिकत्वं दर्शितम्' इति न्यायसुधायाम् ॥

इति दशम गुर्वनुगमनाद्याचाराणामसकृदनुष्ठानाधिकरणम् ॥ १० ॥

---

१. अस्तभेदनादि अ, क. () ग्रन्थपातः अ पुस्तके.

११

"सोमेन यजेत" "स्वाध्यायमधीयीत" "प्रजामुत्पादयेत्" इति श्रुत सोमविद्याप्रजं नित्यम् ? काम्यं वा ? इति संशयः । अग्निहोत्रादिवद्यावज्जीवविध्यभावान्न नित्यम् । "वसन्ते वसन्ते ज्योतिषा यजेत" इति वचनात्तु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति स्वर्गार्थमेव ज्योतिष्टोमं करोति, विद्याप्रजयोस्तु नैव [ विधमपि ] वचनमस्ति । अस्ति च विद्यायां कामसंयोगः । "सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामम्" इत्याद्युपनयनस्याध्ययनाङ्गत्वान्न स्वयं फलसम्बन्ध उच्यत इति प्रधानविद्याद्वारेणैवोपनयनस्य फलसम्बन्धो बोध्यते । तस्माद्विद्या काम्यैव, प्रजायास्त्वसत्यपि कामसंयोगश्रवणे विश्वजिन्न्यायेन फलं कल्प्यते । अतः काम्या एव सोमविद्याप्रजा इति प्राप्ते, सिद्धान्तयति—

**ब्राह्मणस्य तु सोमविद्याप्रज णवाक्येन संयोगात् ॥ २८ ॥**

तुरप्यर्थे । क्षत्रियवैश्यावपि समुच्चिनोति । ब्राह्मणक्षत्रियविशां सोमविद्याप्रज नित्यम् । सोमविद्याप्रजमिति समाहारद्वन्द्व. । 'वसन्ते वसन्ते' इति वीप्सार्थोऽनूद्यते, विधीयते वा । नाद्यः ; प्राप्त्यभावात् । नापि सर्ववसन्तव्यापी ज्योतिष्टोमोऽनुवदितुं शक्यते, तस्य पञ्चाहादिसमाप्यत्वात् । अत एव न द्वितीयः ; यावद्वसन्तमभ्यस्येदिति विधौ तु यजेरभ्यासलक्षणा प्रसज्येत । तस्माद्वसन्त इति सप्तम्या 'यस्य च भावेन भावलक्षणम्' इति विहितयावद्वसन्तो निमित्तमवगम्यते । यावन्निमित्तञ्च नैमित्तिकावृत्तिः प्राप्तैवेति वीप्सार्थोऽनूद्यते । न चाधिकरणसप्तम्यैवैषामस्त्विति वाच्यम्, निमित्तत्वानुवादिवीप्साविरोधात् । अध्ययनमपि फलाश्रवणान्नित्यमेव । ब्रह्मवर्चसादिफलस्योपनयनाश्रितगुणकामत्वात् । स्ववाक्य एव गुणकामत्वे सम्भवति वाक्यान्तरगताध्ययनफलत्वायोगात् । न च विश्वजिन्न्यायेन स्वर्गकल्पनम्, धर्मावबोधस्य फलस्य दृष्टत्वात् । सति दृष्टेऽदृष्टकल्पनानुपपत्ते. । एवञ्चावश्यकाग्निहोत्राद्यौपाधिकज्ञानफलकत्वादावश्यकब्रह्मयज्ञप्रायश्चित्तपारायणाद्यौपाधिकग्रन्थावधारणफलकत्वाच्चावश्यकमध्ययनम् । अवश्यापेक्षितफलसाधनत्वमेव हि कर्मणां नित्यत्वं, नान्यत् । प्रजोत्पादनमपि नित्यमेव । 'अमृतत्वञ्च गच्छति, पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्' इत्यवश्यापेक्षितामृतत्वफलश्रवणात् । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य

एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासीत द्रव्यावदानैरेवावयजते" इति पश्व-वदानविधिवाक्यशेषश्रोक्तन्याये लिङ्गम्। यद्यपि सूत्रे लिङ्गमेवोपन्यस्तं तदेतदुक्त-न्यायमपि सूचयति, केवलस्य लिङ्गस्यासाधकत्वात्, न्यायोपोद्बलनमात्रे तस्य शक्तेः। उक्तञ्च तृतीयोपान्त्याधिकरणे सूत्रकृता 'न्यायोक्ते लिङ्गदर्शनम्' इति। वसन्ते वसन्ते इति वीप्सावशाद्वसन्त इति निमित्तसप्तमीत्ययमर्थः 'कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं स्यात्' इति यावज्जीविकाधिकरणगुणसूत्रे कण्ठत एवोक्तः। "ऐन्द्राग्न पुनरुत्सृष्टमालभेत य आ तृतीयात् पुरुषात् सोम निर्वपेत्" इति सोम-विच्छेदे प्रायश्चित्तं श्रुतम्। "विच्छिन्नसोमपीथो व्रात्यो दुर्ब्राह्मणः" इति च। "स्वाध्यायान्मा प्रमदः" 'अनधीयाना व्रात्या भवन्ति" "प्रजातन्तुं मा व्यवच्छेत्सीः" "नापुत्रस्य लोकोऽस्ति" इत्यादि च श्रुतम्। एव सत्ययं विचारोऽत्र निष्फल एव। सूत्रे च ब्राह्मणग्रहणस्य नातीव प्रयोजनमिति मत्वा भाष्ये वर्णकान्तरं वर्णितम्।

तद्यथा—ब्राह्मणस्यैव सोमविद्याप्रजं नित्यम्। क्षत्रियवैश्ययोस्तु काम्यमेव। "जायमानो वै ब्राह्मणः" इत्यृणवाक्ये ब्राह्मणग्रहणादिति प्राप्ते, सिद्धान्तयति—

**णस्य तु सोमविद्याप्रज णवाक्येन संयोगात् ॥**

तुरवधारणे। ऋणवाक्येन संयोगात् खलु ब्राह्मणस्यैव सोमविद्याप्रजं नित्य-मिति भवान्मन्यते, तदयुक्तम्; उदाहृतवाक्येषु नित्यताबोधकेषु विशेषाश्रवणात्। ऋणवाक्यस्य पश्ववदानस्तुत्यर्थतया तत्रत्यब्राह्मणशब्दस्योपलक्षणतयैव व्याख्यातुं युक्तत्वादिति। तदेतत्सूत्रान्यथाकरणमतिक्लिष्टमुपेक्षितुमेव युक्तम्। ब्राह्मणस्यैव सोमविद्याप्रजं नित्यमित्यर्थस्तु सूत्राक्षरानुगतः। उदाहृतनित्यताबोधकवाक्यानाम-विशेषश्रुतानां 'सन्दिग्धे तु वाक्यशेषात्' इति न्यायेन () ब्राह्मणमात्रविषयताया ऋण-वाक्यानुसारेण युक्तत्वात्। न च ऋणवाक्यस्य पश्ववदानविधिशेषत्वात् कथं तदनु-सारेण विध्यन्तराणां ब्राह्मणविषयत्वावगमकतेति वाच्यम्, "तेजो वै घृतम" इत्या-दिवद्विध्युन्नायकत्वोपपत्तेः। अन्यस्यापि ऋणवाक्यस्याश्रुतविधिषु क्वचिच्छाखाया सम्भवात्, न ह्यन्यथा प्रमाणभूत आचार्यो ब्रवीतीत्यलम्॥

इत्येकादशं सोमविद्याप्रजाधिकरणम्॥ ११॥

इति श्रीवासुदेवदीक्षितविरचितायामध्वरमीमांसाकुतूहलवृत्तौ
षष्ठाध्यायस्य द्वितीय· पादः॥



# अथ तृतीयः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानै. ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अथ यथाशक्त्यङ्गोपसहारासमर्थस्य नित्यकर्मस्वधिकारोऽस्मिन् तृतीयपादे प्रस्तूयते । दर्शपूर्णमासयोस्तावत् स्वर्गार्थः प्रयोग एकः । स च मुमुक्षोस्स्वर्गकामनाया अभावान्न भवतीति कादाचित्कपुरुषेच्छाप्रयोज्यत्वात् काम्य इति व्यपदिश्यते । यावज्जीविकप्रयोगस्तु द्वितीयः । स चानादिसम्भूतिसञ्चितदुरितक्षयार्थं । तथाविधदुरितानाञ्च मोक्षप्रतिबन्धकत्वात्तत्क्षयो मुमुक्षुभिरपि नित्यमभिलषणीय इति 'तत्फलकस्य यावज्जीविकप्रयोगस्य नित्यचिकीर्षितत्वान्नित्यत्वमिति द्वितीयचतुर्थाधिकरणे 'यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्' इत्यत्र प्रपञ्चितम् । तत्र यावज्जीविकप्रयोगे किं सर्वाङ्गोपसंहारसमर्थ एव पुरुषोऽधिक्रियते, कतिपयाङ्गान्युपसंहर्तुमशक्तस्तु नाधिक्रियते ? उत सोऽप्यधिक्रियते ? इति संशये, पूर्वपक्षयति—

**सर्वशक्तौ प्रवृत्तिस्स्यात्तथाभूतोपदेशात् ॥ १ ॥**

सर्वाङ्गोपसंहारशक्तौ सत्यामेव यावज्जीविकप्रयोगे प्रवृत्तिस्स्यात्, न तु कतिपयाङ्गाशक्तावपि । कुत. ? तथाभूतोपदेशात्—तथाभूतस्य सर्वाङ्गोपेतस्यैव प्रधानस्य यावज्जीववाक्ये उपात्तदुरितक्षयफलसाधनतयोपदेशात् । समस्तानामेवाङ्गानां कथम्भावाकाङ्क्षया युगपत्परिगृहीतानां करणानुग्राहकत्वस्य एकादशप्रथमपादीयाधिकरणे 'अर्थभेदस्तु तत्रार्थे ह्येकार्थ्यादैककर्म्यम्' इति वक्ष्यमाणत्वादिति भावः ॥

अथ सिद्धान्तयति—

**अपि वाप्येकदेशेन स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥**

अपिवेति सङ्घात एवार्थे । द्वितीयोऽपिशब्द एकदेशेनेत्यनन्तरं द्रष्टव्यः । एकदेशेनाप्यशक्याङ्गानि विहाय कतिपयशक्याङ्गकलापेनापि यावज्जीविकप्रयोगेऽधि-

१. तत्फलप्रयोगस्य. अ, क.

कारस्यात्। "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्यत्र हि यावच्छब्दसमभिव्याहृत-णमुल्प्रत्ययाज्जीवनस्य यागकरणिकामुपात्तदुरितक्षयभाव्यकभावनां कर्तव्यतात्मिकां प्रति निमित्तत्वमवगम्यत इति यावज्जीविकाधिकरणे प्रपञ्चितम्। जीवनञ्च तदैव निमित्तं सम्पद्यते, यदि तस्मिन् सति यागोऽवश्यं प्रयुज्येत। यदि कदाचित् सत्यपि तस्मिन् न प्रयुज्येत, तर्हि कथं तन्निमित्तं स्यात्। ततश्च यावज्जीववाक्ये यागानुरक्त-भावनांशभूता इत्थंभावाकाङ्क्षा स्ववाक्यश्रुतनिमित्तवशप्राप्तावश्यकर्तव्यत्वानुरोधेन यथाशक्त्येवाङ्गानि परिगृह्णाति, तद्वदङ्गोपकृतमेव च प्रधानं शास्त्रवशादुपात्तदुरितक्षयं फलं साधयतीति शक्याङ्गैरेवाधिकारः। न च निमित्तवशप्राप्तावश्यकर्तव्यत्वमेवाङ्गा-नुसारात् सङ्कोच्यताम्, निमित्तश्रुतेस्सर्वाङ्गोपसंहारसमर्थपुरुषे चरितार्थत्वादिति वाच्यम्, निमित्तेऽवश्य नैमित्तिकं कर्तव्यमित्यर्थस्य प्रधानवाक्यावगतस्याङ्गवाक्या-नुरोधेन सङ्कोचायोगात्। न चैवं सति समर्थस्यापि यथेच्छ कतिपयाङ्गत्यागस्स्यादिति वाच्यम्। निमित्तश्रुत्यङ्गोपदेशोभयपर्यालोचनया यो यदा यावन्त्यङ्गानि सम्पाद-यितु शक्नुयात्तस्य तदा तावदङ्गोपेतमेव प्रधानमुपात्तदुरितक्षय फलं साधयतीति शास्त्रार्थपर्यवसानेन सत्यां शक्तावङ्गत्यागे वैगुण्यात् फलासिद्धेः।

ननु कतिपयाङ्गत्यागे सति कथमुपात्तदुरितक्षयफलसिद्धिः। यावज्जीववाक्ये दर्शपूर्णमासशब्दस्य कालयुक्तकर्मपरत्वात् "पौर्णमास्या पौर्णमास्या यजेतामावास्या-याममावास्यया" इति समस्ताङ्गसहितप्रधानस्य कालविधिरित्येकादशद्वितीयाद्या-धिकरणे 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम्' इति वक्ष्यमाणत्वात्। ततश्च समस्ताङ्गोपेतस्यैव 'क्रतोर्जीवनवशादवश्यकर्तव्यत्वावग-मात् कथं कतिपयाङ्गत्यागेऽपि फलसिद्धिरित्यत आह—प्रधाने हीत्यादि। यदा-ग्नेयादिवाक्यतः कालसंयुक्तोत्पन्नानां प्रधानानामेव फलवाक्ये दर्शपूर्णमास-शब्दो वाचक इति द्वितीये पौर्णमास्यधिकरणे, चतुर्थस्य चतुर्थे च[2] 'दर्शपूर्ण-मासयोरिज्याप्राधान्यमविशेषात्' इत्यधिकरणे स्थितम्। 'पौर्णमास्यां [illegible]' इत्यत्र तु कालस्य साङ्गप्रधानप्रयोग एवापेक्षितत्वात् साङ्गप्रधान[illegible] पौर्ण-मास्यमावास्याशब्दयोरित्येकादशस्य द्वितीये वक्ष्यते। [illegible] वाक्यादाग्नेयादियागे कालसंयुक्तोत्पन्ने प्रधाने [illegible]

---

१. क्रतोर्जीवननिमित्तवशात्. अ, क.　　२. [illegible]

म्यते, न तु साङ्गप्रधानात्। अतः प्रधानमेव फलसाधनं, तदेव च जीवननिमित्तवशादवश्यकर्तव्यमवगम्यते। इतरत् प्रयाजादि गुणमात्रं प्रधाने फले जननीये सहकार्येव। कुतः ? तदर्थत्वात्—'असंयुक्तं प्रकरणादि कर्तृतार्थत्वादि'ति न्यायेन करणानुग्रहार्थत्वात्। अतो नाङ्गानां यावज्जीववाक्यादवश्यकर्तव्यतावगम्यत इत्यशक्त्या कतिपयाङ्गत्यागेऽपि फलसिद्धिरप्रत्यूहा ॥

प्रधानानामेवावश्यकर्तव्यत्वे युक्त्यन्तरमाह—

**तदकर्मणि च दोषस्तस्मात्ततो विशेषः स्यात् प्रधानेनाभिसम्बन्धात् ॥ ३ ॥**

''पथो वा एषो ह्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयति'' इति दर्शपूर्णमासशब्दवाच्यानां प्रधानानामेवामावास्यापौर्णमासीलक्षणस्वकालातिक्रमे दोषं ब्रवीति। ततो हेतोः तेषामेवावश्यकर्तव्यताख्यो विशेषस्स्यात्, न त्वङ्गानामपि। दर्शपूर्णमासशब्दस्य कालसंयुक्तोत्पन्नप्रधानेनैव वाच्यतया सम्बन्धात् ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**कर्मभेदन्तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशस्स्यात् ॥ ४ ॥**

तु प्रत्यवस्थाने। दर्शपूर्णमासयोः काम्यनैमित्तिकभेदेन प्रयोगभेदं यावज्जीविकाधिकरणे जैमिनिराह स्म। अतश्च यावज्जीववाक्ये सर्वेषामङ्गप्रधानानामवश्यकर्तव्यत्वोपदेशस्स्यात्। कुतः ? प्रयोगवचनैकत्वात्—'अमावास्यायाममावास्यया यजेत'' पौर्णमास्यां पौर्णमास्या'' इत्येते वाक्ये प्रयोगवचने द्वयोरपि त्रिकयोः प्रत्येकं साङ्गप्रयोगविधानार्थे, तयोरेकत्वात्। काम्यनैमित्तिकप्रयोगद्वय[१] साधारणत्वादित्यर्थः। यदि यावज्जीववाक्ये दर्शपूर्णमासशब्दस्य प्रधानमात्रवाचितया नाङ्गानामवश्यकर्तव्यत्वावगमः, तर्हि पौर्णमास्यमावास्यावाक्ययुगलं यावज्जीविकप्रयोगविषये शक्याङ्गमात्रविषयम्। स्वर्गार्थप्रयोगविषये तु समस्ताङ्गविषयमिति वैरूप्यमापद्येत ॥

---

१ द्वये. ग.

अथ सिद्धान्ती निराचष्टे—

**अर्थव्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥**

'एके मुख्यान्यकेवलाः' इत्यमरः। एकस्य केवलस्य कतिपयाङ्गविकलस्यापि प्रधानस्य प्रयोगे फलं स्यान्। कुतः ? अर्थव्यपवर्गित्वात्—यावज्जीववाक्ये उक्तरीत्या दर्शपूर्णमासशब्दार्थस्याङ्गेभ्यो व्यपवर्गित्वात् व्यावृत्तत्वात्। दर्शपूर्णमासशब्दस्य प्रधानमात्रवाचित्वादिति यावत्। अमावास्यापौर्णमासीवाक्ययोस्तु न वैरूप्यम्। तयोर्यथासम्भव साङ्गप्रयोगविधिपरत्वात्। यथा क्रत्वन्तरेषु प्रकृतिवद्विकृतिरिति, चोदको यथा प्राकृतधर्मान् विकृतिषु प्रापयति, यथा चरुहविष्षु पेषवर्जमित्यादि तद्वत् ॥

इतोऽपि नित्यकर्मसु वैगुण्यन्न दोष इत्याह—

**विध्यपराधे च दर्शनात्      सेः ॥ ६ ॥**

अग्निहोत्रद्रव्यस्कन्दनरूपे विध्यपराधे सत्यपि तदेव "यादृक् कीदृक्च होतव्यम्" इति विगुणस्यापि समाप्तिर्दृश्यते। अतोऽपि नित्यकर्मसु वैगुण्यन्न दोषः। 'तदकर्मणि च' इत्यादिपञ्चसूत्री वार्तिके न दृश्यते ॥

इतोऽप्येवमित्याह—

**प्रायश्चित्तविधानाच्च ॥ ७ ॥**

"भिन्ने जुहोति" "स्कन्ने जुहोति" इत्यादिना नैमित्तिकाङ्गानि विहितानि। यदि भेदनादिना विगुणे प्रधाने फलाभावः, तदा नैत्तिकाङ्गविधयो न युज्येरन्। न हि निष्फलस्याङ्गैः कृत्यमस्ति। अतो विगुणादपि नित्यकर्मणः फलमिति ॥

इति प्रथमं सर्वशक्त्यधिकरणम् ॥ १ ॥

२

तदेवं दर्शपूर्णमासयोर्नित्यप्रयोगे यथाशक्त्यङ्गोपसंहारः स्थितः। अथ [1]तत्रैव काम्यप्रयोगे विकृतिषु चैन्द्राग्नसौर्यादिषु प्रजाब्रह्मवर्चसादिफलासु किं यथाशक्त्यङ्गोपसंहारः ? उत सर्वाङ्गोपसंहारः ? इति संशये, पूर्वपक्षयति—

---

१. तत्र काम्य क.

**काम्येषु चैवमर्थित्वात् ॥ ८ ॥**

यथा नैमित्तिकेऽशक्त्याङ्गत्यागः, एवं काम्येष्वपि। कुतः ? अर्थित्वात्— अशक्तस्यापि फलार्थित्वाविशेषात्। त यथा निमित्तबलेनाशक्याङ्गत्यागः, तथा स्वर्गादिकाममात्रस्याधिकारावगमात्तद्वशेन काम्यान्यपि शक्त्यभावे हीनाङ्गानि प्रयोक्तव्यानीति ॥

अथ सिद्धान्तयति—

**असंयोगात्तु नैवं स्याद्विधेश्शब्दप्र णत्वात् ॥ ९ ॥**

यदेवमुक्तं तन्न स्यात्। ( कुतः ? असंयोगात्—काम्येषु कतिपयाङ्गविहीनस्य प्रधानस्य फलेनासंयोगात् समस्ताङ्गोपेतस्यैव फलेन सयोगात्। कुतः ? ) विधेः शब्दप्रमाणत्वात्। विधेः विधानस्य फलाय समस्ताङ्गोपेतप्रधानप्रयोगस्य फलवाक्यप्रमाणकत्वात्। तथा चैकादशे वक्ष्यति 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' इति। तुर्वैपम्ये। सर्वाङ्गोपसंहारसमर्थस्यैव काम्येष्वधिकारः। सर्वाङ्गोपसंहारसमर्थस्यैव स्वर्गादिकामत्वस्यापि सम्भवेनाविरुद्धतया तस्मिन्नेव कामश्रुतेश्चरितार्थत्वात्। निमित्तश्रुत्यावगम्यमानं प्रतिनिमित्तमवश्यकर्तव्यत्वं सर्वाङ्गोपसंहारासमर्थ एव चरितार्थम्। न हि सर्वदा सर्वाङ्गानि कश्चिदुपसंहर्तुं शक्नोति। तस्मात्तत्र शक्याङ्गैरेवाधिकार इति वैपम्यम् ॥*

इति द्वितीयं काम्येषु सर्वाङ्गोपसंहाराधिकरणम् ॥ २ ॥

३

अतः परमापादपरिसमाप्तेर्व्रीह्यादिविहितद्रव्यालाभे नीवारादिप्रतिनिधिद्रव्येणापि नित्यप्रयोगोऽवश्य कर्तव्य इत्येव यथाशक्तिप्रयोगोपयोगितया प्रतिनिधिविचार प्रस्तोष्यते। तदुपोद्घातत्वेनेदञ्चिन्त्यते—कि द्रव्यभेदे क्रियाणामन्यत्वं भवति ? न वा ? इति। तत्र पूर्वपक्षयति—

**क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागस्स्यात् ॥ १० ॥**

क्रियाणा तादात्म्येन द्रव्याश्रितत्वाद् द्रव्यानतिभेदात्, द्रव्यान्तरे-द्रव्यभेदे विभागस्स्यात्-भेदस्स्यात्। ततश्च व्रीह्यादिविहितद्रव्याभावे नीवारद्रव्यैः क्रियमाणस्य

() ग्रन्थपाठ ग्रनुपलब्धे. * 'अकर्मणि चाप्रत्यवायात्' इति सूत्रस्य मातृकासु वृत्तिर्नोपलभ्यते।

यागस्य व्रीहियागत्वाभावात् न प्रतिनिध्युपादानं युक्तम्। न चैवं सति प्रतिप्रयोग द्रव्यभेदात् क्रियाभेदस्स्यादिति वाच्यम्। तत्र व्यक्तिभेदेऽपि तज्जातेरेकत्वेन तदात्मना द्रव्यैक्यसत्त्वेन क्रियैक्योपपत्तेः॥

अथ सिद्धान्तयति—

**अपि वाव्यतिरेकाद्रूपशब्दाविभागाच्च सत्त्ववदैककर्म्यं स्यान्नामधेयञ्च सत्त्ववत् ॥ ११ ॥**

अपिवेति पक्षव्यावृत्तौ। ऐककर्म्यं स्यात्—विहितद्रव्यैः प्रतिनिधिद्रव्यैश्च क्रियमाणं कर्मैकमेव स्यात्। कुतः? अव्यतिरेकात्—देशकालपुरुषभेदेऽपि क्रियाणामवैलक्षण्यात्। न हि कालभेदे देशभेदे पुरुषभेदे चाग्नेयादियागाः कालादिभूयस्त्वेऽतिरिच्यन्ते, तदल्पत्वे च न्यूना भवन्ति। एवं द्रव्यभेदेऽप्यवैलक्षण्यादभेदः। रूपशब्दाविभागाच्च—रूपाविभागात् शब्दाविभागाच्चेत्यन्वयः। रूपस्य रूपणस्य अभेदप्रत्ययस्य अविभागात्—अबाधात्। न हि त एवामी आग्नेयादियागा इत्यभेदप्रत्ययस्य तत्त्वावगतस्य बाधोऽस्ति, शब्दान्तरादीनां भेदकारणानामभावात्। न हि विहितव्रीह्यादिना नीवारादिना च प्रतिनिधिना क्रियमाणेषु यागेषु शब्दान्तरादिनिमित्तभेदोऽवतरति, येन त एवामी इति प्रत्यभिज्ञा बाध्येत। शब्दाविभागाच्च प्रतिनिधिना क्रियमाणेष्वप्याग्नेयादियागेषु दर्शपूर्णमासाख्याया अनपायाच्चेत्यर्थः। ननु क्रियाणामाश्रयतादात्म्यादाश्रयभेदाद् भेद आवश्यक इत्यत आह—सत्त्ववदिति। सत्त्वशब्देन द्रव्यव्यक्तयो विवक्षिताः। सप्तम्यन्ताद्वतिः। यथा व्यक्तिषु भिन्नास्वपि जातिर्न भिद्यते तद्वदित्यर्थः। न हि द्रव्यात्यन्ताभिन्नत्वं क्रियाया अभ्युपगम्यते, येन तद्भेदाद् भेदस्स्यात्। किन्तु क्रियाणामपि भेदाभेदावेव। तदुक्तम्—

'तदात्मतापि त्वन्यैव व्यक्तिभेदे क्रियात्मनः।

मर्हति। ततश्च शब्दाविभागाच्चेत्युक्तमनुपपन्नमित्यत आह—नामधेयञ्च सत्त्ववदिति। यथा आश्रयगोव्यक्तिभेदेऽपि गोत्वस्याभेदाद् गोनामधेयं सर्वत्र गोव्यक्तिषु प्रवर्तते, तथा द्रव्यभेदेऽपि कर्माभेदात्तन्नामता न निवर्तते। न च 'द्रव्यभेदेऽपि कर्मैक्याभ्युपगमे[1] आग्नेयादियागानामपि मिथो भेदो न स्यात्। ततश्च षड्यागा इत्यनुपपन्नमिति वाच्यम्। तत्र शब्दान्तरादिप्रमाणैर्भेदसिद्धेः। यत्र न शब्दान्तरादिकं भेदप्रमाणमस्ति, तत्र प्रत्यभिज्ञया चलनादिक्रियाव्यक्तिरेकैव। क्वचिद्भेदप्रत्ययस्तु कर्त्रादिभेदावलम्बनः सततानुपलब्धिव्यञ्जकाभावादुपपद्यते। सर्वश्च शब्दनित्यत्वप्रयासः[2] कर्मनित्यत्वेऽपि समान.। अस्तु वा सर्वत्रैलोक्यवर्तिकर्ममात्रस्यैकव्यक्तित्वादाग्नेयादियागानामपि भवत्येव परस्परमैक्यम्, तथापि यावदेकापूर्वानुबन्धमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म, अन्यद् भिद्यत इति भेदाभेदव्यवहारः। ततश्च द्रव्यभेदेऽपि क्रियाभेदाभावात् सिद्धः प्रतिनिधिः॥

इति तृतीय द्रव्यभेदेऽपि कर्मैक्यप्रतिपादनाधिकरणम्॥ ३॥

४

श्रुतव्रीह्यादिद्रव्यालाभे दर्शपूर्णमासादिनित्यकर्माणि तत्प्रतिनिधिभूतं नीवारादिद्रव्यमुपादायापि प्रयोक्तव्यानि ? न वा ? इति संशये, पूर्वपक्षयति—

**श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात्॥ १२॥**

शिष्टस्य : विहितव्रीह्यादिद्रव्यस्याभावेऽन्यस्य—नीवारादिद्रव्यस्य अनागम सम्पादन न भवति, यत श्रुतिप्रमाणत्वात्—व्रीह्यादिद्रव्यस्यैव शास्त्रविहितत्वात्। ननु सर्वशक्त्यधिकरणन्यायेन श्रुतद्रव्याभावेऽपि नित्यकर्माणि प्रतिनिधिमुपादायापि कर्तव्यानीत्यत आह—अन्यस्याशिष्टत्वादिति। प्रतिनिधिद्रव्यस्याविहितत्वादित्यर्थः। सर्वशक्त्यधिकरणे ह्यशक्याङ्गत्याग उक्तो न पुनर्द्रव्यान्तरागम, प्रमाणाभावात्। कर्मचोदना तु न प्रतिनिधिद्रव्यं प्रयोजयितुमीष्टे। व्रीह्यादिशास्त्रादेव द्रव्यलाभात अतो न प्रतिनिधिः॥

1. 'द्रव्यभेदेऽपि द्रव्यैक्याभ्युपगमे' इत्येव मातृकासु पाठः। 'कर्मैक्याभ्युपगमे' इति कल्पितः।

2. प्रमाण. अ

इतोऽप्येवमित्याह—

**क्वचिद्विधानाच्च ॥ १३ ॥**

"यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इति क्वचिद्विधीयते। यदि श्रुतद्रव्याभावे प्रतिनिधिद्रव्योपादानं वचनमन्तरेणापि स्यात्, तर्हि क्वचित्तद्वचनं व्यर्थमेव स्यात्। तस्माद्यत्र वचनं नास्ति न तत्र प्रतिनिधिः॥

अथ सिद्धान्तयति—

**आगमो वा चोदनार्थाविशेषात् ॥ १४ ॥**

वा शब्दोऽवधारणे। श्रुतद्रव्याभावे द्रव्यान्तरमवश्यमागमयितव्यम्। कुतः? चोदनार्थाविशेषात्—आग्नेयादिचोदनाचोदितस्यार्थस्य यागस्य देवतोद्देश्यकद्रव्यत्यागात्मकस्य व्रीहित्वादिरूपेण द्रव्यविशेषितत्वाभावात्। यदि ह्याग्नेयादिप्रधानचोदना स्वयमेव द्रव्यविशेषं प्रयुञ्जीत, तदा तदभावे द्रव्यान्तरं नोपादीयेत। प्रधानचोदनया ह्यर्थाक्षिप्तेषु द्रव्येषु नियममात्रं व्रीहिशास्त्रेण क्रियते। चतुर्थस्य द्वितीये 'कर्तृदेशकालानामचोदना प्रयोगे नित्यसमवायात्, नियमार्था वा पुनश्श्रुतिरुच्यते' इत्यधिकरणे तथा व्यवस्थापितत्वात्। ततश्च यदा व्रीह्यलाभाद्व्रीहिशास्त्रमुदास्ते, तदा प्रधानचोदना द्रव्यान्तरमाक्षिपत्येव। प्रधानचोदना हि नियमेन यत्किञ्चिद्द्रव्यमर्थादाक्षिपति। सा च व्रीहिशास्त्रेणैकवाक्यता प्रतिपद्य द्रव्यान्तराणामर्थतः प्राप्तिं बाधते। श्रुतद्रव्याभावेन तु द्रव्यान्तराणामार्थिकी प्राप्तिः केन वार्येत। तस्मात् द्रव्यान्तरागमः। यद्यपि नियमादृष्टं न लभ्यते, तथापि नित्यस्यावश्यकर्तव्यत्वात् नियमादृष्टमुपेक्ष्यमिति प्रधानमात्रमवश्यं कर्तव्यम्॥

यत्तूक्तं क्वचिद्विधानाच्चेति तत्राह—

**नियमार्थः क्वचिद्विधिः ॥ १५ ॥**

सोमप्रतिनिधित्वेनानेकद्रव्येषु प्राप्तेषु पूतीकनियमार्थं वचनमित्यर्थः॥

ननु "सोमेन यजेत" इत्युत्पत्तिवाक्ये सति कथं द्रव्यान्तराणां प्राप्तिः, येन पूतीकनियमार्थमेतद्वचनं स्यात् तत्राह—

**तन्नित्यं तच्चिकीर्षा हि ॥ १६ ॥**

तत् तस्मात् 'पूतीकवचनात् पूतीकानां प्रतिनिधित्वं नियतमवगम्यते। पूतीक-

१. पूतीकवचनात्. नास्ति. ग.

नियमविध्यर्थमेतद्वचनमिति यावत्। कुत.? हि यतः, तच्चिकीर्षा-तेषु प्रतिनिधिद्रव्येषु श्रुतद्रव्यभूयोऽवयवानुवृत्त्या तत्सादृश्यात् चिकीर्षा उपादित्सेति वक्ष्यते। अतस्सोमसदृशेषु [1]द्रव्येषु पूतीकादिषु भूयस्सोमावयवानुवृत्त्या गौण्या सोमशब्दस्य वृत्तेस्तत्र पूतीकनियमार्थं पूतीकवचनमभ्युपपद्यते। वार्तिकच्छायया तु नेदं सूत्रं लक्ष्यते॥

इति चतुर्थं श्रुतद्रव्यापचारे प्रतिनिध्युपादानाधिकरणम्॥ ४॥

५

दर्शपूर्णमासयोस्सन्तीन्द्रादयो देवताः, आहवनीयादयोऽग्नयः, इषेत्वेत्यादयो मन्त्राः। तदेतेषां विस्मरणादिनापचारे देवतान्तरमग्न्यन्तरं मन्त्रान्तरं क्रियान्तरञ्च प्रतिनिधातव्यम्? न वा? इति संशयः। [2]व्रीह्यादिमुख्यद्रव्यकार्यस्य पुरोडाशादिनिष्पत्तेर्नीवारादिभिस्सम्भवात् प्रतिनिधानमुक्तम्। इन्द्रादिदेवता चोद्देश्यतया यागसाधनम्। तत्त्वञ्चानीयमानदेवतान्तरस्यापि सम्भवत्येव। आहवनीयाद्यग्नीनां हविःप्रक्षेपाधारत्वेनोपयोगित्वम्। [3]तच्चाग्न्यन्तरस्याप्यानीयमानस्य सम्भवति। मन्त्रजन्यं स्मरणमपि वाक्यान्तरेणापि सम्भवति। अतस्स्यादेवात्रापि प्रतिनिधानमिति प्राप्ते, सिद्धान्तयति—

**न देवताग्निशब्दक्रियमन्यार्थसंयोगात्॥ १७॥**

देवताः—इन्द्रादयः। अग्नयः—आहवनीयादयः। शब्दक्रिया—मन्त्रोच्चारणम्। समाहार द्वन्द्वः। देवतादि न प्रतिनिधानमर्हति। कुतः? अन्यार्थसंयोगात्-अन्यस्य प्रतिनिधित्वाभावसाधकस्यैवार्थस्य—न्यायस्य संयोगात्। प्रतिनिधित्वकारणासंयोगादिति यावत्। न ह्युद्देश्यत्वमात्रं देवतात्वम्, द्रव्यस्यापि संस्कारविधावुद्देश्यत्वेन यागदेवतात्वापत्तेः, आग्नेयविधौ 'वह्नय इदन्न मम' इत्यपि त्यागापत्तेश्च। किन्तु यत्र या उद्देश्यतया विधीयते सा तत्र देवता इति विध्यधीनमेव देवतात्वमिति दशमे 'तद्युक्ते देवताया स्यात्' इत्यत्र वक्ष्यते। आग्नेयादिविधयश्चाग्न्यादिनत्तच्छब्देनैवाग्न्यादीनुद्देश्यत्वेन विदधते। एवञ्च द्रव्याणां संस्कारविधावुद्देश्यत्वेऽप्युद्देश्यत्वेन विध्यभावान्न देवतात्वम्। नापि वह्निशब्देनाग्निमुद्दिश्याग्नेययागानुष्ठानम्। ततश्चाग्नेययागः

---

1. सोमसदृशेषु. ग, घ. 2. व्रीह्यादिषु. ग.

3. तच्चाग्न्यानीयमानस्य. ख, क.

अग्निशब्देनोद्देश्यभूतया अग्निलक्षणदेवतयैव निष्पद्यते, न त्वग्न्यैस्सूर्यादिभिः, तेषां तत्रोद्देश्यतया विध्यभावेन देवतात्वाभावात्। न हि त्यागमात्रं यागः, किन्तु देवतायै द्रव्यत्यागः। सूर्यादीनाञ्च तत्र देवतात्वाभावात्तदुद्देश्यकत्यागो याग एव न भवतीति प्रधानस्य यज्यर्थस्यासम्भवाल्लोपस्स्यादिति न देवता प्रतिनिधानमर्हति। नाप्याहवनीयाद्यग्नयः प्रतिनिधानमर्हन्ति। आहवनीयादिशब्दा हि संस्कारविशेषनिमित्ताः। संस्कारविशेषाणाञ्च तेषां वेदैकगम्यानां "यदाहवनीये 'जुहति'[1]" इत्यादिना कारकसप्तम्यादिवशाद्धविःप्रक्षेपादिसाधनत्वमवगतम्। तच्च न दृष्टविधया। न हि संस्कारविशेषैरेतैरतीन्द्रियैश्शास्त्रैकगम्यैर्हविःप्रक्षेपादिनिष्पत्तिः प्रत्यक्षमुपलभ्यते। नापि त्यज्यमानादिहविषि, 'गार्हपत्ये श्रपयति' इत्यादौ तु केवलैस्संस्कारैश्श्रपणादिकं न सम्भवतीति तदधिष्ठाने ज्वलने गार्हपत्यादिशब्दो गौणः। गार्हपत्यादिसंस्कारविशिष्टेऽग्नौ श्रपयतीत्यादिवचनव्यक्तिः। तत्र संस्कारविशेषांशो मुख्यवृत्त्या गार्हपत्यादिशब्दवाच्य श्रपणादावदृष्टमेवाधत्ते। तच्चादृष्टं नाग्न्यन्तरैस्सम्भवतीति न प्रतिनिधि। व्रीह्यपचारे तु नीवारैः पुरोडाशनिर्वृत्तिः प्रत्यक्षदृष्टेति स्यात्प्रतिनिधानमिति वैषम्यम्। नापि [2]मन्त्राणां मन्त्रान्तरं प्रतिनिधिः, तत्कार्यकारित्वाभावात्। न ह्यवघातमन्त्रकार्यमवघातस्मरण पेषणमन्त्रस्साधयति। नापि "अग्निमीळे" इति मन्त्रकार्यमग्निस्मरणम् 'अग्न आयाहि वीतये'' इति मन्त्रस्साधयति। वाक्यार्थविधया अग्न्यादिस्मरणमेव हि मन्त्रकार्यं, मन्त्राणां करणार्थत्वात्, 'मन्त्रान्तेन कर्मादिस्सन्निपातस्स्यात् सर्वस्य वचनार्थत्वात्' इति द्वादशिकाधिकरणे तथा व्यवस्थापयिष्यमाणत्वात्। वाक्यार्थविधया तज्ज्ञानञ्च [3]न मन्त्रान्तरात् सम्भवतीति न प्रतिनिधिः। सूत्रे शब्दस्य क्रिया-उच्चारणं शब्दक्रियेति व्याख्येयम्। क्रियाशब्दस्य प्रयोजन मृग्यं, न तु क्रियाया क्रियान्तर न प्रतिनिधिरित्येवम्परं क्रियापदम्। न हि तत्र क्रिया दृष्टार्था विवक्षिता, अवघातासम्भवे नखविदलनादिक्रियायास्तत्कार्यकारितायाः प्रतिनिधानस्येष्टत्वात्। नाप्यदृष्टार्था प्रयाजादिक्रिया विवक्षिता, प्रयाजजन्यादृष्टस्यानूयाजतोऽसम्भवात्॥

ननु या यत्रोद्देश्यतया विधीयते, सा देवतेत्यनुपपन्नम्; देवतायास्सत्या विधानम्, विहिता च देवतेत्यन्योन्याश्रयात्। अत उद्देश्यत्वमेव देवतात्वम्। तच्च

१. जुहोति. क.　　२. मन्त्राणां. नास्ति. घ.　　३. मन्त्रान्तरान्न. अ.

शब्दान्तरेष्वप्यविशिष्ट, वैगुण्यमात्रन्तु विधिशब्दहान्या स्यात्। न तु देवतात्वहानिरित्यत आह—

**देवता च तदर्थत्वात् ॥ १८ ॥**

देवता न प्रतिनिधानमर्हति। उद्देश्यतया विहिताया एव देवताशब्दार्थत्वात्। उद्देश्यमात्रस्य देवतात्वेऽतिप्रसङ्गस्योक्तत्वात्। न चेतरेतराश्रयतापि। न हि देवतायास्सत्या विधानं, किन्तु शब्दविशेषयुक्तोद्देश्यतामात्रेण विहिता सती पश्चाद्देवतात्वं प्रतिपद्यत इति। चकारोऽनुक्तयुक्त्यन्तरसमुच्चये। देवतात्वं शब्दाधीनम्। ततश्च विहितदेवताविस्मरणे देवतान्तरं प्रतिनिधातव्यमिति नोपपद्यते। सदृश हि प्रतिनिधातव्यम्। अतो मुख्यदेवताशब्दं स्मृत्वैव तदुत्तरकालं सदृशशब्दान्तरस्योपादान वाच्यम्। न ह्यस्मृते मुख्ये यत्सदृशं बुद्धावारोपयितुं शक्यते। तस्मिंश्च स्मृते किं प्रतिनिधानेनेति। [1]मन्त्रेष्वप्येष एव न्याय.। मुख्ये मन्त्रे विस्मृते तत्सदृश मन्त्रान्तर न प्रतिनिधातुं शक्यते। मुख्ये च मन्त्रे स्मृते तत एव सिद्धत्वान्न प्रतिनिधिरिति॥

इति पञ्चम देवताग्निशब्दक्रियाणा प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥

६

"मौद्गश्चरुं निर्वपेत्" इत्यादिश्रुतद्रव्यापचारे "अयज्ञिया वै माषा वरकाः कोद्रवा" इत्यादि प्रतिषिद्धमाषादिद्रव्य प्रतिनिधेयम्? न वा? इति संशय। माषादिस्वरूपस्य यज्ञाङ्गत्वं प्रतिषिद्धम्। इह च श्रुतमुद्गादिद्रव्यावयवा माषादिद्रव्येऽपि सन्तीति तदंशा एवाङ्गत्वेनोपादीयन्ते, न तु माषादिस्वरूपम्। तदुपादानन्त्वानुपङ्गिकमेव। तस्मात् प्रतिषिद्धमपि प्रतिनिधेयमिति प्राप्ते, सिद्धान्तयति—

**प्रतिषिद्धश्चाविशेषेण हि तच्छ्रुति. ॥ १९ ॥**

प्रतिषिद्ध माषादिद्रव्यं न प्रतिनिधेयम्। कुत.? हि यत., अविशेषेण—अङ्गत्वमात्रपुरस्कारेण यज्ञसम्बन्धप्रतिषेधो माषादिद्रव्यस्य श्रुत.। यज्ञशब्दो हि 'तदर्हति' इत्यधिकारे 'यज्ञर्त्विग्भ्या घखञौ' इति घप्रत्ययान्तो यज्ञसम्बन्धमात्रमभिधत्ते, न त्वङ्गत्वमेव यज्ञियशब्दार्थ। ततश्चाङ्गत्वेनानुपङ्गिकत्वेन च प्राप्त माषादिद्रव्यस्योपादान प्रतिषिध्यत इति न प्रतिषिद्ध प्रतिनिधेयम्॥

इति षष्ठं प्रतिषिद्धद्रव्याणा प्रतिनिध्यभावाधिकरणम् ॥ ६ ॥

---

१. मन्त्रेऽपि. छ, प.

७

यजमाने प्रोषिते कार्यान्तरव्यापृते वा याजमानकर्मस्वन्यः प्रतिनिधाव्यो न वेति संशय । अनुमन्त्रणादियाजमानकर्मणामन्येनापि कर्तुं शक्यत्वात् प्रतिषेधाभावाच्च स्यात् प्रतिनिधानमिति प्राप्ते, सिद्धान्तयति—

**तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥ २० ॥**

स्वामिनोऽपि न प्रतिनिधि.। कुत ? फलसमवायात्-प्रतिनिधीयमानस्यान्यस्य फलसयोगप्रसङ्गात्। प्रतिनिधीयमानो हि स्वामिकर्तव्यं हविरुत्सर्गमपि कुर्वन् स्वाम्येव स्यात्, न तु प्रतिनिधि.। कुत.? फलस्य कर्मयोगित्वात्—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्यत्र () फलस्य हविस्त्यागनिबन्धनताया उक्तत्वात्। यत्तु मृतस्यापि यजमानस्य [न] प्रतिनिधिरित्युदाहृतं, तदतिमन्दम्। न हि मृते यजमाने प्रतिनिध्याशङ्कास्ति, प्रतिनिधातुरभावात्। पत्नी प्रतिनिदध्यादिति तु न युक्तम्, तस्या अग्न्यभावेनाधिकाराभावात्। अतो न स्वामिन' प्रतिनिधि.। वस्तुतस्तु प्रवासविधिसामर्थ्यादेव प्रवसति यजमाने भवत्यन्यस्य प्रतिनिधानम्। हविस्त्यागो हि स्वाहाकारान्ते वषट्कारान्ते वेति सर्वप्रदानाधिकरणे निर्णीतम्। तत्काले च हविस्त्यागो न प्रवसता यजमानेन स्वय कर्तुं शक्यः। विदेशस्थस्य तस्य तत्कालज्ञानासम्भवात्। अतोऽन्येनैव कारयितव्य । प्रतिनिधीयमानश्च यजमानाज्ञया शक्नोति हविस्त्यक्तुम्—अग्नय इदं न मद्यजमानस्येति। यस्य च द्रव्यमुत्सृज्यते तस्यैव फलसंयोग इति न प्रतिनिधीयमानस्य स्वामित्वमापाद्यम्। यथा सर्वस्वारे क्रतौ प्रक्रान्ते "ब्राह्मणास्समापयत मे यज्ञम्" इत्युक्त्वा मध्ये मृते यजमाने याजमानकार्ये प्रतिनिध्युपादानं तद्वत्। तदुक्तमभियुक्तैः—

'सन्निधौ यजमानस्याद्देशत्यागकारक.।
असन्निधौ पत्नी स्यादध्वर्युर्वा तदाज्ञया' ॥ इति

बोधायनश्चाह—'यद्यस्य पुत्रो वान्तेवासी वार्त्विजामन्यतमः तत्र ब्रूयात्' इति। आपस्तम्बादिभिस्तु 'प्रवसन् काले विहारमभिमुखो याजमानं जपति' इत्याद्युक्तम्। तत्रापि हविस्त्याग प्रतिनिधिनैव कर्तव्य । न चाधानादिकर्मस्वपि यजमानस्य प्रतिनिधान शङ्क्यम्, 'अथाग्निहोत्रं निरुप्यैः पितृयज्ञ इति त्रयम्।

कर्तव्यं प्रोषिते पत्यौ नान्यत् स्वामिक्रियान्वितम्' इति वचनात्। अधिकरणन्तु कार्यान्तरव्यापृते यजमाने वेदितव्यमित्यलम् ॥

इति सप्तममग्निहोत्रादिषु यजमानस्य प्रतिनिध्यभावाधिकरणम् ॥ ७ ॥

८

"सप्तदशावरास्सत्रमासीरन्" इति सप्तदशभिः प्रक्रान्ते सत्रे कस्मिंश्चिद्यजमाने मृते सति तत्कार्येऽन्य आगमयितव्यः ? न वा ? इति संशयः। स्वामिनो न प्रतिनिधिरिति पूर्वाधिकरणन्यायान्नागमयितव्य इति प्राप्ते, सिद्धान्तयति—

**बहूनान्तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २१ ॥**

तुर्वैषम्ये। अग्निहोत्रादिकर्मसु मा भूत्स्वामिनः प्रतिनिधिः, बहुयजमानके तु सत्रेऽन्यमागमयेत। कुतः ? अवैगुण्यात्—एव सत्येवावैगुण्यात्, अन्यथा सप्तदशत्वगुणलोपापातात्। ननु "ये यजमानास्त ऋत्विजः" इति कर्त्रभिप्रायक्रियाफलविहितशानजन्तयजमानशब्देन स्वामिनामार्त्विज्ये विधानमवगतम्। प्रतिनिधीयमानश्च न स्वामीत्यग्रिमाधिकरणे वक्ष्यते। ततश्च स प्रतिनिधीयमानः कथं स्वामिगतसाप्तदश्यं पूरयेदिति चेत्—यद्यपि प्रतिनिधीयमानः स्वामिगतं साप्तदश्यं न पूरयति, तथापि मृतस्य ये पदार्थाः कर्तव्यास्तेषु[१] कर्तृत्वांशे साप्तदश्यं पूरयत्येव। न हि स्वामिसाप्तदश्य न सम्भवतीत्येतावता कर्तृत्वांशेऽपि तदुपेक्षा युज्यते। तस्मादन्य आगमयितव्यः। ननु सत्रस्य काम्यतया अवश्यकर्तव्यत्वाभावेन यथाशक्तिप्रयोगाभावात् प्रतिनिधानमेव तत्र न प्रसक्तमित्यत आह—प्रवृत्त इति। काम्यस्यापि सत्रस्य प्रक्रान्तस्यावश्यसमाप्यत्वादस्ति यथाशक्तिप्रयोग इति स्यादेव तत्र प्रतिनिधानम्। "यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत" इति "यो यज्ञविभ्रष्टस्स्यात् तस्मा एतामिष्टिं निर्वपेत्" इत्यादिभिरारब्धयज्ञविच्छेदे प्रायश्चित्तविधिभिः प्रक्रान्तासमापने दोषस्मरणेन च काम्यानामप्यारब्धानामवश्यसमाप्यत्वावगमादिति भावः। ननु "यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठस्स्यात्त तत्स्थाने दीक्षयित्वा तेन सह यजेरन्" इति वाचनिक एवात्र प्रतिनिधिरिति किमर्थमिदमधिकरणमिति चेत्—न्याय-

१. नेरा अ

प्राप्तप्रतिनिध्यनुवादेन नेदिष्ठत्वगुणविधानार्थं वचनमित्यदोष. । नेदिष्ठः सन्निहित-तमः पुत्रभ्रात्रादिः ॥

इत्यष्टमं सत्रे यजमानापचारे प्रतिनिध्युपादानाधिकरणम् ॥ ८ ॥

९

सत्रे कस्यचिद्यजमानस्यापचारेऽन्य आगमयितव्य इति स्थितम् । स किं [1]सत्रफलभागी ? उत विपन्नयजमानकर्तव्यपदार्थेषु कर्तृत्वमात्रमस्य ? इति संशये, पूर्वपक्षयति—

स स्वामी स्यात्संयोगात् ॥ २२ ॥

सः आगन्तुकः स्वामी सत्रफलभागी स्यात् । कुतः ? तत्संयोगात्-मृतस्य स्वामिनस्स्थाने निपतितत्वात् । स्वामित्वे च सति स्वतन्त्राधिकारापत्त्या नैव प्रतिनिधित्वम् ॥

अथ सिद्धान्तयति—

कर्मकरो वाकृतत्वात् ॥ २३ ॥

वाशब्दोऽवधारणे । परकीयकर्मकार्येवायं न तु फलभागी । कुत ? अकृत-त्वात्–येन ह्यारभ्य समापनं कृतं स फलं प्राप्नोति । अयन्तु मध्ये प्रविष्टः । [2]समापन-मेवानेन कृतं, न त्वारम्भः । अतो नासौ फलं प्राप्तुमर्हति । फलसिद्धेरादित आरभ्य कृत्स्नाङ्गोपेतप्रधानप्रयोगाधीनत्वात् । कृतत्वादित्यपिच्छेदः । नियुक्तत्वादित्यर्थः । "यदि सत्राय दीक्षितानां म्रियेत योऽस्य नेदिष्ठस्स्यात्तं तत्स्थाने दीक्षयित्वा तेन सह यजेरन्" इति गौडशिभिरवशिष्टै. कर्तृसाप्तद्रव्यसम्पत्त्यर्थमसौ नियुक्तः । अतः फलभागित्वाभावात् प्रतिनिधिरेवायम् ॥

इतोऽप्येवमित्याह—

तस्मिंश्च फलदर्शनात् ॥ २४ ॥

तस्मिन् मृते यजमाने फल दर्शयति–"यो दीक्षिताना प्रमीयेतापि तस्य फलम्" इति वाक्यशेष । अपिशब्दस्तस्येत्यनन्तर ज्ञेय. । सत्रे दीक्षितानां मध्ये यः

---

१. सत्रफलगामी. अ. २. समापनमेव कृत. फ.

कश्चिदसमाप्ते म्रियेत तस्य कृत्स्नाङ्गोपेतप्रधानप्रयोक्तृत्वाभावेऽपि फलं सिध्यति, किमुत सर्वाङ्गोपेतप्रधानप्रयोक्तृणामिति सत्रं स्तूयते। अत्र मृतस्य फलानुवाददर्शनात्तत्कार्यकारिणोऽन्यस्य नास्ति फलमिति गम्यते। यद्य[पि] ऋद्धिफलाय सत्रे सप्तदशभिः प्रक्रान्ते कस्मिंश्चित् स्वामिनि मध्ये दिष्टं गतेऽवशिष्टैष्षोडशभिस्तत्स्थानेऽन्यमागमय्य प्रयोगे समापिते सप्तदशत्ववैगुण्यादन्येषामपि षोडशानां नास्त्येव सत्रफलम्। प्रतिनिधीयमानस्य तु प्रक्रमाभावादपि[1] न प्रसक्तमेव तत्फलम्, तथापि प्रक्रान्तासमापनप्रयुक्तप्रत्यवायपरिहारलक्षणं फलं षोडशानामस्त्येव। मृतकर्तव्यसमापनस्य प्रतिनिधिना सम्पन्नत्वादस्त्येव मृतस्यापि तत्फलमिति तदेव वाक्यशेषेऽस्मिन्ननूद्यते। अतो न प्रतिनिधेः फलभागित्वम्॥

इति नवमं सत्रे प्रतिनिधेः फलभागित्वाभावाधिकरणम्॥ ९॥

१०

तदेवं सत्रे मृतस्य प्रतिनिधिर्न फलभागीति स्थितम्। स किं फलिसंस्कारभूतैः पयोव्रतादिधर्मैर्युज्यते? न वा? इति संशये, फलिसंस्काराणां फलाधारत्वयोग्यताधानार्थत्वात् प्रतिनिधेश्च फलभागित्वाभावस्य पूर्वाधिकरणे व्यवस्थापितत्वान्नायं फलिसंस्कारैर्युज्यत इति प्राप्ते, सिद्धान्तयति—

**स तद्धर्मा स्यात्तत्संयोगात्॥ २५॥**

सः—मृतस्य स्थाने प्रतिनिधीयमानः। तद्धर्मा—तस्य स्वामिनः धर्माः फलिसंस्कारा यस्य स तद्धर्मा। 'धर्मादनिच् केवलात्' इत्यनिच्। तत्संयोगात्—एवं सत्येवेतरेषां फलिसंस्कारसंयोगात्। फलिसंस्कारेष्वपि कर्त्रंशसाप्तदश्यं गुणः। तथाच कर्त्रंशसाप्तदश्यगुणकैः फलिसंस्कारैः फलयोग्यता जन्यते। साप्तदश्यञ्च व्यासक्तम्। तत्र यदि फलिसंस्काराः प्रतिनिधौ न स्युः, तर्हि अवशिष्टषोडशस्वपि क्रियमाणाः फलिसंस्काराष्षोडशकर्तृकत्वगुणका एव स्युः। एवञ्च फलिसंस्कारविषये कर्त्रंशसाप्तदश्यलोपादितरेऽपि फलेन युज्येरन्। तत्सिध्यर्थं प्रतिनिधिरप्ययं फलिसंस्कारान् लभते॥

इति दशमं सत्रे प्रतिनिहितस्य फलिसंस्कारसत्ताधिकरणम्॥ १०॥

---

१. तदपि ग, घ.

११

मुख्यद्रव्यालाभे तत्कार्यक्षमं [1]द्रव्यान्तरं प्रतिनिधातव्यमिति स्थितम्। तत् किं मुख्यद्रव्यसदृशं तद्विसदृशं वा यत्किञ्चिद्द्रव्यं प्रतिनिधातव्यम्? उत सदृशद्रव्यमेव वा? इति संशये, अविशेषाद्यत्किञ्चिद्द्रव्यमिति प्राप्ते, सिद्धान्तयति—

**सामान्यं तच्चिकीर्षा हि ॥ २६ ॥**

सामान्यं—मुख्यद्रव्यसादृश्यं यत्र वर्तते तदेव प्रतिनिधातव्यम्। हि यतः, मुख्यद्रव्योपादित्सा सदृशद्रव्येण पूर्यते, न तु विसदृशद्रव्येण। तथाहि—अवश्यकर्तव्यत्वानुसारेण व्रीह्यादिशास्त्रलब्धं नियमादृष्टमुपेक्ष्य द्रव्यान्तरं प्रतिनिधातव्यमिति स्थितम्। [2]व्रीहिशास्त्रे व्रीहिशब्दो व्रीहित्वजातिवचनः। जातेश्चावहननपेषणाद्यसम्भवात्तत्परिच्छिन्ना व्यक्तय आक्षिप्यन्ते। व्यक्तयश्चावयवितादात्म्यापन्नावयवेभ्यो नात्यन्तमतिरिच्यन्ते। व्रीहिसदृशेषु च नीवारेषु कतिपये व्रीह्यवयवास्सन्ति, अन्यथा तत्सादृश्यबुध्यनुपपत्तेः। एवञ्च व्रीह्यलाभे नीवारेषूपादीयमानेषु कतिपयव्रीह्यवयवा उपात्ता भवन्तीति कतिपयव्रीह्यवयवलिप्सया नीवारा व्रीहिबुध्या उपादीयन्ते। व्रीहित्वं जातिः कतिपये च व्रीह्यवयवास्त्यक्ता भवन्ति। तत्र नीवारावयवानान्तूपादानमवर्जनीयत्वादानुषङ्गिकमेव। ततश्च नीवारेषूपादीयमानेषु कतिपयव्रीह्यवयवलाभात् कथञ्चिदपि व्रीहिशास्त्रमनुगृह्यते। विसदृशद्रव्येषु तु सर्वथैव नानुगृह्येत। अतस्सदृशद्रव्यमेव प्रतिनिधेयम्। एवञ्च सुसदृशलाभे ईषत्सदृशमपि न प्रतिनिधेयम्॥

इत्येकादशं प्रतिनिधिद्रव्येषु सुसादृश्यनियामकाधिकरणम् ॥ ११ ॥

१२

"व्रीहिभिर्यजेत" "यवैर्यजेत" इत्यन्यतरस्मिन् द्रव्ये निरुप्ते विनष्टे सति पुनस्तज्जातीयद्रव्येऽलब्धे सति किं वैकल्पिकद्रव्यान्तरमुपादेयम्? उत नष्टद्रव्यसदृशं द्रव्यान्तरं प्रतिनिधातव्यम्? इति संशये, मुख्ये वैकल्पिकद्रव्यान्तरे सति प्रतिनिधानस्याशास्त्रीयत्वात्तदेव वैकल्पिकं द्रव्यान्तरं प्रतिनिधेयम्। तथाच निरुप्तव्रीह्यपचारे यवद्रव्यं वैकल्पिकमुपेक्ष्य व्रीहिसदृशा नीवारा न ग्राह्या इति प्राप्ते, सिद्धान्तयति—

---

१. द्रव्यान्तरं हि. फ.

२. व्रीहिशास्त्रेषु. अ, फ, ग.

## निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २७ ॥

तुरवधारणे। द्रव्यविकल्पेऽभिहिते सति तत्रान्यतरद् द्रव्यं यत् प्रवृत्तं-निर्वापादिना परिगृहीतं तद्विनाशे तत्सजातीयालाभे तत्सदृशद्रव्यान्तरमेव प्रतिनिधेयम्। यथा व्रीह्यलाभे नीवारद्रव्यं, न तु वैकल्पिकं यवलक्षण द्रव्यान्तरम्। कुतः ? निर्देशात्--नीवारेषु व्रीहित्वजातेस्तदाश्रयव्यक्त्यवयवकार्त्स्न्यस्य चाभावेऽपि कतिपयाना व्रीह्यवयवानामनुस्यूतत्वेन तन्निबन्धया गौण्या वृत्त्या व्रीहिशब्दनिर्देशसम्भवात्। तथाच व्रीहिशास्त्राविषयत्वमुक्तमसिद्धमित्युक्तं भवति ॥

अत्राशङ्क्य परिहरति—

## अशब्दमपीति चेन्नानङ्गत्वात् ॥ २८ ॥

अपिशब्दात्पूर्वमेवमिति शेप । एवमपि अशब्दम्-अशास्त्रीयमेव नीवारद्रव्यं पर्यवस्यति। व्रीहिशास्त्रस्य तत्र नीवारद्रव्ये मुख्यप्रवृत्त्यभावात्। तथा चोपात्तेऽपि नीवारद्रव्ये व्रीहिशास्त्रस्य न सम्यगनुग्रहो लभ्यते। यवलक्षणवैकल्पिकद्रव्यान्तरे तूपात्ते यवशास्त्रस्य सम्यगेवानुग्रहो लभ्यते। तथा च प्रवृत्तद्रव्यनाशे सति सम्भवे वैकल्पिकद्रव्यान्तरमेवोपादेयम्, न तु प्रवृत्तद्रव्यसदृशद्रव्यमिति चेत्तन्न; अनङ्गत्वात्-व्रीहिद्रव्य यवद्रव्यञ्च दर्शपूर्णमासयोर्न समुच्चितमङ्गम, उभयोर्निरपेक्षविधानात्। किन्तु एकस्मिन् प्रयोगे व्रीहिद्रव्यमङ्ग प्रयोगान्तरे तु यवद्रव्यमिति द्वादशस्य तृतीये वक्ष्यते 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिस्स्यात् प्रधानस्य' इत्यधिकरणे। व्रीहिद्रव्येण प्रक्रान्ते प्रयोगे यवशास्त्र न प्रवर्तत इति तत्र यवद्रव्यमङ्गमेव न भवतीति किन्तत्पूर्णानुग्रहेण। तस्मात् प्रवृत्तद्रव्यापचारे तत्सदृशमेवोपादेयम्, न तु वैकल्पिकं द्रव्यान्तर, प्रवृत्तद्रव्यस्यैव तत्राङ्गत्वात्, यथारम्भमेव समापनीयत्वात् ॥

इति द्वादश मुख्यद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥ १२ ॥

१३

"सोमाभावे पूतीकानभिषुणुयात्" इत्यत्र किं सोमाभावे निमित्ते पूतीकविधिः, तथाच पूतीका पूतीकबुध्येवादातव्याः, न तु सोमबुध्या ? उत सोमाभावे तत्प्रतिनिधित्वेन कदाचित् पूतीकेषु कदाचित्तदन्येषु च द्रव्येषु प्राप्तेषु पूतीका प्रतिनिधित्वेन नियम्यन्ते ? इति संशयः। तत्र सुसदृशेषु द्रव्यान्तरेषु सत्सु पूतीकानां प्रतिनिधि-

त्वस्यानुचितत्वात् प्राप्त्यभावान्न तन्नियमविधिः। सोमस्योत्पत्तिशिष्टत्वेन कस्यापि द्रव्यस्य तत्प्रतिनिधित्वासम्भवाच्च। दर्शपूर्णमासयोर्हि व्रीह्यादिद्रव्यस्योत्पन्नशिष्टत्वा[भावात्त]दभावेऽपि तद्यागानामुत्पत्तिवाक्यावगतरूपानपायात् सम्भवति प्रतिनिधिः। सोमस्य तूत्पत्तिशिष्टत्वात् सोमानुरक्तरूपेणैव करणत्वात्तदभावे करणस्वरूपापायात् प्रतिनिधिर्न सम्भवतीत्यभावे विधिरेवायमिति प्राप्ते, सिद्धान्तयति—

**वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ २९ ॥**

चः अप्यर्थे, अन्याय्यमित्यनन्तरं द्रष्टव्यः। मन्दसदृशत्वात् पूतीकद्रव्यस्यानुचितमपि प्रतिनिधित्वं वचनाद् भवति। यत्तु सुसदृशेषु[1] सत्सु सोमप्रतिनिधितया पूतीकानामप्राप्तेर्न तन्नियमविधिरिति तत्राह—अभाव इत्यादि। पूतीकवचनाभावे इतरस्य मुख्यस्य सोमद्रव्यस्याभावाद्धेतोः सामान्येन—सुसदृशमन्दसदृशसाधारण्येन द्रव्यमात्र प्रतिनिधित्वेन प्राप्नोति, मुख्यद्रव्याभावेऽवश्यकर्तव्ययागस्य द्रव्यापेक्षायां प्रथमतस्सुसदृशमन्दसदृशसाधारण्येन द्रव्यमात्रविषयत्वात्। यद्यपि सोमद्रव्यमुत्पत्तिशिष्टं, तथापि यजधातुना केवलयागावगमे सति तदाकाङ्क्षया सोमद्रव्यस्यान्वयो वाच्यः, अनाकाङ्क्षितस्यान्वयायोगात्। ततश्च धातूपात्तरूपेणैव यागस्य करणत्वम्, न तु सोमानुरक्तरूपेण। एवञ्च सोमाभावे यागस्य करणस्य सत्त्वात्तदाकाङ्क्षयात्रापि सम्भवति[2] प्रतिनिधिः। अतः प्रतिनिधिनियमविधिरेवायं नाभावविधिः। तथा च यस्सोममलभमानस्तदवयवान् यत्र क्वचित् स्फीतान् कतिपयानुपादित्सते स पूतीकस्थानुपाददीतेति वाक्यार्थः। प्रयोजनं पूर्वपक्षे—"अंशुरंशुस्ते देव सोमाप्यायताम्" इत्यादिमन्त्राणां सोमशब्दघटितानां पूतीकेष्वप्रवृत्तिः। सिद्धान्ते तु—प्रवृत्तिरिति ॥

इति त्रयोदशं सोमाभावे पूतीकाना प्रतिनिधित्वाधिकरणम् ॥ १३ ॥

१४

श्रुतव्रीहिद्रव्यापचारे तत्प्रतिनिधिभिर्नीवारैः प्रक्रान्ते प्रयोगे प्रतिनिधिष्वपि नीवारेष्वपचरितेषु किं प्रतिनिधिभूतनीवारसदृशमेवोपादातव्यम्? उत श्रुत-

१. सदृशेषु. क. १. प्रतिनिधि नास्ति. अ.

मुख्यव्रीहिसदृशम्? इति संशयः। तत्र यथा व्रीहिभि: 'प्रयोगे प्रक्रान्ते व्रीहीणामेवाङ्गत्वं, न तु वैकल्पिकानामपि यवानाम्। एवं प्रतिनिधिना प्रक्रान्तेऽपि प्रयोगे तस्यैवाङ्गत्वात् तत्सदृशमेव ग्राह्यम्। यद्यपि नीवारा नाङ्गम्, (अविहितत्वात्, तथापि तस्मिन् प्रयोगे) नीवारगता एव व्रीह्यवयवा अङ्गं [न] तु व्रीहिगताः। नीवारगतत्वञ्च नीवारावयवसहचरितत्वम्। नीवारसदृशोपादाने च तथाविधावयवा लभ्यन्त इति प्रतिनिधिभूतनीवारसदृशमेवोपादेयमिति प्राप्ते, सिद्धान्तयति—

## न प्रतिनिधौ समत्वात्॥ ३०॥

प्रतिनिधावपचरिते तत्सदृशं न प्रतिनिधातव्यम्, किन्तु मुख्यद्रव्यसदृशमेव। कुतः? समत्वात्—यथा मुख्याद्रव्यापचारे तदवयवलिप्सया प्रतिनिधिरुपादीयते, एव प्रनिनिध्यपचारेऽपि मुख्यद्रव्यावयवलिप्सया द्रव्यान्तरोपादानस्याविशिष्टत्वात्। यत्तु प्रतिनिधिभूतनीवारप्रयोगे नीवारगता एव व्रीहयोऽङ्गमिति, नैतदेवम्; न हि नीवारगतत्वेन व्रीह्यवयवानामङ्गत्वमस्ति, नीवारशब्दाश्रवणात्। व्रीहिशब्दश्रवणात्तु व्रीह्यवयवानां स्वरूपेणैव तत्राङ्गत्वम्। श्रुतद्रव्यसाधारणास्तु ये व्रीह्यवयवा नीवारगतास्तदुपादित्सया प्रवर्तमाना नान्तरीयकतया नीवारानुपादत्ते, न त्वङ्गतया। अतस्तदपचारे पुनरपि श्रुतद्रव्यावयवलाभाय व्रीहिसदृशमेवोपादेयमिति॥

इति चतुर्दशं प्रतिनिध्यपचारे श्रुतद्रव्यस्यैव प्रतिनिध्युपादानाधिकरणम्॥१४॥

१५

सोमप्रतिनिधीकृतपूतीकद्रव्येऽपचरिते पूतीकसदृशं प्रतिनिधातव्यम्? सोमसदृश वा? इति संशये, पूर्वपक्षयति—

## स्याच्छ्रुतिलक्षणात्॥ ३१॥

व्रीहिप्रतिनिधीकृतनीवारप्रयोगे नीवारगतत्वेन व्रीह्यवयवानामङ्गत्वाभावात् स्वरूपेणैवाङ्गत्वान्मास्तु नीवारसदृशस्य प्रतिनिधानम्। "सोमाभावे पूतीकानभिषुणुयात्" इति श्रुतिप्रमाणके तु पूतीकद्रव्येऽपचरिते तत्सदृशस्य प्रतिनिधानं स्यात्। यद्यपि प्रतिनिधिनियमविधिरेवायं, न तु पूतीकानामङ्गत्वमाह, तथापि

२ प्रयोगे नास्ति. अ, ब. () अ. ब. पुस्तकयो ग्रन्थपात..

पूतीकनियमात् पूतीकगतत्वेनैव सोमावयवानामङ्गत्वावगमात्तत्सिध्यर्थं पूतीकसदृश-मेव प्रतिनिधातव्यमिति फलति ॥

अथ सिद्धान्तयति—

**न तदीप्सा हि ॥ ३२ ॥**

न पूतीकसदृशं प्रतिनिधातव्यम्, किन्तु सोमसदृशमेव। हि यतः, पूतीक-विधिना पूतीकगतत्वेन सोमावयवानां पूतीकप्रयोगाङ्गत्वावगमात् पूतीकापचारे पूतीकगतत्वविशिष्टसोमावयवलिप्सा भवति। तया च लिप्सया पूतीकसोमोभय-सदृशमुपादेयं न केवलं पूतीकसदृशम्। यत्र चोभयसदृशं न लभ्यते तत्र सोमावय-वानां प्राधान्यात् पूतीकावयवसहचरितत्वलक्षणस्य पूतीकगतत्वस्य सोमावयवगुणत्वा-न्मुख्यानुरोधेन[2] '[1]सोमसदृशमुपादेयम्, न तु पूतीकसदृशमिति ॥

इति पञ्चदश पूतीकापचारे सोमसदृशद्रव्यस्य प्रतिनिधित्वाधिकरणम् ॥१५॥

१६

अलब्धे मुख्ये प्रतिनिधिं सङ्कल्प्य तल्लाभाय प्रस्थितो यद्यन्तरा मुख्यद्रव्यं लभते, स किं तदुपेक्ष्य प्रतिनिधिमेवोपाददीत? उत मुख्यद्रव्यम्? इति संशये, मिथ्यासङ्कल्पदोषपरिजिहीर्षया प्रतिनिधिरेवोपादातव्य इति प्राप्ते, सिद्धान्तयति—

**मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३३ ॥**

मुख्यस्य द्रव्यस्य प्राप्तिसम्भवे मुख्यद्रव्यमेवोपादेयम्। हि यतः, तदभावात्-मुख्यालाभादेव निमित्तात् आगमः-प्रतिनिधानम्, न तु मुख्ये लब्धेऽपि। समग्रानुष्ठा-नशक्तावसत्यामेव हि विकलानुष्ठानं शास्त्रीयं भवति, न तु सत्यामपि। सङ्कल्पोऽपि 'यथाशक्ति शास्त्रार्थं सम्पादयामि' इति शास्त्रार्थविषय एव कार्यः, न तु प्रतिनिधि-स्वरूपमपि सङ्कल्पयितव्यम्, तस्यानङ्गत्वात्। तस्मान्मुख्यस्याधिगमसम्भवे तदेवो-पादातव्यमिति ॥

इति षोडश प्रतिनिधिसङ्कल्पानन्तरं मुख्यलाभे तस्यैवोपादेयत्वाधिकरणम् ॥१६॥

---

१. सोमसदृशादुपादेय न तु पूतीकसदृशादिति. अ, क.

२. न्नयेन. क.

१७

"खादिरो यूपो भवति" इति खदिरेऽलब्धे कदरं प्रतिनिधिमुपादाय तक्षण-प्रोक्षणादिभिस्संस्कृत्योच्छ्रित्य तत्र पशुनियोजने कृते सति मुख्ये खदिरे लब्धे सति कदरं प्रतिनिधिं त्यक्त्वा खदिरं मुख्यं [1]तक्षणप्रोक्षणादिभिस्संस्कृत्य पुनः पशुनियो-जनं कर्तव्यम् ? न वा ? इति [2]संशये, पूर्वपक्षमुत्थाप्य सिद्धान्तयति—

**प्रवृत्तेऽपीति चेन्नानर्थकत्वात् ॥ ३४ ॥**

मुख्यखादिरकार्ये पशुनियोजने प्रतिनिधिना कदरेण निष्पन्नेऽपि तस्य विगुणत्वात्तत्सादूगुण्यार्थं मुख्यखादिरयूपे पुनः पशुनियोजनं कर्तव्यमिति चेन्मन्यसे, नैतद्युक्तम्; अनर्थकत्वात्—पशुनियोजनलक्षणखादिरकार्यस्य कदरेण प्रतिनिधिना सिद्धतया मुख्ययूपे पुनस्तत्करणस्य व्यर्थत्वात्, गुणानुसारेण प्रधानावृत्तेरन्याय्य-त्वात्। एवञ्च कदरस्य तक्षणादिसंस्कारानन्तरं पशुनियोजनात्प्रागपचारे सति यदा मुख्यः खदिरो लभ्यते, तदा संस्कृतमपि कदरं परित्यज्य [3]खदिरमेव संस्कृत्य तस्मिन् पशुर्नियोक्तव्य इत्युक्तं भवति। प्रधानस्य पशुनियोजनस्य सादूगुण्यानुसारे[ण] मुख्यद्रव्योपादानस्य तत्संस्कारावृत्तेश्च युक्तत्वात्। न चैवं सति कदरे कृतास्संस्कारा व्यर्था स्युरिति वाच्यम्। तेषा संस्काराणां प्रधानसाधनसादूगुण्यार्थत्वेन तद्विरोधे सति हानस्य युक्तत्वात्।

यत्तु भाष्ये 'प्रवृत्तेऽपीति चेत्' इत्येकमधिकरणम् 'नानर्थकत्वात्' इत्यधि-करणान्तरमिति लक्ष्यते, तदेतदतिक्लिष्टत्वादुपेक्ष्य वार्तिके तन्त्ररत्ने चैकाधिकरण्य-मेवास्थितम् ॥

इति सप्तदश पशुनियोजनात्प्राङ्मुख्यलाभे प्रतिनिधिहानाधिकरणम् ॥१७॥

१८

पशुयागे प्रवृत्ते यूपकाले महान् कदरवृक्ष' तक्षणाष्टाश्रीकरणादिसर्वसंस्कार-योग्यः पशुनियोजनक्षमो लब्ध । मुख्यस्तु खदिरवृक्ष तक्षणाष्टाश्रीकरणादिकतिपय संस्कारक्षमः पशुनियोजनार्हश्च। तत्र कस्योपादानमिति संशये, खदिरोपादानं

१. तक्षणादिभि . ग. २. संशयः क.
३. एव नास्ति. क.

संस्काराणां कतिपयानामत्यन्तहानिस्स्यात्। कदरे तूपादीयमाने तेषामनुग्रहो भवति। खदिरशाखमपि कतिपयखदिरावयवानां तत्रानुस्यूत्या कथमप्यनुगृहीतं भवति। परञ्च बहूनां सस्काराणां हान्यपेक्षया प्रधानस्यैकस्य किञ्चिन्न्यूनता। तस्मात् कदर एव ग्राह्य इति प्राप्ते, सिद्धान्तयति—

**द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३४ ॥**

मुख्यस्य खदिरस्यादरे संस्कारबाधः। कदरस्यादरे मुख्यद्रव्यबाध इत्येवं द्रव्यसंस्कारान् परित्यज्य मुख्यद्रव्यमेवादर्तव्यं, न तु प्रतिनिधिः कदरः। कुतः? तदर्थत्वात्—संस्काराणां द्रव्यार्थत्वात्। ततश्च संस्कारवशेन मुख्यद्रव्यपरित्यागो न युक्तः। प्रधानन्यूनताप्रसक्तौ गुणबहुत्वमपि त्याज्यमेव। न च कांस्यभोजिन्यायाद् गुणानुरोधश्शङ्क्यः। प्रधानपीडायां तन्न्यायानवतारस्य द्वादशे वक्ष्यमाणत्वात्। तस्मात् खदिर एवात्र ग्राह्यः ॥

इत्यष्टादशं द्रव्यसस्कारविरोधे द्रव्यप्राबल्याधिकरणम् ॥ १८ ॥

१९

यदा पुनरतितनुत्वात् पशुनियोजनलक्षणकार्यस्याप्ययोग्यः खदिरः, कादरस्तु तद्योग्यो लब्धः, तदापि मुख्यत्वात् खदिर एवोपादेयः। पशुनियोजनन्तु काष्ठान्तर-सहायेन सम्पाद्यमिति प्राप्ते, सिद्धान्तयति—

**अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात् ॥ ३५ ॥**

प्रयोजनद्रव्यविरोधे सति अर्थः प्रयोजनमेवाद्रियेत। कुतः? द्रव्याणां प्रयो-जनशेषत्वात्। काष्ठान्तरसाहाय्ये च काष्ठान्तरमेव नियोजनसाधनं स्यात्। मुख्य-द्रव्यन्त्वदृष्टार्थं स्यात्। अतो मुख्यद्रव्याभावे प्रयोजनानुसारेण [illegible] प्रति-निधिसम्पादनं क्रियेत। प्रत्युदाहरणमात्रत्वात् पूर्वपक्षमात्रं न दोषाय ॥

इत्येकोनविंशमर्थद्रव्यविरोधेऽर्थप्राबल्याधिकरणम् ॥ १९ ॥

२०

दर्शपूर्णमासयोः पुरोडाशपरिमाणं श्रुतम्—"[illegible] करोति" इति अस्ति च तस्य कार्याणि "द्व्यवदानञ्जुहोति" "शेषात् स्विष्टकृतं यजति" "[illegible]" "यजमानपञ्चमा इडां प्राश्नन्ति" "प्राशित्रमवद्यति, तद्ब्रह्मा प्राश्नाति" "आग्नी-

यच्चतुर्धा करोति तमृत्विजो भक्षयन्ति" "शंयुवाकान्ते हविश्शेषान् भक्षयन्ति" इति, "व्रीहिभिर्यजेत" इति च श्रुतम्। तत्र यद्यश्वशफपरिमाणाय शेषकार्येभ्यश्चापर्याप्ताः द्व्यवदानमात्रपर्याप्ता अल्पपरिमाणपुरोडाशाकृतिमात्रनिष्पादनक्षमा व्रीहयो लभ्यन्ते, नीवारास्तु सर्वपर्याप्ता बहुलमुपलभ्यन्ते। तदा किं नीवारा उपादेयाः ? उत व्रीहयः ? इति संशये, पूर्वपक्षयति—

## विधेरप्येकदेशे स्यात् ॥ ३६ ॥

अपिशब्दो भिन्नक्रमः। एकदेशेऽपि अश्वशफपरिमाणशेषकार्यापर्याप्तेऽल्पव्रीहिद्रव्ये सत्यपि नीवारद्रव्यं प्रतिनिधेयं स्यात्। कुतः ? विधेः—अश्वशफपरिमाणस्य शेषकार्याणाञ्च विधानात्। यद्यपि "व्रीहिभिर्यजेत" इति यागसाधनत्वेन श्रवणाद्व्रीहीणां प्रधानाङ्गत्वम्, शेषकार्याणान्तु प्रतिपत्तित्वात् पुरोडाशाङ्गत्वम्, अश्वशफपरिमाणमपि पुरोडाशाङ्गमेव; ततश्चाङ्गगुणविरोधन्यायेन प्रधानगुणस्य प्रबलत्वात्तदनुग्रहेणाङ्गानां शेषकार्याणामश्वशफपरिमाणस्य च बाध एव न्याय्यः, तथाप्युत्पत्तिशिष्टपुरोडाशावरुद्धत्वान्न साक्षाद्व्रीहीणां यागसाधनता, किन्तु पुरोडाशप्रकृतितया। ततश्चाश्वशफपरिमाणशेषकार्याणामिव व्रीहीणामपि पुरोडाशाङ्गत्वान्नाङ्गगुणत्वप्रधानगुणत्वकृतो विशेषः। तत्राश्वशफपरिमाणशेषकार्यशास्त्राणां भूयसामनुग्रहाय व्रीहिशास्त्रमेकं बाधितव्यम्। किञ्च नीवारोपादाने व्रीहिशास्त्रस्य नात्यन्तबाधोऽस्ति। नीवारेषु कतिपयव्रीह्यवयवानामनुस्यूतेः अश्वशफपरिमाणशास्त्रं शेषकार्यशास्त्राणि चानुगृह्यन्ते। व्रीह्युपादाने तु परिमाणशेषकार्यशास्त्राण्यत्यन्तं बाध्येरन्। तस्मान्नीवारा एव ग्राह्या[1] ॥

अथ सिद्धान्तयति—

## अपि वार्थस्य शक्यत्वादेकदेशेन वर्तेतार्थानां विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात् ॥ ३७ ॥

अपिवेति पूर्वपक्षव्यावृत्तौ। अल्पपरिमाणपुरोडाशाकृतिमात्रक्षमव्रीहिद्रव्येणैव वर्तेत—यागे व्याप्रियेत, न तु परिमाणशेषकार्याभिनिवेशेन नीवाराः प्रतिनिधातव्याः। कुतः ? अर्थस्य शक्यत्वात्—अर्थस्य प्रधानस्य यागस्य अल्पपरिमाणेनापि पुरोडाशेन कर्तुं शक्यत्वात्। अश्वशफपरिमाणशेषकार्याणि तु नादर्तव्यानि। कुतः ?

1. पु. ग.

अर्थानां विभक्तत्वात्—अर्थानामश्वशफपरिमाणस्य शेषकार्याणां व्रीहित्वस्य च विभक्तत्वात्–वैलक्षण्यात्। व्रीहित्वं हि प्रधानगुणः "व्रीहिभिर्यजेत" इति यागे तद्विधानाद् इतरदश्वशफपरिमाणं शेषकार्यञ्च सर्वं गुणमात्रं यागाङ्गभूतपुरोडाशगुण एव। कुतः? तदर्थत्वात्—पुरोडाशार्थत्वेन विधानात्। यद्यपि पुरोडाशप्रकृतित्वं व्रीहीणां, तथापि व्रीहय एव पुरोडाशतामापन्ना यागद्रव्यं भवन्ति। 'ते च नीवारेषूपादीयमानेषु[1] विकला भवन्ति। ततश्च प्रधानमेव विगुणं स्यात्। भूयांसोऽप्यङ्गाङ्गविधयो न प्रधानाङ्गबाधनं कर्तुमर्हन्ति। तस्मादत्र व्रीहीणामेव सङ्ग्रहो युज्यते।

अत्रेदं चिन्त्यम्—व्रीहय एव पुरोडाशभावमापन्ना यागद्रव्यमित्यनुपपन्नम्, सतुषाणामेव व्रीहिशब्दार्थत्वात्। तुषाणाञ्च पुरोडाशेऽनुप्रवेशाभावाद् "रक्षसां भागोऽसि इति पुरोडाशकपालेन तुषान्निरस्यति" इति विधानाद् व्रीह्यवयवतण्डुलानामेव पिष्टप्रणाड्या[2] पुरोडाशानुप्रवेशात्। व्रीहिशब्दस्य[3] तण्डुलपरत्वे तु लक्षणाप्रसङ्गः। ततश्च "व्रीहिभिर्यजेत" इति यागसाधनपुरोडाशप्रकृतिद्रव्यविधिरेवायमुत्पत्तिवाक्यावगतपुरोडाशद्रव्यस्य प्रकृतिद्रव्यापेक्षत्वात्। यजिस्तु प्रकरणप्राप्तानुवाद एव। ततश्च व्रीहित्वमप्यश्वशफपरिमाणशेषकार्यवदङ्गाङ्गमेवेति कथं व्रीहित्वस्य ततो विशेषः। एवञ्च 'अर्थानां विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात्' इत्यनुपपन्नम्। किञ्च "यदाग्नेयोऽष्टाकपालः" इत्याद्युत्पत्तिवाक्यतः पुरोडाशस्य कार्त्स्न्येन यागसाधनत्वम्, न तु द्व्यवदानमात्रस्येत्यादि स्थितं वार्तिके सर्वप्रदानाधिकरणे। पुरोडाशस्वरूपञ्च पुरोडाशं प्रथयत्यतुङ्गमनपूपञ्चाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोतीत्यवगतम्। एवंविधपुरोडाशेन च कृत्स्नेन साध्यो यागः[4] कथं द्व्यवदानमात्रपर्याप्ताल्पव्रीह्यारब्धेनाल्पपरिमाणेन पुरोडाशेन साध्येत। द्रव्यदेवते हि यागस्य स्वरूपम्। उक्तविधपुरोडाशश्च कार्त्स्न्येन यागद्रव्यं, तदल्पत्वे च कार्त्स्न्याभावाद्याग एव न संवर्तेत। ततश्च 'अर्थस्य शक्यत्वादेकदेशेन वर्तेत' इत्यप्यनुपपन्नम्। नाप्यश्वशफपरिमाणं पुरोडाशाङ्गमिति युज्यते। तस्य पुरोडाशादनतिभिन्नतया पुरोडाशशब्दार्थानुप्रवेशाद् अवयवानामवयवितादात्म्यवद् गुणानामपि गुणितादात्म्याभ्युपगमात्। [5]अस्तु वाश्वशफपरिमाणं पुरोडाशाङ्गं, तथाप्युपयोक्ष्यमाणार्थमेव तत्।

१. तेषु च. अ.　　२. प्रणाल्या. क.
३. शब्दस्य च. क.　　४. यागः नास्ति. ग.
५. यद्यप्यस्तु वा. अ.

यच्चतुर्धा करोति तमृत्विजो भक्षयन्ति" "शंयुवाकान्ते हविश्शेषान् भक्षयन्ति" इति, "व्रीहिभिर्यजेत" इति च श्रुतम्। तत्र यद्यश्वशफपरिमाणाय शेषकार्येभ्यश्चापर्याप्ताः द्व्यवदानमात्रपर्याप्ता अल्पपरिमाणपुरोडाशाकृतिमात्रनिष्पादनक्षमा व्रीहयो लभ्यन्ते, नीवारास्तु सर्वपर्याप्ता बहुलमुपलभ्यन्ते। तदा किं नीवारा उपादेयाः ? उत व्रीहयः ? इति संशये, पूर्वपक्षयति—

## विधेरप्येकदेशे स्यात् ॥ ३६ ॥

अपिशब्दो भिन्नक्रमः। एकदेशेऽपि अश्वशफपरिमाणशेषकार्यापर्याप्तेऽल्पव्रीहिद्रव्ये सत्यपि नीवारद्रव्यं प्रतिनिधेयं स्यात्। कुतः ? विधेः—अश्वशफपरिमाणस्य शेषकार्याणाञ्च विधानात्। यद्यपि "व्रीहिभिर्यजेत" इति यागसाधनत्वेन श्रवणाद्व्रीहीणां प्रधानाङ्गत्वम्, शेषकार्याणान्तु प्रतिपत्तित्वात् पुरोडाशाङ्गत्वम्, अश्वशफपरिमाणमपि पुरोडाशाङ्गमेव; ततश्चाङ्गगुणविरोधन्यायेन प्रधानगुणस्य प्रबलत्वात्तदनुग्रहेणाङ्गानां शेषकार्याणामश्वशफपरिमाणस्य च बाध एव न्याय्यः, तथाप्युत्पत्तिशिष्टपुरोडाशावरुद्धत्वान्न साक्षाद्व्रीहीणां यागसाधनता, किन्तु पुरोडाशप्रकृतितया। ततश्चाश्वशफपरिमाणशेषकार्याणामिव व्रीहीणामपि पुरोडाशाङ्गत्वान्नाङ्गगुणत्वप्रधानगुणत्वकृतो विशेषः। तत्राश्वशफपरिमाणशेषकार्यशास्त्राणां भूयसामनुग्रहाय व्रीहिशास्त्रमेकं बाधितव्यम्। किञ्च नीवारोपादाने व्रीहिशास्त्रस्य नात्यन्तबाधोऽस्ति। नीवारेषु कतिपयव्रीह्यवयवानामनुस्यूते[1] अश्वशफपरिमाणशास्त्रं शेषकार्यशास्त्राणि चानुगृह्यन्ते। व्रीह्युपादाने तु परिमाणशेषकार्यशास्त्राण्यत्यन्तं बाध्येरन्। तस्मान्नीवारा एव ग्राह्या ॥

अथ सिद्धान्तयति—

## अपि वार्थस्य शक्यत्वादेकदेशेन वर्तेतार्थानां विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात् ॥ ३७ ॥

अपिवेति पूर्वपक्षव्यावृत्तौ। अल्पपरिमाणपुरोडाशाकृतिमात्रक्षमव्रीहिद्रव्येणैव वर्तेत—यागो व्याप्रियेत, न तु परिमाणशेषकार्याभिनिवेशेन नीवाराः प्रतिनिधातव्याः। कुतः ? अर्थस्य शक्यत्वात्—अर्थस्य प्रधानस्य यागस्य अल्पपरिमाणेनापि पुरोडाशेन कर्तुं शक्यत्वात्। अश्वशफपरिमाणशेषकार्याणि तु नादर्तव्यानि। कुतः ?

---

1. ग्न, ग.

अर्थानां विभक्तत्वात्—अर्थानामश्वशफपरिमाणस्य शेषकार्याणां व्रीहित्वस्य च विभक्तत्वात्–वैलक्षण्यात्। व्रीहित्वं हि प्रधानगुणः "व्रीहिभिर्यजेत" इति यागे तद्विधानाद् इतरदश्वशफपरिमाणं शेषकार्यञ्च सर्वं गुणमात्रं यागाङ्गभूतपुरोडाशगुण एव। कुतः? तदर्थत्वात्—पुरोडाशार्थत्वेन विधानात्। यद्यपि पुरोडाशप्रकृतित्वं व्रीहीणां, तथापि व्रीहय एव पुरोडाशतामापन्ना यागद्रव्यं भवन्ति। [1]ते च नीवारेषूपादीयमानेपु विकला भवन्ति। ततश्च प्रधानमेव विगुणं स्यात्। भूयांसोऽप्यङ्गाङ्गविधयो न प्रधानाङ्गबाधनं कर्तुमर्हन्ति। तस्मादत्र व्रीहीणामेव सङ्ग्रहो युज्यते।

अत्रेदं चिन्त्यम्—व्रीहय एव पुरोडाशभावमापन्ना यागद्रव्यमित्यनुपपन्नम, सतुपाणामेव व्रीहिशब्दार्थत्वात्। तुषाणाञ्च पुरोडाशेऽनुप्रवेशाभावाद् "रक्षसां भागोऽसि इति पुरोडाशकपालेन तुषान्निरस्यति" इति विधानाद् व्रीह्यवयवतण्डुलानामेव पिष्टप्रणाड्या[2] पुरोडाशानुप्रवेशात्। व्रीहिशब्दस्य[3] तण्डुलपरत्वे तु लक्षणाप्रसङ्गः। ततश्च "व्रीहिभिर्यजेत" इति यागसाधनपुरोडाशप्रकृतिद्रव्यविधिरेवायमुत्पत्तिवाक्यावगतपुरोडाशद्रव्यस्य प्रकृतिद्रव्यापेक्षत्वात्। यजिस्तु प्रकरणप्राप्तानुवाद एव। ततश्च व्रीहित्वमप्यश्वशफपरिमाणशेषकार्यवदङ्गाङ्गमेवेति कथं व्रीहित्वस्य ततो विशेषः। एवञ्च 'अर्थानां विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात्' इत्यनुपपन्नम्। किञ्च "यदाग्नेयोऽष्टाकपालः" इत्याद्युत्पत्तिवाक्यत. पुरोडाशस्य कार्त्स्न्येन यागसाधनत्वम्, न तु द्व्यवदानमात्रस्येत्यादि स्थितं वार्तिके सर्वप्रदानाधिकरणे। पुरोडाशस्वरूपञ्च पुरोडाश प्रथयत्यतुङ्गमनपूपञ्चाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोतीत्यवगतम। एवंविधपुरोडाशेन च कृत्स्नेन साध्यो यागः[4] कथ द्व्यवदानमात्रपर्याप्ताल्पव्रीह्यारब्धेनाल्पपरिमाणेन पुरोडाशेन साध्येत। द्रव्यदेवते हि यागस्य स्वरूपम्। उक्तविधपुरोडाशश्च कार्त्स्न्येन यागद्रव्यं, तदल्पत्वे च कार्त्स्न्याभावाद्याग एव न सवर्तेत। ततश्च 'अर्थस्य शक्यत्वादेकदेशेन वर्तेत' इत्यप्यनपपन्नम्। नाप्यश्वशफपरिमाणं पुरोडाशाङ्गमिति युज्यते। तस्य पुरोडाशादनतिभिन्नतया पुरोडाशशब्दार्थानुप्रवेशाद् अवयवानामवयवितादात्म्यवद् गुणानामपि गुणितादात्म्याभ्युपगमात्। [5]अस्तु वाश्वशफपरिमाण पुरोडाशाङ्गं, तथाप्युपयोक्ष्यमाणार्थमेव तत्।

---

१. तेपु च. अ.		२. प्रणाल्या. फ.
३. शब्दस्य च. फ.		४. याग नास्ति. ग.
५ यत्रप्यस्तु वा. अ.

तस्य चोपयुक्तसंस्कारशेषकार्यवशेन बाधोऽनुचितः, उपयुक्तसंस्कारादुपयोक्ष्यमाणाङ्गस्य प्रबलत्वात्। तस्मात् कृत्स्नपुरोडाशो यागद्रव्यं, न तु द्व्यवदानमिति वार्तिकमते। सूत्रमते तदनुपपन्नमेव; द्व्यवदानमेव यागसाधनम्, पुरोडाशस्तु तदपादानं तदङ्गमिति सर्वप्रदानाधिकरणे प्रपञ्चितम्। भाष्यमते तु सूत्रमिद समञ्जसम्। अर्थस्य-यागस्य द्व्यवदानेनैव शक्यत्वाद् एकदेशेन द्व्यवदानपर्याप्ताल्पव्रीहिद्रव्येणैव वर्तेत-यागे व्याप्रियेत। यागसाधने द्व्यवदाने उपयोक्ष्यमाणे व्रीहिमयत्वस्य साक्षादङ्गत्वात्, न त्वश्वशफमात्रपरिमाणशेपकार्यलिप्सया नीवाराः प्रतिनिधातव्याः। अर्थानामश्वशफपरिमाणस्य शेपकार्याणाञ्च व्रीहित्वापेक्षया वैलक्षण्यात्। यतः अश्वशफपरिमाणं शेपकार्यञ्च सर्वं गुणमात्रम्। यागसाधने द्व्यवदाने परम्परया 'यागाङ्गमेव न तु साक्षात्। तदर्थत्वात्—अश्वशफपरिमाणस्य द्व्यवदानापादानभूतपुरोडाशधर्मत्वात्। शेपकार्याणाञ्च स्विष्टकृत्प्राशित्रेडाचतुर्धाकरणशयुवाककालभक्षणानां तत्तदवयवसंस्कारद्वारा अवयवान्तरभूतोपयुक्तद्व्यवदानसंस्कारार्थत्वात। अतो द्व्यवदानमात्रपर्याप्तव्रीहिलाभे सति न नीवाराः प्रतिनिधातव्या'। अल्पव्रीहिद्रव्येणैवाल्पपरिमाणपुरोडाशाकृतिं निर्वर्त्याल्पपरिमाणेषु कपालेषु श्रपयित्वा तेन द्व्यवदानमात्रेण प्रधानयागा निर्वर्तयितव्या इति ॥

इतोऽप्येवमित्याह—

**तथाचान्यार्थदर्शनम् ॥ ३८ ॥**

तदेव 'यादृक् कीदृक्च होतव्यम्" इति स्कन्नशिष्टद्रव्यकाग्निहोत्रहोमविधिपरे वाक्ये विहितपरिमाणशेपकार्यासम्भवेऽपि प्रधानाभिनिर्वृत्तिं मुख्यद्रव्येणैव दर्शयति। अतोऽपि नात्र प्रतिनिधिरिति सिद्धम् ॥

इति विंश द्व्यवदानक्षममुख्यद्रव्यलाभे प्रतिनिध्यनुपादानाधिकरणम् ॥२०॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ षष्ठाध्यायस्य तृतीयः पादः ॥

# अथ चतुर्थः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तृतीयपादे द्रव्यापचारे सति यथाशक्त्यनुष्ठानप्रकारो विचारितः । अथास्मिंश्चतुर्थपादे द्रव्यापचारनिमित्तप्रायश्चित्ताधिकारः प्राधान्येन प्रस्तूयते । दर्शपूर्णमासयोश्श्रुतम्—"आग्नेयोऽष्टाकपालो भवति" "मध्यादवद्यति, द्व्यवदानञ्जुहोति" इति । तत्र द्व्यवदानमुद्धृतं यदि नश्येत् तदा किं शेषादवदातव्यम् ? उत हविरन्तरमुत्पाद्य तत्कार्यं साधनीयम् ? इति संशये, पूर्वपक्षयति—

**शेषाद्द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥**

द्व्यवदाननाशे सति शेषादवदेयं स्यात् । कुतः ? तदर्थत्वात्—द्व्यवदानद्वारा पुरोडाशस्य यागार्थत्वात् । ततश्च पुनश्शेषाद् द्विरवदाय यागो निर्वर्तयितव्यः, शिष्टस्यापि मध्यपूर्वार्द्धसम्भवात् । न चावशिष्टः कृत्स्नपुरोडाशो न भवतीति न ततो द्विरवदानसम्भव इति वाच्यम् । मध्यपूर्वार्द्धाभ्यां द्व्यवदानमात्रं हि शास्त्रार्थः । न तु कृत्स्नस्यैव पुरोडाशस्येति, "मध्यादवद्यति" "पूर्वार्द्धादवद्यति" इत्यत्र कृत्स्नस्येत्यनिर्देशात् । अतश्शेषादवदेयम् ॥

अथ सिद्धान्तयति—

**निर्देशाद्वान्यदागमयेत् ॥ २ ॥**

वाशब्दोऽवधारणे । द्व्यवदाननाशे हविरन्तरं सम्पादयेत्, न तु शेषादवदेयम्[1] । कुतः ? निर्देशात्—"मध्यादवद्यति" "पूर्वार्द्धादवद्यति" इति मध्यपूर्वार्द्धयोर्द्व्यवदानापादानत्वेन निर्देशात् । अविकलस्यैव हि पुरोडाशस्य मध्यात् पूर्वार्द्धाच्च द्व्यवदानं यागसाधनमिति शास्त्रार्थः । अवदानशास्त्रप्रवृत्तिवेलायामविकलस्यैव पुरोडाशस्य बुद्धिस्थत्वात् 'यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः' इतिव[दश्रुत]प्रदेश-

---

१. अवदेयः. अ.

स्यैवावदानापादानत्वावगमाच्च। द्व्यवदाननाशे विकलस्य पुरोडाशस्य मध्यात्पूर्वार्द्धाच्चावदानं शास्त्रार्थः। द्व्यवदाननाशाभावे त्वविकलस्येति वैरूप्यापत्तेश्च। अतो द्व्यवदाननाशे सति न शेषादवदेयम्, पुरोडाशान्तरमुत्पाद्यम्। अथवा "यस्य सर्वाणि हवींषि नश्येयुराज्येन ता देवताः प्रतिसङ्ख्याय यजेत" इति हविर्नाशे आज्यस्य प्रतिनिधित्वेन निर्देशात्—विधानाद् द्व्यवदाननाशे आज्यमागमयेदिति व्याख्येयम्, हविर्नाशमात्रस्य निमित्तत्वात्। प्रत्युद्देश्य वाक्यपरिसमाप्तिन्यायप्राप्तानुवादस्सर्वशब्दः। न चाज्यविधिरयं कृत्स्नावयवावच्छिन्नहविर्नाशविषय एव, तदानीं द्रव्यान्तरस्यापेक्षितत्वात्; न तु हविरेकदेशद्व्यवदाननाशविषयोऽपि, शिष्टेनैव कार्यसिद्धिसम्भवेन द्रव्यापेक्षाविरहादिति वाच्यम्। अविकलपुरोडाशादेवावदानस्य शास्त्रार्थतया द्व्यवदाननाशेऽपि द्रव्यान्तरापेक्षासत्वात्। अतो द्व्यवदाननाशे आज्यमेव प्रतिनिधिः। पक्षद्वयमपीद भाष्ये स्थितम्।

तत्रेद वक्तव्यम्—उत्पत्तिवाक्ये "आग्नेयोऽष्टाकपालः" इति तद्धितश्रुत्या कृत्स्नस्य पुरोडाशस्य यागसाधनत्वमवगतम्। द्व्यवदानन्तूपस्तीर्णाभिघारितं वषट्कृतेऽध्वर्युणाहवनीये प्रक्षिप्यते। तस्मिन्नेव च समये द्व्यवदानं तदवशिष्टश्च पुरोडाशांश [1]इत्युभयरूपेण विशकलितात्मा पुरोडाशः कृत्स्नो यजमानेन देवतायै त्यज्यते। त्यज्यमानहविःप्रक्षेप एव च[2] होम। एवञ्च "चतुरवत्तञ्जुहोति" इति त्यज्यमानहविस्संस्कारमात्रमिति सर्वप्रदानाधिकरणे वार्तिके स्थितम्। एवञ्च द्व्यवदाननाशेऽपि तदवशिष्टस्य यागसाधनत्वं न विरुध्यते, पुनर्द्विरवदाय वषट्कृते यागस्य कर्तुं शक्यत्वात्। [3]एकदेशभूतद्व्यवदाननाशेऽपि तदवशिष्टस्य पुरोडाशत्वानपायात् 'एकदेशविकृतमनन्यवद्भवति' 'छिन्नेऽपि हि पुच्छे श्वा श्वैव नाश्वो न गर्दभः' इति न्यायात्। यद्यपि "यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः" इति लिङ्गादक्षतप्रदेशोऽवदानाङ्गम, तथापि न यागस्य वैगुण्यम। अक्षतत्वस्यावदानद्वारा होमात्मकप्रक्षेपरूपसंस्काराङ्गत्वात। न हि संस्कारवैगुण्यं द्रव्यं प्रयोजयितुमीष्टे, यागस्यैव तत्प्रयोजकत्वात। तस्य चावशिष्टेनापि साधयितुं शक्यत्वाद् द्व्यवदानमेव यागसाधनमिति। भाष्यमते तु नायं दोषः। तन्मतेऽक्षतप्रदेशतो द्व्यवदानं याग-

1. इत्युभयविनिर्गम. अ 2. च नास्ति. अ.
3. एकदेशद्व्यवदान. अ.

साधनमिति शास्त्रार्थपर्यवसानेनाक्षतत्वलोपे प्रधानस्यैवानिर्वृत्तेः। अतो द्व्यवदानद्वारैव पुरोडाशो यागसाधनमिति भाष्यमेव [1]सूत्रानुवृत्तमिति दिक्॥

इति प्रथमं द्व्यवदाननाशे हविरन्तरोत्पत्त्यधिकरणम्॥ १॥

२

स्विष्टकृदिडादिशेषकार्यावदाननाशे सति शेषादवदेयम्? न वा? इति संशयः। स्विष्टकृदादिशेषकार्यं हि प्रधानयागशेषप्रतिपत्त्यर्थम्। अतस्तदीयावदाननाशेऽपि शेषसद्भावात् तत्संस्काराय पुनरवदातव्यम्। न च पूर्वाधिकरणरीत्या 'उत्तरार्द्धात् स्विष्टकृतेऽवद्यति" "दक्षिणार्द्धादिडामवद्यति" इत्यादौ पुरोडाशस्य साकल्यदशायां यदुत्तरार्द्धादि तस्मादेवावदानं शास्त्रार्थ इति वाच्यम्, वैषम्यात्। प्रधानयागो हि द्रव्यस्य प्रयोजकः। अतः तदवदानशास्त्रप्रवृत्तिवेलायामविकलस्यैव पुरोडाशस्य बुद्धिस्थत्वान्न पुनश्शिष्टादवदेयम्, किन्तु हविरन्तरमेवोत्पाद्यमिति युक्तम्। स्विष्टकृदादिकार्यन्तु न पुनर्द्रव्यस्य प्रयोजकम्, तस्य प्रधानयागीयशेषसंस्कारार्थत्वात्। ततश्च तच्छेषस्य संस्कार्यस्य कस्मिंश्चिदंशे विनष्टेऽपि शिष्टस्य विद्यमानत्वात् पुनरवदानेन संस्कारः किमिति न क्रियेत। न ह्यत्र प्रधानवत् पुरोडाशस्योत्तरार्द्धादिति विवक्षितम्, ( किन्तु यस्संस्क्रियते शेषस्तस्योत्तरार्द्धादिति, "शेषादवद्यति' इति श्रुतत्वात्। संस्कार्यश्च शेषः। तदवदाननाशे पुनरपि संस्काराः प्रयुज्यन्त इति प्राप्ते, सिद्धान्तयति—

अपि वा शेषभाजां स्याद्विशिष्ट रणत्वात्॥ ३॥ )

अपिवेत्यवधारणे। लोप इत्यध्याहार्यम्। शेषभाजां–शेषकार्याणां तदीयावदाननाशे लोप एव स्यात्, न तु शिष्टादवदेयम्। अथवा अपिवेत्यवधारणे। [2]अन्यदागमयेदित्यनुवर्तते। अशेषभाजामितिच्छेद। न शेषः अशेषः तं भजन्ते अशेषभाज प्रधानयागाः। तेषामेवावदाननाशे सति हविरन्तरमागमयेत्, न तु शेषकार्याणामवदाननाशेऽपि। तानि लुप्येरन्निति फलितम्। कुत. ? विशिष्टकारणत्वात्—क्रियत

१. सूत्रानुविध्यं. अ, सूत्रानुविद्ध. क.

२. अन्यमागमयेत्. ग.

() अ, क. पुस्तकयोर्ग्रन्थपातः.

इति कारणं कार्यम्, उत्तरोत्तरप्रतिपत्तिरूपकार्यावरुद्धत्वात्। स्विष्टकृदादिप्रतिपत्तिकर्म ह्येकैकं न प्रधानयागीयशेषस्य कृत्स्नशः प्रतिपत्त्यर्थः, असम्भवात्। उत्तरार्द्धादवत्तो ह्यंशस्स्विष्टकृता संस्क्रियते। दक्षिणार्द्धादवत्तो ह्यंश इडया संस्क्रियते। कश्चिदंशः प्राशित्रेण, कश्चिदंशश्चतुर्द्धाकरणेन, कश्चिदंशोऽत्रैवर्त्विजो हविश्शेषान् भक्षयन्तीति शंयुवाकोत्तरभक्षणेन। एवञ्च स्विष्टकृता योऽशः प्रतिपाद्यः, तस्मिन्नष्टे सति तत्प्रतिपत्त्या अवशिष्टोऽशो न सम्बध्यते, तस्येडाद्यागामिप्रतिपत्त्यन्तरगृहीतत्वात्। एवमिडाद्यवदाननाशेऽपि योज्यम्।

ननु विद्यमानशेषस्य प्रतिपत्त्यन्तरावरोधेऽपि पूर्वाधिकरणन्यायेन द्रव्यान्तरमुत्पाद्यतामित्यत्राप्येतदेवोत्तरम्—विशिष्टकारणत्वादिति। कारणशब्देन फलमिह विवक्षितम्। यथा अध्ययनेन वसतीति। स्विष्टकृदादिकर्मणां प्रधानयागीयशेषप्रतिपत्तिफलकत्वादित्यर्थः। कृतकार्यकरद्रव्यापनयनफलकं कर्म प्रतिपत्ति। स्विष्टकृदादिकर्माणि च द्रव्यान्तरे क्रियमाणानि नैव प्रधानयागीयशेषस्यान्यत्रापनयनाय प्रभवन्ति। अतो न तानि द्रव्यान्तरं प्रयोजयितुमीशते। तस्माल्लुप्येरन् शेषकार्याणि। ननु स्विष्टकृतोऽपूर्वार्थस्यैव सतस्तदीयप्रक्षेपांशे प्रतिपत्तित्वं सूक्तवाकाधिकरणे तृतीये प्रपञ्चितम्। ततश्चापूर्वसिध्यर्थं द्रव्यान्तरप्रयुक्तिः किं न स्यादिति चेन्न; तदपूर्वस्यापि परद्रव्योपजीवित्वेन द्रव्यान्तरप्रयोजकत्वाभावात्। ततश्च स्विष्टकृदर्थावत्तनाशे स्विष्टकृतो लोप एव न्यायात् सिध्यति। "यस्य हवींषि नश्येयुराज्येन ता देवताः प्रतिसङ्ख्याय यजेत" इति वचनादाज्येन तदनुष्ठानन्त्विष्टमेव, परकीयद्रव्योपजीवनेन द्रव्यान्तरप्रयोजकत्वाभावेऽप्यपूर्वसिध्यर्थं तदपेक्षासद्भावात्। इडाद्यर्थं गृहीतस्य तु होमाभावेन हविष्ट्वाभावाद्यस्य हवींषीत्याज्यप्रवृत्त्यभावात् प्रतिपत्तिव्यतिरिक्तापूर्वाभावाच्च लोप एव न्याय्यः॥

इति द्वितीयं स्विष्टकृदाद्यर्थावत्तनाशे शेषकार्याणां लोपाधिकरणम्॥ २॥

३

दर्शपूर्णमासयोश्शंयुवाकमनुक्रम्याम्नायते "हविश्शेषान् भक्षयन्ति" इति। किमिदं भक्षणमृत्विग्भ्योऽन्यैः कर्तव्यम्? उत ऋत्विग्भिरेव? इति संशये, पूर्वपक्षयति—

## निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥

अयं शेषभक्ष ऋत्विग्भ्योऽन्यैः कर्तव्यः। कुतः? निर्देशात्—"यजमानपञ्चमा इडां प्राश्नन्ति" इति वचनात्। यजमानः पञ्चमो येषामृत्विजान्ते यजमानपञ्चमाः—अध्वर्युर्होता ब्रह्माग्नीध्रश्चेति चत्वारः। पञ्चाप्येते कर्तारः प्रकृतत्वाद् भक्षणे प्राप्ताः। इडाभक्षणमपि 'उपहूतामिडा प्राश्नन्ति' इति प्राप्तम्। ततश्चेडामेव यजमानपञ्चमा भक्षयन्तीति परिसङ्ख्याविधिः। तस्माच्छंयुवाकोत्तरकालभक्षणमिदमेतेभ्योऽन्यैरेव कर्तव्यं प्रधानवत्। आग्नेय इति कृत्स्नस्य पुरोडाशस्य यागसाधनत्वप्राप्तौ "द्व्यवदानञ्जुहोति" इति यथा परिसङ्ख्याविधिस्तद्वदिति भाष्यम्। कृत्स्नस्य पुरोडाशस्य यागसाधनत्वमिति वार्तिकमते तु सर्वपुरोडाशस्य होमे प्राप्ते द्व्यवदानमात्रस्य निर्देशाद्यथा हो[म]स्तद्वदिति व्याचक्षते। वस्तुतस्तु वार्तिकमते यागसाधनं सर्वं होतव्यमिति न नियमः, प्रमाणाभावात्। द्व्यवदानहोमविधेरेकदेशसंस्कारविधित्वात् पर्यग्निकृतान्तपात्नीवतादौ व्यभिचाराच्च। अतस्सर्वस्य पुरोडाशस्य होमे प्राप्ते द्व्यवदानहोमविधिरित्यनुपपन्नमिति भाष्यमतमेव युक्तम् ॥

अथ सिद्धान्तयति—

## सर्वैर्वा समवायात् स्यात् ॥ ५ ॥

वा शब्दोऽवधारणे। इडाभक्षणं शंयुवाकोत्तरभक्षणञ्च सर्वर्त्विग्भिरेव कर्तव्यं स्यात्। कुतः? समवायात्—क्लृप्तत्वात् ॥

निर्देशादित्यत्राह—

## निर्देशस्य गुणार्थत्वात् ॥ ६ ॥

"यजमानपञ्चमा इडां प्राश्नन्ति" इति वचनस्य यजमानविधानार्थत्वात्। भक्षणं हि न पुरुषसंस्कारः, येन वपनादिष्विव प्राप्त एव यजमान इति न विधीयेत। द्वितीयानिर्देशात् द्रव्यप्रतिपत्तिरेव भक्षणम्। एवञ्च प्रतिपत्त्यर्थस्य तस्य कर्त्रपेक्षायां कर्मकरत्वेनर्त्विजामेव प्राप्तिः। ( सति सम्भवे भक्षणस्य क्रियमाणकर्मसु यजमानमुखेनैव प्रतिपत्त्यर्थत्वात्। अतो न यजमानस्य प्राप्तिरिति ) यजमानविधानार्थत्वे सम्भवति न परिसङ्ख्यापरत्वाश्रयणमुचितम्। तस्माच्छंयुवाकोत्तरभक्षणमृत्विग्भिरेव कर्तव्यम् ॥

---

() गपुस्तके ग्रन्थपातः.

अथ प्रधानवदित्यत्राह—

**प्रधाने श्रुतिलक्षणम् ॥ ७ ॥**

प्रधाने आग्नेययागे पुरोडाशैकदेशस्य द्व्यवदानस्य यागसाधनत्वं श्रुतिलक्षणम्–अनन्यथासिद्धद्व्यवदानवाक्यप्रमाणकमिति तत्र परिसङ्ख्याश्रयणमुचितम्। इह तु यजमानविधित्वसम्भवान्न परिसङ्ख्याश्रयणं न्याय्यम् ॥

नन्वश्वमेधे सन्ति परश्शताः पशवः। तत्र हविश्शेषेषु पाशुकर्त्विग्भिष्षड्भिर्भक्ष्यमाणेषु ऋत्विजो म्रियेरन्। तस्माच्छंयुवाकोत्तरभक्षणं तदन्यैरेव कर्तव्यमित्याशङ्क्य निराकरोति—

**पूर्ववदिति[1] चेन्न चोदनाविरोधात् ॥ ८ ॥**

पूर्ववत्—प्रकृतिवद् आश्वमेधिकपशुष्वपि पाशुकर्त्विजां षण्णां हविश्शेषभक्षं प्राप्नुयादिति चेत्तन्न; चोदनाविरोधात्—अश्वमेधे पशवः प्रत्यक्षविहिताः। तत्र चोदकतस्सर्वान् हविश्शेषान् भक्षयन्तो म्रियेरन्। ततश्च समाप्त्यसम्भवात् पशुविधयो विरुध्येरन्। ततश्च प्रत्यक्षविधयस्ते चोदकप्राप्तं शेषभक्षणं बाधेरन्। प्रकृतौ तु विरोधाभावादृत्विग्भिरेव भक्षयितव्यमिति ॥

इति तृतीय प्रकृतौ शंयुवाकोत्तरशेषभक्षणस्यर्त्विक्कर्तृकत्वाधिकरणम् ॥ ३ ॥

४

दर्शपूर्णमासयोः कपालमधिकृत्य श्रुतम्—"भिन्ने मनो ज्योतिरिति जुहोति" इति। किं कृत्स्नभिन्ने प्रायश्चित्तम्? उतैकदेशभिन्ने एव? किं वा उभयत्रापि? इति संशयः। यच्चूर्णीकृतमयोग्यं पुरोडाशप्रथनाय तत् कृत्स्नभिन्नं, यत् शकलेऽपनीते प्रयोजनसमर्थं तदेकदेशभिन्नम्। तत्र तृतीयपक्षं सिद्धान्तमवलम्बते—

**अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि ॥ ९ ॥**

एकदेशे कृत्स्नं च भिन्ने प्रायश्चित्तम्। कुतः? अर्थसमवायात् उभयथापि भिन्नार्थस्य समावेशात् ॥

---

1. प्रधानवदिति

अथ द्वितीयपक्षी प्रत्यवतिष्ठते—

**न त्वशेषवैगुण्यात्तदर्थं हि ॥ १० ॥**

तु. प्रत्यवस्थाने। निमित्तस्य हेतुत्वविवक्षया पञ्चमी। अशेषवैगुण्ये कृत्स्न-(कपालभेदे सति नेदं प्रायश्चित्तं, किन्तु तदेकदेशभेद एव। कुतः? तदर्थं हि—यतः होमलक्षणमिदं प्रायश्चित्तं भिन्नस्य) कपालस्य संस्कारार्थम्-भिन्न होमेन संस्कुर्यादिति वचनव्यक्तिः। सप्तमी हि द्वितीयार्थे। यथा अगारे गावो वास्यन्तामिति गोवासेनागारं संस्कुर्यादिति गम्यते। संस्कृतेन च तेन क्रियमाण स्वकार्यपुरोडाशप्रथनमविगुणं भूयादिति प्रायश्चित्तं क्रियते। न चाशेषभेदेन[1] चूर्णीकृतं कपाल होमसंस्कृतमपि स्वकार्ये क्षमं भवतीति तत्र प्रायश्चित्तमनर्थकमेव स्यात्। तस्मादेकदेशभेद एवेदं प्रायश्चित्तम्। न चैवं सप्तम्या लक्षणैव दोष इति वाच्यम्। संस्कार्यत्वे हि होमेन भिन्नं संस्कुर्यादित्येवं होमस्य प्रयोजनसम्बन्धो वाक्याल्लभ्यते, सन्निपत्यकारिता च। निमित्तसप्तम्यान्तु भेदने निमित्ते होमेन दर्शपूर्णमासावुपकुर्यादिति प्रकरणेन दुर्बलेन होमस्यापूर्वद्वारा आरादुपकारकतया सम्बन्धः। एवञ्च प्रबलप्रमाणसन्निपातित्वानुग्रहे सम्भवति लक्षणा "तप्ते पयसि" इत्यादिवन्न दुष्यति॥

अथ सिद्धान्ती परिहरति—

**स्याद्वा प्राप्तनिमित्तत्वान्न तद्धोमो[2] नित्यसंयोगान्न हि तस्य गुणार्थेनानित्यत्वात् ॥ ११ ॥**

वेत्यवधारणे। स्यादेवाशेषभिन्नेऽपि प्रायश्चित्तम्। कुतः? प्राप्तनिमित्तत्वात्-निमित्तस्य भेदनस्य तत्रापि सत्त्वादिति यावत्। नन्वस्य होमस्य भिन्नसंस्कारत्वाद-शेषभिन्नस्य च कार्याक्षमत्वेन संस्कारवैयर्थ्यादेकदेशभेद एव होम इत्यत आह—न तद्धोम[3] इति। होमोऽय न भिन्नकपालसंस्कार.। कुतः? नित्यसंयोगात—दर्शपूर्णमासप्रकरणे नित्यवदाम्नानसंयोगात्। होमो ह्यय दर्शपूर्णमासप्रकरणे नित्य-वदाम्नायते। स च होमो [4]यदि भिन्नं संस्कार्यत्वेनोद्दिश्य तत्संस्कारार्थत्वेन विधीयेत, तदा भिन्नशब्दस्य संस्कार्यप्रतिपादनोपक्षीणतया निमित्तपरत्वन्न स्यात्। असति

( ) गपुस्तके ग्रन्थपातः.

१. भेदनेन. ग.

२. तद्धर्म..

३. तद्धर्म ग.

४. यदा. ञ.

च निमित्तसंयोगे नित्यवदाम्नानाद्धोमोऽस्य नित्याङ्गं स्यात्। ततश्च होमेन दर्शपूर्णमासयोर्नित्यवदुपकुर्याद् भिन्नकपालं संस्कुर्वतेति वचनव्यक्तिरापद्येत। सा तु व्याहता। हि यत., गुणार्थेन—कपालविशेषणीभूतेन भेदनेन नित्यवदाम्नातस्य होमस्यान्वयो न सम्भवति। कुतः ? अनित्यत्वाद् भेदनस्य। ततश्च भिन्नस्य कादाचित्कत्वेन क्रतावनित्यत्वात्तत्संस्कारमुखेन होमस्य क्रत्वङ्गत्वे नित्यानित्यसंयोगदोषः प्रसज्येत। अतो भिन्न इति निमित्तसप्तम्येवैषा। तथा च कपाले भिन्ने सति होमेन दर्शपूर्णमासयोरुपकुर्यादिति वचनव्यक्तिः। नैमित्तिकश्च होमो निमित्ते सत्येव कर्माङ्गं भवति, न त्वसति निमित्त इति होमस्य नित्यवदनुष्ठानप्रसङ्गाभावान्नित्यानित्यसंयोगविरोधदोषो न प्रसज्यते। तस्माद् भेदने निमित्ते विधीयमानो होमोऽविशेषादेकदेशभेदे कृत्स्नभेदे च भवति॥

इतश्च न भिन्नसंस्कारो होम इत्याह—

**गुणानाञ्च परार्थत्वाद्वचनाद्व्यपाश्रयस्स्यात्॥ १२॥**

होमस्तावत् प्रकरणात् प्रधानार्थः। भिन्नमपि कपालं निमित्ततया होमं प्रयुञ्जानं होमार्थमेवेत्येव निमित्तपक्षे होमस्य भिन्नस्य च द्वयोरपि प्रधानार्थत्वं लभ्यते। संस्कारपक्षे तु कपालं प्रधानगुणहोमस्य [2]गुण इति स्यात्। न चैतद्युज्यते, 'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात् स्यात्' इति न्यायेनोभयोरपि प्रधानार्थत्वाश्रयणस्यैव युक्तत्वात्। ततश्च "भिन्ने जुहोति" इति वचनाद् भिन्नस्य संस्कार्यत्वेन व्यपाश्रयः—अनाश्रयणम्। किन्तु भेदननिमित्तकत्वमेव होमस्याश्रयणीयमित्यविशेषात् कृत्स्नभेदे एकदेशभेदे च भवति होमः॥

ननु "गायत्र्या त्वा शताक्षरया सन्दधामि इति भिन्नं कपालं सन्दध्यात्" इति द्वितीयाश्रुत्या सन्धानस्य भिन्नकपालार्थत्वावगमाद्धोमस्यापि तदर्थत्वमित्याशङ्क्य निराकरोति—

**भेदनार्थमिति चेन्नाशेषभूतत्वात्॥ १३॥**

भेदनेति कर्मणि ल्युट्। सन्धानं भिन्नकपालार्थमिति तत्सहचरितहोमोऽपि तथेति चेत्तन्न; अशेषभूतत्वात्। सन्धानं तावन्न भेदमावहति, येन सन्धानं भिन्नशेषस्यात्। नाप्यपनीयमानभेदशेषस्सन्धानं, भिन्नं हि कपालं न मन्त्रेण सन्धेयं

---

1 विशेषणे. अ. ग. 2. कपालगुण इति मातृकापाठः.

भवति किन्तु मृदादिना, तथापि सन्धीयमानस्य भेदबुद्धिर्नापैति। तथाच भेदन-प्रयुक्तो यः क्रतुवैगुण्यदोषस्तदपनयनमेव विधिवत्सन्धानेन जन्यत इति द्वितीया-बलात् कल्प्य, तथापि क्रतुवैगुण्यदोषापनयनात् क्रतोरेवातिशयो भवति। ननु भेदनस्येति न भिन्नस्य सन्धान[1]संस्कार्यत्वम्, किन्तु "यदि रथन्तरसामा सोमस्स्यात्" इतिवद्विशेषणस्य भेदनस्य निमित्तत्वमाश्रित्य भेदने सति कपालस्य विधिवत् सन्धानेन होमेन च क्रतोरुपकुर्यादिति पर्यवस्यति। तत्राशेषभेदे चूर्णभूतस्य सन्धानासम्भवाद्धोममात्रमनिवार्यम्॥

इतोऽप्यशेषभेदेऽपि होम इत्याह—

## अनर्थकश्चासर्वनाशे स्यात्॥ १४॥

यदि असर्वनाशे—एकदेशभेदे सत्येव होमस्स्यात नाशेषभेदे, तर्हि 'भिन्नं कपालमप्स्ववहरन्ति' इति संस्कारोऽनर्थकस्स्यात्, एकदेशभेदे सन्धानस्याम्नानात्। न चाप्सु प्रक्षिप्तमपि पुनरुद्धृत्य सन्धायोपधातु शक्यत इति वाच्यम, 'अन्यदुपदधाति' इति विरोधात्। तस्मात् कार्त्स्न्येनैकदेशेन वा भेदे प्रायश्चित्तम्। सर्वनाश इति पाठे त्वेव योज्यम्—एकदेशभेदस्यैव निमित्तत्वे 'भिन्नं कपालमप्स्ववहरन्ति अन्यदुपदधाति' इति विधिरनर्थकस्स्यादिति। चकारोऽनुक्तमपि प्रथमपक्ष तन्निरा-करणञ्च समुच्चिनोति। यथा भिदुरद्रव्यस्य कपालस्य परस्परसङ्घर्षाद्धस्तादिसङ्घर्षाद्वा[2] कियानप्येकदेशभेदोऽवश्यम्भावी[3]। तस्य चैकदेशभेदस्यावर्जनीयतया नित्यत्वात् भिन्नशब्दो व्यर्थस्स्यादित्यशेषभेद एव होमप्रयोजकः, नैकदेशभेदः। किञ्च भिन्नमिति भेदनविशिष्टद्रव्यमभिधीयते। विशेषणञ्च कार्त्स्न्येन विशेष्यं [4]व्याप्नोति। न ह्यङ्गुलिमात्रे रक्ते रक्तो देवदत्त इति प्रत्ययोऽस्ति। किञ्च विशेषणं व्यावर्तकम्। ततश्च भिन्नमेव नाभिन्नमिति गम्यते। कृत्स्नभेद एव तद् भवति। एकदेशभेदे [5]त्वेकदेशान्तरस्याभिन्नत्वात् भिन्नमभिन्नञ्च स्यात्। तस्मान्नैकदेशभेदे होम इति प्राप्ते ब्रूमः, 'सङ्घर्षात्। कियत्यप्येकदेशेऽपेते संघृष्टमित्येव बुद्धिर्भवति, न तु भिन्नमिति। यावता च कालेन विशिष्टे भेदबुद्धिर्भवति, तावदेकदेशविश्लेषो

---

१. कार्यत्वम्. अ.    २. हस्तादिसङ्घर्षात् नास्ति. क.
३. अवश्य भवति. अ.    ४. प्राप्नोति. अ.
५. चैकदेशान्तस्य, क.

भेद इह विवक्षित । तस्य चानित्यत्वाद् भवति होमप्रयोजकत्वम् । भेदनस्पर्शनादय एकदेशेऽपि वर्तमानास्तद्विशिष्टबुद्धिञ्जनयन्ति । रक्तत्वादयस्तु न जनयन्तीत्यनुभवबलात् कल्प्यम् । तस्मादेकदेशभेदेऽपि होम इति ॥

इति चतुर्थं कपालैकदेशभेदस्यापि प्रायश्चित्तप्रयोजकत्वाधिकरणम् ॥ ४ ॥

५

"यस्य पुरोडाशः क्षायति तं यज्ञ निर्ऋतिर्गृह्णाति । यदा तद्धविस्सन्तिष्ठते अथ तदेव हविर्निर्वपेत्" इति श्रुतम् । क्षायति अतिदग्धो भवतीत्यर्थः । क्षै क्षये अतिदाहेन कृष्णीभावोऽत्र विवक्षितः, धातूनामनेकार्थत्वात् । किमिदं कृत्स्ने एकदेशे च क्षामे भवति ? उत कृत्स्न एव ? इति संशये, सिद्धान्तेनोपक्रमते—

**क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १५ ॥**

क्षै धातोः क्तः । 'क्षायो मः' इति मत्वम् । तुः पूर्ववैषम्ये । कृत्स्नैकदेशभिन्नयोरविशेषेण भेदनहोमो भवतु । क्षामे तु यत् प्रायश्चित्तं तत् सर्वदाहे स्यान्नैकदेशदाहे । कुतः ? एकदेशस्यावर्जनीयत्वात् । पुरोडाशो हि तप्तेषु कपालेष्वधिश्रियते, उपरि चाङ्गारा अध्यूह्यन्ते दर्भैश्च । तदेवं पच्यमाने पुरोडाशे सूक्ष्मास्तदवयवा अवश्यं क्षायन्तीत्यवर्जनीयं पुरोडाशैकदेशस्य क्षाणं नित्यमेव स्यात् । तत्र यस्येति निमित्तश्रवणं नोपपद्येत । तस्मात् कृत्स्ने पुरोडाशे क्षामे प्रायश्चित्तं न त्वेकदेशे ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**दर्शनाद्वैकदेशे स्यात् ॥ १६ ॥**

वा शब्दः प्रत्यवस्थाने । एकदेशे क्षामेऽपि प्रायश्चित्तं स्यात् । कुतः ? दर्शनात्—दृश्यते निर्णीयतेऽर्थोऽनेनेति दर्शनम् न्यायः लिङ्गञ्च । एकदेशेनापि क्षायन् पुरोडाशः क्षायतीति व्यपदेशमर्हति, एकयापि कलया हीनश्चन्द्रः क्षीयत इतिवत् । अनदनीयत्वापादकञ्च क्षाणमिह विवक्षितम् । ततश्चादनीयत्वाविरोधिनः पाकनान्तरीयकातिसूक्ष्मावयवदाहस्यावर्जनीयत्वेऽपि ( अदनीयत्वविरोधी असूक्ष्मैकदेशदाहो निमित्तं भविष्यति । 'यदा तद्धविस्सन्तिष्ठते' इति चात्र लिङ्गम् । सर्वक्षाणे हि तस्य हविष

( ) नपुंसकं इत्यपाठ.

एवाभावाद् 'यदा तद्धविः' इति नोपपद्यते, क्षामस्य ) अनदनीयत्वेन यागानर्हत्वात् । तस्मादेकदेशदाहेऽपि प्रायश्चित्तमिति ॥

अथ सिद्धान्ती प्रत्याचष्टे—

## अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १७ ॥

वा शब्दोऽवधारणे । अधिकरणेति कर्मणि ल्युट् । सर्वदाहे अन्येन–हविषा एतद्धविरित्येतच्छास्त्राधिकृतसंस्थाप्राप्तिरुपपद्यते । किञ्चैकदेशदाहादन्येनैव निमित्तेन सर्वदाहेन 'यस्य हविः क्षायति' इत्यादिशास्त्राधिकृतप्रायश्चित्तप्राप्तिर्वेदनीया, न त्वेकदेशदाहेनापि, तस्यावर्जनीयत्वात् । यदा हि कुशलः कश्चित् कपालानां तापसाम्यमुदकसेचनादिकञ्चान्यूनाधिकपरिमाणमवबुध्य पचति, तदा अल्पांशदाहादेवादनीयत्वानुगुणः पाको भवति । यदा त्वकुशलः पचति तदा कदाचिद् बहिर्बह्वंशदाहादेवान्तरदनीयत्वं[1] कदाचिदेकस्यार्द्धस्यातिदाहादर्धान्तरस्यादनीयत्वमिति सर्वविधस्यैकदेशदाहस्यादनीयत्वविरोधिपाकनान्तरीयकतया तद्विलक्षणस्यैकदेशदाहस्य वक्तुमशक्यत्वान्न तस्य निमित्तत्वम् ॥

अथ सर्वदाहेऽन्येन हविषा प्रक्रान्तसमाप्तौ तद्धविरिति विरुध्यते । तद्धविश्शब्दस्य प्रकृतहविःपरत्वादित्याशङ्क्य निराकरोति—

## तद्धविश्शब्दान्नेति चेत् स्यादन्याय्यत्वादिज्यागामी हविश्शब्दस्तल्लिङ्गसंयोगात् ॥ १८ ॥

प्रकृतपुरोडाशपरामर्शितद्धविश्शब्दादन्येन हविषा संस्था नोपपद्यत इति चेन्मन्यसे, तत्रेदमुत्तरम्—एकदेशदाहनिमित्तत्वस्य न्यायापेतत्वात् सर्वदाहस्यैव निमित्तत्वाद्धविश्शब्दो यागविषयस्स्यात् । तल्लिङ्गसंयोगात्—तेन लिङ्गेन विशेषणेन हविषोपलक्षणतया संयोगात् । स पुरोडाशो हविर्यस्येति बहुव्रीहिणा प्रकृतहविरुपलक्षितयागस्तद्धविश्शब्देनोच्यते । तथा च सर्वदाहेऽपि "यस्य हवींषि नश्येयुराज्येन ता देवताः प्रतिसङ्ख्याय यजेत" इति वचनादाज्येन तद्धविरुपलक्षितयागस्य समाप्तिस्सम्भवतीति न कश्चिद्दोषः । अतस्सर्वदाह एव प्रायश्चित्तम् ॥

इति पञ्चमं पुरोडाशक्षामे सर्वदाहस्य प्रायश्चित्तप्रयोजकत्वाधिकरणम् ॥ ५ ॥

---

१. आन्तर तददनीयत्व. क.

६

सायन्दोहप्रातर्दोहावधिकृत्य श्रूयते—"यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति। आर्त्ति नाशम् आर्च्छेत् प्राप्नुयात्। तत्र किमुभयार्त्तौ पञ्चशराव' ? उतान्यतरार्त्तौ ? इति संशयः। यद्यपि ग्रहैकत्वाधिकरणे उद्देश्यविशेषणन्न विवक्षितमिति स्थितम्। इहापि निमित्तस्योद्देश्यत्वात्तद्विशेषणमविवक्षितम्। निमित्तस्वरूप विवक्षितमिति [1]प्राप्तम्, तथाप्युभयत्वमिह किं निमित्तस्वरूपान्तर्गतत्वाद्विवक्षितम्? उत तदनन्तर्गततया निमित्तविशेषणत्वादविवक्षितम्? इति भवति संशयः। तत्र पूर्वपक्षमुपक्षिप्य प्रतिक्षिपति—

**यथाश्रुतीति चेन्न ल णत्वादुपपातो हि कारणम् ॥ १९ ॥**

यावता विनोद्देश्यप्रतीतिर्न पर्यवस्यति तावन्निमित्तान्तर्गतमेव। प्रथमपठिताद्धि यस्येत्यस्मान्निमित्तबुद्धावुपजातायां किं यस्येत्यपेक्षायामनन्तरपठितमुभयमिति सम्बध्यते। किं तदुभयमित्यपेक्षाया तदनन्तरपठित हविरिति सम्बध्यते। एवमपि साकाङ्क्षत्वादार्त्तिमार्च्छेदिति सम्बध्यते। ततश्च यावच्छ्रुत तत्सर्वमपेक्षितत्वान्निमित्तस्वरूपान्तर्गतत्वादुभयत्वमपि विवक्षितमेव। अन्यथा हविरित्येतदपि न विवक्ष्येत इति चेत्तन्न; कुत.? लक्षणत्वात्—उभयत्वस्य निमित्तविशेषणत्वात्। निमित्तस्वरूपान्तर्गतत्वाभावात्। कुत.? उपपातो हि कारणम्—हि यतः, उपपातः हविरार्त्तिरेव कारणम पञ्चशरावे निमित्तम। तथाहि—येन विना निमित्तप्रतीतिर्न पर्यवस्यति तदेव निमित्तस्वरूपान्तर्गतम्, इतरत्तु प्रथमावगतमप्यनपेक्षितत्वादविवक्षितम। 'यस्यार्त्तिमार्च्छेदि'त्येतावता आर्त्ति प्राप्नुवतो निमित्तत्वमवगतम। 'हेतुहेतुमतोर्लिङ्' इति लिङ्विधानान् सर्वस्य च पुरुषस्य यत्किञ्चिद्वस्तु सर्वदा आर्त्तिमार्च्छत्येव, अन्ततश्चिन्तितनिमिषितचलितादि। तथाच यत्किञ्चिद्वस्तु सर्वदा नित्यमार्त्तमिति न तन्निमित्त (भवितुमर्हति। तथा 'यस्य हवि' इति हविर्मात्रमपि न निमित्त, हविषोऽपि नित्यत्वात, किन्तु 'हविरार्त्तिमार्च्छेत' इति मिलितं निमित्तम।) तावतैव च निमित्तप्रतीतिपर्यवसानादुभयपद न निमित्तस्वरूपप्रतीतिपर्यवसायीत्युभयत्व निमित्तविशेषणत्वादविवक्षितमेव। अथ "यस्योभयं (हवि." इत्येव निमित्त-

---

१. प्रा: मिति. अ, द, ग. () चिह्नान्तर्गतो भाग खण्डित कपुस्तके.

() गपुस्तके ग्रन्थपात.

मस्तु तावता निमित्तप्रतीतिपर्यवसानात्, आर्त्तन्तु न विवक्ष्यतामिति चेन्न; उभयत्वविशिष्टहविषोऽपि नित्यत्वेन निमित्तत्वानुपपत्तेः। न च 'यस्योभयमार्त्तिमार्च्छेदि'त्यार्त्तमुभयमुभयार्त्तिर्वा निमित्तमस्तु ) हविरित्येतन्न विवक्ष्यतामिति वाच्यम्, किन्तदुभयमित्युभयशब्दस्य साकाङ्क्षत्वात्, यस्य कस्यचिदुभयस्यार्त्तेर्नित्यत्वाच्च। अथ हविः प्रथममुभयपदेन सम्बध्य पश्चादार्त्या सम्बध्यताम्—उभय यद्धविः तदार्त्तिमार्च्छेदिति। एवञ्चोभयत्वविशिष्टवेषेण हविषा आर्त्तिसम्बन्धस्य निमित्तत्वान्न वाक्यभेद इति चेत्—न ह्युभयमिति हविरिति च परस्परं सम्बध्य पश्चादाख्यातेन सम्बन्धमर्हति, किन्तु परस्परनिरपेक्षमेव प्रत्येकमाख्यातेन सम्बध्यते, अरुणाधिकरणन्यायेन नामपदानां परस्परासम्बद्धानामेवाख्यातेन सम्बन्धात्। "अश्वाभिधानीमादत्ते" इत्यत्र तु समस्तत्वान्नाम्नोः परस्परान्वितयोराख्यातेन सम्बन्धः। समासे ह्येकार्थीभावात् परस्परान्वयः, न तु व्यासे। अथ हविरुभयपदयोः प्रत्येकमाख्यातसम्बन्धेऽप्यरुणैकहायनीवत् पार्ष्ठिकं परस्परान्वयादुभयत्वविशिष्टहविरार्त्तिर्निमित्तमिति चेत्—नैवम्; आर्च्छेदित्याख्यातोपात्ता आर्त्तिर्हि नाशः। स च न हविषा विशेष्टुं शक्यते। आर्त्तिर्हि किम् अयोगव्यवच्छेदकतया विशेषणम्? उतान्ययोगव्यवच्छेदकतया? नाद्यः, न हीदं सम्भवति—यस्यार्त्तिर्हविस्संयोगिन्येव, न तु तदसंयोगिनीति, नित्यत्वात्। सावयवस्य हविषः केनाप्यंशेन सर्वदा विनाशसत्वात्। न द्वितीयः; न हीदं सम्भवति—यस्य [1]हविर्गामिन्येवार्त्तिर्न वस्त्वन्तरगतेति, वस्त्वन्तराणामपि केषाञ्चित् सर्वदैवार्त्तेरवर्जनीयत्वात्। ततश्चाख्यातोपात्तया आर्त्या हविरेव विशेषणीयम्। शक्यते ह्यार्त्त्योयोगव्यावृत्त्या हविर्विशेष्टुम्—यस्यार्त्तमेव हविर्न तु केनाप्यंशेनानार्त्तमिति। तत्र यदि हविरिव उभयमित्येतदप्या [ख्या] तोपात्तायामार्त्तौ विशेष्यत्वेनैवान्वियात्, तदा आख्यातोपात्तमार्त्तेरेव विशेषणमपि प्रतिविशेष्यमावर्तेतेति [2]सत्यप्यत्रैकक्रियान्वये पार्ष्ठिकपरस्परान्वयो न सम्भवति। अतो नामार्थद्वयं प्रत्येकमेव निमित्तं स्यात्। ततश्च यस्यार्त्तं हविः उभयस्यार्त्तमुभयमिति वाक्यभेदः प्रसज्येत। न चार्त्तिक्रियावशाद् वैशिष्ट्याभावेऽपि विधेयपञ्चशरावयागक्रियावशात् परस्परवैशिष्ट्यमस्त्विति वाच्यम्, निमित्तयोरुद्देश्यत्वेन प्रधानतया उपादेयारुणादीनामिव क्रियावशीकरणासम्भवेन निमित्ताभ्यामेव पञ्चशरावयागक्रियाया वशीकृतत्वेन प्रत्येकसम्बन्धनिमित्त-

१. हविर्गामीत्येव. अ. फ.　　२. सत्यप्यत्र क्रियान्वये. थ.

वाक्यभेदात्। न च नामार्थानां कारकविभक्त्युपस्थाप्यत्वे सत्येव परस्परासम्बद्धानामाख्यातान्वयः, कारकाणाम्मिथस्सम्बन्धायोगात्, इह तु प्रथमान्तपदोपस्थाप्यत्वान्मिथोऽन्वयो न विरुध्यत इति वाच्यम्। उभयशब्दहविश्शब्दयोः परस्परान्वयं वदन् प्रष्टव्यः—आर्त्तिर्हविषो विशेषणं वा विशेष्यं वेति। नाद्यः; एवं हि उभयमार्त्तिश्च द्वयमपि हविषो विशेषणं स्यात्। तत्र द्वयोरपि विशेषणयोः परस्परवार्तानभिज्ञयोर्हविषा युगपदन्वयस्स्यात्—उभयं हविरार्त्तं[१] हविरिति। तथाचोभयत्वविशिष्टं हविः आर्त्तत्वविशिष्टञ्च हविर्निमित्तं स्यात्। एवमप्युभयत्वविशिष्टहविरार्त्तिर्निमित्तमिति नेष्टसिद्धिः। अथ आर्त्तिर्विशेष्यमित्यस्तु द्वितीयः पक्षः। तत्र च विशेषणयोरुभयहविश्शब्दार्थयोः परस्परान्वयादुभयत्वविशिष्टहविरार्त्तिर्निमित्तमिति न कोऽपि दोष इति चेन्न; आर्त्तेर्विशेष्यत्वस्य निराकृतत्वात्। किञ्च आर्त्तावुभयहविश्शब्दार्थयोर्विशेषणत्वेऽपि न मिथोऽन्वय। आर्त्तेर्निमित्तत्वेन तद्विशेषणयोस्तयोस्साहित्यस्य विवक्षितुमशक्यत्वेन परस्परवैशिष्ट्यायोगात्। न च निमित्तसम्पाताभावेऽप्युभयत्वं विधेयतया विवक्षितमिति वाच्यम्। यस्यार्त्तं[१] हविस्स पञ्चशरावं निर्वपेदिति विधीयमाने 'उभयत्वं [क्व]विधीयते। न तावद्धविःस्वरूपे, तस्य सिद्धत्वात्। नाप्यार्त्तहविषि, विशिष्टोद्देशदोपात्। तथा आर्त्तावपि न तद्विधेयम्, वाक्यभेददोषानिवृत्ते.। तस्मादुभयत्वं न विवक्षितम्। न चैकैकहविरार्त्तेर्निमित्तत्वे उभयत्वस्य क्वाप्यभावेनानुवादतयाप्यन्वयायोग्यत्वादुभयपदसमन्वय एव न स्यादिति वाच्यम्। न सायन्दोहार्त्तिरेव निमित्तम नापि प्रातर्दोहार्त्तिरेव, किन्तूभयमपि परस्परानपेक्षं निमित्तमित्येवं समन्वयसम्भवात।

ननु तैत्तिरीयशाखाया "यस्य सायन्दुग्धं हविरार्त्तिमार्च्छेति" इत्यादिना सायन्दोहार्त्तौ प्रायश्चित्तमनुक्रम्य "यस्योभयं हविः" इत्यादिना प्रायश्चित्तान्तर श्रूयते। तत्र च यस्योभयमित्येतावदेव विवक्षितम। हविरार्त्तिमार्च्छतीति तु प्रकरणप्राप्तानुवादः। प्रकरणलभ्ये चार्थे शब्दव्यापाराभावाद्वाक्यभेदाप्रसक्तेरुभयविधार्त्तावेव पञ्चशराव इत्युचितमिति चेन्न; शाखान्तरे दर्शपूर्णमासप्रकरणे "यस्योभयम" इत्याद्येवाम्नातम्, न तु पृथक् "यस्य सायन्दुग्धम्" इत्याम्नातमित्यदोषः। एवंविधशाखान्तरस्था नूत्नप्रवृत्तेरेवानुमेयम। ननु तैत्तिरीयशाखायामुभयत्वस्य विवक्षितत्वात तदनुसारेण शाखान्तरस्थमप्युभयपद विवक्षितार्थकमिति चेन्न, शाखान्तरोप-

१ उभयत्वं विधीयते इत्येव मातृकासु पाठः। 'क्व' इति संकल्पितम्।

संहारानित्यत्वस्य शाखान्तराधिकरणे प्रपञ्चितत्वात्। ननु उभाववयवावस्य उभयम्, 'सङ्ख्याया अवयवे तयप्' इति तयप्। 'उभादुदात्तो नित्यम्' इत्ययजादेशः। ततश्चोभयशब्दार्थस्यावयवद्वयारब्धसमुदायस्यैकावयवनाशेऽपि 'नाशादन्यतरनाशेऽपि[1] पञ्चशराव इति वैयाकरणाः। ततश्चोभयत्वविवक्षायामप्येकनाशे पञ्चशरावस्यादिति चेत्, उभयशब्दस्य हविश्शब्दसामानाधिकरण्याद् द्विशब्दपर्यायत्वमित्यधिकरणप्रवृत्तिरिति दिक्॥

इति षष्ठं हविरार्त्यधिकरणम्॥ ६॥

७

ज्योतिष्टोमे श्रूयते "अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इति। तत्र "सोममभिषुणोति" "यद् ग्रहाञ्जुहोति" इति होमाभिषवौ प्राप्तौ। क्रमोऽपि तयोरर्थात् प्राप्तः। न हि हुतस्याभिषवस्सम्भवति। होत्रादीनां सदसि कर्मप्रवृत्तानां वषट्कारसमाख्यानिमित्तभक्षणं सदसि प्राप्तम्, अध्वर्युणा चोपहवस्तत्र सतैव देयः। अतस्सदसीत्यप्यर्थप्राप्तम्, आहवनीयात् स प्रत्यञ्च एव प्रतिपद्यत इति प्रत्यक्त्वमपि न विधेयम्। हुत्वा प्रत्यञ्चः परेत्येति क्रमोऽपि न विधेयः। गमनं हि भक्षार्थं, हुतस्य च भक्षणमिति हुत्वैव [2]गमनस्यार्थप्राप्तत्वात्। ततश्चाभिषवकर्तुश्च भक्षो विधीयत इति स्थितिः। तत्र किं होमाभिषवयोरन्यतरकर्तुर्भक्षः? उत तदुभयकर्तुः? इति संशये, पूर्वपक्षयति—

**होमाभिषवभक्षणञ्च तद्वत्॥ २०॥**

यथा पञ्चशरावोऽन्यतरार्तौ भवति, तद्वत् होमाभिषवसंयुक्तं श्रुतं भक्षणमपि तदन्यतरस्य कर्तुर्भवति। भक्षणं हि होमाभिषवकर्तृसंस्कारो वा स्यात्? होमाभिषवनिमित्तको वा? उभयथापि नोभयसाहित्यं विवक्षितम्। भक्षणसंस्कारं प्रत्यभिषवहोमकर्त्रो निमित्तयोरपि होमाभिषवयोरुद्देश्यत्वेन तत्साहित्यस्याप्यविवक्षितत्वात्। तस्माच्चमसाध्वर्यूणामभिषवकर्तृत्वाभावेऽपि होमकर्तृत्वादस्ति भक्षः। चमसाध्वर्युहुतचमसेष्वध्वर्युप्रतिप्रस्थातृनेष्टॄणामप्यभिषवकर्तृत्वादस्ति भक्ष इति फलति। नन्वभिषुत्येति 'समानकर्तृकयोः पूर्वकाले' इति क्त्वान्तं साकाङ्क्षत्वाद्-

---

१ नाशादन्यतरनाशेऽपि. नास्ति. क. २ गमनस्यापि. अ.

व्यवहितोत्तरेण हुत्वेत्यनेनान्वेति । एवञ्चाभिषवसमानकर्तृकहोमाभिधानाद् भक्षस्याभिषवहोमोभयविशिष्टकर्त्रा सम्बन्धान्नान्यतरकर्तुः भक्ष इति चेत्—अभिषुत्येतिवत् हुत्वेत्यपि क्रियान्तरसाकाङ्क्षम् । न च साकाङ्क्षयोः परस्पर सम्बन्धो युक्तः । तस्माद्यन्निराकाङ्क्षीकरणसमर्थमाख्यातं तदेव द्वयमप्यभिलपतीति भक्षयन्तीत्यनेनैव द्वयोरपि सम्बन्धः । न च सत्यप्याख्यातसम्बन्धेऽरुणकहायनीन्यायेन परस्परसम्बन्धः पार्ष्ठिकोऽस्त्विति वाच्यम् । उपादेयानामेव हि क्रियावशीकृतत्वात् पार्ष्ठिक परस्परान्वय , न तूद्देश्यानाम् । तस्मादन्यतरकर्तुर्भक्षणम् ॥

अथ सिद्धान्तयति—

## उभाभ्यां वा न हि तयोर्धर्मशा म् ॥ २१ ॥

वाशब्दोऽवधारणे । उभाभ्यां मिलिताभ्यामेव कर्तृविशेषणाभ्यां होमाभिषवाभ्या भक्षण प्रत्येतव्यम् । हि यत', तयोः—उद्देश्यताया षष्ठी । तौ कर्तारावुद्दिश्य भक्षणधर्मस्य विधायक शास्त्र नास्ति । 'सोममि'ति द्वितीयानिर्देशेन भक्षस्य सोमप्रतिपत्तित्वावगमात् । किन्तु अभिषवहोमकर्तृक भक्षणमिह [न] विधीयते । नापि होमाभिषवयोर्निमित्तयोर्भक्षणविधि , यद्वृत्ताद्यभावात् । ततश्चोपादेयत्वात् कर्त्रोस्तत्साहित्यं विवक्षितम् । न चैवं सति भक्षान्तराय पुनरप्यभिषवहोमौ कर्तव्यौ स्याताम् मिति वाच्यम्, यागार्थे कृतयोरेव तयोः कर्तृविशेषणत्वाभ्युपगमात् । ततश्चान्यार्थे तयोरनुष्ठाने सति तत्कर्त्रा भक्षोऽनुष्ठीयत इति तयोर्निमित्तत्वस्यार्थिकत्वान्न तद्भेदकृतो वाक्यभेदः । तस्मादुभयकर्तुरेव भक्ष , नान्यतरकर्तुः ॥

इति सप्तम होमाभिषवकर्त्रोरुभयोर्भक्षकर्तृत्वाधिकरणम् ॥ ७ ॥

८

"यस्याभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयमेव तस्य प्रायश्चित्तिः" इति श्रुतम् । अनुगतौ—विलय गतौ । अग्नी—गार्हपत्याहवनीयौ प्रति सूर्यः निम्रोचत्—अस्तमियात् । व्यक्तमन्यत् । तत्र किमन्यतरानुगमो निमित्तम ? उत उभयानुगम एव ? इति संशये, पूर्वपक्षयति—

## पुनराधेयमोदनवत् ॥ २२ ॥

पञ्चशरावौदनो यथा अन्यतरार्त्तौ भवति, एव पुनराधेयमप्यन्यतरार्त्तौ

भवति । अभिषुत्य हुत्वा भक्षयतीत्यत्र निमित्तत्वस्यार्थिकतया तद्भेदकृतवाक्यभेदाभावेऽपि[1] निमित्तत्वस्यात्र शाब्दत्वेन [2]तद्भेदाद्वाक्यभेदसत्वात् ॥

अथ सिद्धान्तयति—

**द्रव्योत्पत्तेर्वोभयोस्स्यात् ॥ २३ ॥**

वा शब्दोऽवधारणे । उभयोरेवाग्न्योरनुगमो निमित्तं स्यात्, नान्यतरस्य । कुतः ? द्रव्यो(त्पत्ते'—पुनराधेयेन द्वयोरेवाग्न्योरुत्पत्तेः । शतपथब्राह्मणे हि "अग्निमादधीत" इत्यग्निद्वयजनकमाधानमुत्पन्नम् । तच्चाधानं गुणविकृतं पुनराधेयमित्युच्यते । तच्चोभयोरेवो)त्पादकमभिनिम्रोकाभ्युदययोर्विहितमुभयानुगम एव स्यात्, नान्यतरानुगमे, तस्योभयाग्निजनकत्वस्वाभाव्यात् । न चाधानादिदं कर्मान्तरमेकाग्न्युत्पादनेऽपि समर्थमिति वाच्यम्, 'पुनराधेयमेव' इत्येवकारसामर्थ्यात् । आवृत्तौ ह्ययमेवशब्दः, यथा पयसा हुत्वा देवदत्त. पुनः पयसैव भुङ्क्त इति । तेन प्रसिद्धाभेदज्ञापनात् कर्मान्तरत्व न सम्भवति । न चाग्निद्वयोत्पादेऽप्येकस्य परित्यागसम्भवादन्यतरानुगमेऽपि पुनराधेयमिति वाच्यम् । विना शास्त्र परित्यागे "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति दोषश्रवणात् । अविद्यमानयोरेवोत्पादनसमर्थस्य एकस्मिन्विद्यमाने स्वकार्यासामर्थ्याच्च । न चाग्नी आदधीतेत्यग्निद्वित्वस्य तत्साहित्यस्य चोद्देश्यगतत्वादविवक्षेत्येकाग्न्युत्पादनेऽप्याधानस्य सामर्थ्यमिति वाच्यम् । आहवनीयाद्युद्देश्यस्वरूपस्य प्रागनिर्ज्ञातत्वेन तत्सङ्ख्यासाहित्ययोश्चमसाध्वर्युबहुत्वन्यायेन विवक्षिततया एकाग्न्युत्पादने आधानस्यासामर्थ्यात् । तस्मादुभयाग्न्यनुगम एवेदं पुनराधेय, नान्यतरानुगमन इति तन्त्रवार्तिकतन्त्ररत्नयोः । "अग्नीनादधीत" इत्युत्पत्तिवाक्यमुदाहृतम् द्वितीयस्य तृतीये 'आधाने सर्वशेषत्वात्' इत्यत्र । "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिवाक्यान्येवोत्पत्तिविधय', गुणविनिर्मुक्तमुत्पत्तिवाक्यान्तरन्नास्तीति वार्तिकादिषु स्थितम् । तत्र यद्वक्तव्य तत्तत्रैव वर्णितं, षष्ठस्य प्रथमे 'चातुर्वर्ण्यमविशेषात्' इत्यधिकरणे च प्रपञ्चितम् ॥

इत्यष्टममुभयाग्न्यनुगमस्यैव प्रायश्चित्तप्रयोजकत्वाधिकरणम् ॥ ८ ॥

---

१. अपि नास्ति. ग. २ तद्भेदे. ग.

() गपुस्तके ग्रन्थपात.

९

"यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनन्निर्वपेत्" इति दोहार्त्तौ तद्यागे किं पञ्चशराव ओदनः प्रतिनिधित्वेन विधीयते ? उत तद्द्रव्यकं कर्मान्तरं नैमित्तिकम् ? इति संशये, पूर्वपक्षयति—

## पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २४ ॥

पञ्चशराव ओदनः प्रतिनिधिस्स्यात् । कुतः ? द्रव्यश्रुतेः—दोहार्त्तौ तद्यागेऽपेक्षितस्य पञ्चशरावौदनद्रव्यस्य श्रवणात्, कर्मान्तरन्तु नापेक्ष्यते; तथा सत्यदृष्टान्तरकल्पनागौरवात् । आनन्तर्यापरपर्यायप्रत्यासत्तिलक्षणश्रुत्यनुग्रहादित्यप्यर्थः । निर्वापे हि धात्वर्थे समानपदोपात्ते द्रव्यमस्मिन् पक्षे विधिना विधीयत इति श्रुत्यनुग्रहः । कर्मान्तरपक्षे तु निर्वपतेः परेण प्रत्ययेन द्रव्यदेवतयोस्सम्बन्धविधानादत्यन्तं वाक्यमेवानुगृहीतं स्यात् । तस्माद्दोहस्य प्रतिनिधिः पञ्चशरावः प्रक्रान्तस्य तद्यागस्य चैन्द्रत्वादैन्द्रपदं नित्यानुवादः । न च पञ्चशरावपरिमाणस्यौदनद्रव्यस्य च विधौ वाक्यभेद इति वाच्यम् । पञ्चशरावशब्दो हि पञ्च शरावाः परिमाणमस्येत्यर्थे 'तदस्य परिमाणम्' इत्युत्पन्नस्य तद्धितस्य 'अध्यर्द्धपूर्वात्' इति लुकि निष्पन्नः । ततश्च विधिसम्बन्धात् पूर्वमेव तद्धितेन परिमाणविशिष्टौदनावगतौ तस्य विशिष्टस्य सकृद्विधिव्यापारेण विधातुं शक्यत्वान्न वाक्यभेदः । एवञ्च पूर्वत्र "उभावग्नी" इति विशिष्टोद्देशाद्यथा न वाक्यभेदस्तथेहापि वाक्यभेदाभावादस्तु प्रतिनिधिरिति प्रत्यवस्थाने तु शब्दः ॥

अथ सिद्धान्तयति—

## चोदना वा कर्मदेवताविधेरवाच्ये हि ॥ २५ ॥

वा शब्दोऽवधारणे । ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति कर्मान्तरविधिरेव । कुतः ? कर्मदेवताविधेः—प्रक्रान्ते कर्मणि पञ्चशरावौदनस्य प्रतिनिधित्वेन विधिदशायामैन्द्रमिति देवताया विध्यवश्यम्भावाद्वाक्यभेदस्य दुर्वारत्वात् । ननु दोहयागस्यैन्द्रत्वादैन्द्रपदं नित्यानुवाद इत्यत आह—अवाच्ये हीति । न हीन्द्रो नित्यप्राप्तः, महेन्द्रस्यापि पक्षे प्राप्तत्वात्, पाक्षिकानुवादस्यान्याय्यत्वात् । न हीन्द्र-

महेन्द्रौ देवते इन्द्रशब्दस्य वाच्ये भवत, द्वितीये स्तुतशस्त्राधिकरणे तथा निर्णीतत्वात्। तस्मात् द्रव्यदेवताविशिष्टकर्मान्तरमेवेह विधीयते ॥

इति नवम पञ्चशरावौदनस्य कर्मान्तरत्वाधिकरणम् ॥ ९ ॥

१०

अमावास्यायां दोहार्त्तौ निमित्ते पञ्चशरावद्रव्यकयागः कर्मान्तरं विधीयत इति स्थितम्। स पञ्चशरावयागः किं दार्शिकदोहयागस्य प्रत्याम्नायः? उत तदङ्गम? इति संशये, पूर्वपक्षयति—

## स प्रत्यामनेत् स्थानात् ॥ २६ ॥

स.—पञ्चशरावयाग प्रत्यामनेत्–दार्शिकदोहयागस्य प्रत्याम्नायो भवेत्। तत्कार्यकारी स्यादिति यावत्। कुतः? स्थानात—दोहयागकार्ये विधानादित्यर्थः। यद्यपि नैवं प्रत्यक्षविधिरस्ति, तथापि पञ्चशरावयागस्तावत् फलमपेक्षते। दोहार्त्तौ तद्यागासम्भवेन तदपूर्वं साधनमपेक्षते। तयोश्च परस्पराकाङ्क्षावशात् दोहार्त्तौ तद्यागाभावे सति तदपूर्वार्थं पञ्चशरावयागं कुर्यादिति विधि· पर्यवस्यति। अभावविधिश्च स्थानापत्तौ प्रमाणमिति नवमे वक्ष्यते। किञ्च स्थानात्—अवस्थानादङ्गविधिर्भवेत्। दोहयागस्तु दोहार्त्तौ निवृत्त·। निवृत्तस्य च कर्मणोऽङ्गानर्थक्यादङ्गविधिरनुपपन्न'। तस्मात् पञ्चशरावयागो दोहयागस्य प्रत्याम्नाय', न तु तदङ्गम् ॥

अथ सिद्धान्तयति—

## अङ्गविधिर्वा निमित्तसंयोगात् ॥ २७ ॥

वा शब्दोऽवधारणे। 'दोहयागाङ्गतया पञ्चशरावयागविधिरेवायम, न तु दोहयागप्रत्याम्नायविधि। दर्शपूर्णमासयोर्दोहयागप्रकरणे पञ्चशरावयागस्य दोहार्त्तिनिमित्तसंयोगेन विधानात्। यद्यपि तैत्तिरीयशाखायामनारभ्यविहित· पञ्चशरावयागः, तथापि शाखान्तरे प्रकरणाम्नानमभ्युपेत्य हविरार्त्त्यधिकरणप्रवृत्तत्वान्न दोषः। यत्तु दोहार्त्तौ तद्यागाभावे सति विधानात् प्रत्याम्नाय इति, तन्न; न हि दोहार्त्तावमावास्या निवृत्ता। (लौकिकयोर्दधिपयसोरसम्भवेन तद्यागप्रवृत्त· सम्भवात्। न च) लौकिकयोर्दधिपयसोस्संस्काराभावेन कर्मानर्हत्वमिति वाच्यम। आर-

१ दोहयागानुगतयागाङ्गतया. क.          ( ) गपुस्तके ग्रन्थपात.,

न्धस्य कर्मणोऽवश्यसमाप्यतया लौकिकद्रव्यतोऽपि तत्सम्भवात्। तथा च दोहार्त्तौ लौकिकेनापि द्रव्येण सम्भवन्त तद्यागमुपेक्ष्य तद्यागापूर्वं साधनान्तरं पञ्चशरावयागमपेक्षते। दोहार्त्तिजनितवैगुण्यसमाधानन्त्वपेक्षितमिति तदुपकारमुखेन तद्यागस्य नैमित्तिकाङ्गं पञ्चशरावयाग.। ननु भवतु प्रत्याम्नायः अङ्गं वा, उभयथापि न फलभेदः। "अथोत्तरस्मै हविषे वत्सानपाकुर्यात्" इति वचनबलेन पक्षद्वयेऽपि पुनः प्रयोगतदभावाभ्यामनुष्ठानविशेषाभावादिति चेत्, सत्यम्; पूर्वपक्षे दार्शिकदोहस्थानापत्त्या तद्धर्मलाभ, न सिद्धान्ते॥

इति दशमं पञ्चशरावौदनस्य दर्शाङ्गत्वाधिकरणम्॥ १०॥

११

इदमामनन्ति—"सर्वाभ्यो वा एष देवताभ्यस्सर्वेभ्यश्छन्दोभ्यस्सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यस्सत्रायागुरते स विश्वजितातिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत, सर्वाभ्य एव देवताभ्यस्सर्वेभ्यश्छन्दोभ्यस्सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते" इति। अत्र 'सर्वाभ्यो वा एष' इति पूर्ववाक्यमेतच्छब्दघटितम्। 'स विश्वजिता' इत्युत्तरवाक्यं तच्छब्दघटितम्। तदुभयोरपि यच्छब्दाकाङ्क्षत्वात् 'यस्सत्रायागुरते' इत्येतदुभयत्रान्वेति। यस्सत्राय आगुरते सङ्कल्पयते, गुरु उद्यमने उद्यमनमुद्योगः, इह सङ्कल्पो विवक्षितः। एषः सङ्कल्पितवान् सर्वेभ्यो देवताच्छन्दःपृष्ठेभ्य आत्मान आगुरते—सङ्कल्पयति। अतो यस्सत्रायागुरते सः विश्वजिता सर्वपृष्ठसर्वस्तोमसर्वस्वदक्षिणेन यजेत। तेन च विश्वजिता सर्वदेवताच्छन्दःपृष्ठसात्कृतमात्मानं निष्क्रीणीते मोचयतीत्यर्थ.। तत्र संशय.—यस्सत्रायागूर्य सत्रकर्म प्रयुङ्क्ते, तस्याय विश्वजित्? उताप्रयुञ्जानस्य? अथवोभयो.? इति। अविशेषादुभयोरिति [1]प्रथमपूर्वपक्ष। सत्रायागूर्य सत्र प्रयुञ्जानस्यैव विश्वजित्। एवं हि विश्वजितस्सत्राङ्गत्वात फलं न कल्पयितव्य भवति। सत्रमप्रयुञ्जानस्य तु विषये विश्वजितः फलकल्प्यं स्यादिति द्वितीय पूर्वपक्षः। सत्रायागूर्य तदप्रयुञ्जानस्यैव विश्वजिदिति पक्ष सिद्धान्तयति—

**विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात्॥ २८॥**

गुरवधारणे। सत्रायागूर्य सत्रकर्मणि अप्रवृत्ते—अप्रयुक्ते सत्येवायं विश्वजित्

१. प्रथम प.

स्यात् न तु प्रवृत्ते सत्रे, यतः भावः—प्रवृत्ते सत्रे आगोरणस्य ( नित्य विद्यमानता । विश्वजिति हि 'यस्सत्रायागुरते' इति यच्छब्दोपबन्धादागोरणं निमित्तमवगतम् । कादाचित्कमेव च निमित्तं भवति । यदि प्रवृत्तसत्रस्यैव विश्वजिदङ्गं स्यात्, तर्हि तत्रागोरणस्य ) नित्यत्वान्निमित्तत्वं नावकल्पेत । नन्वेवमप्रवृत्ते सत्रे विश्वजिद्विधेः फलं कल्प्यं स्यादित्यत्राप्येतदेवोत्तरम्—भाव इति । यतस्सत्रफलस्यैव सद्भावः । अतो न फलं कल्प्यमित्यर्थः । ऋद्धिफलाय सत्रं सङ्कल्प्य दैवान्मानुषाद्वा प्रतिबन्धात् सत्रेऽप्रवृत्ते सति विश्वजिद्विधीयते । तस्य च फलाकाङ्क्षायां सत्रमागूर्य कर्तुमशक्नुवतस्तत्फलार्थं साधनमपेक्षमाणस्य मनसि विपरिवर्तमानं यत् सत्रफलन्तदेव सम्बध्यत इति न फलान्तरं कल्प्यम् । तथा च सत्रं ऋद्धिफलायागूर्य तदशक्तौ विश्वजितं [1]तत्फले उपायत्वेन कुर्यादिति फलितम् ॥

इतोऽप्येवमित्याह—

**निष्क्रयवादाच्च ॥ २९ ॥**

सत्रागोरणेन सर्वदेवताच्छन्दःपृष्ठसात्कृतस्यात्मनो विश्वजिता निष्क्रयं मोचनं वदति । प्रवृत्ते तु सत्रे तद्दोषस्यैवाभावात्तन्निष्क्रयवचनं नोपपद्यते । अतोऽपि विश्वजिदप्रवृत्त एव सत्रे प्रत्येतव्यः ॥

इत्येकादश सङ्कल्पितसत्रकरणाशक्तौ विश्वजिदनुष्ठानाधिकरणम् ॥ ११ ॥

१२

"बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्" इति श्रुतम् । 'व्राताद् भोजनतन्निवृत्त्योः' इति व्याकरणसूत्राद् व्रतमिह भोजनं विवक्षितम् । एवमपि प्राप्नोति । किमिह बर्हिस्साधनकं वत्ससाधनकञ्च व्रतं विधीयते ? उत व्रते बर्हिषो वत्सानाञ्च साधनतया विधिः ? [ किं वाङ्गतया विधिः ? ] अथवा व्रते बर्हिराहरणकालस्य वत्सापाकरणकालस्य चाङ्गतया विधिः ? यद्वा अनुवादः ? इति संशये, पूर्वपक्षयति—

**वत्ससंयोगे व्रतचोदना स्यात् ॥ ३० ॥**

वत्सग्रहणमुपलक्षणम् । बर्हिस्संयुक्ते वत्ससंयुक्ते च वाक्ये व्रतचोदना—बर्हिर्वत्ससाधनकव्रतविधिस्स्यात् ॥

---

( ) गपुस्तके ग्रन्थपातः.

[1] तदुपायत्वेन. अ.

अथामुं पक्षं निराकुर्वन् कालविधिरिति चतुर्थपक्षमुद्भावयति—

**कालो वोत्पन्नसंयोगाद्यथोक्तस्य ॥ ३१ ॥**

वा शब्द एवार्थे। बर्हिषेति वत्सैरिति च सहार्थे तृतीया। बर्हिराहणसंयुक्तः वत्ससंयुक्तश्च काल एव यथोक्त[स्य] 'व्रतं व्रतयति' इति वचनान्तरतो रागतश्च प्राप्तस्य व्रतस्य विधीयते, न तु बर्हिर्वत्साधनकव्रतविधिः। [कुतः ?] उत्पन्नसंयोगात्-उत्पन्नव्रतसंयोगोऽत्र भवति, न तु व्रतस्योत्पत्तिरत्र। तस्माद्व्रते कालविधि ॥

इतोऽप्येवमित्याह—

**अर्थापरिमाण ॥ ३२ ॥**

तृतीयार्थस्य साधनत्वस्यानिर्धारणाच्चेत्यर्थः। इतिकर्तव्यतायां ज्ञातायां साधनत्वं निर्धार्यते। न चात्र बर्हिपा वत्सैश्च भोजने साध्ये इतिकर्तव्यता लोकतो वेदतो वा निश्चिता। अतो न वत्ससाधनकव्रतविधिः। एतेन व्रते बर्हिषो वत्सानाञ्च साधनत्वेन विधिरिति द्वितीयपक्षोऽपि प्रत्युक्त। तस्मात् कालविधिः ॥

अथ बर्हिर्वत्साना व्रताङ्गत्वेन विधिरस्त्विति तृतीयपक्षमुद्भावयति—

**वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३३ ॥**

तु शब्दश्शङ्कायाम। वत्सग्रहणमुपलक्षणम। जातावेकवचनम्। बर्हिर्वत्स व्रते अङ्ग स्यात्, न तु कालविधिः, श्रुतिसंयोगात्—एवं सत्येव बर्हिर्वत्सशब्दयोर्मुख्यवृत्त्यात्मिकया श्रुत्या सयोगात्, अन्यथा काललक्षणाप्रसङ्गात् ॥

तदमु तृतीयपक्ष निराकुर्वन् व्रते वचनान्तरप्राप्तकालानुवाद इति पञ्चमपक्षं सिद्धान्तयति—

**कालस्तु स्यादचोदनात् ॥ ३४ ॥**

तुर्नार्थे। न बर्हिर्वत्समङ्गतया व्रते विधीयते, किन्तु कालोऽत्रानूद्यते। कुतः ? अचोदनात्, कालस्येति शेष.। "पूर्णमासे पुरा बर्हिप आहर्तोर्जायापती अश्नीतः पुरा वत्सानामपाकर्तोरमावास्यायाम" इति व्रते कालविधिस्स्पष्ट। तेनेदमेकं वाक्यं कालानुवादित्वे भवति। यद्यपोऽपि कालस्य वा बर्हिर्वत्सस्य अङ्गतया वा विधिस्स्यात वाक्यं भिद्येत। सम्भवति च बर्हिपा आहरिष्यमाणेन वत्सैश्चापाकरिष्यमाणैस्संयुक्त काले इत्यर्थाश्रयणादेकवाक्यता। तस्मान्नाङ्गतया बर्हिर्वत्सविधि', किन्तु कालानुवाद एव ॥

इतोऽपि न बर्हिर्वत्साङ्गविधिरित्याह—

**अनर्थकश्च कर्मसंयोगात् ॥ ३५ ॥**

अयं बर्हिर्वत्साङ्गविधिरशक्यार्थकः। कुतः ? कर्मसंयोगात्। भोजनकर्मणि ओदनादिद्रव्यस्यैव साधनतया संयोगात्। बर्हिर्वत्सस्य च भोजनकार्येऽयोग्यत्वेन साधनत्वासम्भवेन साधनतयाङ्गत्वस्य वक्तुमशक्यत्वात् ॥

ननु रज्जुबद्धेन मेक्षणाकृतिना हस्तस्थानीयेन बर्हिषा वत्समांसेन च भोजनं शक्यते कर्तुमित्यत आह—

**अवचनाच्च स्वशब्दस्य ॥ ३६ ॥**

रज्जुबद्धेन बर्हिषा वत्समांसेनेत्यस्य स्वशब्दः वाचकशब्दः तस्य वचनं पाठो नास्ति। रज्जुसहायबर्हिर्विवक्षायां निरपेक्षसाधनत्वभङ्गः। मांसार्थं वत्सविशसने वत्सत्वव्याघातश्च। तस्मात् "पुरा बर्हिष आहर्तोर्जायापती अश्नीतः पुरा वत्सानामपाकर्तोरमावस्यायाम्" इति वचनप्राप्तकालस्यायमनुवादः—"बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्" इति। यद्यपि तैत्तिरीये एतद्वाक्यद्वयमनृतमांसस्त्रीवर्जनादिनियमस्वाकारात्मकव्रतोपायनमधिकृत्य प्रवृत्तं, तत्कथमशनवाक्यद्वयेनैकवाक्य स्यादिति, तथापि शाखान्तरेऽशनमेवाधिकृत्य एतद्वाक्यप्रवृत्तिमभ्युपगम्याधिकरणप्रवृत्तिरिति न दोषः ॥

इति द्वादशं बर्हिर्वत्साधिकरणम् ॥ १२ ॥

१३

वत्सापाकरणात् प्राग्व्रतमिति स्थितम्। किमिदं मन्त्रयोर्विपर्यये ? [illegible] विपर्ययेऽपि ? इति संशये, पूर्वपक्षयति—

अथ सिद्धान्तयति—

**कालार्थित्वादुभयोः प्रतीयेत ॥ ३८ ॥**

उभयोः–सन्नयदासन्नयतो "पुरा वत्सानामपाकर्तोः" इति कालः प्रतीयेत। कुतः ? कालार्थित्वात्। ‘जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय” इत्युपांशुयाजस्तावत् “नासोमयाजिनो ब्राह्मणस्याग्नीषोमीय पुरोडाशो विद्यते” इत्यसन्नयतोऽग्नीषोमीयपुरोडाशनिषेधेन केवलाग्नेयपुरोडाशसत्वे पुरोडाशद्वयाभावेऽपि तदुपलक्षितान्तरालकालानपायादसन्नयतोऽप्यस्त्युपांशुयाज इति दशमे वक्ष्यते ‘अनपायो हि कालस्य लक्षणं हि पुरोडाशौ’ इत्यत्र। तन्न्यायेनात्रापि वत्सानामपाकर्तोरित्युपात्तस्य वत्सापाकरणस्य काललक्षणार्थकत्वादसन्नयतोऽपि वत्सापाकरणाभावेऽपि तल्लक्षितकालस्यानपायः ॥

ननु पुरोडाशद्वय तत्र लक्षणत्वेनोपात्तम्। ततश्चासन्नयतोऽग्नीषोमीयाभावेऽपि [1]आग्नेयोत्तरकालस्योभयान्तरालकालत्वात् स कालस्तत्राग्नेयेनोपलक्षयितुं शक्यते। इह तु वत्सापाकरणमेव लक्षणमुपात्तम्, नान्यत्। असन्नयतश्च वत्सापाकरणाभावात् केन कालो लक्ष्येत इत्याशङ्क्याह—

**असन्नयतोऽपि कालाहानात् ॥ ३९ ॥**

असन्नयतोऽपि वत्सापाकरणलक्षित कालो न हीयते। यदि हि वत्सापाकरण स्वरूपेण काललक्षण स्यात्, तदा तदभावे लक्षकान्तराभावात्तल्लक्षितव्रतकालो दुर्ज्ञानस्स्यात। न तु तत्स्वरूपेण कालोपलक्षणम्, सम्बन्धाभावात्, किन्तु स्वकालद्वारा। ततश्च योऽयं सन्नयद्विषये वत्सापाकरणकालः प्रज्ञातः, ततः पूर्वकाले व्रतमिति वचनव्यक्ति। तथाचासन्नयतो वत्सापाकरणाभावेऽपि यस्मिन काले तद्विहितं तस्य स्वकालस्य विद्यमानत्वात्तेन कालेन तत्पूर्वकालः अन्वाधानात् पश्चात्तनस्सुविज्ञानः। तस्मात् ‘पुरा वत्सानामपाकर्तोः’ इत्यसन्नयतोऽपि ॥

इति त्रयोदशं व्रतस्य सन्नयदसन्नयद्विषयत्वाधिकरणम् ॥ १३ ॥

---

१. आग्नेयादूर्ध्वस्य. ख.

१४

दर्शपूर्णमासयो. श्रुतम्—"सह शाखया प्रस्तरं प्रहरति" इति। किमिह प्रस्तरप्रहरणार्थत्वेन शाखाविधिः? उत शाखार्थत्वेन प्रहरणात्मकप्रतिपत्तिविधिः? इति संशये, पूर्वपक्षयति—

## प्रस्तरे शाखा श्रयणवत् ॥ ४० ॥

चतुर्थस्य द्वितीये 'हरणे तु जुहोतिर्योगसामान्यात्, प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात्' इत्यत्र प्रहरणं शाखायाः प्रतिपत्तिरिति स्थितम्। अथापि शाखा प्रहरणेऽङ्गमेव भवितुमर्हति, न तु तस्याः प्रहरणं प्रति प्राधान्यम्; 'सहयुक्तेऽप्रधाने' इति तृतीयया अप्रधान्यप्रतीतेः। तथा च प्रस्तरं प्रहरतीति यत् तत् सह शाखयेत्येवं शाखासंसर्गः प्रह्रियमाणप्रस्तरस्याङ्गमिति भवति शाखा प्रहरणाङ्गम्। न चैवं सति सहशब्दावगतं प्रस्तरतौल्यं विरुध्यत इति वाच्यम्। प्रधानतृतीयाबलेन सहशब्दस्य क्रियान्वयमात्रे साम्यपरत्वात्। ननु प्रस्तरप्रहरणे शाखया कस्यचिदुपकारस्याभावात् कथ शाखा तदङ्गमित्यत आह—श्रयणवदिति। दृष्टोपकाराभावेऽपि शाखासाहित्याददृष्टोपकारः "पयसा मैत्रावरुणं श्रीणाति" इतिवदित्यर्थः॥

अथ सिद्धान्तयति—

## कालविधेर्वोभयोर्विद्यमानत्वात् ॥ ४१ ॥

वाशब्द एवार्थे। प्रस्तरप्रहरणकाले शाखायाः प्रहरणात्मकप्रतिपत्तिविधिरेव स्यात्। तथा च प्रहरणं गुणः, शाखा प्रतिपाद्यत्वात् प्रधानभूता, न तु शाखाया अङ्गतया संयोग प्रहरण प्रति। कुतः? उभयोर्विद्यमानत्वात्। प्रस्तरस्य स्रुग्धारण प्रयोजनं विद्यते—'प्रस्तरे स्रुचस्सादयति' इति। शाखाया अपि विद्यते–'शाखया वत्सानपाकरोति' इत्यादि। एवञ्चोभयोरपि निराकाङ्क्षत्वान्नाङ्गाङ्गितया सम्बन्ध उचित.। तथा च प्रस्तरं प्रहरणेन प्रतिपादयेत् शाखया सहेति वचनव्यक्तिः। सहशब्दश्च तुल्यतावचनः, सह सख्या ससखीति यथा। 'तुल्यार्थैरतुलोपमाभ्याम्' इति तृतीया, न त्वप्रधाने। तत्र यदि शाखापि प्रस्तरवत् प्रतिपाद्येत तदैव प्रस्तरतौल्यवचनस्सहशब्द उपपद्येत, नान्यथा। ततश्च शब्दस्वरसाच्छाखापि प्रतिपाद्येति गम्यते। तत्र च प्रस्तरप्रहरण वचनान्तरत. प्राप्तमपि काललक्षणार्थमेवानूद्यते। ततश्च यदा प्रस्तर प्रहरणेन प्रतिपादयेत् तदा शाखामपि प्रहरेदिति पर्यवस्यति॥

इतोऽपि न शाखा प्रहरणं प्रति गुण इत्याह—

**अतत्संस्काराच्च ॥ ४२ ॥**

तया शाखया प्रस्तरप्रहरणे दृष्टोपकाराभावाच्च न तदङ्गतया विधिः। प्रतिपत्तिविधौ तु देशरेचनं दृष्टप्रयोजनमस्ति। तस्मादपि प्रतिपाद्यैव शाखा ॥

अधिकरणप्रयोजनमाह—

**तस्माच्च विप्रयोगे स्यात् ॥ ४३ ॥**

चो भिन्नक्रमः। तस्मात्—वत्सापाकरणादिशाखाकार्यात् पूर्णमासस्य विप्रयोगेऽपि तत्रापि प्रस्तरप्रहरणार्थं शाखा आहर्तव्या स्यादिति पूर्वपक्षे योज्यम्। सिद्धान्ते तु तस्माद्—वत्सापाकरणादिशाखाकार्यात् पूर्णमासस्य विप्रयोगेऽपि तत्रापि[1] विनापि शाखया प्रस्तरः प्रहर्तव्य इति ॥

प्रयोजनान्तरमाह—

**उपवेषश्च पक्षे स्यात् ॥ ४४ ॥**

[च.] पक्षपरिग्रहे। दर्शे सान्नाय्यप्रवृत्तौ पूर्णमासे च तदप्रवृत्तौ शाखायास्सत्त्वात्तदनुनिष्पाद्युपवेषोऽपि स्यात् पूर्वपक्षे। सिद्धान्ते न, पक्षे सान्नाय्याभावपरिग्रहे सति, [2]सान्नाय्याभावे सतीति यावत्। असान्नाय्ये पूर्णमासे शाखाया अभावात्तदनुनिष्पादी उपवेषो नास्तीति। वस्तुतस्तु "उपवेषेण कपालान्युपदधाति, उपवेषेण अङ्गारान्निरूह्य दोहकुम्भोमधिश्रयति" इति श्रवणादुपवेषो दोहार्थः कपालोपधानार्थश्च। ततश्च पूर्णमासे दोहाभावेऽपि कपालोपधानमात्मनिर्वृत्त्यर्थमुपवेष प्रयोजयेत्। तत्र शाखाया अभावेऽपि वारणवृक्षस्योपवेषः कार्यः, "वारणो यज्ञावचरः" इति वचनात्। 'सान्नाय्ये शाखासयोगादुपधानाद्धोभयो' इति कात्यायनेन तथैव सिद्धान्तितम्, प्रपञ्चितश्च कर्कभाष्ये ॥

इति चतुर्दशं शाखाप्रहरणस्य प्रतिपत्तित्वाधिकरणम् ॥ १४ ॥

इति श्रीमद्वासुदेवदीक्षितविरचितायामध्वरमीमांसाकुतूहलवृत्तौ षष्ठाध्यायस्य चतुर्थः पादः ॥



---

१. विना शाखया. अ.   २. सान्नाय्याभावेऽपीति यावत्. अ.

# अथ पञ्चमः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिंश्चतुर्थपादे यागशरीरभूतद्रव्यापचारनिमित्तककर्माधिकारश्चिन्तितः । अथास्मिन् पञ्चमपादे बहिरङ्गकालाद्यपराधनिमित्तककर्माधिकारः प्रस्तूयते ।

दर्शकर्मणि तावत् पूर्वेद्युरमावास्यायाम् [१]अग्न्यन्वाधानादिसायन्दोहान्तानि कानिचिदङ्गानि कृत्वा परेद्युः प्रतिपदि प्रातः कतिपयाङ्गसमेतानि प्रधानानि क्रियन्त इति स्थितिः । तत्र यदि कश्चिच्चतुर्दश्याममावास्याभ्रान्त्या अग्न्यन्वाधानादि कुर्यात्तमधिकृत्येदमाम्नायते—"यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेत्-ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्, येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्" इति । दधन्-दध्नि । सप्तम्या लुक् । अत्र चन्द्रमाः हविः अभ्युदियादिति पदत्रयं निमित्तसमर्पकम् । यस्य कस्यचिदभ्युदयस्य नित्यत्वान्निमित्तत्वानुपपत्तेश्च भूमा विवक्षितः । चन्द्रोदयस्यापि नित्यत्वाद्धविरित्यपि विवक्षितम् । चन्द्रोदयस्यापि नियतपूर्वदिक्त्वात् पुरस्तादित्यनुवादः । शुक्लपक्षादौ पुरस्तादुदितस्यैव पश्चाद्दर्शनमात्रम् । निरुप्तपदमप्यनुवाद इति वक्ष्यामः । किमिह 'त्रेधा तण्डुलान्विभजेत्' इति तण्डुलानामेव मध्यमादिभावेन विभागविधिः, ये मध्यमा इत्यादिवाक्यानि च कर्मान्तरविधयः ? किं वा विभजेदिति प्रकृतगुणापनयनविधिः, ये मध्यमा इत्यादि वाक्यानि गुणान्तरविधयः ? इति संशयः । [२]द्वितीयकोटिरपि द्वेधा—विभजेदिति प्रकृतद्रव्यदेवतानां प्रकृतयागेभ्योऽपनयनविधिः, ये मध्यमा इत्यादिवाक्यानि तेषु यागेषु मध्यमादिगुणविधय इति प्रथमा कोटिः; विभजेदिति

१. अन्वाधानादि. अ.    २. द्वितीयकोटावपि अ.

प्रकृतहविर्भ्यः पूर्वदेवतापनयविधिः, ये मध्यमा इत्यादिवाक्यानि प्रकृतहविष्षु देवतान्तरसंयोगविधिरिति द्वितीया कोटिः। तत्र पूर्वपक्षयति—

**अभ्युदये कालापराधादिज्याचोदना स्याद्यथा प शरावे ॥ १ ॥**

विभजेदिति वाक्ये तण्डुलानामेव विभागविधिः, न तु प्रकृतद्रव्यदेवतानां प्रकृतयागेभ्योऽपनयनविधिः। नापि प्रकृतहविर्भ्यो देवतापनयनविधिः, अशब्दार्थत्वात्, प्रकृतद्रव्यदेवतासयुक्तयागेषु द्रव्यदेवतान्तरविध्यसम्भवाच्च; प्रकृतद्रव्याणां प्रकृतदेवतासंयुक्तत्वेन तेषु[1] देवतान्तरविध्यसम्भवाच्च। ततश्च कालापराधात् चतुर्दश्याममावास्याभ्रमात् प्रक्रान्ते कर्मणि चन्द्राभ्युदये सति ये मध्यमा इत्यादिवाक्येषु कर्मान्तरविधिस्स्यात्। "यस्योभय हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्र यथा कर्मान्तरविधिः तद्वत् ॥

अथ द्वितीयपक्षे प्रथमकोटिमालम्ब्य सिद्धान्तयति—

**अपनयो वा विद्यमानत्वात् ॥ २ ॥**

विभजेदित्यत्र न तण्डुलाना मध्यमादिभावेन विभागो विधीयते, मध्यमादिवाक्यैरर्थसिद्धत्वात्, किन्तु विभजेदिति विभागो विधीयते। किमित्याकाङ्क्षायां प्रकृतयागसयुक्त [2]द्रव्यदेवता इति लभ्यते, सयुक्तस्यैव विभागार्हत्वात्। तण्डुलपदश्च प्रकृतसर्वयागोपलक्षकम। पुरोडाशसान्नाय्यत्रैविध्यात्त्रेधेत्यनुवादः। प्रकृतयागेभ्यः पूर्वद्रव्यदेवता अपनयेदिति वचनव्यक्तिः। द्रव्यदेवताविभक्ताश्च शुद्धयागा विद्यन्ते। ते च द्रव्यदेवताकाङ्क्षा। तत्र मध्यमादिवाक्यैर्द्रव्येण देवताया तद्गुणेन दातृत्वादिना विशिष्टास्तिस्रो भावना विधीयन्ते। [3]ताश्च करणत्वेन यागानपेक्षन्ते। तत्राप्रकृतयागान्तरसम्बन्धकल्पने गौरवात् द्रव्यदेवतापेक्षप्रकृतयागसम्बन्ध एव कल्प्यते। अत एव "सोमेन यजेत" इत्यत्र देवताकाङ्क्षे यागे विद्यमाने सति "ऐन्द्रवायवं गृह्णाति" इत्यादौ न यागान्तरकल्पना। तदिह प्रथमभावनायाः प्रथमयागेन उत्तरयोरुत्तराभ्याञ्च यथाक्रममन्वयः। ततश्च विभजेदिति द्रव्यदेवतानां यागेभ्योऽपनये सति द्रव्यदेवतापेक्षाणां यागाना विद्यमानत्वान्मध्यमादिवाक्यै (र्मध्यमादिगुणविशिष्टभावना विधीयन्त इति सूत्रार्थ ॥

---

१. तेषु नास्ति अ.
२. ततश्च. स.
२. द्रव्य नास्ति. अ.
() अ. क. पुस्तकयोर्ग्रन्थपातः.

नन्वेवं विशिष्टभावनाविध्यङ्गीकारे विशिष्टविधेर्विशेषणेष्वपि तात्पर्यात् तात्पर्य)भेदप्रयुक्तो वाक्यभेद इत्यत आह—

**तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥**

ये मध्यमाः स्युरित्यादिशब्दानां गुणविशिष्टभावनाविधिरूपत्वान्न वाक्यभेद. । तत्र हि मध्यमतण्डुलभागेन दातृत्वगुणविशिष्टेनाग्निनाष्टाकपालेन पुरोडाशेन च विशिष्टा भावना, स्थविष्टेन तण्डुलभागेन प्रदातृत्वविशिष्टेन्द्रेण दध्ना अधिकरणत्वेन 'चरुत्वेन [च] विशिष्टा भावना, अणिष्ठेन तण्डुलभागेन शिपिविशिष्टत्वविशिष्टेन विष्णुना शृतेन अधिकरणत्वेन चरुत्वेन च विशिष्टा भावनेति प्राकृतयागानाश्रित्य तिस्रो गुणविशिष्टभावनाः प्रतीयन्ते । ततश्च यदाग्नेयादिवाक्य इव विशिष्टविधावपि न दोष । कर्मान्तरविधिपक्षे तु तद्भावनासु कर्मान्तरवैशिष्ट्यस्यापि वक्तव्यत्वा- दतिगौरमिति ॥

अथ द्वितीयसिद्धान्तकोटिपरमप्येतत्सूत्रद्वयम्—

**अपनयो वा विद्यमानत्वात् ॥**

विभजेदिति न तण्डुलानामेव मध्यमादिभावेन विभागो विधीयते । मध्य- मादिवाक्यैरेव तस्यार्थसिद्धत्वात् । किन्तु प्रकृतद्रव्येभ्य. पूर्वदेवतापनयो विधीयते । तण्डुलपदञ्च पूर्वदेवतासंयुक्तहविर्मात्रलक्षणार्थम् । हविषाञ्च पुरोडाशदधिशृतरूपेण त्रैविध्यात् त्रेधेत्यनुवादः । एवमपनीतपूर्वदेवतासम्बन्धाना देवतान्तरसम्बन्धा- काङ्क्षिणां हविषां विद्यमानत्वान्मध्यमादिवाक्यैः प्रकृतहविरुद्देशेन देवतान्तरसम्बन्धो विधीयते ॥

**तद्रूपत्वाच्च शब्दानाम् ॥**

'ये मध्यमा स्यु' इत्यादिशब्दाना यच्छब्दवशात् प्रकृतहविरुद्देशेन देवतान्तर- विधिरूपत्वाच्च तथाङ्गीकार्यम् । नन्वेव प्रकृतद्रव्योद्देशेनाग्न्यादिदेवतानां तद्गुणानां दातृत्वादीनाञ्च विधौ वाक्यभेदस्स्यात् । अत एव "यदग्नये च प्रजापतये च सायञ्जु- होति" इत्यत्र प्राप्तकर्मानुवादेनाग्निप्राजापत्योर्न विधिर्वाक्यभेदप्रसङ्गात्, किन्तु प्रजा- पतिसमुच्चयमात्रविधिरित्युक्तमिति चेन्न; अग्निप्रजापतिशब्दयोस्सामानाधिकरण्या- भावे विशिष्टैकार्थप्रतिपादकत्वाभावेऽप्यग्न्यादिशब्दानां दात्रादिशब्दानाञ्च सामाना-

१. चरुत्वेन नास्ति. अ.

धिकरण्याद्विशिष्टैकार्थप्रतिपादकतया दातृत्वादिविशिष्टमेकैकमग्न्यादिदेवताकारकं विधीयत इति न वाक्यभेदः। न चैवमपि "अरुणयैकहायन्या क्रीणाति" इत्यत्रारुणैकहायनीपदयोस्सामानाधिकरण्यस्य [1]बाधेन कारकविभक्तिश्रुत्या द्वयोः पृथक्क्रियान्वयवदिहापि स्यात्। अतो न मिथो विशेषणविशेष्यभावसिद्धिरिति वाच्यम्। तत्र हि[2] गुणमात्रवाचिनोऽरुणपदस्य द्रव्यमात्रवाचिनैकहायनीपदेन समानाधिकरण्याभावेनारुण्यस्य पृथक् क्रियान्वयेऽपि दातृप्रदातृशिपिविष्टशब्दानां कृदन्तानां श्रुत्यैव दातृत्वादिविशिष्टसन्निहिताग्नीन्द्रविष्णुवचनत्वादग्नीन्द्रविष्णुपदैस्सामानाधिकरण्यात् [3]पदद्वयप्रतिपादितमेकमेव देवताकारकं विधातुं शक्यते। अत एवारुणावाक्ये पिङ्गाक्षिपदस्य यौगिकस्य पिङ्गाक्षित्वविशिष्टसन्निहितैकहायनीवचनत्वेन तत्पदसामानाधिकरण्यात् पिङ्गस्याक्ष्णोः न पृथक् क्रियान्वय इत्युक्तम्। न चैवमपि मध्यमांस्तण्डुलानुद्दिश्य दातृत्वगुणकस्याग्नेरष्टाकपालत्वस्य च विधेयत्वाद्वाक्यभेद इति वाच्यम्। प्राकृतेषु तण्डुलेष्वष्टाकपालत्वस्य च प्राप्तत्वेनाविधेयतयाष्टाकपालादिपदानामनुवादत्वात्। नन्वेवमपि स्थविष्ठास्तण्डुलभागान्दधि चोद्दिश्य देवताविधौ वाक्यभेद इति चेन्न, प्रकृतहानाप्रकृतकल्पनाविशिष्टगौरवाद्यनेकदोषापेक्षया वाक्यभेदस्यैव ज्यायस्त्वात्। न चैवमपि दधश्चरुमिति दध्यधिकरणत्वस्य चरुत्वस्य च विधौ वाक्यभेद इति वाच्यम्। अभ्युदयेष्टिप्रकरणे हि "सह श्रपयति" इत्येकदेवत्यानां सहश्रपणं विहितम्। अतो दध्नः स्थविष्ठानाञ्च सहश्रपणे चरुत्वमर्थप्राप्तमेव। तथा दध्नो भूयस्त्वात्तण्डुलानामल्पत्वाद्दध्यधिकरणत्वमप्यर्थप्राप्तमेवेति तयोरनुवादान्न वाक्यभेद। नन्वत्रान्यतः प्राप्तं श्रपणमुद्दिश्य सहत्वमात्रं विधेयं लाघवात्, न तु सहत्वविशिष्टं श्रपणम्। ततश्च शृतश्चोदिष्टयोरन्यतः श्रपणप्राप्तेस्तत्र सहत्वमस्तु। दध्नः श्रपणप्राप्त्यभावात् कथं दध्ना सह स्थविष्ठानां श्रपणप्राप्तिः। न चैकदेवत्यानां सहश्रपणस्य लाघवादेव प्राप्तेर्न श्रपणे सहत्वमात्रमिह विधेयम्, किन्त्वन्यतोऽप्राप्तसहत्वविशिष्टश्रपणमेवागत्या विधीयत इति वाच्यम्, औषधस्य कपालेषु श्रपणम्, उखायां सान्नाय्यस्येति धर्मवैषम्यात्। एकदेवत्ययोः श्रपणे सहत्वमिह लाघवादप्राप्तमिति तन्मात्रस्यैव विधानौचित्यादिति चेत्—सत्यम्; यथाहि समानदेवत्येन

1 सामानाधिकरण्यबाधेन क
2. हि नास्ति. क.
3 पदद्वयप्रतिपादितमेव देवताकारकमपि. अ.

हविरन्तरेण हविषः श्रपणे सहत्वं विहितं तथा स्थविष्ठश्रपणे दधिसाहित्यार्थं दध्नोऽपि श्रपणमर्थाद् भवत्येव। न चैवमपि प्रकृतेषु तण्डुलेषु पेषणप्राप्ते पिष्टानाञ्च दध्ना सह श्रपणेऽपि न चरुत्वप्राप्तिरिति कथं तदनुवाद इति वाच्यम्। श्रपणे स्थविष्ठानां दध्ना साहित्ये पुरोडाशस्य सम्पादयितुमशक्यतया पुरोडाशानिवृत्तौ तदर्थंपेषणमपि निवर्तेतेति चरुत्वप्राप्त्यविरोधात्। न चैवमप्यसन्नयत्कर्तृकायाम् अभ्युदयेष्टौ स्थविष्ठादीनां श्रपणे दध्यादिसाहित्यासम्भवाच्चरुत्वदध्याद्यधिकरणत्वयोर्नित्यप्राप्त्यभावात् कथमनुवाद इति वाच्यम्। प्रकृतहानाद्यनेकदोषभिया पाक्षिकानुवादत्वस्याप्यङ्गीकारात्। तस्मान्न कर्मान्तरमिति दिक्॥

## आतञ्चनाभ्यासस्य च दर्शनात्॥ ४॥

आतञ्चनाभ्यासस्य च दर्शनान्न कर्मान्तरविधि.। एव हि श्रूयते—"यदि बिभीयादभिमोदेष्यतीति महारात्रे हवींषि निर्वपेत्। फलीकृतैस्तण्डुलैरुपासीतार्धं दधि हविरातञ्चनार्थं निदध्यादर्धं न, यद्यभ्युदियात्तेनातच्य प्रचरेद्यदि न, प्रातरन्येद्युर्ब्राह्मणान् भोजयेत्" इति। अस्यार्थ.—य. प्रवृत्तदर्शतन्त्रो यजमान. किमद्य चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शं प्रारभ्य कि चन्द्रमा अभ्युदेष्यतीति शङ्कया भयं प्राप्नुयात्, स. महत्यामेव रात्रौ व्रीहीन्निरूप्यावहत्य फलीकृत्योदीक्षमाण आसीत। सायन्दोहसम्पादित दधि द्विधा विभज्य तत्रार्धममुख्यकालकरिष्यमाणदर्शार्थं तत्पूर्वदिनसायन्दोहसम्पाद्यदध्यातञ्चनाय निदध्यादर्धान्तरमातञ्चनार्थन्न निदध्यात्। एवकृते यद्यभ्युदयस्यात्तदा आतञ्चनार्थमवस्थापितादन्येन दध्यर्धेन्न नैमित्तिकं परिसमाप्य मुख्यकाले दर्शप्रारम्भानन्तरमातञ्चनार्थन्निहितेन दध्यर्धेन सायन्दुग्धे पयस्यातञ्चन कृत्वा दध्युत्पाद्यान्येद्यु: दधियाग निर्वर्तयेत्। यदि नाभ्युदयस्तदानीमातञ्चनार्थदध्यर्धादन्येनार्धेन दर्शनिवृत्तेस्तदर्थन्दध्युपादानानपेक्षणेनातञ्चनार्थं निहितमर्ध ब्राह्मणभोजनेन प्रतिपादयेदिति। तत्र यदि नैमित्तिकं कर्मान्तरमिद स्यात्तदा दर्शार्थमुपात्तस्य दध्नोऽपनीतदेवताकस्यापि प्रकृतयागसम्बन्धानपायेन कर्मान्तरे विनियोगासम्भवात् लौकिकदध्नैव नैमित्तिके कर्मान्तरे कृते प्रारब्धप्रयोजनोन्मुखतयावस्थितस्य दर्शार्थस्य दध्न. कालवैगुण्येनकान्तरितादर्शात् प्रच्यवमानस्य 'ते[नातच्य] प्रचरेदि'ति वचनेन दर्शं प्रति विधान प्रतिप्रसवस्स्यात्। ततश्च[1]

१. अतश्च. ग.

हविष्ट्वेनैव प्राप्नुयात्। तत्र तेन प्रचरेदित्येतावदेव विवक्षितमित्यातच्येत्यातञ्चनानुवादो न घटेत। न च तेन प्रचरेदिति कर्मसम्बन्ध आतच्येति द्वारसम्बन्धश्चानेन विधीयत इति वाच्यम्, वाक्यभेदप्रसङ्गात्। आतञ्चनार्थादर्थादन्यस्यार्थस्य नैमित्तिककर्मान्तरानुपयुक्तस्य विनियोगसाकाङ्क्षस्य विनियोगोऽप्यप्रतिपादितस्स्यात्। न चान्यत्र तस्य विनियोगाप्रतिपादनादेवावसीयते—तदेवार्थन्नैमित्तिके कर्मान्तरे द्रव्यमिति वाच्यम्, साक्षाद्वचनं विनान्यार्थस्यान्यत्र विनियोगानौचित्यात्। अस्मत्पक्षे तु नैमित्तिकस्य दर्शप्रयोगस्य दर्शार्थमुपात्तेनैवातञ्चनार्थातिरिक्तदध्यर्थेन करणसम्भवात् कृतकार्यस्य [1]च दध्नोऽर्द्धस्य प्रारब्धप्रयोजनौन्मुख्यविरहेण तेनातच्य प्रचरेदित्यस्य प्रतिप्रसवत्वासम्भवेन न हविष्ट्वेन प्राप्तिः। ततश्च कालवैगुण्यात् प्रच्युतकर्मसम्बन्धस्य तस्य दध्नः कर्मसम्बन्धमात्रं तेन प्रचारेदिति विधीयते। हविष्ट्वासम्भवेन ( सामर्थ्यात्तदाञ्चनद्वारैव तस्य कर्मसम्बन्ध इत्यर्थेप्राप्तमातञ्चनमातच्येत्यनूद्यत इत्युपपन्नमातञ्चनाभ्यासदर्शनम्।

यद्वा यदि कर्मान्तरमभ्युदयेष्टिस्स्यात्तदा [2]दर्शार्थस्य दध्नस्तत्र हविष्ट्वासम्भवेन) लौकिकेनैव दध्ना तन्निर्वृत्तिरिति प्रायश्चित्तनिरस्तकालापराधदोषेणाकालप्रक्रान्तेनापि स्वार्थेन दध्ना एकान्तरितोऽपि दर्शः कर्तव्य इति न दध्यन्तरमुत्पाद्यम्। तत्रातञ्चनमनर्थकम्। न च सत्यपि दध्नि वचनबलाद्दध्यन्तरोत्पादनमावश्यकमिति पूर्वपक्षेऽपि नातञ्चनाभ्यासदर्शनानुपपत्तिरिति वाच्यम्। तथासति विद्यमानस्य दध्नस्त्यागे दध्यन्तरोत्पादने चादृष्टद्वय कल्प्यमिति गौरवम्। अस्मत्पक्षे तु दर्शार्थेनैव दध्यर्थेन प्रक्रान्तस्य दर्शप्रयोगस्यानुष्ठितत्वात् स्वकालकर्तव्यदर्शप्रयोगार्थं दध्यन्तरोत्पादनावश्यम्भावेऽसत्यकालकृतसायन्दोहार्थेनैवातञ्चन कार्यं न त्वन्येन दध्नेत्येतावद्विधेयमिति लाघवमिति।

यत्त्वत्र विधिरसायनकारैरुक्तम्—अकालकृतस्य दध्न एकान्तरितदर्शानर्हतयाप्यातञ्चनाभ्यास पूर्वपक्षेऽप्युपपन्न। प्रायश्चित्तेनाकालोपक्रमप्रयुक्तदोषनिर्हरणवदकालकृतदध्न कर्माङ्गत्वमपि भवतीत्यत्र प्रमाणाभावात्। न हि स्तेयप्रायश्चित्तेन स्तेयदोषनिर्हरणवत् स्तेयलब्धद्रव्यस्य कर्माङ्गत्वमपि क्रियत इति, तन्न, स्तेयलब्धद्रव्यात्र

1. च नास्ति. ध.    2. दर्शार्थं. क.    ( ) मधुस्तके ग्रन्थपात.

स्वत्वाभावेन कर्मानर्हत्वेऽपि अकालकृतस्य दध्नः [1]सम्भावितसकलदोषनिर्हरणार्थ-प्रायश्चित्तापहृतदोषस्य कर्मार्थत्वे बाधकाभावात्। न चैवमपि प्रायश्चित्तेनाकालार्जितत्वदोषनिर्हरणेऽपि यातयामत्वरूपदोषान्तरवत्तया नैकान्तरितदर्शार्हता तस्येति वाच्यम्, दोषान्तरस्यापि प्रायश्चित्तान्तरेण निर्हारसम्भवात्। अत एव स्वकालोपक्रान्तोऽपि दर्शो दैवान्मानुषाद्वा विघ्नाद्यदोत्कृष्यते तदा कालान्तरे [2]कृतप्रायश्चित्तेन तेनैव दध्ना क्रियते। यदपि तैरेवोक्तम्—"फलीकृतैस्तण्डुलैरुपासीत" इति फलीकरणपर्यन्तमेव कृत्वा तण्डुलीभावविनाशकं पेषणमकृत्वा अभ्युदयसदसद्भावनिर्णयपर्यन्तं प्रतीक्षणविधानादिदं ज्ञायते—मध्यमादितण्डुलविभागापेक्षिण्यामभ्युदयेष्टावेत एव तण्डुला द्रव्यमिति। अन्यथा पेषणात् प्रागेव प्रयोगमवस्थाप्य प्रतीक्षणमदृष्टार्थं स्यात्। तण्डुलवत्तस्यैव दध्न कर्मान्तरत्वेऽपि तस्यासुपयोगादातञ्चनमर्थवदिति। तदपि न; साक्षाद्वचनं विनान्यार्थस्य द्रव्यस्य विध्यन्तरदृष्टार्थतानुरोधेन कर्मान्तरार्थत्वकल्पनानौचित्यात्। न च विध्यन्तरदृष्टार्थतानुरोधेन सिद्धार्थे विध्यन्तरवैयर्थ्यमिति वाच्यम्, तथा सत्युलूखलमुसलाम्नानदृष्टार्थताबलादेवावहननियमसिद्धेः "व्रीहीनवहन्ति" इति नियमविधिवैयर्थ्यापत्तेः। अस्तु वा भवदुक्तरीत्या तण्डुलानान्तादर्थ्यं, तथापि तत्सामान्येनान्यार्थस्य दध्नोऽन्यार्थत्वकल्पनानुचिता। किं बहुना, तण्डुलीभावान्तप्रयोगावस्थापनविधिबलादेवेद ज्ञायते—अभ्युदयेष्टिः न कर्मान्तरमिति। तस्याः कर्मान्तरत्वे लौकिकतण्डुलसाध्यतया तदन्तप्रयोगावस्थापनविधेरदृष्टार्थतापत्तेरित्यपि वक्तुं शक्यत्वात्। यदपि तैरेवोक्तम्—आतञ्चनार्थस्य दध्यर्धस्याभ्युदयाभावपक्ष इव तदन्यस्य दध्यर्धस्यार्थादभ्युदयपक्षे प्रतिपत्तिविध्यभावाद्विज्ञायते—अभ्युदयेष्ट्यान्तदेवान्यदर्धं दधीति। अन्यथा अभ्युदयाभावपक्षे दध्यन्तरोत्पादनस्यानपेक्षितत्वादातञ्चनार्थस्य दध्यर्धस्य प्रतिपत्त्यपेक्षावत् अभ्युदयपक्षे तदितरार्धस्य लौकिकदधिसाध्यायामभ्युदयेष्टौ दध्यन्तरोत्पादननिर्वर्त्ये मुख्यकालकर्तव्ये दर्शे चानुपयोगात् प्रतिपत्त्यपेक्षास्तीति तत्प्रतिपत्तिरप्युपवर्ण्येतेति, तदप्यपास्तम्, अभ्युदयपक्षे तत्प्रतिपत्त्यनुपवर्णनादेवेद ज्ञायते—अभ्युदयेष्टिर्न [ कर्मान्तरमिति। तस्या ] कर्मान्तरत्वे लौकिकदधिसाध्यतया तत्प्रतिपत्तिरुपवर्ण्येत। कर्मान्तरत्वाभावे तु तत्रैवार्थात्तस्य दध्न उपयोगसिद्धेः प्रतिपत्त्य[न]पेक्षत्वेन तदनुप-

---

१. सम्भावितकाल. अ.　　　　२. कृतप्रायश्चित्तेनैव. क.

वर्णनं सङ्गच्छत इति वक्तुं शक्यत्वात्। यदपि तैरेवोक्तम्—'विष्णवे शिपिविष्टाय श्रृते चरुम्' इति श्रृतपदप्रयोगात् ज्ञायते—अभ्युदयेष्टौ वैदिकप्रसिध्या श्रृतशब्द-वाच्यश्रपणसंस्कृतदोह एव पयो न तु लौकिक इति। अन्यथा "आदित्यः प्रायणीयः पयसि चरु." इत्यत्रेव पयश्शब्द एव प्रयुज्येतेति, तदप्यत एव निरस्तम्; अभ्युदयेष्टेः कर्मान्तरत्वे पयश्शब्द एव प्रयुज्येत, श्रृतशब्दप्रयोगात् ज्ञायते न कर्मान्तरमित्यपि वक्तुं शक्यत्वादिति दिक्।

ननु "यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमाः स्युस्तानग्नय दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं, येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रृते चरुम्" इति पशुकामवाक्ये कर्मान्तरविधिरिति नवमे वक्ष्यते। ततश्च तत्सारूप्यादत्रापि कर्मान्तरविधिरेव युक्त इत्यत आह—

अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥

पशुकामवाक्ये ह्यमावास्यामिष्ट्वेति परिसमाप्ते दर्शे तद्विधानान्न प्रकृतकर्मास्तीत्यपूर्वत्वात् कर्मान्तरविधानं स्यात्। इह तु प्रकृते यागे प्रत्यभिज्ञायमाने तदीयद्रव्ये चापनीतपूर्वदेवतासम्बन्धतया देवतान्तरसम्बन्धसाकाङ्क्षे जाग्रति देवतान्तर-सम्बन्धविधिरेव युक्त, न कर्मान्तरविधिः ॥

यदुक्तमार्त्तिवदिहापि कर्मान्तरमेव विधेयमिति तत्राह—

'पञ्चशरावे दुष्टं हीतरत् ॥ ६ ॥

पञ्चशरावे--"यस्योभय हविरार्त्तिमाच्छेत्यन्द्रं पञ्चशरावमोदन निर्वपेत्" इत्यत्र. इतरत-द्रव्यं दुष्टम। तस्मादुद्देश्यत्वासम्भवादवश्य द्रव्यमुपादेयम, तथा देवताप्युपादेयेति प्राप्तकर्मानुवादेन गुणद्वयविधौ वाक्यभेदप्रसङ्गात कर्मान्तरविधिरेष्टव्य.। प्रकृते च द्रव्योद्देशेन देवतान्तरविधिसम्भवान्न कर्मान्तरता। न चात्र वाक्ये सान्नाय्यदेवताया इन्द्रस्य सान्नाय्यप्रतिनिधौ पञ्चशरावे स्थानापत्त्या प्राप्तेरैन्द्रशब्दोऽनुवाद इति देवतापि न विधेयेति वाच्यम्, सान्नाय्ये महेन्द्रस्यापि कदाचित्त सम्भवेन इन्द्रस्यानित्यतया नित्यत्वेन तस्यापि विधेयत्वावश्यम्भावात्।

१. 'यथा वा पञ्चशरावेऽदुष्टं हीतरत्' इति पाठो भाष्ये

अत्र रसायनकृतः[1]—यद्यत्रापनीतदेवताकानां द्रव्याणां देवतान्तरसम्बन्धापेक्ष-नियमेन दधिवाक्ये शृतवाक्ये च प्रतिद्रव्यं देवतासम्बन्धबोधनकृतं वाक्यभेदमङ्गीकृत्य देवतामात्रविधिराश्रीयते[2] तदार्तिवाक्येऽपि द्रव्यान्तरस्य प्रकृतस्य सान्नाय्ययागस्य द्रव्यापेक्षानुरोधेन द्रव्यमात्रविधिरेवैन्द्रपदस्य पाक्षिकानुवादत्वमाश्रित्य वक्तुमुचितः स्यात्। प्रत्युत "यदि दीक्षितानां सान्युत्तिष्ठासेत् स सोममविभज्य स विश्वजिता यजेत" इत्यत्र सोमक्रयात् पूर्वमप्युत्थानेऽपि विश्वजिदित्यनुपदं वक्ष्यमाणतया सोममविभज्येत्येव[3] सोमक्रयानन्तरकालोत्तिष्ठासा यजमानकर्तृकसोमविभागानुवादत्वं दृष्टमिति तद्दृष्टान्तेनैन्द्रपदस्य पाक्षिकानुवादत्वं सम्भवति, प्रकृते तु वाक्यभेदः क्वापि न दृष्ट इति कर्मान्तरतैव युक्ता। यत्तु हविर्नाशे कर्मण एव नाशान्न तत्र प्रकृतकर्मप्रत्यभिज्ञेति प्राभाकरैरुक्तम्, उपात्तहविर्नाशे हविरन्तरोत्पादनेन कर्मानुष्ठानस्य 'शेषाद्वदाननाशे स्यात् तदर्थत्वात्' इत्यधिकरणे व्यवस्थापितत्वेन "यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः प्रतिसङ्ख्याय यजेत" इति श्रवणेन च कर्मलोपः प्रसक्तः, अकाले कृतमकृतमिति प्रसिद्धेः, अत्राप्यकालोपक्रान्तकर्माभावेन प्रत्यभिज्ञाभावस्य वक्तुं शक्यत्वादार्तिवाक्य इव मध्यमादिवाक्येष्वपि कर्मान्तरविधिरेवेत्याहुः।

अत्रेदं प्रतिभाति—आर्तिवाक्ये यद्यपि द्रव्याकाङ्क्षास्ति, तथापि 'यस्य सर्वाणि' इति हविर्नाशमात्रस्यविहितमाज्यमादायापि सा शाम्यतीति पाक्षिकानुवादत्वाङ्गीकारेण द्रव्यमात्रविधिपक्षो न युक्तः। सोममविभज्येत्यत्रापि सोमपदस्य यजमानद्रव्यमात्रपरत्वस्य वक्ष्यमाणतया पाक्षिकानुवादत्वाभावात्। न च तस्यैन्द्रपदमपि तद्देवतामात्रोपलक्षणमस्त्विति वाच्यम्, विधेयसमर्पकत्वे सम्भवति लक्षणया नित्यानुवादत्वकल्पनानौचित्यात्। प्रकृते च प्रकृतद्रव्याणां मध्यमादिवाक्यैर्देवताविधिं विना देवताकाङ्क्षानिवृत्त्यसम्भवादगत्या वाक्यभेदमसत्यत्पक्षे सह-श्रवणाभावेन द्रव्यादाधारत्वस्यचरन्वयोरप्राप्तेस्समसीचत्वशब्दयोः। पाक्षिकानुवादत्वस्याङ्गीकृत्यापि देवताविधिरेवैन्द्रस्य [इति]। यत्त्वत्र द्रव्याणां देवताकाङ्क्षैव नास्तीति निमित्तदेवतान्वायादानतुर्कीर्तनात्तं यथा तण्डुलानिति वाक्यस्य देवता-

---

१. अत्र रसायनकृत इति गपुस्तके नास्ति.
२. विधिरित्याश्रीयते, ङ
३. अविभज्येत्यस्य, ग
४. वाक्ये ङ.

पनयविधिपरत्वं स्पष्टम्। येन तद्विधिबलादपनीतपूर्वदेवताकानां द्रव्याणां देवताकाङ्क्षास्तीति समर्थ्येत। किन्तु तण्डुलशब्दस्य दार्शिकहविस्सामान्यलक्षकत्वकल्पनया तद्विभागप्रतियोगिनीनां शब्दानुपात्तानां देवतानां कथञ्चित् बुद्धिस्थिरीकरणेन च क्लिष्टगत्या च कल्पनीयम्। न चैव कल्पनाया किञ्चित् प्रमाणमस्ति। न च मध्यमादिवाक्येषु प्रकृतद्रव्याणा देवतान्तरविधिरेव तदाकाङ्क्षार्थं पूर्वदेवतापनयमक्षममाणस्त्रेधावाक्यस्य तद्विधायकत्वकल्पक इति वाच्यम्, वाक्यभेदप्रसङ्गेन तेषां प्रथमं प्रकृतहविस्सम्बन्धिदेवतान्तरविधिपरत्वासिद्धेः। न च देवतापनयविधिबलादेव तेषां देवतान्तराकाङ्क्षया सोढ्वापि वाक्यभेदं मध्यमादिवाक्येषु देवतान्तरविधिरभ्युपगन्तव्य इत्यप्युच्यत इति वाच्यम्, परस्पराश्रयप्रसङ्गादिति विधिरसायनकारैरेवोक्तम्। तदपि न; निरर्थकानुवादत्वपरिजिहीर्षया पूर्वोक्तविधया प्रथम देवतापनयविधिमाश्रित्य पश्चात्तदाकाङ्क्षावशेन मध्यमादिवाक्येषु सोढ्वापि वाक्यभेद देवतान्तरविधिपरत्वकल्पनेन परस्पराश्रयानवकाशात्। तस्मान्नात्र कर्मान्तरविधिरिति सिद्धम्॥

अत्राशङ्क्य निराकरोति—

**सान्नाय्येऽपि तथेति चेन्न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥७॥**

यथा पञ्चशरावे द्रव्ये दुष्टता, तथा सान्नाय्येऽपि कालापराधात् दुष्टता अस्त्येवेति तत्तदुद्देशेन देवताविधिसम्भव इति चेत्तन्न, तस्य-सान्नाय्यस्य अदुष्टत्वात्तदुद्देशेन देवता विधातुं शक्यते। न च कालापराधात्तद्दुष्टमिति वाच्यम्। कारणमभ्युदयरूपमविशिष्टं हि। अदुष्ट इव दुष्टेऽप्यविशिष्टम्, यतः तस्मादुद्देशेन देवताविधिर्युक्त ॥

नन्वेवमपि प्रकृतद्रव्योद्देशेन देवताविधिरित्ययुक्तम्, अभ्युदयकाले श्रपणस्याकृतत्वेन प्रकृतस्य शृतत्वाभावादुद्देश्यत्वसम्भवादित्यत आह—

**लक्षणार्था शृतश्रुति. ॥ ८ ॥**

श्रपणमकृत्वापि तस्मात्प्रकरणाद्धर्मविशिष्टपयोलक्षणार्थात्र शृतश्रुतिरिति नानुपपत्ति.। प्रयोजनन्तु—कर्मान्तरत्वेऽतिदेशादेव तत्र धर्मप्राप्तेर्गोदोहनादीना गुणकामाना [न] प्रवृत्ति, अद्रव्यत्वेनातिदेशत. प्रवृत्ते। सिद्धान्तपक्षद्वयेऽपि करणभूतस्य यागस्य भेदाभावादपूर्वीयधर्मा औपदेशिका एवेति गुणकामाना प्राप्तिरित्यागूढम् ॥

इति प्रथममभ्युदयेष्ट्यधिकरणम् ॥ १ ॥

२

उपांशुयाजद्रव्यस्य प्राकृतीभ्यो देवताभ्योऽपनयोऽस्ति ? न वा ? इति संशयः। तत्र पूर्वपक्षयति—

## उपांशुयाजेऽवचनाद्यथाप्रकृति ॥ ९ ॥

पुराडोशसान्नाय्येष्विव देवतान्तरसम्बन्धस्यावचनान्न पूर्वदेवतापनयः। ततश्च यथाप्रकृत्येवाभ्युदयेऽप्युपांशुयाजस्स्यात् ॥

अथ सिद्धान्तयति—

## अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ १० ॥

अकाले तन्त्रस्य प्रवृत्त्या इतरेषां—हविषामिवोपांशुयाजाज्यस्याप्यपनयस्स्यात्। चरमश्रुतवाक्यानुरोधेन प्रथमश्रुतवाक्यावगतस्य प्रकृतहविर्मात्रविषयकदेवताविभागस्य त्यागानौचित्यात्। ततश्च उपांशुयाजार्थस्य द्रव्यस्यापनीते पूर्वदेवतासम्बन्धे देवतान्तरसम्बन्धस्याविधानाद् देवतां विना च यागासम्भवात् लोप एवोपांशुयाजस्य। वचनबलाच्च प्रारब्धापरिसमापनमदोप । ननु दशमोपान्त्ये पौर्णमास्यामेवोपांशुयाजो नामावास्यायाम् "उपांशु पौर्णमास्यां यजन्" इति पौर्णमास्यामेव तद्विधानादित्युक्तम्। अत' कथममावास्यायामुपांशुयाजमङ्गीकृत्येय चिन्तेति चेन्न; शाखान्तरेऽमावास्यायामप्युपांशुयाजविधिसत्वात्। तथाविधश्च शाखान्तरवचनमस्मादेव सूत्रादनुमीयते। न ह्यकस्मात् प्रमाणभूत आचार्यो ब्रवीतीत्यादि दशमे वक्ष्यामः[1] ॥

इति द्वितीयमभ्युदयेष्टावुपांशुयाजद्रव्यस्य देवताभ्योऽपनया—
भावाधिकरणम् ॥ २ ॥

३

यदा निरुप्ते हविषि चन्द्राभ्युदयो जायते, तदैव किमिदं प्रायश्चित्तम् ? उत काले प्रवृत्तमात्रेण ? इति संशयः।

---

१. वक्ष्यते. अ.

तत्र पूर्वपक्षयति—

**निरुप्ते स्यात्तत्संयोगात् ॥ ११ ॥**

हविषि निरुप्ते स्यात्, "यस्य हविर्निरुप्तम्" इति निर्वापसंयोगात्। ननु हविरुभयत्ववन्निर्वापस्याप्यविवक्षा सिद्धेति किमर्थमिदमधिकरणम्। न च तत्रोभयत्वरूपसङ्ख्या विचारिता, अत्र तु निर्वापरूपक्रियेति न गतार्थतेति वाच्यम्, विषयभेदेऽपि न्यायैक्यादत्राप्यविवक्षासिद्धेरिति चेन्न; तत्रार्तहविर्विशेषणत्वमात्रेण निमित्ततापर्यवसानादुभयत्वस्याविवक्षितत्वं युक्तम। इह त्वभ्युदयमात्रस्य नित्यतया हविर्विशेषणत्वमाश्रीयते, तदपि नोदासीनं सदभ्युदयं विशेष्टुं शक्नोतीति या काचित् क्रियापेक्षिता, तत्र श्रुतत्वान्निर्वाप एव विशेषणमित्यधिकाशङ्कया पूर्वपक्षः ॥

अथ सिद्धान्तयति—

**प्रवृत्तौ वा प्रापणान्निमित्तस्य ॥ १२ ॥**

कर्मणः प्रवृत्तावेव स्यात्। निमित्तस्य तावता प्रापणात्–प्राप्तत्वात्। हविरभ्युदेतीत्येतावतैवाप्रवृत्तस्याभ्युदयासम्भवात् प्रवृत्तं हविरिति गम्यते। तावतैव निमित्तस्य प्राप्तत्वान्निर्वपणमविवक्षितम्। न च श्रुतत्वान्निर्वपणमेव विशेषणं न तु प्रवृत्तत्वमिति वाच्यम्। निमित्तसमर्पकश्रुतपदादेव प्रतीतेनाकाङ्क्षाशान्तेर्न 'पदान्तरापेक्षा युक्ता। न च निर्वापात् प्राक् न हविषः प्रवृत्तिरिति वाच्यम्। कर्मप्रवृत्तेरेव हविःप्रवृत्तित्वात् ॥

नन्वेव निर्वापसंयोगस्य का गतिरित्यत आह—

**लक्षणमात्रमितरत् ॥ १३ ॥**

इतरन्निरुप्तपदं प्रवृत्तलक्षणमात्रम् ॥

इतोऽप्येवमित्याह—

**तथाचान्यार्थदर्शनम् ॥ १४ ॥**

"यस्य गृहीत हविरभ्युदियात्" इत्यादिना गृहीते हविष्यन्यं विधिर्दर्शयति, अगृहीते चान्यमित्यनिरुप्ते च प्रायश्चित्तम् ॥

इति तृतीयमभ्युदयेष्टौ प्रायश्चित्तानुष्ठानकालनिरूपणाधिकरणम् ॥ ३ ॥

---

१. पदान्तरमपेक्षा, ग.

४

अनिरुप्ते यदाभ्युदयः तदा किं पूर्वदेवताभ्यो निर्वापः, किं वा वैकृतीभ्यः? इति संशयः। तत्र पूर्वपक्षयति—

**अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १५ ॥**

यदानिरुप्तेऽभ्युदयस्तदा प्राकृतीभ्योऽग्न्यादिदेवताभ्य एव निर्वपेदित्याश्मरथ्यः। 'तण्डुलान्विभजेत्' इति तण्डुलावस्थायामेवापूर्वदेवतासम्बन्धस्य विधानात्तदर्थोऽपनयोऽपि तण्डुलावस्थायामेवेति। व्रीह्यवस्थायां पूर्वदेवतापनयाभावात् प्राकृतीभ्य एव निर्वाप इति ॥

अथ सिद्धान्तयति—

**[1]व्यृद्धभाग्भ्यस्त्वालेखनस्तत्कारितत्वाद्देवतापनयस्य ॥ १६ ॥**

[2]व्यृद्धम्-अकालप्रवृत्तं हविः तद्भाग्भ्यो वैकृतदेवताभ्यो निर्वाप इत्यालेखनः। कुतः? देवतापनयस्य तत्कारितत्वात्-अकालप्रवृत्तहविर्मात्रकृतत्वात्। अतो विभागो निर्वापात् पूर्वमेवाभ्युदयज्ञाने कर्तव्य। अपनीतपूर्वदेवताकस्य च हविषस्तदैव देवताकाङ्क्षोत्पत्तेस्तदानीमेव देवतान्तरसम्बन्धोऽपि कार्य इति वैकृतीभ्य एव निर्वापः ॥

इति चतुर्थमभ्युदयेष्टौ निर्वापस्य वैकृतदेवताकत्वाधिकरणम् ॥ ४ ॥

५

एकस्मिन् द्वयोर्वा मुष्ट्यो' प्राकृतीभ्यो निरुप्तयोर्यदाभ्युदयोऽवगम्यते किन्तदा शिष्टं प्राकृतीभ्यो निर्वप्तव्यम्? उत वैकृतीभ्य? किं वा तूष्णीम्? इति संशयः। तत्र पूर्वपक्षयति—

**[3]विनिरुप्ते चतुर्मुष्टीनामनपनयस्तद्गुणत्वात् ॥ १७ ॥**

विनिरुप्ते-अर्द्धनिरुप्ते सति चतुर्मुष्टीना पूर्वदेवतानपनयः, तद्गुणत्वात्—चतुर्मुष्टिविशिष्टनिर्वापगुणत्वाद्देवतायाः। चतुर्मुष्टिविशिष्टनिर्वाप एकः पदार्थो न

१, २. प्रवृद्धकाल. अ, गृह्यभाग्भ्य. क. ३. विनिरुप्ते न मुष्टीनामपनय..

त्वेकैकमुष्टिर्वाप इत्युक्तं पञ्चमे । प्राकृत्यश्च देवता पदार्थेनैव संयुक्ता न तु तदेकदेशेनेति । शिष्टे पदार्थैकदेशे प्राकृतानां संयोगाप्रसक्तेर्नापनयः । अत एव न देवतान्तरसम्बन्धोऽपि । तस्मात् प्राकृतीभ्य एव शिष्टनिर्वाप ॥

द्वितीयपक्षमुपक्षिपति—

**अप्रकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १८ ॥**

अप्रकृतेन—वैकृतेन देवताविशेषेण शिष्टस्य संयोगः कार्यः । तत्स्थानीयत्वात्—प्राकृतदेवतास्थानीयत्वाद्वैकृतदेवतायाः । विभागो हि संयोगमात्रसापेक्ष[1] । संयोगश्चावयविसयुक्तस्यापि परम्परयावयवेनाप्यस्तीति निमित्ते सति पदार्थैकदेशेऽपि पूर्वदेवतापनयः कार्यः । तस्मिंश्च कृते तत्स्थाने देवतान्तरसंयोगोऽपि कार्य इति वैकृतीभ्य एव शेषनिर्वाप. ॥

अथ सिद्धान्तयति—

**अभावाच्चेतरस्य स्यात् ॥ १९ ॥**

चो नार्थे । इतरस्य—अवशिष्टस्य अभावात् पदार्थत्वाभावात् न वैकृतीभिस्सम्बन्धस्स्यात् । यद्यपि विभागस्य संयोगमात्रसापेक्षत्वेन शिष्टे पूर्वदेवतापनयस्स्यात्तथापि न देवतान्तरसम्बन्धस्तत्र युक्तः । प्राकृतीनां स्थाने हि वैकृत्यस्संयोजनीया [2]प्राकृतीनाञ्च पदार्थेनैव साक्षात्संयोगो न तु तदेकदेशेन । अतो वैकृत्योऽपि पदार्थेनैव सयोगमर्हन्ति निर्वापशेषश्च पदार्थैकदेश इति न तेन सयोगमर्हन्तीति प्राकृतीनामपनयाद् वैकृतीना सयोगाच्च तूष्णीमेव शिष्टनिर्वाप. । एवमन्यत्राप्यनुवचनप्रयाज्यान्वनेऽवयवसहिते प्रदानाद्यवयविनि सामिकृतेऽभ्युदयावगमे शिष्टस्य तूष्णीमनुष्ठानमित्यूह्यम ॥

इति पञ्चममभ्युदयेष्टौ सामिकृतनिर्वापस्य तूष्णी कर्तव्यत्वाधिकरणम् ॥ ५ ॥

६

किमियमभ्युदयेष्टिस्सन्नयत एव स्यात् ? उतासन्नयतोऽपि ? इति संशय. । तत्र पूर्वपक्षयति—

१. मात्र सापेक्ष. । २ मातृकासु 'प्राकृत्याश्च' इति पाठ', प्राकृतीनाञ्चेति परिवर्तित.

**स्नान्नाय्यसंयोगान्नासन्नयतस्स्यात् ॥ २० ॥**

"ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्" इति [1]सान्नाय्ये देवतासंयोग विधानादसन्नयतश्च तदनुष्ठानाशक्तेरभ्युदयेष्टिर्न स्यात् ॥

अथ सिद्धान्तयति--

**औषधसंयोगाद्वोभयोः ॥ २१ ॥**

औषधेष्वपि देवतासंयोगविधानं तण्डुलैरेवासन्नयतोऽपि तत्सम्भवात्, उभयोरसन्नयतस्सन्नयतश्च सा स्यादिति। अत्र हि तण्डुलान् दधिश्शृते चोद्दिश्य देवता विधीयते। उद्देश्यानाञ्च साहित्य विवक्षितम्। अतोऽसन्नयतो दधिश्शृताभावेऽपि तण्डुलैरेव स्यात् ॥

अत्राशङ्क्य निराकरोति--

**वैगुण्यान्नेति चेन्नातत्संकारार्थत्वात् ॥ २२ ॥**

'दधंश्चरुं शृते चरुम्' इति दधिशृताधिकरणत्वचरुत्वयोर्वैगुण्यान्नासन्नयतस्सा स्यादिति चेत्-तन्न; दधिशृतयोरपि करणत्वेन तण्डुलसंस्कारार्थत्वाभावात्। अत्र हि दधिशृते उद्दिश्य देवतासम्बन्ध एव विधीयते, न तु तयोस्तण्डुलाधिकरणत्वमपि, वाक्यभेदप्रसङ्गात्। न च तर्हि दधिशृतयोरुद्देश्यत्वप्रहाणेन तण्डुलसंस्कारार्थतैव विधीयतामिति वाच्यम्, तण्डुलोद्देशेन देवताया दध्नश्च विधाने वाक्यभेदात्। यद्यप्यस्मत्पक्षेऽपि दधितण्डुलयोरुभयोरुद्देश्यभेदाद् वाक्यभेदोऽस्ति, तथापि प्रक्रान्तप्रदेयत्वापरित्यागात् पूर्वदेवतापनयेनापेक्षितदेवतान्तरसम्बन्धविधानाच्च स सह्यः।

ननु त्वन्मतेऽपि दध्नोऽधिकरणत्वमप्यनपेक्षितमेव[2] विधेयमिति वाक्यभेदः। न च पूर्वं दध्नः पयसश्चावदाय पश्चात्तस्मिन् पुरोडाशावदाने दध्नि पयसीव चरुर्भविष्यतीति वाच्यम्, प्रथमं विहितस्य पुरोडाशस्य पश्चादवदानायोगात्। न च दधिपयस्संयुक्तानामेव तण्डुलानां देवतापनयो देवतान्तरसम्बन्धश्च चोद्यत इत्यभ्युदयानन्तरन्दधिपयस्संसर्गात् श्रपणप्राप्तेरर्थप्राप्तमधिकरणत्वमनूद्यत इति वाच्यम्। यदि दध्यादिसंसृष्टेष्वेव देवतापनयादिकं विधीयेत तदानीमसन्नयतस्तदसम्भवात् सिद्धान्तहानिर्वाक्यभेदश्चेति चेन्न; सह श्रपयतीति वचनबलात् सहश्रपणप्राप्तौ दध्य-

1. सान्नाय्य, अ, क,　　2. अपेक्षितमेव. अ.

धिकरणत्वचरुत्वयोरनुवादसम्भवात्। यत्तु विशिष्टभावनाविधिपक्षे न वाक्यभेदादिदोष इति, तदयुक्तम्; विशिष्टविधावपि विशेषणेष्वपि विधितात्पर्यादस्त्येव तात्पर्यभेदनिमित्तो वाक्यभेदः। किञ्च तथा सति दधिशृतयोरौषधं प्रत्यधिकरणत्वेन विधानात् तत्संकारार्थत्वेनातत्संस्कारार्थत्वादिति सूत्रविरोधात्।

वस्तुतस्तु विध्यावृत्तिलक्षणवाक्यभेदापेक्षया विशेषणतात्पर्यनिमित्तो वाक्यभेदो ज्यायान्। अत एव "यदाग्नेयोऽष्टाकपालः" इत्यत्र न विद्वद्वाक्यविहितकर्मानुवादेनाग्न्यष्टाकपालत्वादिगुणविधिः, विध्यावृत्तिलक्षणवाक्यभेदप्रसङ्गात्। किन्तु विशिष्टकर्मान्तरविधिरेवेत्युक्तं द्वितीये। ततश्चात्रापि विशिष्टभावनाविधिपक्ष एव युक्तः। नाप्यस्मिन् पक्षे सूत्रासामञ्जस्यम्। तथाहि—'सान्नाय्यसंयोगान्नासन्नयतस्स्यात्'–विशिष्टभावनानां सान्नाय्यसंयोगान्नासन्नयतस्स्यात् अभ्युदयेष्टिः। 'औषधसंयोगाद्वोभयोः' उभयोर्दधिशृतयोरौषधसंयोगात्तण्डुलाधिकरणत्वेन विधानादुपादेयत्वेन लौकिकाभ्यामपि ताभ्यामुपपत्तेरसन्नयतोऽपि सा स्यात्। 'वैगुण्यान्नेति चेत् नातत्संस्कारार्थत्वात्' ( प्रकृतयोरेव दधिशृतयोरौषधसंस्कारार्थत्वाभावेन लौकिकयोरप्युपादाने वैगुण्याभावात् सन्नयत्कर्तृकायान्तु तस्यां प्रकृतोपादानं सन्निहितत्वादेवेत्यास्तां विस्तरः॥ )

इति षष्ठमभ्युदयेष्टौ सन्नयदसन्नयतोरधिकाराधिकरणम्॥ ६ ॥

( इत्यभ्युदयेष्टिपेटिका )

७

"यदि सत्राय दीक्षितानां साम्युत्तिष्ठेरन् सोमं विभज्य विश्वजिता यजेत" इति श्रूयते। तत्र किमयं विश्वजित् क्रीतराजकस्यैव सत्रादुत्थाने भवति ? उताक्रीतराजकस्यापि ? इति संशयः। तत्र पूर्वपक्षयति—

## साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात्॥ २३ ॥

क्रीते सोमे साम्युत्थान एव विश्वजित्, सोमविभागश्रवणात्। न [ ह्य ]क्रीतराजकस्य सोमविभागस्सम्भवति। न च हविरुभयत्ववन्निमित्तविशेषणत्वात्

---

१. ज्यायानिति एम. क.    () मधुस्तके. ग्रन्थपात

सोमविभागोऽपि न विवक्षित इति वाच्यम्। न ह्यत्र विभागो निमित्तविशेषणमित्युच्यते, किन्तु विभागविशिष्टमेव नैमित्तिकं विधीयत इति। तत्र सोमक्रयोत्तरकालोत्थानमेवार्थान्निमित्तं सम्पद्यते। यथा "यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" इत्यत्र विधेयस्याग्न्याधानस्याग्निद्वयजनकत्वस्वाभाव्यान्निमित्तमप्यग्निद्वयानुगतिरित्यर्थात् सम्पद्यते तद्वत्॥

अथ सिद्धान्तयति—

## प्रवृत्तौ वा प्रापणान्निमित्तस्य ॥ २४ ॥

सत्रे प्रवृत्तमात्र एव साम्युत्थाने निमित्तस्य प्रापणात् विश्वजिद् भवति। न ह्यत्र सोमविभागोऽपि विधीयते। स हि नाक्रीतराजकस्य विधीयते तदशक्तेः। नापि क्रीतराजकस्य, तं प्रति द्रव्यान्तरविभागवत्तस्यार्थप्राप्तत्वात्। अतस्साम्युत्थाने विश्वजिन्मात्रं विधीयत इत्यक्रीतेऽपि सोमे विश्वजित्।

नन्वेवं विभज्येत्यनर्थकं स्यात्। न चानुवादः, नित्यप्राप्त्यभावादित्यत आह—

## आदेशार्थेतरश्रुतिः ॥ २५ ॥

इतरश्रुतिस्सोमश्रुतिरादेशार्था, उपलक्षणार्था सोमविभागस्योक्तरीत्या विध्यसम्भवात्। सत्रिणामेकीकृतधनानां मध्ये साम्युत्तिष्ठतः प्राप्तमेव धनविभागं सोमविभागवचनमनुवदति। तत्र सोमशब्दो द्रव्यमात्रलक्षणार्थः। अस्य च विश्वजितः प्रारब्धसत्रापरिसमापननिमित्तदोषनिर्हरण फलं, तदानीमपेक्षितत्वात्। न तु स्वर्गः, तदानीमनपेक्षितत्वात्। केचित्तु सत्रफलमेवास्यापि फलमित्याहुः। तन्न; तथासत्यागोरणानन्तरं सत्रफले विश्वजितो विकल्पप्रसङ्गादिति ध्येयम्॥

इति सप्तमं सत्रे साम्युत्थानेऽक्रीतराजकस्यापि
विश्वजिदधिकाराधिकरणम्॥ ७ ॥

८

ज्योतिष्टोमे श्रूयते—"एका दीक्षा तिस्र उपसदस्तिस्रो दीक्षाः द्वादश दीक्षाः" इति। तत्र संशयः—किमेकादिदीक्षा अनियमेन ग्राह्याः ? उत नियमेन द्वादश दीक्षा ? इति।

तत्र पूर्वपक्षयति—

**दीक्षापरिमाणे याथाकाम्यमविशेषात् ॥ २६ ॥**

एकादिदीक्षापरिमाणे याथाकाम्यमेव स्यात्, अविशेषात्–विशेषाश्रवणात् ॥

अथ सिद्धान्तयति—

**द्वादशाहस्तु लिङ्गात् स्यात् ॥ २७ ॥**

द्वादशाह एव परिमाणम् उपादेयम्। कुतः ? लिङ्गात्—सामर्थ्यात्। "द्वादशरात्रीर्दीक्षितो भृति वन्वीत" इति द्वादशरात्रीर्दीक्षितस्य नित्यवत्परिक्रयार्थद्रव्ययाच्ञाम्नानसामर्थ्यात्। न ह्येतन्ननित्य कुर्वन्न नित्यपरिमाणं शक्नोत्युपादातुम्। न चैवं दीक्षापरिमाणान्तराम्नानवैयर्थ्यमिति वाच्यम्, परिमाणान्तराणां विकृतिषूत्कर्षेणावैयर्थ्यात्। ननु विकृतिष्वपि कल्पान्तरोत्कर्षो न युक्तः, प्रकृतितो भृतिवननप्राप्तेरिति चेन्न; यथानारभ्याधीतस्य साम्नदश्यस्य पाञ्चदश्यावरुद्धायां प्रकृतौ निवेशमलभमानस्य श्रुतसाप्तदश्यासु मित्रविन्दादिविकृतिषूपसंहारः, तथा श्रुतकल्पान्तरासु विकृतिषु कल्पान्तरोपसंहाराविरोधात्। तस्मात् 'द्वादशाहपरिमाणदीक्षोपसंहारकर्तुरेव प्रकृतावधिकार इति भाष्यमतानुयायिनः।

वार्तिकमतानुयायिनस्तु–एकादिपरिमाणानामपि प्रकृतौ नित्यवदाम्नानात् नोत्कर्षसम्भवः। न च विरोधात् कथं सर्वेषा प्रकृतौ निवेश इति वाच्यम्, तुल्यप्रमाणकतया सर्वेषा विकल्पसम्भवात्। न च तर्हि न नित्यतेति वाच्यम्, प्रयोगापेक्षया पाक्षिकत्वेऽपि व्रीहियववदाम्नानाविरोधात्। ननु साप्तदश्यवद्विकृतिषु एकादिपक्षस्योत्कर्षादविरोध इत्युक्तमिति चेन्न; भूयोऽनुग्रहन्यायेन कल्पान्तराणामनेकेषामुत्कर्षकल्पनापेक्षया भृतिवननमात्रोत्कर्षकल्पनस्य ज्यायस्त्वात्। अथ नास्य भूयोऽनुग्रहन्यायविषयता, किन्तु तदपवादभूतमुख्याङ्गगुणविरोधन्यायविषयतैव। तथाहि—'दक्षिणा सोमस्य' इति वचनात् भृतिवननं प्रधानाङ्गम्। एकाहादिपरिमाणन्तु 'दीक्षा सोमस्य' इति प्रधानाङ्गतया विहिताया दीक्षाया अङ्गमिति प्रधानाङ्गभृतिवननविरोधे प्रधानाङ्गदीक्षाङ्गभूतपरिमाणानामेवोत्कर्षो न्याय्य इति चेन्न; भृतिवननस्यापि प्रधानाङ्गदक्षिणार्थत्वेन प्रधानाङ्गत्वाभावात्। वस्तुतस्तु भृतिवननस्यापि नोत्कर्षः।

१. द्वादशाहदीक्षोपसंहार. क.

द्वादशाहपरिमाणदीक्षाकल्पे तस्यापि सम्भवात्। यत्तु भृतिवनने द्वादशाहदीक्षितस्याधिकारावगमादधिकारस्य च प्रधानत्वाद्विरुद्धानामेकाहादिपरिमाणानामुत्कर्ष एव युक्त इति, तदप्ययुक्तम्, 'दीक्षा सोमस्य' इति श्रुत्या प्रधानार्थैव दीक्षा, न तु भृतिवननाधिकारसिद्ध्यर्थम्, येन प्रधानविरोधादुत्कर्षः स्यात्। न चैवं दीक्षाकर्त्रैव तदनुष्ठानं[1] न स्यादिति वाच्यम्। प्रधानप्रयुक्तदीक्षाकर्त्रानुष्ठेयतया अग्नीषोमीयपशुयागवदुपपत्तेर्न तदधिकारसिध्यर्थता दीक्षायाः। इतरथा "यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति श्रवणाद्दीक्षाया अग्नीषोमीययागाधिकारार्थतापि [न] स्यात्; अस्तु वा भृतिवननाधिकारार्थता दीक्षायास्तथाप्यत्र न विरोध, येन एकाहादिकल्पानामुत्कर्षः स्यात्। तथाहि—"द्वादश रात्रीर्दीक्षितः" इत्यत्र भृतिवननस्य दीक्षासम्बन्धमात्रमेव विधेयं द्वादशरात्रीरित्यनुवादः तस्यापि विधौ वाक्यभेदात्। तथाहि—भृतिवननं दक्षिणार्थस्य द्रव्यार्जनं, तच्च परिक्रयविधिवलादेवार्थसिद्धमिति न विधेयम्। नन्वाढ्यस्याकृत्वापि याचना परिक्रयस्सम्भवतीति याचनयैव परिक्रयार्थद्रव्यं प्राप्नुयादित्यस्ति नियमविधेरवकाश इति चेन्न; 'वन षण सम्भक्तौ' इति धातोः सम्भक्तिवाचित्वमेव, न याचनावाचित्वम्। सम्भक्तिश्च सम्भरणम्। तच्चान्याप्राप्तमित्युक्तम्। नाप्यत्र दीक्षाया द्वादशपरिमाणं विधेयम्। तस्यापि 'द्वादश दीक्षा' इत्यनेनैव प्राप्ते। नापि द्वादशरात्रय एव ग्राह्याः [2]न त्वेकरात्र्यादय इत्यपि विधातुं शक्यम्, वाचनिकस्यैकाहादिपरिमाणस्य तदाम्नानानर्थक्यभयेन सर्वथा निवर्तयितुमशक्यत्वात्। अत एव "अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति" इत्यत्र विकल्प आश्रीयते। न च ग्रहणस्याप्यतिरात्रैकविषयत्वेनोत्कर्षासम्भवादस्तु विकल्प, प्रकृते तु परिमाणान्तराणामुत्कर्षसम्भवान्न तदाम्नानानर्थक्यमिति वाच्यम्। प्रकृतावेकाहादीना शास्त्रत. प्राप्त्यभावे दीक्षायामनियतपरिमाणाप्राप्ते, भृतिवननवाक्ये द्वादशाहनियमविध्यसम्भवादेकाहादीनां प्रकृतौ शास्त्रतः प्राप्तिर्वाच्या। तथाच शास्त्रप्राप्तस्य सर्वथा न बाधसम्भव.। नापि दीक्षास्य सञ्जातेति दीक्षितशब्दार्थो विधेय, तस्यापि आग्नावैष्णवेष्ट्यादिभिस्सिद्धे.। नाप्यत्र भृतिवननस्य द्वादशरात्रिसम्बन्धो विधेय., तथासति द्वादशरात्रीणामनित्यतया परिक्रयार्थद्रव्यमानस्य च नित्यतया नित्यानित्यसंयोगविरोधात्। न चैतदन्वयवलात् द्वादशरात्रीणामपि नित्य-

---

1. तन्न स्यात् क.   2. न चैक. क.

तास्स्विति वाच्यम्। तासां प्रथमत एवैकाहादिकल्पैस्सह विकल्पितत्वेनानित्यत्वनिश्चयात्। नाप्यहर्व्युदासेन भृतिवनने रात्रिविधानमिति युक्तम्। 'भृतिं वन्वीत' इति यत्तद्रात्रिषु, तच्च द्वादशाहस्स्विति वाक्यभेदप्रसङ्गात्[1]। नापि [2]'यद्रात्रिषु भृतिवननं तद्द्वादशस्विति वा, यद्द्वादशसु भृतिवननं तद्रात्रिष्विति वा विधीयत इति युक्तम्, विशिष्टानुवाददोषात्। तस्माद्यद् भृतिं वन्वीत तद्दीक्षित इति दीक्षाकालसम्बन्ध एव भृतिवननस्य विधीयते। तत्र द्वादशरात्रीरित्यस्यापि विधेयत्वे वाक्यभेद इत्यनुवादत्वम्। यदि च पाक्षिकानुवादत्वमयुक्तं मन्यसे, तदा परिमाणान्तलक्षणार्थमस्तु द्वादशग्रहणम्। यदि च वन्वीतेत्यय 'वन षण सम्भक्तौ' इति धातोरुत्पन्नः, तर्हि तस्य धातोर्भौवादिकत्वेनात्मनेपदानुपपत्ते[3]। किन्तु 'वन याचने' इति तानादिकधातोरेव उत्पन्न इति वननं याचनमेवेति मत, तर्हि यत् परिक्रयार्थद्रव्यं केनापि प्रकारेण प्राप्नुयात्तद्वननेन प्राप्नुयादिति परिक्रयार्थद्रव्यप्राप्त्युद्देशेन वननमेव विधेयमस्तु, द्वादशरात्रीर्दीक्षित इत्यनुवादः। न चैवं दीक्षासम्बन्धस्य वनने प्राप्त्यभावात् कथ तदनुवाद इति वाच्यम्। अनुवादबलादेव वननस्य दीक्षाकालसम्बन्धावधारणात्। अत एव "न गिरा गिरेति ब्रूयात्" इत्यनुवादबलादेव "ऐरं कृत्वोद्गेयम्" इति विहितस्यैरापदस्य गिरापदस्थानसम्बन्ध इति नवमे वक्ष्यते। न चैवं द्वादशरात्रीरित्यनुवादबलाद्द्वादशाहपरिमाणान्वयोऽपि स्यादिति वाच्यम्। तथासति नित्यवच्छ्रुतवननान्वयबलाद्द्वादशाहपरिमाणस्यापि नित्यताप्राप्तौ परिमाणान्तराणामुत्कर्षापातात्। न च तद्युक्तम्; अनुवादभूतैकद्वादशरात्रिपदानुरोधेन बहूनामुत्कर्षस्यान्याय्यत्वात्। अतएव द्वादशाहपरिमाणान्तरैस्सह व्रीहियववन्न विकल्पो युक्तः। नित्यवच्छ्रुतवननान्वयबलेन ( द्वादशाहपरिमाणस्य विशेषग्रहणादिति परोक्तमपास्तम्। तस्मादन्यथा सूत्रं व्याख्यायते—भाष्यकारीयोक्तिरीत्या द्वादशाहपरिमाणस्यैव नित्यत्वे प्राप्ते सिद्धान्तसूत्रमिदम्–'दीक्षापरिमाणे ) याथाकाम्यमविशेषात्' इति। प्रकरणाविशेषादन्यतमेनान्यतमोत्कर्षासम्भवाद् दीक्षापरिमाणे कामचारः।

सूत्रान्तरञ्चाधिकरणान्तरसिद्धान्तपरं व्याख्येयम्। तथाहि—'द्वादशाहस्तु

---

१. वाक्यभेदप्रसङ्गोऽपि. क.

२. यद्रात्रिषु. क.

३. अनुपपत्ते. अ, क.

( ) मध्यगाङ्कितं पत्रपात

लिङ्गात् स्यात्। द्वादशाहे किं दीक्षापरिमाणानां विकल्पः? किं वा द्वादश दीक्षा एव नियताः? इति विशये, प्रकृतिवद्विकल्पे प्राप्ते, ब्रूमः--लिङ्गात् द्वादशाहपरिमाणमेव स्यात्। तत्र ह्येवं श्रूयते--"षट्त्रिंशदहो वा एष यत् द्वादशाहः" इति। द्वादशाहे उपसदो द्वादश सुत्याश्च द्वादश। तद्यदि दीक्षाश्च द्वादश स्युस्तदा षट्त्रिंशदित्यनुवादोऽवकल्पते। तस्माद[नन्य]गतेरस्माल्लिङ्गाद्द्वादशाहपरिमाणमेव तत्र नियम्यते[1]। तथा "दीक्षाभिः" इति दीक्षाबहुत्वमुक्त्वा तद्वाक्यशेषे "द्वाभ्यां लोमावद्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानम्" इति षण्णां द्विकानामनुक्रमणाद् उपक्रमगतं बहुत्वं द्वादशत्वे व्यवस्थाप्यत इति द्वादशैव द्वादशाहे दीक्षा इति। वस्तुतस्तु द्वादशाहे "द्वादशरात्रीर्दीक्षितस्स्यात्" इति वचने जाग्रति पूर्वपक्षानुत्थितेर्यथाभाष्यमेकाधिकरणतयैव व्याख्येयम्। न च प्रकृतौ द्वादशाहपरिमाणस्य नित्यत्वे द्वादशरात्रीरित्यतिदेशप्राप्तानुवादो वचनादिति वाच्यम्, वार्तिककृन्मते [2]तस्य प्रकृतौ विकल्पेन प्राप्तत्वाद्द्वादशाहपरिमाणे नियमविधित्वात्। भाष्यकृन्मतेऽप्यत एव दीक्षाभिरित्यर्थवादार्थतया प्राप्तार्थकस्याप्यस्य विधित्वाविरोधात्। न च भाष्यकारमतमयुक्तमिति वाच्यम्। सत्यम् यद्येका दीक्षेत्यादयोऽपि [3]विधयस्स्युः। तेषु हि न विधिश्श्रूयते, किन्तु कल्प्यः। स चैकत्रैव कल्पयितुमुचितो नानेकत्र, वाक्यभेदप्रसङ्गात्। अतो द्वादशदीक्षा इत्यत्रैव स कल्प्यते। तथासति वैश्वानरद्वादशकपालेऽष्टत्वादिश्रवणवदेकादिश्रवणानामवयुत्यानुवादतया स्तावकत्वसम्भवात्; न त्वेकादिवाक्ये स कल्प्यते, द्वादशत्वश्रवणानर्थक्यप्रसङ्गात्। अत एव "एकं वृणीते द्वौ वृणीते त्रीन्वृणीते" इत्यत्रैव विधिः कल्प्यत इति युक्तम्। ततश्च द्वादशाहपरिमाणमेव नित्यमिति भाष्यकृन्मतमनवद्यमित्याहुः। कल्पसूत्रेषु त्वेकादिदीक्षाविधयश्शाखान्तरमूलकाः॥

इत्यष्टमं ज्योतिष्टोमे दीक्षापरिमाणनिर्णयाधिकरणम्॥ ८॥

९

गवामयने 'चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासस्तस्य न काचन निर्या भवति" इति अदोषाख्यां श्रुत्वा तत उच्यते--"चतुरहे

१. नियम्येन. अ.　　　२. तस्य नास्ति. अ.

३. विधेया. अ.

पुरस्तात्पूर्णमास्ये दीक्षेरन् तेषामेकाष्टकाया क्रयस्सम्पद्यते। तेनैकाष्टकान्नच्छम्वट् कुर्वन्ति" इति। न छम्वट्कुर्वन्ति—न तिरस्कुर्वन्तीत्यर्थः। तत्र संशयः—'चतुरहे पुरस्तात् पूर्णमास्यै' इत्यत्र किं या काचित् पौर्णमासी ग्राह्या ? किं वा चैत्री माघ्यन्यतरा ? आहोस्विदनन्तरस्तुता चैत्री ? यद्वा माघ्येव ? इति। तत्र पूर्वपक्षयति—

## पौर्णमास्यामनियमोऽविशेषात् ॥ २८ ॥

अविशेषात् पौर्णमास्यामनियम एव। ननु "मुखं वा एतत् संवत्सरस्य" इति वाक्यशेषाच्चैत्री ( प्रतीयते, "एकाष्टकायां क्रयस्सम्पद्यते" इति क्रयसम्पत्ति) वचनात् माघी च प्रतीयते। ततश्च तयोरन्यतरैवात्र युक्ता, न तु काचित्पौर्णमासीति चेन्न; वाक्यशेषक्रयसम्पत्तिवचनयोः कस्यानुग्रहः कस्य बाध इति विशेषाग्रहणादुभयोः परस्परबाध्यत्वेनासाधकत्वाद् या काचित् पौर्णमासी स्यात्। द्वितीयपक्षेऽपि सूत्रमिदं योज्यम्। द्वयोश्चैत्रीमाघ्योरन्यतरनिर्धारणे विशेषाग्रहणाद् द्वयोः पाक्षिकानुग्रहार्थमनियमेन माघी चैत्री वा स्यादिति ॥

अथ तृतीयपक्षमुपक्षिपति—

## आनन्तर्यात्तु चैत्री स्यात् ॥ २९ ॥

चैत्रीस्तुतेरानन्तर्यात्—अव्यवधानात् चैत्र्येव स्यात्, व्यक्तिवचनानां सन्निहितविशेषपरत्वव्युत्पत्तेः। अत एकवाक्यस्था चैत्री वाक्यान्तरस्थक्रयसम्पत्तिबलावगताया माघ्या बलीयसीति सैव ग्राह्या ॥

अथ सिद्धान्तयति—

## माघी वैकाष्टकाश्रुतेः ॥ ३० ॥

एकाष्टकाया क्रयसम्पत्तिश्रुतेर्माघ्येव ग्राह्या, न हि चैत्र्या. पुरस्ताच्चतुरहे दीक्षितेन तस्या सोमक्रय कर्तुं शक्यते। माघ्यास्तु पुरस्ताच्चतुरहे शुक्लैकादश्या दीक्षितस्य कृष्णसप्तम्यामेव द्वादशाहपरिमाणदीक्षानिवृत्तेः माघकृष्णाष्टम्याम् एकाष्टकाशब्दवाच्याया दीक्षानन्तरदिनकर्तव्यः सोमक्रयस्सम्पद्यत इति माघ्येव ग्राह्या। न च वाक्यशेषबलाच्चैत्री वा किं न स्यादिति वाच्यम्। चैत्रीस्तुत "चित्रापूर्णमासे दीक्षेरन्"

इत्यस्यैव शेषत्वेन 'चतुरहे पुरस्तात्' इत्यस्य शेषत्वाभावात्। न चैव सत्यत्र माघ्येव स्तोतुं युक्ता, न चैत्रीति चैत्रीस्तुतिरनर्थिका स्यादिति वाच्यम्। चैत्र्यपि निर्दुष्टा ततोऽपि माघीति माघीस्तुतिपरत्वेन चैत्रीस्तुतेरदोषात्। प्रमाणे सत्यन्य-स्तुतेरप्यन्यस्तुतिपरत्वस्य "आपो वै शान्ताः" इति अपां स्तुतेर्वेतसशाखास्तुतिपरत्व-वदविरोधात्। उक्तं ह्येतदर्थवादाधिकरणे 'विधिप्रतिषेधयोः प्रक्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति। न हि स्तुतिनिन्देऽव्यवस्थिते' इति। तस्मान्मा-घ्येव ग्राह्या ॥

अत्राशङ्क्य निराकरोति—

## अन्यापीति चेन्न भाक्तत्वादेषा हि लोके ॥ ३१ ॥

अन्या–माघकृष्णाष्टमीभिन्नाप्यष्टमी[1] एकाष्टकैव, "द्वादश पौर्णमास्यो द्वादशा-ष्टका "इति श्रवणात्। तस्माद्या काचित् पौर्णमासी स्यादिति चेत्–तन्न; एषा एकाष्टका लोके वृद्धव्यवहारेण माघकृष्णाष्टम्यामेव प्रसिद्धा। ततश्चानेकार्थत्वस्यान्याय्यतया-न्यास्वेकाष्टकाशब्दस्य भाक्तत्वाद्–गौणत्वान्न या काचिद् ग्राह्या। किञ्च "एकाष्टकाया-न्दीक्षेरन्नेषा वै संवत्सरस्य पत्नी" इति श्रवणाद्या संवत्सरस्य पत्नी सैवैकाष्टका युक्ता। सवत्सरस्य ( पत्नी च माघकृष्णाष्टम्येव। तद्विषयो हि मन्त्रश्श्रूयते—

"याञ्जनाः प्रतिनन्दन्ति रात्रिन्धेनुमिवायतीम्।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥
एकाष्टकायै सुमेधसे स्वाहा" इति।

तस्मान्माघ्येव ग्राह्या ॥

इतोऽप्येवमित्याह—

## दीक्षापराधे चानुग्रहात् ॥ ३२ ॥

"एकाष्टकाया दीक्षेरन् एषा वै संवत्सरस्य पत्नी यदेकाष्टका" इत्येकाष्टकाया दीक्षामभिधाय "आर्तं वा एते सवत्सरस्याभिदीक्षन्ते य एकाष्टकाया दीक्षन्ते" इति तस्या दीक्षाया दोष सङ्कीर्त्य "चतुरहे पुरस्तात् पौर्णमास्यै दीक्षरेन्" इति शुक्लैका-दश्या दीक्षा विधाय दीक्षान्ततः प्रचरतामेकाष्टका क्रयसम्पत्त्यानुगृह्णाति–"तेषामेकाष्ट-

---

१. भिन्नाप्यष्टमी नास्ति. क. ( ) चिन्हान्तर्गतो भाग खण्डित. अ.

कायां क्रयस्सम्पद्यते तेनैकाष्टकान्न च्छम्बट्कुर्वन्ति" इति । ततश्च दीक्षातोऽपराधे-प्रच्यवे सति क्रयसम्पत्या एकाष्टकाया अनुग्रहान्माघ्येव पौर्णमासी स्यात् ॥)

इतोऽप्येवमित्याह—

**उत्थाने चानुप्ररोहात् ॥ ३३ ॥**

गवामयनादुत्थाने सति अनु—पश्चात् प्ररोहन्दर्शयति—"तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति" इति । तस्मादपि माघी[1] ॥

इतोऽप्येवमित्याह—

**तस्याश्च सर्वलिङ्गानि ॥ ३४ ॥**

माघ्यामेव सर्वाण्यपि लिङ्गान्युपपद्यन्ते । तथाहि श्रुतम्—"आर्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायान्दीक्षन्ते" इति । आर्ता यस्मिन् काले भवन्ति (स काल आर्तः । शीते चार्ता भवन्ति) तस्मादपि माघी तथा । "तस्यापो न हि नन्दन्तोऽवभृथमभ्युपेयुः" इति श्रुतम् । चैत्र्यां दीक्षिताश्चापोऽभिनदन्त एवावभृथं यन्ति । तस्मादपि माघी पौर्णमासी ग्राह्या ॥

इति नवममेकाष्टकाधिकरणम् ॥ ९ ॥

१०

ज्योतिष्टोमे श्रूयते—"दीक्षितो न ददाति न जुहोति न पचति" इति । दीक्षाया विमुक्तिश्चावभृथे कृते भवति । अवभृथश्चापराह्णे भवति । तत्र यदा दैवान्मानुषाद्वा प्रतिबन्धादवभृथोत्कर्षस्तदा किमग्निहोत्रादिकं नित्यं कार्यम् ? उत न ? इति संशये, पूर्वपक्षयति—

**दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३५ ॥**

दीक्षाकालस्यैव न ददातीत्यादिप्रतिषेधनिमित्तत्वेन शिष्टत्वात्—विहितत्वात् तदतिक्रमे—कुतश्चित् प्रतिबन्धादवभृथोत्कर्षेण शास्त्रीयदीक्षाकालातिक्रमे नियतानामिदानामग्निहोत्रादीनामनुत्कर्षः—कर्तव्यान्येव तानि तेषां प्राप्तकालत्वात् ॥

१. इय माघी. ज.

() अ, क पुस्तकयोर्नास्त्ययं पाठः.

अथ सिद्धान्तयति—

**उत्कर्षो वा दीक्षितत्वादविशिष्टं कारणम् ॥ ३६ ॥**

'दीक्षितो न ददाति' इत्यत्र दीक्षितशब्देन दीक्षामात्रं निमित्ततया प्रतिपाद्यते, न तु दीक्षाकालः, लक्षणापातात् । अतोऽवभृथोत्कर्षेऽपि दीक्षितत्वात्—दीक्षासंस्कारानपायाद् दीक्षारूपं कारणमविशिष्टमित्यग्निहोत्रादीनामुत्कर्षः । नन्वहरहर्ददातीत्यादिना काले प्रसक्तं दानादि । अतो दीक्षितवाक्येनापि काल एव दानादिकं प्रतिषेध्यमिति काललक्षणा न दोषायेति चेन्न; अहरहरिति वीप्सया नित्यताया एव प्रतिपादनात् काले प्रसक्तावपि दीक्षारूपनिमित्ते सति दानादिकं विहितकाले न कुर्यादिति प्रतिषेधसम्भवेन लक्षणाया अनुचितत्वात् ॥

इति दशमं दीक्षानिवृत्त्यनन्तरं नित्यकर्मानुष्ठानाधिकरणम् ॥ १० ॥

११

तत्रैवावभृथोत्कर्षकाले यावन्तो होमा न कृतास्तान् सङ्ख्यायावभृथानन्तरं किं प्रतिहोमाः कर्तव्याः ? उत न ? इति संशये—यद्यपि यावदभृथ नाधिकारस्तथापि शास्त्रकृतोऽसावनधिकारः, किन्त्वपराधाधीनः । तस्मादपराधादतिपन्नानां प्रतिहोमाः कार्या इति प्राप्ते, सिद्धान्तयति—

**तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ३७ ॥**

अवभृथोत्कर्षे पूर्वेषामवभृथानुत्कर्षकालीनानामिव तदुत्कर्षकालीनानामपि प्रतिहोमा न विद्यन्ते । कर्तव्याकरणे हि प्रतिहोमाः । न हि यथाकथञ्चिदनधिकारे सति कर्तव्यतास्ति ॥

इतोऽप्येवमित्याह—

**कालप्राधान्याच्च ॥ ३८ ॥**

"सायञ्जुहोति प्रातर्जुहोति" इति विहितस्य कालस्य प्राधान्याज्जीवतोऽपि [1]तदभावेऽनधिकारादतिक्रान्ते काले प्रतिहोमा न [2]कर्तव्याः । न चैवमशुध्यतिपत्तावनन्तरं कालान्तरे ( कर्तव्यता न स्यादिति वाच्यम्, तद्वत्कालान्तरे ) कर्तव्यता-

१. तदभावे नाधिकारात्. क. २. कार्या. ग.

( ) अ. क. पुस्तकयो ग्रन्थपातः.

बोधकवचनाभावात् । न चैवमधिकारिणोऽपि प्रमादादकरणे कालान्तरे प्रतिहोमो न स्यादिति वाच्यम् , कालातिक्रमे प्रायश्चित्तस्यैव विहितत्वेन प्रतिहोमाभावस्येष्टत्वात् ॥

इत्येकादशमवभृथोत्कर्षेऽपि प्रतिहोमानुष्ठानाभावाधिकरणम् ॥ ११ ॥

१२

अवभृथानन्तरमुदवसानीयेष्ट्युत्कर्षेऽग्निहोत्राकरणे प्रतिहोमाः कार्याः ? न वा ? इति संशयः । कृतावभृथस्य दीक्षानिवृत्तेः उदवसानीयेष्ट्युत्कर्षेऽग्निहोत्राकरणे कर्तव्याकरणात् प्रतिहोमाः कर्तव्याः । यदि [१]च कालाभावान्न प्रतिहोमास्तथापि प्रायश्चित्तं कार्यम् । (न च "एतया पुनराधेयसम्मितया इष्ट्येष्ट्वा अग्निहोत्रं होतव्यम्" इति वचनादिष्टेः प्राक् नाधिकार इति वाच्यम् । तस्य प्रागिष्टेरग्निहोत्रनिषेधपरत्वे परिसङ्ख्यादोषप्रसङ्गेन क्रमपरत्वात् । ततश्च क्रमानुग्रहायैतामिष्टिं कृत्वा प्रतिहोमक्रियास्त्विति प्राप्ते, सिद्धान्तयति—

**प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥ ३९ ॥**

अवभृथादूर्ध्वं एष्टे. इष्टे. प्राक् अतिपन्नाना न प्रतिहोमस्स्यात् । कुतः ? प्रतिषेधात् । ) न च "एतया पुनराधेयसम्मितया" इति वचनं न प्रतिषेधकमित्युक्तमिति वाच्यम । सत्यम् ; तथापि यथा भिन्नाधिकारिणां क्रमस्यानपेक्षितत्वेनाविधेयत्वात् "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यत्र कृतदर्शपूर्णमासस्यैव सोमाधिकारः तथा कृतोदवसानीयस्यैवाग्निहोत्राधिकारप्रतीतेरिष्टेः प्रागनधिकार इति कर्तव्याकरणाभावात न प्रतिहोमाः ॥

इति द्वादशमुदवसानीयेष्ट्युत्कर्षेऽपि प्रतिहोमानधिकाराधिकरणम् ॥ १२ ॥

१३

यदा तु "एतया पुनराधेयसम्मितया" इति वचनं प्रतिषेधकमित्याश्रित्य प्रतिहोमाः कर्तव्याः , तदा किमनियमेन कार्याः ? उत सायमाहुतिप्रभृति ? इति संशयः । तत्रातिपन्नानां होमानां युगपदुपस्थितेः क्रमनियमे प्रमाणाभावादनियम इति प्राप्ते, सिद्धान्तयति—

१. च नास्ति. अ. () गपुस्तके ग्रन्थपातः.

**प्रतिहोमाश्चेत् सायमग्निहोत्रप्रभृति हूयेरन् ॥ ४० ॥**

अतिपन्नक्रमेणैव [1]तत्प्रतिसाधनधीक्रमः । धीक्रमतश्च प्रवृत्तिक्रम इत्यग्नि-ष्टोमादावपराह्णेऽवभृथपरिसमाप्तेस्सायमग्निहोत्राहुत्यतिपातात् सायमग्निहोत्रप्रभृति हूयेरन् ॥

**प्रातस्तु षोडशिनि ॥ ४१ ॥**

षोडशिसंस्थे तु सोमे रात्राववभृथसमाप्तेः प्रातरग्निहोत्रप्रभृति प्रतिहोमा भवन्ति ॥

इति त्रयोदशं प्रतिहोमपक्षे तदनुष्ठाननियमनाधिकरणम् ॥ १३ ॥

१४

दर्शपूर्णमासयोश्श्रुतम्—"भिन्ने जुहोति" इत्यादि । [2]किमिदं सर्वत्र भवति ? उत दर्शपूर्णमासतद्विकृतिष्वेव ? इति संशये, पूर्वपक्षयति—

**प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४२ ॥**

दर्शपूर्णमासाधिकारे श्रुतं प्रायश्चित्तं सर्वत्र स्यात् । दोषस्य भेदनादिरूपस्य निमित्तसामान्यात्-साधारण्यात् । [3]वाक्येन हि यत्र यत्र निमित्तं तत्र तत्रावगम्य-मानं नैमित्तिकं न प्रकरणेन सङ्कोचयितुं युक्तम्, वाक्यस्यैव प्रकरणबाधकत्वात् । ननु भिन्नशब्दादर्थक्तिवचनन्यायेन[4] सन्निहितभिन्नधीरिति नासन्निहितक्रत्वन्तर-गतभिन्नन्निमित्तमिति चेत्—सत्यम् ; यद्यपि सन्निहितेषु भिन्नेषु पात्रेषु भिन्नशब्द-स्तथापि पात्राणां स्वरूपत एव सन्निधिर्न क्रत्वर्थतया, इत्यभावात्[5] । स्वरूपतस्सन्नि-हितानाञ्च क्रत्वन्तरेऽप्यन्वयोऽस्तीति क्रत्वन्तरगतमपि भिन्नं निमित्तमिति सर्वत्र स्यात् । न चैव लौकिकभेदनं निमित्तं स्यादिति वाच्यम्, अश्रुतत्वात् । आधवनीयादिसाध्यस्य होमस्य लौकिकभेदननिमित्तत्वाभिधानात् न लौकिकं भेदनं निमित्तम् ॥

---

१. नतु नास्ति. ग.

३. वाक्ये यत्र यत्र, ग

५. सन्निधानाभावात्, क.

अथ सिद्धान्तयति—

**प्रकरणे वा शब्दहेतुत्वात् ॥ ४३ ॥**

प्रकरण एव भेदननिमित्तकहोमस्य निवेशः। प्रकृतैकवाक्यतापादकप्रयोगवचनरूपस्य शब्दस्य तत्र हेतुत्वात्। नैमित्तिकस्यापि तावत् फलेनावश्यं भवितव्यम्। तत्रात्यन्ताप्रतिपन्नक्रत्वन्तरोपकाररूपफलकल्पनात् प्रकृतैकवाक्यताकल्पनेन प्रकृतोपकारकल्पनैव लघीयसीति प्रकरणाधीतानामनैमित्तिकानामपि प्रकृत्यङ्गत्वाद्दर्शपूर्णमासाधिकृतस्यैव भेदहोमाधिकार ॥

अधिकरणस्य प्रयोजनमाह—

**अतद्विकाराच्च ॥ ४४ ॥**

चो नार्थे। भेदनहोमस्य दर्शपूर्णमासाङ्गत्वादग्निहोत्रादिषु न प्रवृत्तिः। तेषां दर्शपूर्णमासविकारत्वाभावात् ॥

प्रायश्चित्तप्रसङ्गादाह—

**व्यापन्नस्याप्सु हृतौ यदभोज्यमार्याणान्तत्प्रतीयेत ॥ ४५ ॥**

"व्यापन्नमप्सु प्रहरति" इत्यत्र वाक्ये यदार्याणां शिष्टानाम् अभोज्यम् केशकीटादिदुष्टं तदेव व्यापन्नशब्देन प्रत्येतव्यमिति सुहृदुपदेश[1] ॥

इति चतुर्दशं दर्शपूर्णमासाधिकृतस्यैव भेदनहोमाधिकाराधिकरणम् ॥ १४ ॥

१५

( अपच्छेदपेटिका )

ज्योतिष्टोमे प्रातस्सवने बहिष्पवमानेन स्तोष्यमाणा. स्वस्य पुरतो गन्तुः पृष्ठभागं गृहीत्वा पिपीलिकावत् पङ्क्त्याकारेण हविर्धानात् प्रसर्पन्ति। तत्रान्वारम्भविच्छेदे प्रायश्चित्त श्रूयते—"यदि प्रस्तोतापच्छिद्येत ब्रह्मणे वरन्दद्यात, यदि प्रतिहर्ता सर्ववेदसं दद्यात, यद्युद्गातापच्छिद्येतादक्षिणस्स यज्ञस्संस्थाप्योऽथ तेन पुनर्यजेत, तत्र तद्दद्यात यत पूर्वस्मिन् दास्यन स्यात्" इति। 'यदा द्वयोर्युगपदपच्छेदो भवति तत्र प्रायश्चित्त कर्तव्यं वा ? न वा ? इति संशयः।

१. ग०, मद्रा. त.

तत्र पूर्वपक्षयति—

**विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४६ ॥**

अपच्छेदः क्रियाजन्यो विभागः । स चोभयसमवेतोऽपि यद्गतया क्रियया जन्यते, तत्कर्तृत्वेन व्यपदिश्यते । तत्र यदा पुरुषद्वयसमवेताभ्यां द्वाभ्यां क्रियाभ्यां युगपदपच्छेदो जन्यते तत्रापच्छेदे द्वयोर्मिलितयोः कर्तृत्वादेकेन [1]कर्त्रा व्यपदेशासम्भवाद् एकैककर्तृकापच्छेदनिमित्तकं प्रायश्चित्तं न कर्तव्यम् । ततश्च यौगपद्ये—द्वयोरपच्छेदक्रिययोर्यौगपद्ये प्रायश्चित्त न विद्यते । कुतः ? विभागश्रुतेः—विभक्ते एकैककर्तृक एवापच्छेदे प्रायश्चित्तश्रुतेरिति सूत्रार्थः ॥

अथ सिद्धान्तयति—

**स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेकं ॥ ४७ ॥**

यद्यपि पुरुषद्वयसमवेताभ्यां क्रियाभ्या युगपदपच्छेदो जन्यते (तथापि क्रियायास्संयोगविभागौ प्रति निरपेक्षकारणत्वात् क्रियाद्वयस्याप्येककालत्वेऽपि न मिलितस्य कारणत्व, किन्तु प्रत्येकमेव । ततश्च द्वावपि पुरुषौ स्वस्वक्रियायां मिथो विभागमेककालीनञ्जनयत इति ) यौगपद्येऽप्येकैकस्य कर्तृत्वादस्त्येव प्रायश्चित्त प्राप्तनिमित्तत्वात्—एकैककर्तृकापच्छेदरूपनिमित्ताप्राप्तेः । न च क्रियाद्वयस्य मिलितत्वेनैव विभागजनकत्वमिति वाच्यम् । क्रियाद्वयस्य कालमात्रमेवैकं, न तु तावता मिलितत्वेन जनकत्वम् । प्रत्येकमेव विभागे निरपेक्षकारणत्वादिति सूत्रार्थः ॥

इति पञ्चदश ( अपच्छेदपेटिकायां ) द्वयोर्युगपदपच्छेदे प्रायश्चित्ताधिकारनिर्णयाधिकरणम् ॥ १५ ॥

१६

निमित्तद्वययौगपद्येऽप्यस्ति प्रायश्चित्तमिति स्थितम् । उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे सति प्रायश्चित्तद्वय किं समुच्चीयते ? उत विकल्प्यते ? इति संशये, सिद्धान्तयति—

---

१. कर्तृव्यपदेशाभावात्. क. () अ, क. पुस्तकयोर्ग्रन्थपात .

## तत्र विप्रतिषेधाद्विकल्पस्स्यात् ॥ ४८ ॥

तत्र—युगपदपच्छेदे विप्रतिषेधात्—सर्वस्वदानादाक्षिण्ययोर्विरोधात् युगपदुपसंहर्तुमशक्तेर्विकल्पस्स्यात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

## प्रयोगान्तरेण वोभयोरनुग्रहस्स्यात् ॥ ४९ ॥

उद्गात्रपच्छेदे सति पुनः प्रयोगविधानात् पूर्वस्मिन् प्रयोगेऽदाक्षिण्य, द्वितीय प्रयोगे सर्वदानमिति प्रयोगभेदेनोभयोरदक्षिणासर्वस्वदानयोरनुग्रहस्स्यादिति समुच्चय एव युक्तः ॥

अथ सिद्धान्ती निराचष्टे—

## न वैकत्वसंयोगात् ॥ ५० ॥

नैतदेवम् । कुत ? एकत्वसयोगात्—यस्मिन् प्रयोगे द्वयोरप्यपच्छेदो जातस्तस्मिन् प्रयोगे सर्वस्वदानादाक्षिण्ययोः प्राप्ते. उभयोरनुग्रहासम्भवात् । [1]न हि प्रयोगान्तरे क्रियमाणनैमित्तिकमङ्ग प्रयोगान्तरार्थं भवति । किञ्चोद्गात्रपच्छेदे [2]यत् पूर्वस्मिन् दातव्य तदेव पुन. प्रयोगे देय नान्यत् । तद्यदि पूर्वस्मिन् प्रयोगे द्वादशशतादिकमेव दातव्यं, तदा पुन प्रयोगेऽपि तदेव देय[3] न सर्वस्वमिति नोभयानुग्रहः । यदि च पूर्वस्मिन्नेव प्रयोगे सर्वस्वमेव दित्सित, तदा तदेव सर्वस्व प्रतिहर्त्रपच्छेदप्रायश्चित्तार्थमपि देयमिति न तस्यादाक्षिण्येन बाधसम्भव., तुल्यत्वात् । तस्माद्यौगपद्ये विरुद्ध प्रायश्चित्तद्वय [4]विकल्पमर्हति ।

ननु यत्र विषयैक्य तत्र कार्ये व्रीहियवादौ विकल्पो[5] दृष्टः । प्रकृते तु सर्वस्वदानादाक्षिण्ययो भिन्नप्रयोगविषयतया भिन्नकार्यत्वेन विकल्पो[5] न युक्त । न चैवमपि विरोधादेकदानुष्ठानाशक्तेर्विकल्पस्स्यादिति वाच्यम् । [6]तदाप्यभ्यासभेदेन तदुभयानुष्ठानसम्भवादभ्यासोऽस्तु । न च सर्वस्वदानादाक्षिण्ययोर्गुणत्वात् न तदनुरोधेन प्रधानावृत्तिर्युक्तेति वाच्यम् , गुण[illegible]ग्रहणानुरोधेन सोमयागस्याभ्यास-

१. न नहि [illegible]. २. यत नास्ति. अ.
३. देय नास्ति अ, [illegible]. ४. विकल्पमिति. ग, म.
५. [illegible]युक्त , ग. ६. तदाप्यनाग. [illegible].

कल्पनादिति चेन्न; यस्मिन्नेव प्रयोगेऽपच्छेदः तस्मिन्नेव प्रयोगे सर्वस्वदानादाक्षिण्ययोः कर्तव्यतयाभ्यासकल्पनानवकाशात्। अत्र च सर्वस्वदानादाक्षिण्यशास्त्रयोरेकप्रयोगविषयतया प्रयोगभेदेनैकस्मिन् कर्मणि शास्त्रद्वयस्यापि प्रवृत्तिसम्भवात् न शास्त्रयोर्विकल्प', किन्त्वनुष्ठानस्येत्याहुः ॥

इति षोडश ( अपच्छेदपेटिकाया ) युगपदपच्छेदे प्रायश्चित्तविकल्पाधिकरणम् ॥ १६ ॥

१७

यत्र क्रमेणोद्गातृप्रतिहर्त्रोरपच्छेदस्तत्र कि प्रायश्चित्तद्वयस्य विकल्पः ? किं वा पूर्वनिमित्तकमेव कार्यम् ? आहोस्वित् परनिमित्तकम् ? इति संशयः। निमित्तयोरुद्गातृप्रतिहर्त्रपच्छेदयोः पौर्वापर्येणोत्पत्तावपि नैमित्तिकद्वयसमवायाविशेषान् पूर्ववद् विकल्प एव युक्तः। तथाहि—"आहवनीये जुहोति" इति सामान्यशास्त्रस्य विशेषे लक्षणया विलम्बिता प्रवृत्ति, "पदे जुहोति" इति विशेषशास्त्रस्य तु श्रुत्या झटिति प्रवृत्तिरिति शीघ्रप्रवृत्तिक विशेषशास्त्र विलम्बितप्रवृत्तिकं सामान्यशास्त्र बाधताम्; तथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यत्र श्रुत्या मन्त्रस्य गार्हपत्ये विनियोगेन प्रयोजनाकाङ्क्षानिवृत्तेः मूलोच्छेदेन न लिङ्गस्यापि विनियोजकत्वसम्भव इति श्रुत्यादिकं लिङ्गादिक बाधताम्, तथोपक्रमस्थो वेदशब्दोऽनुपसञ्जातविरोधितयोपसंहारस्थस्य ऋकपदस्य श्रुत्यर्थपरत्व बाधताम्; तथा "गोदोहनेन पशुकामस्य" इति काम्यं गोदोहन पुरुपार्थप्रत्यासन्नतया क्रतुद्वारा पुरुपार्थं प्रति विप्रकृष्टक्रत्वर्थञ्चमस बाधताम्; "शरमय बर्हिस्तृणाति" इति श्येनादौ विहितश्शरादिर्निरवकाशतया प्रत्यक्षशास्त्रविहितत्वाच्च प्रकृतौ सावकाशं चोदकप्राप्तं कुशादिकं बाधताम्; यत्र भूयोऽनुग्रहस्तत्राल्पं बाध्यताम्—यथा "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्" "दधि मधु घृतमापो धानाः प्राजापत्यम्" इति, आग्नेयपुरोडाशे धानासु चाग्नेयधर्मप्राप्तिः, आग्नेयश्च पर्वद्वयसाधारण इति न तत्र विवादः। इतरेपु त्वैन्द्रधर्मो दर्शधर्मः प्राप्त'। मधुघृतानान्तूपांशुयाजविकारत्वात पौर्णमासधर्मप्राप्ति॰। तत्र भूयोऽनुग्रहादाज्यभागादौ वार्त्रघ्न्यादिमन्त्रादयः पौर्णमासधर्मा प्राप्नुवन्ति, न वृधन्वदादिमन्त्रादय इति द्वादशे वक्ष्यते; तथा "आग्नावैष्णव द्वादशकपाल निर्वपेदपराह्णे, सरस्वतीमाज्येन यजेत" इत्यत्र मुख्यधर्मा वृधन्वन्मन्त्रादयश्च-

रमधर्मान्वाग्रेदनमन्त्रादीन् बाधन्ते, मुख्यानुग्रहस्य ज्यायस्त्वात्; तथा प्रधानसोमयागानुग्रहार्थं सुत्यायामेव पर्वकालत्वं न दीक्षणीयादिषु सोमाङ्गेषु। अङ्गानामपि प्रधानार्थतया प्रधानानुग्रहस्यैव ज्यायस्त्वादिति द्वादशे स्थितत्वात् प्रधानधर्मोऽङ्गधर्मं बाधताम्; तथा "पञ्चदशसामिधेनीरनुब्रूयात्" इति नित्यं पाञ्चदश्यं प्रथमप्रतिपादितं साप्तदश्य बाधताम्; प्रकृते त्वदाक्षिण्यसर्वस्वदानयोर्द्वयोरपि नैमित्तिकत्वेनोक्तेषु बाधकताप्रयोजकेष्वन्यतरस्याप्यभावान्नान्यतरेणान्यतरस्य बाधसम्भव इति तुल्यत्वाद्विकल्प एव युक्तः। न च यथा प्रथमोत्पन्नं भ्रमज्ञानमुत्तरोत्पन्नेन प्रमाणज्ञानेन बाध्यते, तथा प्राथमिकं नैमित्तिकज्ञानमुत्तरनैमित्तिकज्ञानेन बाध्यतामिति वाच्यम्, शास्त्रार्थावधारणवेलायां पौर्वापर्यविशेषाभावात्। न च प्रयोगगतेन पौर्वापर्येण शास्त्रयोर्बलाबलं सम्भवति, शास्त्रप्रवृत्युत्तरकालत्वात् प्रयोगस्य। किञ्चोत्तरनैमित्तिकज्ञानेन पूर्वोत्पन्ननैमित्तिकज्ञानस्योत्पत्तिनिरोधलक्षणबाधासम्भवान्मिथ्यात्वलक्षणबाध एव वाच्यः। न च तत्सम्भवति, शास्त्रस्य मिथ्यात्वायोगात्। सामान्यशास्त्रादेव हि विशेषशास्त्रादिवशात् तद्व्यतिरिक्तविषयपरिकल्पनान्न मिथ्यात्वम्। इह त्वेकस्मिन्नेव प्रयोगे शास्त्रद्वयस्यापि प्रवृत्तेः [1]विषयान्तरकल्पना न युज्यते किञ्च मिथ्यात्व हि न बाधेन जन्यते, किन्तु विद्यमानमेव त्वबाधेन बोध्यते। ततश्चादुष्टकारणजन्यस्य पूर्वज्ञानस्य मिथ्यात्वाभावान्नेतरेण [2]तद्बाधसम्भवः। यदीद शास्त्र कर्मज्ञानशास्त्रवत् सकृदेव बोधक स्यात्, तदा शास्त्रार्थावधारणकाले शास्त्रयो पौर्वापर्यं न स्यात्। न त्वेवम्; इदं हि नैमित्तिकाधिकारद्वारकं प्रयोगशास्त्रम्। अतः प्रति प्रयोगमावर्तते। यस्य च प्रतियोगमावृत्तिस्तस्य प्रतिप्रयोगमेवार्थावधारणम्। अतो निमित्तपौर्वापर्ये शास्त्रपौर्वापर्यं भवतीति बाधसम्भव इति कथ विकल्पेन पूर्वपक्ष इत्येकदेशिभिरुक्तम्, तदयुक्तम, 'यदि प्रतिहर्तापच्छिद्येत' इति संशयवचनमुपजाते निश्शये निमित्त कथमिवार्थं बोधयेत। तस्मात [प्रागेव प्रयो]गाच्छास्त्रस्य प्रवृत्ति। न च पौर्वापर्यमस्तीति व्रीहियवन्यायेन विकल्प एवेत्येक पक्षः। तत्र प्राथमिकन्नैमित्तिकमसञ्जातविरोधित्वान्निर्विघ्नमवगम्यते। तद्विरोधादुत्तरन्नैमित्तिकमशक्यमवगन्तु श्रुतिलिङ्गादाविव पूर्वबलीयस्त्वमिति द्वितीय पक्ष.॥

१. विशिष्टयागान्तर. ग.

अथ सिद्धान्तयति—

## पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५१ ॥

यथा द्वादशशतविज्ञान परेण नैमित्तिकेनादाक्षिण्यज्ञानेन बाध्यते, तथा ततोऽपि परेण नैमित्तिकेन सर्वस्वदानविज्ञानेन तदपि बाध्यते परत्वाविशेषात्। न चोत्तरविज्ञानसमये पूर्वविज्ञानस्यासत्वात् कथं बाध इति वाच्यम्। उत्तरविज्ञाने जाते द्वितीयक्षणे पूर्वविज्ञानं स्मर्यते। तृतीयक्षणे[1] तस्य परेण विरोधः प्रतीयते। चतुर्थक्षणे च तस्य परेण बाधो भवति। [2]विदधदेव हि स्वार्थमात्मनो विरुद्धमर्थान्तरं बोधयितुमशक्नुवत् [3]स्मृत्युपारूढं पूर्वविज्ञान बाधते। न च पूर्वेणैव परस्य बाधः किन्न स्यादिति वाच्यम्, पूर्वविज्ञानसमये परस्यानुत्पन्नत्वाद् असतो बाधासम्भवात्।

ननु निमित्तान्तरोत्पत्तेः प्रागन्यथाकर्तव्यस्यैव क्रतोः फलसाधनत्वावधारणात् निमित्तान्तरे सत्यन्यादृशस्य कथं फलसाधनतेति चेन्न; नैमित्तिकशास्त्राणामयमर्थ – प्रागन्यथाकर्तव्यस्यैव क्रतोः फलसाधनत्वावधारणात् निमित्तान्तरे सत्यन्यादृशः क्रतुः निमित्ते सत्यन्यथाकर्तव्य इति। ततश्च प्राङ्निमित्ताद्यथा द्वादशशतदक्षिणाकः फलसाधनमित्यवगम्यते, उद्गात्रपच्छेदे सत्यदक्षिणः पुनरावृत्तिधर्मकश्च फलसाधनमित्यवगम्यते, तथा प्रतिहर्त्रपच्छेदे सति सर्वस्वदक्षिणाक. फलसाधनमित्यवगमादन्यादृशस्यापि फलसाधनत्वमविरुद्धम्। अतः पूर्वस्य परेण बाधः। स च शास्त्रार्थावधारणवेलायामेव [4]प्रयोगगतेन पौर्वापर्येण शास्त्रयोर्मिथो बाधोऽवगम्यत इति प्रयोगोत्तरकाल शास्त्रार्थावधारणापत्ति.।

नन्वेव पूर्वशास्त्रस्याप्रामाण्य स्यात्, न चेष्टापत्तिः। तथा सति "यजतिषु ये यजामहं करोति, नानूयाजेषु" इत्यत्र पर्युदासोऽनूयाजव्यतिरिक्तेष्विति, न तु प्रतिषेध'। तथात्वे सामान्यतो यजतिमात्रे प्रवृत्तस्य ये यजामहस्यानूयाजेषु प्रतिषेधविकल्पप्रसङ्गादिति वक्ष्यमाणविरोधात्। प्रतिषेधेऽपि सामान्यविधेरनूयाजेष्वप्रामाण्याङ्गीकारसम्भवेन येयजामहस्यानूयाजेषु नित्यवदनुष्ठानासम्भवेन विकल्पाभावात् पर्युदासप्रतिपादनानर्थक्यात्। अविद्यमानदोषस्य च शास्त्रस्याप्रामाण्याङ्गीकारस्याति

---

१. क्षणात्. अ.  २. किञ्च विदधन्नेव. क.

३. स्मृत्यारूढ. अ.  ४. प्रयोगतो न पौर्वापर्येण. ग.

साहसत्वादिति चेन्न; शास्त्रस्य हि [१]असम्भवद्विषयत्वमेव ह्यप्रामाण्यनिदानम्। ततश्च यत्र पाश्चात्यं निमित्तान्तरं नास्ति तत्र विषयसम्भवान्न शास्त्रस्याप्रमाण्यम्। अत एवातिदेशशास्त्रस्य क्वचित् कुष्णलादिषु वैतुष्यादिद्वारबाधेनावहननासम्भवेऽप्यन्यत्र तत्सम्भवान्नाप्रामाण्यम्। ननु तर्हि किमत्र बाध्यमिति चेदुच्यते—या किल शास्त्रबाधविषयेऽपि सामान्यतः प्रवृत्तिस्सामान्याभासनिमित्तत्वात् बाध्यते। तस्मात् पूर्वस्य परेण बाधः॥

सूत्रार्थस्तु—निमित्तद्वयस्य पौर्वापर्ये पूर्वस्य दौर्बल्यम्, यथा प्रकृतितः प्राप्तस्य कुशस्य शरेण बाधस्तद्वदिति॥

इति सप्तदशमपच्छेदाधिकरणम्॥ १७॥

१८

यत्र प्रतिहर्तुः प्रथममपच्छेदः पश्चदुद्गातुस्तत्र परबलीयस्त्वाददक्षिणं प्रथमं यज्ञं संस्थाप्य पुनः प्रयोगः कर्तव्यः। तत्र च पुनः प्रयोगे यत् पूर्वस्मिन् प्रयोगे देयं तदेव देयमिति स्थिते संशयः, किं पुनर्यज्ञे द्वादशशतं देयम्? (उत सर्वस्वद्वादशशतयोर्विकल्पः? किं वा सर्वस्वमेव देयम्? इति। तत्र 'यत्पूर्वस्मिन् दास्यन् स्यात्तद्दद्यात्' इत्युक्तेर्यदेव क्रतौ स्वभावतो देयं द्वादशशतं तदेव प्रतीयते, निरपेक्षत्वात; न तु प्रतिहर्त्रपच्छेदनिमित्त ) सापेक्षत्वात्। अतस्सापेक्षनिरपेक्षयोर्निरपेक्षस्य शीघ्रतरा प्रतीतिरिति द्वादशशतमेव तत्र पुनर्यज्ञे देयमित्येकः पक्षः। पूर्वस्मिन्नित्यनेन न कर्मोच्यते, कर्मण एकत्वेन पूर्वापरव्यपदेशायोगात्, किन्तु प्रयोग एवोच्यते। पूर्वप्रयोगत्वञ्च प्रतिहर्त्रपच्छेदनिमित्तकप्रयोगस्य चाविशिष्टमिति पूर्वयोर्नित्यनैमित्तिकप्रयोगयोर्द्वादशशतसर्वस्वयोर्देयत्वात् पुनर्यज्ञे विकल्प इत्यपरः पक्षः॥

सिद्धान्तयति—

यद्युद्गाता जघन्यस्स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन्॥ ५२॥

पूर्वशब्दो हि य एव प्रस्तुतस्तस्याव्यवहितमेव पूर्वमभिधत्ते, न तु पूर्वमात्रम्। ततश्चोद्गात्रपच्छेदनिमित्तप्रयोगस्य प्रस्तुतत्वात्तदव्यवहितपूर्वप्रतिहर्त्रपच्छेदनिमित्तक

[१] असम्भवद्विषयत्वात् ग.

( ) अ क पुस्तकयोर्नास्ति.

प्रयोग एव पूर्वशब्देनोच्यते, [1]न तु नित्यप्रयोगः, तस्य पूर्वतरत्वात्। द्वादशशतस्य सर्वस्वेन बाधितत्वाच्च पुनर्यज्ञे सर्वस्वमेव देयम्। ननु यथा पुनर्यज्ञापेक्षया पूर्वस्मिन् प्रयोगे सर्ववेदसेन बाधात् तत्रातद्दास्यन् भवति, तथा सर्ववेदसस्यापि अदाक्षिण्येन बाधात्तदपि न दास्यन् भवति। यदि च तत्र प्रसक्तिमात्रेण सर्ववेदसस्य देयत्वन्तदा द्वादशशतस्यापि तदविशिष्टमिति द्वयोर्विकल्प एव युक्त इति चेन्न; प्रतिहर्त्रपच्छेदे सर्ववेदसं दद्यादिति विरुद्धपरिमाणोपदेशाद् द्वादशशतमेवात्र बाधितन्न तु सर्ववेदसम्, उद्गात्रपच्छेदे तद्विरुद्धपरिमाणोपदेशाभावात्। ननु तथाप्यदक्षिणस्संस्थाप्य इति दक्षिणाप्रतिषेधश्रुतेस्सर्ववेदसस्यापि बाध इति चेन्न; नायं प्रतिषेध, "नातिरात्रे षोडशिनं गृह्णाति" इतिवत् न दक्षिणां दद्यादित्यश्रवणात्। किञ्चादक्षिणस्य समाप्तिर्विधीयमाना दक्षिणादाने सति न सम्भवतीत्यर्थाद् दक्षिणा निवर्तते। ततश्चाऽऽर्थेन दक्षिणाभावेन वाचनिकस्य सर्ववेदसस्य बाधासम्भवात्, न तद्द्वादशशतवद् अधीतम्। न च तस्याबाधितत्वेऽनुष्ठीयेतेति वाच्यम्। सत्यमनुष्ठीयत एव पुन. प्रयोगे। ननु यस्मिन्नेव प्रयोगे (प्रतिहर्त्रपच्छेदस्तस्मिन्नेव सर्ववेदसन्देयम्, न प्रयोगान्तर इति चेत्—सत्यम्; तस्मिन्नेव प्रयोगे) सर्ववेदसन्दानव्यमित्यवचनात्तत आच्छिद्य प्रयोगान्तरे निक्षिप्यत इति सर्ववेदसस्य स्वरूपेण द्वादशशतवद् बाधाभावात् पुनः प्रयोगे सर्वस्वदानेनैवाधिकारः। सूत्रार्थस्तु—यद्युद्गाता प्रतिहर्तुरनन्तरमपच्छिद्येत तदा पुनर्यज्ञे सर्ववेदसमेव दद्यान्न द्वादशशतम्। यथा इतरस्मिन् प्रतिहर्तृमात्रापच्छेदनिमित्तकप्रयोगे तद्वदिति ॥

इत्यष्टादश (अपच्छेदपेटिकायां) पुनः प्रयोगे सर्वस्वदानाधिकाराधिकरणम् ॥ १८ ॥

१९

द्वादशाहादिष्वहर्गणेषु यदा कस्मिंश्चिदहन्युद्गात्रपच्छेदस्तदा किं कृत्स्नस्याहर्गणस्यावृत्तिः ? उत तस्यैवाह्न. ? इति विशये, साधननिवेशित्वाद्धर्माणामहर्गणस्यैव

१. न त्वनिन्दरप्रयोग इति मातृकासु पाठः. () चिन्हान्तर्गतो भागः खण्डित, अ.

संहृत्य साधनत्वाद् गणस्यैवादक्षिणसंस्थापनं पुनःप्रयोगश्चेति प्राप्ते, सिद्धान्तयति—

**अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मणां पृथक्त्वात् ॥ ५३ ॥**

अहर्गणे यस्मिन्नहनि अपच्छेदस्तदेवाहरावर्तते न गणः, कर्मणां पृथक्त्वात्—प्रत्येकं भिन्नत्वात्। न हि फलभेदाभेदनिमित्तौ कर्मभेदाभेदौ। कर्मणां स्वरूपेण प्रत्यक्षतश्शब्दान्तरादिभिश्च भेदावगमात्। अतः कर्मभेदादवान्तरापूर्वाण्यपि भिन्नानीति प्रत्येकमेवैतेषां साधनत्वम्। न चैवं प्रत्येकमेवैकैकस्मात् फल सिध्यतीति गणस्य प्रयोगो न स्यादिति वाच्यम्, फलं प्रति तेषामुपादेयत्वेन साहित्यस्य विवक्षितत्वेन प्रत्येकमेव धर्मग्राहित्वात्। अतस्तस्यैवाह्न आवृत्तिगुणकत्वं नान्येषाम्। नन्वेव द्वादशाहे महाप्रयोगाङ्गतयैव दक्षिणा विहिता, न तु तत्तत्कर्मप्रयोगाङ्गतया। ततश्च तस्य तस्यैवान्ह आवृत्तौ पूर्वस्मिन् प्रयोगे दाक्षिण्यस्याभावात् पुनर्यज्ञे न किञ्चिदपि देयं स्यादिति चेत्—इष्टत्वात्। अथवा द्वादशाहदक्षिणायास्तन्त्रत्वेन सैव पूर्वस्मिन्नपि प्रयोगे दक्षिणेति सैव पुनर्यज्ञे देयेत्याहु ॥

इत्येकोनविंशं ( अपच्छेदपेटिकायां ) अहर्गणेऽह्न एव पुन. प्रयोगाधिकरणम् ॥ १९ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ षष्ठाध्यायस्य पञ्चम पादः ॥



# अथ षष्ठः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पञ्चमपादे कालापराधनिमित्तकर्माधिकारश्चिन्तितः । अथ षष्ठपादेऽस्मिन् अङ्गविशेषप्रयुक्तकर्माधिकारश्चिन्त्यते । "सप्तदशावरा सत्रमासीरन्" इति श्रुतम् । दर्शपूर्णमासयोस्तु श्रुतं "वसिष्ठशुनकात्रिवत्सराजन्यानां नाराशंसो द्वितीयः प्रयाजः, तनूनपादितरेषाम्" इति । तदिह सत्रे समानकल्पानामेवाधिकारः ? उत भिन्नकल्पानामपि ? इति संशये, सिद्धान्तेनोपक्रमते—

**सन्निपाते वैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥**

बहूनां यजमानानां समवाये चोदिते सति तुल्यकल्पा एवाधिक्रियन्ते । भिन्नकल्पानां समावेशेऽन्यतरकल्पाश्रयणेऽन्यतरवैगुण्यप्रसङ्गात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**वचनाद्वा शिरोवत् स्यात् ॥ २ ॥**

"सप्तदशावरा" इत्यविशेषवचनात् भिन्नकल्पा अपि सत्रे अधिक्रियेरन् । वचनाद्वान्यतरकल्पो बाध्यते, शिरोवत् । "पुरुषशीर्षमुपदधाति" इति वचनसामर्थ्यात् इष्टकाभावेन स्मृतिप्रतिषिद्धमपि क्रियते, तद्वत् ॥

अथ सिद्धान्ती निराचष्टे—

**न वानारभ्यवादत्वात् ॥ ३ ॥**

यजेरन्निति विशिष्य वचनाभावात् 'सप्तदशावरा' इत्यस्य चानारभ्यवादत्वात्। सामान्यवचनत्वादित्यर्थः। समानकल्पविषये च तत् सावकाशम्। पुरुषशीर्षोपधानवचनन्तु निरवकाशत्वात् शवस्पर्शननिषेधं बाधते ॥

पुनः पूर्वपक्षी प्रत्यवतिष्ठते—

**स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥**

वा शब्दः प्रत्यवस्थाने। स्याद् भिन्नकल्पानामधिकारः। न चान्यतरवैगुण्यम्। कुतः? यज्ञार्थत्वात्। नाराशंसादिकल्पो यज्ञार्थः। यज्ञश्च सर्वेषां यजमानानां साधारणः। स चान्यतरकल्पेनापि सिद्धो भवति, औदुम्बरीवत्। तथा "यजमानेन सम्मितौदुम्बरी भवति" इति यस्य कस्यचिद्यजमानस्य परिमाणेन सिद्धो यज्ञोऽन्येषामपि साधारणो भवति, तद्वत् ॥

अथ सिद्धान्ती निराचष्टे—

**न तत्प्रधानत्वात् ॥ ५ ॥**

न यज्ञार्थो नाराशंसादिकल्पः। कुतः? तत्प्रधानत्वात्—तस्य वासिष्ठादिपुरुषोद्देशेन विधानात्। नाराशंसोद्देशेन तु वासिष्ठादिविधौ [1]धात्वर्थादन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात्। नन्वेवम् वासिष्ठादीन् स्वामिन उद्दिश्य नाराशंसादिविधौ फलकल्पनाप्रसङ्ग इति चेन्न, वासिष्ठाद्यर्थत्वस्य [2]तदीयकर्तृकारकेणापि सम्भवेन फलकल्पनानापत्तेः। तदयमर्थस्सम्पद्यते—वासिष्ठानां नाराशंस एव यज्ञाङ्गमिति। तस्मात्तद्युक्त एव क्रतुस्तेषां फलसिध्यै पर्याप्नोतीति न भिन्नकल्पनामधिकारः ॥

यदुक्तमौदुम्बरीवदिति तत्राह—

**औदुम्बर्यां परार्थत्वात् कपालवत् ॥ ६ ॥**

यथा "पुरोडाशकपालेन तुषानुपवपति" इत्यत्र परप्रयुक्तमेव कपालं [3]तुषोपवापाङ्गत्वेन विधीयते, तथा औदुम्बर्यङ्गत्वेन परप्रयुक्त एव यजमानश्चोदित इति येन केनापि सम्मितौदुम्बरी यजमानसम्मितैवेति भवति तत्रावैगुण्यम् ॥

१. धात्वर्थादन्यस्य. अ, क. २. तदीयकर्तृपकारेण. अ, क.

३. तुषोपवापाङ्गत्वेन. क.

अत्राशङ्क्य निराकरोति—

**अन्येनापीति चेन्नैकत्वात्तस्य चानधिकाराच्छब्दस्य चावि-भक्तत्वात् ॥ ७ ॥**

यद्येवं क्रत्वन्तरगतेन यजमानेनापि सम्मानं स्यादिति चेन्न; एकेन यज-मानेन सम्मानादपि यजमानसम्मितत्वसिद्धेर्न क्रत्वन्तरगतेनापि सम्मानमपेक्षितः। न च तर्हि क्रत्वन्तरगतेनैव सम्मानमस्त्विति वाच्यम्, तस्य प्रकृतकर्मानधिकृतत्वात्। न च तस्यानधिकृतत्वेऽपि यजमानशब्दवाच्यता किं न स्यादिति वाच्यम्। शब्दस्य चाविभक्तत्वात्—व्यक्तिवचनानां सन्निहितविशेषपरत्वेनासन्निहितपरत्वा-सम्भवात् ॥

अत्र शङ्कते—

**सन्निपातात्तु निमित्तविघातस्स्यात् बृहद्रथन्तरवद्विभक्तशिष्ट-त्वाद्वासिष्ठनिर्वर्त्ये ॥ ८ ॥**

तु शब्दश्शङ्कायाम्। अत्र हि वासिष्ठादिकर्तृकत्वेन निमित्तेन [illegible] नाराशंसो विधीयताम्, तथात्वेऽपि [illegible]। ततश्च वासिष्ठादीनामन्येषाञ्च कर्तृत्वसन्निपाते सति [illegible] रूपनिमित्तविघातस्स्यादिति नाराशंसस्य [illegible]। [illegible] तद्वत्त्वाद् विभक्तशिष्टत्वाद्—वासिष्ठादिनिर्वर्त्ये [illegible]। यथा बृहद्रथन्तरोभयपृष्ठके [illegible] भवति, तद्वत्। [illegible] वैगुण्यमिति ॥

परिहरति—

**अपि वा कृत्स्नसंयोगादविघातः प्रतीयेत स्वामित्वेनाभि-सम्बन्धात् ॥ ९ ॥**

वसिष्ठकर्तृकस्य क्रतोर्नाराशसोऽङ्गमित्यनुपात्तक्रत्वपेक्षतया षष्ठीव्याख्यानञ्चान्याय्यम्। तस्मान्नाराशसस्य तत्राङ्गत्वम् ॥

यदुक्तं बृहद्रथन्तरवदिति, तत्राह—

**साम्नोः कर्मवृद्धिरेकदेशेन संयोगे गत्वेनाभिसम्बन्धस्तस्मात्तत्र विघातस्स्यात् ॥ १० ॥**

साम्नो बृहद्रथन्तरयोः कर्मवृद्धिः पृष्ठस्तोत्ररूपकर्मसम्बन्धः। एकदेशेन· स्तोत्रैकदेशेन संयोग एव साम्नोरेकैकस्य स्तोत्रैकदेशं प्रत्येव साधनत्वात्, न तु प्रत्येकम्। कृत्स्नस्तोत्रसाधनत्वमिति [1]यावत्। कुत. ? यतो गुणत्वेन स्तोत्रे तयो· रभिसम्बन्धो न तु प्रकृत इव प्राधान्येन। तस्मात्तत्रैकक्रतुसाधनत्वरूपनिमित्तस्य विघातस्स्यात्। प्रकृते त्वेकस्यैव कृत्स्नकर्म प्रति कर्तृत्वान्न निमित्तविघात इति नैमित्ति· कस्यानङ्गत्वकथनमयुक्तमिति ॥

इति प्रथम सत्रेषु समानकल्पानामधिकाराधिकरणम् ॥ १ ॥

२

कुलाययज्ञे श्रूयते—"एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इति। तत्र संशय.- किं राजपुरोहिताविव्यत्र कृतैकशेषेणोत्तरपदेन तत्पुरुष –पुरोहितश्च पुरोहितश्च पुरोहितौ, राज्ञः पुरोहिताविति ? किंवा राजा च पुरोहितश्च राजपुरो· हिताविति द्वन्द्व ? इति। तत्र पूर्वपक्षयति—

**वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत् ॥ ११ ॥**

द्वन्द्वपक्षे द्विवचनान्वयानुपपत्त्या समासान्तर्वर्तिपदयोस्स्वार्थसम्बन्ध्यर्थान्तर· सहितावस्थलक्षकता[2] वाच्येति पदद्वयलक्षणागौरवाद् राज्ञ पुरोहिताविति तत्पुरुष एव युक्त। तत्र पूर्वपदस्यैव सम्बन्धे लक्षणाङ्गीकारात्। न च "पुरोहित वृणीते" इत्युपादीयमानस्य पुरोहितस्यैकत्व विवक्षितमिति नैकस्य राज्ञः पुरोहितद्वयमस्ति, द्विवचनानर्थक्याद्[3] वर लक्षणाद्वयमिति वाच्यम्। एतस्मादेव वचनाद् द्विसंयोग· पुरोहितद्वयसंयोगः एकस्य राज्ञो भविष्यति, पाणिवत्। यथा 'दक्षिणाचारेण

1. यावत् नास्ति अ.    2. लक्षणपना ग.
3. आनर्थक्यात् लक्षणा. अ    4. सम्मार्ष्टि. अ.

कर्तव्यम्' इति वचनात् प्रतिषिद्धस्यापि सव्यपाणेः 'अञ्जलिना जुहोति' इति वचनेन होमे प्राप्तिस्तद्वत् ॥

अथ सिद्धान्तयति—

**अर्थाभावात्तु नैवं स्यात् ॥ १२ ॥**

अर्थाभावात्–पुरोहितद्वयरूपार्थाभावान्नैव स्यात्–द्वौ पुरोहिताविति न स्यात्। न च वचनात् पुरोहितद्वयमस्तीत्युक्तमिति वाच्यम्। अस्य वचनस्यान्यथाप्युपपत्तेर्वक्ष्यमाणत्वात्। ननु तर्हि षष्ठीतत्पुरुषैकशेषेणास्तु राज्ञः पुरोहितो राजपुरोहितः, राजपुरोहितश्च राजपुरोहितश्च राजपुरोहिताविति राजद्वयसम्बन्धिनौ पुरोहिताविति पर्यवस्यतीति चेत्, तत्रापि तदेवोत्तरम्—अर्थाभावात्। तथात्वे राजशब्दस्य प्रयोजनाभावात्। न हि राज्ञोऽन्यस्य पुरोहितस्सम्भवतीति व्यभिचाराभावाद् राजविशेषणमनर्थकम्। अतो नैव स्यात्––षष्ठीतत्पुरुषैकशेषो न स्यादिति। ननु तर्हि राजात्मकौ पुरोहिताविति समानाधिकरणैकशेषोऽस्त्विति चेत्तत्रापीदमेवोत्तरम्—ब्राह्मण एव पुरोहितत्वेन वरीतव्य इति श्रुतेरर्थाभावात्–राजात्मकपुरोहितरूपार्थाभावान्नैव स्यादिति ॥

किञ्च—

**अर्थानाञ्च विभक्तत्वात्तत्तश्च तेन सम्बन्धः ॥ १३ ॥**

अर्थानाञ्च विभक्तत्वं श्रूयते। तेजस्संस्तवो ब्राह्मणस्य, वीर्यसंस्तवो राजन्यस्य, तेन फलेन सम्बन्धश्चानूद्यते। ततश्च राजा च पुरोहितश्च द्वौ यजेयाताम्, न तु राजानावेव द्वौ, नापि पुरोहितावेव द्वौ ॥

यदुक्तं पाणिवद्वचनात् पुरोहितद्वयसंयोग इति तत्राह—

**पाणेः प्रत्यङ्गभावात् सम्बन्धः प्रतीयेत ॥ १४ ॥**

सव्यपाणेर्दक्षिणपाणिप्रत्यङ्गत्वात्तत्सम्बन्धः प्रतीयेत। अन्यथा सव्यपाणिसम्बन्धाभावेऽञ्जलेरेवासम्भवाद्वचनानर्थक्यात्। इह तु राज्ञः पुरोहितस्य च द्वयोरपि कर्तृत्वेऽपि वचनोपपत्तेः न पुरोहितद्वयसम्भवः। न चेवं लक्षणाद्वयापत्तिरिति वाच्यम्, श्रुत्यभावे लक्षणयापि व्यवहारोपपत्तेः। वस्तुतस्तु यद्यपि समाहारद्वन्द्वसमासान्तर्वर्तिपदानां स्वार्थपरत्वे तेषामनेकत्वादेकवचनानुपपत्तेः सर्वपदानां समाहारे लक्षणावश्यिकी, तथापीतरेतरयोगद्वन्द्वे न कस्यापि लक्षणा। प्रातिपदिकद्वयार्थ-

द्वित्वाच्च द्विवचनमुपपन्नम् । न चात्रापीतरेतरयोगो लक्षितव्य इति वाच्यम् , तस्यार्थसिद्धत्वात । धवखदिरावित्यत्र धवखदिरावुभावप्येकेन विभक्त्यर्थेनान्वित एतन्मुखेन पश्चात् क्रियान्वयमनुभवत इत्येकविभक्त्यर्थान्वयादेवेतरेतरयोगसिद्धिः । न शब्दस्य तत्प्रतिपादकत्वं, येन लक्षणा स्यात् । [तस्मात् ]षष्ठीतत्पुरुषे पूर्वपदलक्षणादोषादितरेतरयोगद्वन्द्व एव ज्यायानिति राजा च पुरोहितश्च [राजपुरोहिताविति] द्विवचनाद् भिन्नकल्पावपि यजेयातामिति सिद्धम् ॥

इति द्वितीयं कुलाये भिन्नकल्पानामधिकाराधिकरणम् ॥ २ ॥

३

किं सत्रे त्रयाणामपि वर्णानामधिकार· ? उत ब्राह्मणानामेव ? इति संशये, पूर्वपक्षयति—

**सत्राणि सर्ववर्णानामविशेषात् ॥ १५ ॥**

"ऋद्धिकामास्सत्रमासीरन्" इत्यविशेषात् सर्ववर्णानां सत्राणि स्युः ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ १६ ॥**

"बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात् पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य" इति द्वादशाहे ब्रह्मसामविधानरूपलिङ्गदर्शनाच्च सर्ववर्णाना सत्राणि ॥

अथ सिद्धान्तयति—

**ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १७ ॥**

ब्राह्मणानामेव सत्राणि स्युर्नेतरयो राजन्यवैश्ययो·, तयोरार्त्विज्याभावात् । "ये यजमानास्त ऋत्विजः" इति सत्रे यजमानानामेव ऋत्विक्कार्ये विधानाद् राजन्यवैश्ययोरप्यधिकारे तयोरप्यार्त्विज्य प्रसज्येत । न चैतद्युक्तम् । प्रकृतितो हि आर्त्विज्येऽन्यकर्तृकता ब्राह्मणकर्तृकता च प्राप्ता । तत्र यद्यपि 'ये यजमानाः' इति वचनादन्यकर्तृकता बाधिता, तथापि ब्राह्मणकर्तृकतायां [1]बाधकाभावात् । नन्वत्र ऋत्विज इति पदं न तत्कार्यलक्षणार्थम् । ऋत्विक्छब्दस्य ऋतुयजननिमित्तकतया यजमानशब्देन मुख्यसामानाधिकरण्यसम्भवेन लक्षणावैयर्थ्यादिति चेत्—सत्यम् , तथापि

१. बाधकाभाव . क.

वचनानर्थक्यात् । यजमानानामृतौ यष्टृत्वस्य सिद्धतया विधानानर्थक्यात् परिक्रीताध्वर्य्वादिपरमत्र्त्विक्पदम्[1] । तस्य यजमानपदेन मुख्यसामानाधिकरण्यासम्भवात् [2]तत्कार्यलक्षकत्वमावश्यकम् । न चैवमपि यजमानपदमेव तत्कार्यलक्षकम् । तत्र च ऋत्विजो विधीयन्तामिति वाच्यम् । मुख्ययजमानपदस्य लाक्षणिकत्वानौचित्याद् यजमानद्रव्ये ऋत्विजामस्वामित्वेन स्वत्वत्यागरूपयजमानकार्ये तेषां विधानाशक्तेश्च ।

नन्वेवमपि यच्छब्दयोगाद्यजमानानुद्दिश्य तत्संस्कारत्वेनार्त्विज्यं विधीयताम् । तथाच त्रयाणा सत्रेऽधिकारः । न चैवमपि 'विप्रकर्म न हीनेन कर्तव्यम्' इति निषेधविरोध इति वाच्यम् । निषेधवचनस्य गुणतयापि विप्रकर्मणि कर्तृत्वनिषेधपरत्वकल्पनात् । इह च संस्कार्यत्वेनैव तत्कर्मकर्तृत्वादविरोधः । न चैवमपि ब्राह्मणस्यार्त्विज्याङ्गत्वात्कथमिहापि तन्न प्राप्नोतीति वाच्यम् । प्रकृतौ हि गुणभूतकर्तृपरिच्छेदकतयार्त्विज्याङ्ग ब्राह्मण्यम् । इह च [3]गुणभूतकर्तृरूपद्वाराभावेन न ब्राह्मण्यस्य प्राप्तिः । न च गुणभूतकर्त्रपेक्षत्वादार्त्विज्यस्य कथमिह ब्राह्मण्यमिति वाच्यम् । आधारभूतैरेव यजमानैः क्रियमाणस्यार्त्विज्यस्य गुणभूतकर्त्रनपेक्षणादिति चेन्न; यच्छब्दयोगेऽपि हि न यजमानानामिहोद्देश्यत्वं, तथासत्यार्त्विज्यस्याप्राकृतकार्यतापातात् । किन्तु ये ऋत्विजस्ते यजमाना इत्यार्त्विज्योद्देशेन यजमाना एव कर्तारो विधीयन्ते । न चैवमृत्विक्कार्येऽन्यत्विग्विधिरिति वाच्यम् । [4]यजमानेष्वपि ऋतुयजननिमित्तस्य ऋत्विक्त्वस्याक्षतत्वेन ऋत्विक्कार्येऽन्यर्त्विक्सिध्यभावात् । न च वरणभरणजन्यमेवर्त्विक्त्व, तच्च न यजमानानामिति वाच्यम् । वरणभरणयोरानत्यर्थत्वेन ऋत्विक्त्वप्रयोजकत्वात् । अन्यथाऽदृष्टार्थत्वापातादनुणाज्यावरणवत् सत्रेऽपि ते कर्तव्ये स्यातामित्युक्तं तृतीये । ततश्च वचनात् प्रकृतान्यकर्तृकतानिवृत्तावपि प्राकृतब्राह्मणकर्तृकतानुरोधेन ब्राह्मणा एव सत्रमासीरन् ॥

अत्राशङ्क्य निराकरोति—

## वचनादिति चेन्न स्वामित्वं हि विधीयते ॥ १८ ॥

'ये यजमाना' इति वचनात्-अत्र यजमानाना सतामार्त्विज्ये विनियोगात् । यजमानता च सत्यधिकारे । ततश्च पूर्वसिद्धाधिकारोपजीवित्वादस्याङ्गविधानस्या-

---

१. परमृत्विक्पदम्. अ, क. २. तत् नास्ति. अ.

३. गुणभूतकर्तृरूपत्वाभावेन. क, गुणरूपकर्तृद्वाराभावेन. अ.

४. यजमानेऽपि अ, क.

धिकारविधिवर्णनपरत्वे तद्वशेनाधिकारवर्णनम्, अधिकारविधिना च त्रयाणाम- धिकारः प्रतीयते। तेषाञ्चार्त्विज्ये विनियोग इत्युपदेशवशेनातिदेशिकब्राह्मणकर्तृकता बाध्यत इति चेन्न; अधिकारविधिना हि ऋद्धिकामानां स्वामित्वमेवाभिधीयते, न त्रैवर्णिकत्वमाहत्याभिधीयते। ततश्च ब्राह्मणमात्रचरितार्थसामान्यवचनप्राप्तधर्म- वचनेनातिदेशिकस्यापि ब्राह्मणकर्तृकत्वस्य [न] बाधो युक्तः। किञ्च 'ये यजमानाः' इत्यत्रार्त्विज्यमुद्देश्यतया प्रधानं, तद्धर्मः ब्राह्मणकर्तृकत्वम्। त्रैवर्णिकत्वन्तु गुणभूत- यजमानधर्मः। ततश्च 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन प्रधानाङ्ग- ब्राह्मण्याबाधार्थं ब्राह्मणानामेव सत्रेऽधिकार इति सिद्धम्॥

अत्राशङ्कते—

**गार्हपते वा स्यातामविप्रतिषेधात्॥ १९॥**

गृहपतिकर्मणि राजन्यवैश्यौ स्याताम्। आर्त्विज्यस्य गृहपतिकर्मत्वाभावेन विप्रतिषेधाभावात्॥

परिहरति—

**न वा कल्पविरोधात्॥ २०॥**

नैतदेवम्; तथासति "बार्हद्गिरं ब्राह्मणानां, पार्थुरश्मं राजन्यानां, रायो- वाजीयं वैश्यानाम्" इति विहितानां नैमित्तिककल्पानां विरोधप्रसङ्गात्॥

लिङ्गदर्शनं विघटयति—

**स्वामित्वादितरे महीने लिङ्गदर्शनम्॥ २१॥**

इतरेषां–राजन्यवैश्यानाम् अहीनद्वादशाहेऽपि स्वामित्वादहीन एव लिङ्ग- दर्शनोपपत्तिः॥

इति तृतीयं सत्रेषु ब्राह्मणाधिकाराधिकरणम्॥ ३॥

४

ब्राह्मणानामेव सत्रेऽधिकार इति स्थितम्। किं वासिष्ठानामेव तत्राधिकारः? उत सर्वेषां ब्राह्मणानाम्? किं वा वैश्वामित्राणामेव? इति संशये, पूर्वपक्षयति—

**वासिष्ठानां ब्रह्मत्वस्य नियमात्॥ २२॥**

"वासिष्ठो ब्रह्मा" इति वचनात् तत्समानकल्पानामेवाधिकारः॥

द्वितीयपक्षमुपक्षिपति—

**सर्वेषां वा प्रतिप्रसवात् ॥ २३ ॥**

सर्वेषामेव ब्राह्मणानामधिकारः । "वासिष्ठो ब्रह्मा" इति "वैश्वामित्रो होता" इति च प्रतिप्रसवात्-विरोधाद् उभयमपि सत्रे न प्रवर्तते ॥

अथ सिद्धान्तयति—

**वैश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकारः ॥ २४ ॥**

वैश्वामित्रस्य हौत्रनियमात् तत्कल्पानामेवाधिकारो न भृग्वादीनाम् । न च वासिष्ठानामपि ब्रह्मत्वनियमोऽस्तीत्युक्तमिति वाच्यम् । 'य एव कश्चन स्तोमभागान-धीते स एव ब्रह्मा भवेत्' इत्यवासिष्ठस्यापि स्तोमभागविदो ब्रह्मत्वाभ्यनुज्ञानात् । ननु किमर्थस्तर्हि वासिष्ठोपदेश इति चेत्-अवासिष्ठोऽपि स्तोमभागानधीयानो वासिष्ठकार्यं कर्तुं समर्थ इति स्तोमभागप्रशंसार्थं इति ॥

इति चतुर्थं सत्रेषु वैश्वामित्रकल्पाधिकाराधिकरणम् ॥ ४ ॥

५

किं सत्रे अनाहिताग्नीनामप्यधिकारः ? उताहिताग्नीनामेव ? इति संशये, पूर्वपक्षयति—

**विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २५ ॥**

विहारस्य-अग्नेः परकीयस्यापि परान् प्रत्युपकर्तुं प्रभुत्वात्—समर्थत्वाद् यस्य कस्यचिदग्निभिस्सर्वेषां क्रतुसिद्धेरनाहिताग्नीनामपि सत्रं स्यात् ॥

इतोऽप्येवमित्याह—

**सारस्वते च दर्शनात् ॥ २६ ॥**

"परस्यैवा एते स्वर्गं यन्ति येऽनाहिताग्नयः सत्रमासते" इत्यनाहिताग्नीना-मप्याग्निनाग्निना सारस्वते सत्रेऽधिकारदर्शनात् सत्रमात्रेऽनाहिताग्नीनामप्यधिकारः ॥

इतोऽप्येवमित्याह—

**प्रायश्चित्तविधानाच्च ॥ २७ ॥**

"अग्नये विविचये पुरोडाशमष्टाकपालन्निर्वपेत् यस्याग्नयोऽग्निभिरग्नयः संसृज्येरन् इत्यग्निसंसर्गे प्रायश्चित्तविधानात् सर्वेषामग्नीनेकायतनस्थान् कृत्वा

होमस्सम्भवतीति कस्यचिदेवाग्निष्वाहिताग्नीनामपि सत्रं तदनाहिताग्नीनामपि भवत्येव ॥

अथ सिद्धान्तयति—

**साग्नीनां वेष्टिपूर्वत्वात् ॥ २८ ॥**

"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति वचनात् सोमस्येष्टिपूर्वत्वात्, "य एतेनानिष्ट्वा अथान्येन यजेत" इति वचनात् सोमविकाराणाञ्च सोमपूर्वकत्वनियमादग्नीन् विना चेष्ट्याद्यसम्भवात् साग्नीनामेव सत्रम् ॥

नन्वेवमपि दर्शपूर्णमासादि सर्वमेव परकीयाग्निष्वेव किं न स्यादित्यत्राह—

**स्वार्थेन च प्रयुक्तत्वात् ॥ २९ ॥**

"अग्नीनादधीत" इत्यात्मनेपदादाधातुरेवाग्नय. फलसाधनक्रत्वर्था नान्येषामपीति न परकीयाग्निषु सत्रम् ॥

इतोऽप्येवमित्याह—

**सन्निवापश्च दर्शयति ॥ ३० ॥**

यदि कस्यचिदग्निष्वेव सत्रं तदा "सावित्राणि होष्यन्तः सन्निवपेयुः" इति अग्नीनां ससर्गदर्शनं नोपपद्येत । अतस्साग्नीनामेव ॥

इति पञ्चमं सत्रे आहिताग्नीनामेवाधिकाराधिकरणम् ॥ ५ ॥

६

अथ "प्रायश्चित्तविधानाच्च" इत्यस्य परिहारो वक्ष्यते । ततः प्रागेव पूर्वोक्तव्यतिरेकेण पूर्वपक्षस्य सुवचत्वादधिकरणान्तर प्रस्तूयते—किं यस्य कस्यचित् जुह्वादिभिस्सत्र प्रयोक्तव्यम् ? उतान्यानि साधारणान्युत्पाद्यानि ? इति विशये, पूर्वपक्षयति—

**जुह्वादीनामप्रयुक्तत्वाद्याथाकामी प्रतीयेत ॥ ३१ ॥**

पात्राणामग्निवदात्मनेपदाभावेन[2] स्वार्थमेव [3]प्रयुक्तत्वाभावाद्यस्य कस्यचित् पात्रैर्याथाकामी सत्रं प्रयुञ्जीत[4] ॥

---

१ सन्देहे याथाकामी.

२. आत्मनेपदेत्यभावेन. ग.

३. प्रयुक्तत्यभावात्. क.

४. प्रयुज्येत इति मातृकासु पाठ.

अथ सिद्धान्तयति—

**अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वाच्च ॥ ३२ ॥**

यदि कस्यचित् पात्रैस्सत्रमारभ्येत, तदा तस्य मध्ये मृतौ पात्राणामपिनिधानीये कर्मणि प्रक्षेपाभावे "दक्षिणे हस्ते जुहूं सादयति" इत्यादिना विहिता प्रतिपत्तिर्लुप्येत। प्रतिपत्तिरपि धारणस्य प्रयोजिकेत्यसकृदुक्तम् अधस्तात्। यदि तत्र प्रतिपाद्येरन्, तदा प्रकान्तः क्रतुर्विगुणस्स्यात्। न च जीवतोऽन्यस्य पात्रैः क्रतुनिर्वृत्तिरस्त्विति वाच्यम्। तथापि प्रयोगप्राशुभावस्य शास्त्रकृतत्वात् क्रतुवैगुण्यमवर्जनीयमेव स्यात्। तस्मादपि प्रतिषेधाय साधारणान्युत्पाद्यानि ॥

इति षष्ठ सत्रे पात्रसाधारण्याधिकरणम् ॥ ६ ॥

अथ पूर्वाधिकरणशेषः। प्रायश्चित्तविधानाच्चेत्यत्राह—

**प्रायश्चित्तमापदि स्यात् ॥ ३३ ॥**

आपदि—प्रमादाद्वा संसर्गे प्रायश्चित्त न शास्त्रीये। यदुक्तं सारस्वते च दर्शनादिति तदपि न; तत्र गत्यभावाद्वचनादनग्नीनामधिकारेऽपि सर्वत्र तथा कल्पनस्यायुक्तत्वात्। अयञ्च परिहारस्स्फुटत्वादुपेक्षितः ॥

इति पूर्वाधिकरणशेषः ॥

७

"सप्तदश सामिधेनीरनुब्रूयात्" इति श्रुतसाप्तदश्यास्वध्वरकल्पादिषु किं वैश्यानामेवाधिकारः? किं वा त्रयाणामपि? इति विशये, पूर्वपक्षयति—

**पुरुषकल्पेन विकृतौ कर्तृनियमस्स्याद्यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येतस्मिन्विधिकार्त्स्न्यात् ॥ ३४ ॥**

दर्शपूर्णमासगतेन 'सप्तदश वैश्यस्य' इति वाक्येन साप्तदश्ये वैश्यः कर्ता विधीयते। न हि दर्शपूर्णमासप्रकरणे साप्तदश्यमन्येन विहितमस्ति, यस्यानेन वैश्यकर्तृत्व

होमस्सम्भवतीति कस्यचिदेवाग्निष्वाहिताग्नीनामपि सत्रं तदनाहिताग्नीनामपि भवत्येव ॥

अथ सिद्धान्तयति—

**साग्नीनां वेष्टिपूर्वत्वात् ॥ २८ ॥**

"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति वचनात् सोमस्येष्टिपूर्वत्वात्, "य एतेनानिष्ट्वा अथान्येन यजेत" इति वचनात् सोमविकाराणाञ्च सोमपूर्वकत्व-नियमादग्नीन् विना चेष्ट्याद्यसम्भवात् साग्नीनामेव सत्रम् ॥

नन्वेवमपि दर्शपूर्णमासादि सर्वमेव परकीयाग्निष्वेव किं न स्यादित्यत्राह—

**स्वार्थेन च प्रयुक्तत्वात् ॥ २९ ॥**

"अग्नीनादधीत" इत्यात्मनेपदादाधातुरेवाग्नय. फलसाधनक्रत्वर्था नान्येषा-मपीति न परकीयाग्निषु सत्रम् ॥

इतोऽप्येवमित्याह—

**सन्निवापञ्च दर्शयति ॥ ३० ॥**

यदि कस्यचिदग्निष्वेव सत्रं तदा "सावित्राणि होष्यन्तः सन्निवपेयुः" इति अग्नीनां ससर्गदर्शनं नोपपद्येत । अतस्साग्नीनामेव ॥

इति पञ्चमं सत्रे आहिताग्नीनामेवाधिकाराधिकरणम् ॥ ५ ॥

६

अथ "प्रायश्चित्तविधानाच्च" इत्यस्य परिहारो वक्ष्यते । ततः प्रागेव पूर्वोक्त-व्यतिरेकेण पूर्वपक्षस्य सुवचत्वादधिकरणान्तरं प्रस्तूयते—किं यस्य कस्यचित् जुह्वादिभिस्सत्र प्रयोक्तव्यम् ? उतान्यानि साधारणान्युत्पाद्यानि ? इति विशये, पूर्वपक्षयति—

**जुह्वादीनामप्रयुक्तत्वाद्यथाकामी प्रतीयेत ॥ ३१ ॥**

पात्राणामग्निवदात्मनेपदाभावेन[2] स्वार्थमेव [3]प्रयुक्तत्वाभावाद्यस्य कस्यचित् पात्रैर्यथाकामी सत्रं प्रयुञ्जीत[4] ॥

---

१ सन्देहे याथाकामी.

२. आत्मनेपदेत्यभावेन. ग.

३. प्रयुक्तत्यभावात्. क.

४. प्रयुज्येत इति मातृकासु पाठ.

अथ सिद्धान्तयति—

**अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वाच्च ॥ ३२ ॥**

यदि कस्यचित् पात्रससत्रमारभ्येत, तदा तस्य मध्ये मृतौ पात्राणामपिनिधानीये कर्मणि प्रक्षेपाभावे "दक्षिणे हस्ते जुहूं सादयति" इत्यादिना विहिता प्रतिपत्तिर्लुप्येत। प्रतिपत्तिरपि धारणस्य प्रयोजिकेत्यसकृदुक्तम् अधस्तात्। यदि तत्र प्रतिपाद्येरन्, तदा प्रकान्त. क्रतुर्विगुणस्स्यात्। न च जीवतोऽन्यस्य पात्रैः क्रतुनिर्वृत्तिरस्त्विति वाच्यम्। तथापि प्रयोगप्राशुभावस्य शास्त्रकृतत्वात् क्रतुवैगुण्यमवर्जनीयमेव स्यात्। तस्मादपि प्रतिषेधाय साधारणान्युत्पाद्यानि ॥

इति षष्ठं सत्रे पात्रसाधारण्याधिकरणम् ॥ ६ ॥

अथ पूर्वाधिकरणशेषः। प्रायश्चित्तविधानाच्चेत्यत्राह—

**प्रायश्चित्तमापदि स्यात् ॥ ३३ ॥**

आपदि—प्रमादाद्वा संसर्गे प्रायश्चित्तं न शास्त्रीये। यदुक्तं सारस्वते च दर्शनादिति तदपि न; तत्र गत्यभावाद्वचनादनग्नीनामधिकारेऽपि सर्वत्र तथा कल्पनस्यायुक्तत्वात्। अयञ्च परिहारस्स्फुटत्वादुपेक्षितः ॥

इति पूर्वाधिकरणशेषः ॥

७

"सप्तदश सामिधेनीरनुब्रूयात्" इति श्रुतसाप्तदश्यास्वध्वरकल्पादिषु किं वैश्यानामेवाधिकारः ? किं वा त्रयाणामपि ? इति विशये, पूर्वपक्षयति—

**पुरुषकल्पेन विकृतौ कर्तृनियमस्स्याद्यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येतस्मिन्विधिकात्स्न्यात् ॥ ३४ ॥**

दर्शपूर्णमासगतेन 'सप्तदश वैश्यस्य' इति वाक्येन साप्तदश्ये वैश्यः कर्ता विधीयते। न हि दर्शपूर्णमासप्रकरणे साप्तदश्यमन्येन विहितमस्ति, यस्यानेन वैश्यकर्तृत्वं

विधीयेतेत्यध्वरकल्पादिगतसाप्तदश्यानुवादेनैव वैश्यविधिरित्यध्वरकल्पादिषु वैश्यानामेवाधिकार. । इतरथा साप्तदश्यस्य वैगुण्यापत्तेः ।

सूत्रार्थस्तु--विकृतौ-अध्वरकल्पादौ, पुरुषकल्पेन---'सप्तदश वैश्यस्य' इत्यादिना कर्तृनियमाद्वैश्यानामेवाधिकारः । कुतः ? यज्ञस्य--अध्वरकल्पादे. तद्गुणत्वात्-साप्तदश्यगुणकत्वात्, तस्य च साप्तदश्यस्य इतरान्---ब्राह्मणादीन् प्रत्यभावात्---अविहितत्वात्, एतस्मिन्---वैश्ये, विधिकात्स्न्यात्--विधेः कृत्स्नत्वादिति ॥

इतोऽप्येवमित्याह---

**लिङ्गाच्चेज्याविशेषवत् ॥ ३५ ॥**

"सप्तदशो वैश्य" इति लिङ्गाच्च वैश्यस्तोमेज्याविशेष इवाध्वरकल्पादावपि वैश्यस्यैवाधिकारः ॥

अथ सिद्धान्तयति---

**न वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३६ ॥**

दर्शपूर्णमासप्रकरणगतेन हि 'सप्तदश वैश्यस्य' इति वाक्येन नाध्वरकल्पादिगतसाप्तदश्यानुरोधेन वैश्यकर्तृकत्वविधिः, प्रकरणबाधप्रसङ्गात् । किन्तु प्रकरण एव वैश्यनिमित्ते पाञ्चदश्यबाधेन साप्तदश्यविधिः । तेन साप्तदश्यं वैश्यस्य दर्शपूर्णमासोपकारक न पाञ्चदश्यमिति वाक्यार्थः । अध्वरकल्पादिप्रकरणाधीतेन वाक्येन च नैमित्तिकसाप्तदश्यं क्रत्वर्थतया विधीयते, तत्र वैश्यसंयोगाभावात् । अतस्तत्र साप्तदश्यस्य वैश्येन विना न वैगुण्यमिति सर्वेषामधिकारः । स्थिते चात्र प्रकरणवशाद्वैश्यस्योद्देश्यत्वे 'वासिष्ठादीनां नाराशंस' इत्यत्र प्रकरणविरोधाभावाद्वसिष्ठकर्तृत्वेन नाराशंसो विधीयतामित्याशङ्का धात्वर्थविधिबलीयस्त्वेन निराकृतेत्यगतार्थतेति ध्येयम् । नन्वस्तु 'सप्तदश वैश्यस्य' इत्यत्र नैमित्तिकं साप्तदश्यविधानं, तथापि चोदकतः प्राप्नुवतोऽपि तस्याध्वरकल्पादौ पुनर्विधानमधिकारिनियमार्थमेव फलाभावादिति चेन्न, यथाप्रकृतितश्चोदकात् प्राप्यमाणस्यापि रथन्तरनिमित्तकस्यैन्द्रवायवाग्रत्वस्य द्वादशाहे "ऐन्द्रवायवाग्रं प्रथममहः" इति पुनर्विधान[म] नैमित्तिकत्वार्थम्, तद्वदत्राप्यनैमित्तिकत्वार्थोपपत्ते. नाधिकारनियमार्थं पुनर्विधानम् । नैमित्तिकत्वार्थ-

विधेश्च यथा द्वादशाहे ऐन्द्रवायवाग्रत्वविधेस्तद्विकृतिषु बृहत्पृष्ठत्वेऽप्यैन्द्रवायवाग्रत्वं फलं तद्वदत्रापि त्रैवर्णिकाधिकारत्वं फलमिति ।

सूत्रार्थस्तु—न चैतदेवं, संयोगपृथक्त्वात् । 'सप्तदश वैश्यस्य' इति वाक्यं वैश्यनिमित्तेन साप्तदश्यं विधत्ते । 'सप्तदशानुब्रूयात्' इति तु विकृत्यर्थतया चोदकप्राप्तपाञ्चदश्यबाधेन साप्तदश्यं विधत्ते । गुणस्य—साप्तदश्यस्येज्याप्रधानकल्पाद्यत्र त्रैवर्णिके योगस्तत्र गुणो न तु यत्र वैश्यगुणस्तत्र योगः । किञ्च या विकृतौ चोदना सा वैश्येनासंयुक्ता हीति ॥

यदुक्तमिज्याविशेषवदिति तत्राह—

**इज्यायां तद्ग्रहणाद्विशेषेण नियम्येत ॥ ३७ ॥**

'वैश्यो वैश्यस्तोमेन यजेत' इति तद्ग्रहणात्—वैश्यग्रहणात्, इज्यायां—विशेषणविशिष्ट नियम्येतेति ॥

इति सप्तममध्वरकल्पादिषु त्रैवर्णिकाधिकाराधिकरणम् ॥ ७ ॥

इति श्रीवासुदेवदीक्षितविरचितायामध्वरमीमांसाकुतूहलवृत्तौ षष्ठास्याध्यायस्य षष्ठः पादः ॥

# अथ सप्तमः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्याभिधानमन्थानै.।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

( विश्वजित्पेटिका )

तदेवमधिकारः प्रपञ्चितः। अथ सप्तमपादे तदपवादः प्रस्तूयते। विश्वजिति श्रूयते—"सर्वस्वं ददाति" इति। स्वशब्दश्चात्मात्मीयज्ञातिधनवाचकः। तत्रात्मनि स्वदानविरोधादात्मानमपहायात्मीयादिषु चिन्ता। किं तत्र पित्रादीनां ज्ञातीनामपि दानम्? किं वा धनस्यैव? इति विशये, पूर्वपक्षयति—

**स्वदाने सर्वमविशेषात् ॥ १ ॥**

स्वदाने चोद्यमाने स्वशब्दवाच्यत्वाविशेषात् सर्वं ज्ञात्यादिकमपि धनवद्दीयेत। ननु दाने हि देयस्य स्वस्वत्वत्यागपुरस्सरं परकीयत्वमापादनीयम्। ततश्च कथं पित्रादीनां दानम्। तेषा पितृत्वेन स्वीयानां [दानेन] परकीयत्वापादनासम्भवात्। न हि दीयमानोऽपि स्वपिता परस्य पिता भवतीति चेन्न; लाघवात् परकीयत्वमात्रमेव दाने देयस्यापादनीयम्, न तूक्तरूपेण। तथा च पित्रादयोऽपि दासवद्विधेयतया परकीयाः कर्तुं शक्यन्त एव। नन्वेवमपि स्वत्वत्यागपूर्वकं परस्वत्वापादनं दानम्। ततश्च दीयमानस्यापि पितुस्स्वत्वं पितृत्वं न निवर्तत इति कथं तस्य दानमिति चेन्न; यथा स्वत्वत्यागमात्र यागः, तथा परस्वत्वापादनमात्रस्य दानत्वात्। अतः पित्रादयोऽपि देयाः ॥

अथ सिद्धान्तयति—

**यस्य वा प्रभुत्वमितरस्याशक्यत्वात् ॥ २ ॥**

यस्य प्रभुत्वम्–यं प्रति स्वामित्व तस्यैव दानम्। स्वामित्वत्यागस्यैव दानपदार्थत्वात्। अतो धनस्येव दान पित्रादेरशक्यत्वान्न दानम्। न हि पित्रादीन् प्रत्यस्य स्वामित्वमस्ति। ननु स्वशब्देन पित्रादयोऽपि दातव्या गम्यन्ते। तस्मात्तान् प्रति

प्रभुत्वाय यतितव्यमिति चेन्न ; दानं हि 'स्वत्वत्यागपूर्वकं परस्वत्वापादनं न तु परस्वत्वापादनमात्रम् । लोके स्वत्वत्यागं विना प्रीत्यादिना परस्वत्वापादनेऽपि दान-शब्दाप्रयोगात्, गौरवस्य प्रामाणिकत्वेनादोषत्वात् । नन्वेव 'कन्यां ददाति' इति कथं, दीयमानाया अपि कन्यायाः स्वदुहितृत्वरूपस्वत्वापरित्यागात् । न च दासीवत् कन्यायामपि स्वामित्वनिरूपकं स्वत्वमस्तीति वाच्यम्, जनकत्वस्य स्वामित्वनिरूपक-स्वत्वहेतुत्वेनापरिगणनात् । अत· परस्वत्वापादनमेव दानमिति चेन्न ; कन्यां ददाती-त्यत्र ददातेर्गौणत्वात् । न चात्रापि तथास्त्विवति वाच्यम्, मुख्यत्वे सम्भवति गौणत्व-स्यान्याय्यत्वात् । किञ्चायं स्वशब्द· पुष्पवन्तादिशब्दवदेकया शक्त्या नानेकार्थपरः, किन्तु नानाशक्त्या । न च नानाशक्तिकल्पने गौरवादात्मीयत्वमेव प्रवृत्तिनिमित्तीकृत्य ज्ञात्यादिषु वर्तताम् । आत्मनि स्वात्मीयत्वासम्भवादात्मन्येका शक्तिः ज्ञात्यादिष्वपरा, न तु ज्ञातिधनयोरपि भिन्ना शक्तिरिति वाच्यम् । परकीययोरपि ज्ञातिधनयोर्ज्ञाति-धनशब्दवत् [2]स्वशब्दस्य प्रयोगात्, आत्मीयत्वस्य प्रवृत्तिनिमित्तत्वासम्भवेन ज्ञातित्व-धनत्वयोरेव प्रवृत्तिनिमित्ततया तत्रापि नानाशक्तिकल्पनावश्यम्भावात् । ततश्चै-कस्मिन् प्रयोगे तस्यैक एवार्थो ग्राह्यः । तत्र धनस्यैव मुख्यदानसम्भवात् तद्विषय एवात्र स्वशब्दः । भवतु वा परस्वत्वापादनमात्रं दानम्, तथाप्यत्र प्रकृतितः प्राप्त धनदानमनूद्य द्वादशशतपरिमाणन्यायेन सर्ववेदसदानं विधीयते । [3]तस्माद्धनेनैव सर्वेण विश्वजित्यधिकारः । एवञ्च शाखान्तरगतेन "सर्ववेदसं ददाति" इत्यनेन निस्सन्दिग्धधनविधिनैकार्थं भविष्यतीति दिक् ॥

इति प्रथमं विश्वजिति सर्वधनदानाधिकरणम् ॥ १ ॥

२

सार्वभौमदाने भूमिर्देया ? न वा ? इति संशयः । पित्रादौ स्वामित्वाभावेऽपि महापृथिव्यां सार्वभौमस्य मण्डलाधिपतीनाञ्च मण्डलेषु स्वामित्वसम्भवात् भूमिर्देया स्यादिति प्राप्ते, सिद्धान्तयति—

१. स्वत्वत्याग. अ. २. स्व. नास्ति. ग.

३. तस्माद्धनेनैव, क.

## न भूमिस्स्यात् सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥

( भूमिर्न देया स्यात्, तस्यास्सर्वान् प्रत्यविशिष्टत्वात्। ) भूमिर्हि[1] गोपथराजपथराजजलाशयवनपर्वतादियुक्ता। तादृश्याश्च न कस्यापि स्वामित्वम्, किन्तु कण्टकोद्धरणमात्रम्। राज्ञः तदुत्पन्नफलादानं हि भूमिं प्रति स्वामित्वम्। न हि गोपथादौ स्वामित्वमस्ति, गोपथादेस्साधारणत्वात्। अतो महापृथिवी न देया, किन्तु वास्तुक्षेत्रादिकमेवेति ॥

इति द्वितीयं विश्वजिति भूमिदानानधिकाराधिकरणम् ॥ २ ॥

३

विश्वजिति "न केसरिणो ददाति" इति श्रुतम्। केसराः स्कन्धगता रोमविशेषाः, तद्वन्तः केसरिणः अश्वादयः। तत्र केसरिणां दानं न वेति विशये, 'सर्वस्वं ददाति' इति वचनादश्वादीनामपि दानम्। न च विश्वजित्येव 'न केसरिणो ददाति' इति प्रतिषेधात् कथमश्वादिदानमिति वाच्यम्। विहितप्रतिषेधादतिरात्रे षोडशिग्रहवद्विकल्पो भविष्यति। नन्वत्र सामान्यविशेषविषयत्वेन विधिप्रतिषेधयोरतुल्यबलत्वेन विकल्पो न युक्त इति चेत्—सामान्यविषयस्यापि विधेस्स्वाधीनात्मलाभेन प्रतिषेधेन तुल्यबलत्वाविशेषात्[2]। न चायं चोदकप्राप्ताश्वदानप्रतिषेधो न तु सर्वस्वदानविधिप्राप्तप्रतिषेधः, येन प्रतिषेधस्य सामान्यविध्यधीनात्मलाभता स्यादिति वाच्यम्, तथापि "न तौ पशौ करोति" इत्यत्रेव विकल्पानपायात्। ननु विकल्पे अश्वे नित्यविधिरनश्वे पक्षे विधिरिति सर्वस्वविधेर्वैषम्यं स्यात्। अतः पर्युदास एवायं न प्रतिषेध इति चेन्न; पर्युदासेन [3]स्वार्थहानापत्तेर्वरं विधिवैषम्यमिति प्राप्ते, सिद्धान्तयति—

## अकार्यत्वाच्च ततः पुनर्विशेषस्स्यात् ॥ ४ ॥

विकल्पस्याष्टदोषत्वाद् एकवाक्यत्वे सम्भवति वाक्यभेदस्यायुक्तत्वाच्च "यजतिषु ये यजामहं करोति नानूयाजेषु" इत्यत्रेव पर्युदास एवायं नित्यञ्चाश्वा न देया। ननु चोदकप्राप्ताश्वदानपर्युदास एवास्तु, सर्वस्वविधिस्तु सर्वस्वान्तर्भावादश्वस्य

( ) गपुस्तके ग्रन्थपात.

१. हि नास्ति. अ.

२. बलत्वाविरोधात्. ग.

३. तु स्वार्थ. ग.

तत्प्रतिप्रसवोऽस्त्विति चेन्न; तथासति पर्युदासवैयर्थ्यापत्तेः। उपदेशस्योपदेशशेषत्वे सम्भवति चोदकशेषत्वायोगाच्चेति नित्यमश्वा न देयाः।

सूत्रार्थस्तु—अकार्यत्वात्–'न केसरिणो ददाति' इत्यकर्तव्यतयाभिधानादश्वदानस्य तत इतरधनतो विशेषस्स्यादिति ॥

इति तृतीय विश्वजित्यश्वदानानधिकाराधिकरणम् ॥ ३ ॥

४

विश्वजिति किं यत् सर्वस्वं पुरुषोपभोग्यं शय्यासनभवनादि तत् सर्वं देयम्? उत यावद्यस्य विद्यते तावत् सर्वन्तेन देयम्? इति विशये[1], श्रुत्यर्थविधिलिप्सया सर्वस्वोद्देशेन दानविधानावश्यम्भावाद् यस्यापि शयनासनादिकं नास्ति तेनापि तत् सम्पाद्य देयमिति प्राप्ते, सिद्धान्तयति—

**नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥**

यद्यपि यत् सर्वस्व तद्देयमिति वचनव्यक्तिः, तथापि परकीयस्य दानासम्भवाद्यदात्मीयं सर्वस्वमिति वक्तव्यम्। ततश्च सिद्धेनात्मीयेनोपपन्नो विधिर्नाविद्यमानमार्जयितु प्रभवति[2]। आर्ज्यमानस्य कदाचिदलाभसम्भवेन यदा लभ्येत तदा दद्यादित्याश्रीयमाणे नित्यवच्छ्रवणविरोधात्। वस्तुतस्तु यत् सर्वं तद् दद्यादिति नात्र वचनव्यक्तिः, दानस्य चोदकप्राप्तत्वेनाविधेयत्वात्। किन्तु दानोद्देशेन यस्य यदस्ति स तु तत्र द्वादशशतमात्रं दातुं प्रवृत्तस्सन् सर्वं दद्यादिति सर्वथा विधिरयम्। विद्यमानस्य च दानं प्राप्तमिति तस्यैवायं सर्वदानविधिरिति नार्जयित्वा देयम्।

सूत्रार्थस्तु—सर्वस्वदानविधेर्नित्यत्वाद (नित्यैः कदाचिद्याच्ञयाप्यलभ्यमानैः) शय्यादिभिर्नास्ति सम्बन्ध इति ॥

इति चतुर्थं विश्वजिति विद्यमानसर्वस्वदानाधिकरणम् ॥ ४ ॥

५

सर्वस्वदाने धर्मशिक्षार्थमुपनतः शूद्रो देयो न वेति संशये, सर्वशब्दानुग्रहाय सोऽपि देय इति प्राप्ते, सिद्धान्तयति—

१. विशय ज. २. प्रभवन्ति. अ. ( ) गगुरुके ग्रन्थपातः.

**शूद्रश्च धर्मशा त्वात् ॥ ६ ॥**

स्वत्वाभावादनिच्छया परवश्यत्वानभ्युपगमसम्भवाच्च न स देयः। दासस्तु देयः। सूत्रार्थस्तु—धर्मशिक्षार्थमुपनत. शूद्रश्च न देयस्सम्प्रति यजमानस्य केवलं धर्मशास्त्रत्वेन–धर्मोपदेष्टृत्वेन स्वामित्वाभावादिति ॥

इति पञ्चम विश्वजिति शूद्रदानानधिकाराधिकरणम् ॥ ५ ॥

६

किं दक्षिणाकालात् प्रागेवारभ्य सर्वं धारयित्वा देयं यच्च भावित्वेन मानान्तरेण निश्चितं तदपि देयम्? उत यदेव दक्षिणाकालेऽवस्थितं तद्देयम्? इति [1]सशये, सर्वशब्दानुग्रहाय भूतभाविनोर्धनयोरपि दानम्। न चैवं जीवनलोपप्रसङ्ग इति वाच्यम, तथापि जीवनावशिष्टदानाविरोधादिति प्राप्ते, सिद्धान्तयति—

**दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दा ंयोगात् ॥ ७ ॥**

स्वस्य दानमनूद्येह सर्वदानं विधीयते। दक्षिणाकालीनमेव (च स्वं देयत्वेन प्राप्तमिति तत्कालीनधनसाकल्य एव स्वशब्दोपपत्तेर्न धारणप्रयुक्तिः। भाविनश्च तदानीं स्वत्वमेव नास्तीति तस्य न शक्यमेव दानम्। तस्माद्दक्षिणाकालीनमेव) सर्वस्वं दद्यात्।

सूत्रार्थस्तु--दक्षिणकाले यत् स्व तदेव देयत्वेन प्रतीयेत, तस्यैव चोदकप्राप्तदानसयोगादिति ॥

इति षष्ठ विश्वजिति दक्षिणाकालिकसर्वस्वदानाधिकरणम् ॥ ६ ॥

७

प्रकृतौ कर्मारम्भ एव इद मे भक्तार्थम्, इद क्रत्वर्थम्, इदं दक्षिणार्थमिति विभागवचनबलाद्यजमानेनात्मीयधनं सर्वं त्रेधा विभक्तमित्यत्रापि विश्वजिति सर्वं धनं त्रेधा विभजनीयम्। तत्र किं त्रेधा विभक्तं द्रव्यं सर्वं देयम्? उत [2]यावता च शिष्टं कर्म परिसमाप्यते तावच्छिष्टान्यद् देयम्? आहोस्वित् यद्दक्षिणार्थत्वेन निहित तदेव सर्वं देयम्? इति विशये, पूर्वपक्षयति—

---

१. विशये. ग.

२. यावता विशिष्टेन. क.

() गपुस्तके ग्रन्थपातः.

**अशेषत्वात्तदन्तं स्यात् कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥**

सर्वस्वदानविधानात् कर्मशेषार्थमपि निश्चितं द्रव्यं देयम् । न चैवं कर्मशेषलोपस्स्यादिति वाच्यम् । प्रत्यक्षशिष्टसर्वस्वदानविरोधेन चोदकप्राप्तकर्मशेषस्य दुर्बलत्वेन तल्लोपेऽप्यदोषात् ॥

सूत्रार्थस्तु--द्रव्यस्य अशेषत्वात्-शेषरहितत्वात् तदन्तं—दक्षिणान्तमेव कर्म स्यात् । कुतः ? कर्मणो द्रव्याधीनसिद्धिकत्वादिति ॥

अथ द्वितीयं पक्षमुपक्षिपति—

**अपि वा शेषकर्म स्यात् क्रतौ. प्रत्यक्षशिष्टत्वात् ॥ ९ ॥**

आतिदेशिकमपि शिष्टं कर्म प्रधानत्वात् बलवत् । दक्षिणादानन्तु प्रत्यक्षविहितमप्यङ्गत्वाद्दुर्बलम् । उक्तमप्येतत् यत्र प्रमाणबलाबलस्य प्रमेयबलाबलस्य च विसंवादस्तत्र प्रमेयबलाबलादेव निर्णय इति । तस्माद्यावता क्रतुशेषनिर्वृत्तिस्तावच्छिष्टाऽन्यद्देयम् ॥

सूत्रार्थस्तु--क्रतौ. प्रत्यक्षशिष्टत्वात्--प्रधानतया शिष्टत्वात् शेषकर्म कर्तव्यं स्यादिति ॥

इतोऽप्येवमित्याह—

**तथा चान्यार्थदर्शनम् ॥ १० ॥**

"अवभृथादुदेत्य वत्सत्वचं परिधत्ते" इति कर्मशेषानुगमं अत्र दर्शयति । अन्यथा कर्मशेषार्थस्यापि दाने वत्सत्वचोऽवभृथस्याप्यभावेन लिङ्गदर्शनविरोधात् ॥

अत्र शङ्कते—

**अशेषे तु समञ्जसमादानेन शेषकर्म स्यात् ॥ ११ ॥**

तुः शङ्कायाम् । धनशेषाभाव एव सर्वस्वदानविधानं समञ्जसं भवति । तस्मान्न क्रतुशेषार्थमपि द्रव्यं देयम् । न चैवं '[1]प्रधानभूतशेषविरोध' इत्युक्तमिति वाच्यम् । शेषकर्म आदानेन-पुनरार्जनेन स्यादिति ॥

परिहरति—

**नादानस्यानित्यत्वात् ॥ १२ ॥**

आर्जमानं द्रव्यं कदाचिन्न लभ्येत । ततश्चा[2]दानस्यानित्यत्वान्न क्रत्वर्थमपि देयम्, प्रधानविरोधात् । ततो यावता क्रतुस्समाप्यते तावच्छिष्टा परिशिष्टन्देयमिति ॥

---

१. प्रधानशेषभूत. ग. २. आदानस्याप्यनित्यत्वात्. अ.

अथ सिद्धान्तयति--

**दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधस्स्यात्॥१३॥**

क्रत्वारम्भ एव त्रेधा विभक्तेषु द्रव्येषु यद्दक्षिणार्थं निर्दिष्टं द्रव्यं तद्दानमनूद्य सर्वतामात्रं विधीयते—स्वन्ददातीति यत्तत् सर्वमिति विधिलाघवात्। अतो यद् भक्तार्थं क्रत्वर्थञ्च द्रव्य तत्र देयमिति क्रत्वर्थेन द्रव्येण क्रतुस्समापनीय. ॥

सूत्रार्थस्तु—दीक्षासु इदं मे भक्तार्थमित्यादिना त्रेधा विनिर्देशात् अक्रत्वर्थेन-क्रत्वर्थभिन्नेन दक्षिणार्थेन दानस्य संयोग., तस्मादविरोध इति ॥

इति सप्तम विश्वजिति दक्षिणार्थत्वेन विभक्तसर्वस्वदानाधिकरणम् ॥ ७ ॥

८

अस्त्यष्टरात्रोऽहीन तस्य विश्वजित् प्रथममह'। ततोऽभिप्लवष्षडह.। ततोऽभिजित्। तत्र विश्वजिति संशय.—किं प्रकृतिभूतद्वादशाहवद् द्वादशशतं दक्षिणा स्यात्? उत सर्वस्वम्? इति। तत्र सिद्धान्तयति--

**अहर्गणे तद्धर्मस्सर्वेषामविशेषात् ॥ १४ ॥**

अहर्गणे च विश्वजिति तद्धर्म.-एकाहकाण्डपतितविश्वजितीव सर्वस्व दक्षिणैव स्यात्। सर्वेषा-दक्षिणातिरिक्ताना धर्माणां दक्षिणायाश्चाविशेषात् ॥

पूर्वपक्षी [१]प्रत्यत्रतिष्ठते--

**द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥**

चिकीर्षितप्रयोगार्थं हि कर्तारो दक्षिणयोपादीयन्ते। यच्च फलवत्तच्चिकीर्षितम्, अहर्गणश्च फलवान्न केवलो विश्वजित्। ततश्च गणस्यैकप्रयोगत्वात् तदर्थानतिरप्येकैव [२]तदर्था दक्षिणाप्येकैवेति न पृथक् पृथक् समुदायिना दक्षिणा इष्टा। तदिद दशमे वक्ष्यति। ततश्च गणार्थत्वाद् दक्षिणाया गणस्य च द्वादशाहप्रकृतित्वात् तद्दक्षिणाप्राप्ति। ततश्च प्रकृतिवत्-द्वादशाहवत् द्वादशशतमेव दक्षिणा स्यादिति सूत्रार्थ ॥

---

१. प्रत्युपतिष्ठते. ग. २ तदर्था दक्षिणाप्येकैव नास्ति. ग.

अथ सिद्धान्ती निराचष्टे—

## अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥

यद्यपि गणस्य दक्षिणा, तथापि प्रकृतकर्मावसायित्वाच्चोदकानां विश्वजिति च चोदनालिङ्गाद् बलीयसा नाम्ना सर्वस्वदानमेव ॥

सूत्रार्थस्तु—अहर्गणगतस्य विश्वजितोऽतद्गुणत्वात्—नामातिदेशेनैकाहविश्वजिद्धर्मकत्वेन द्वादशाहगुणकत्वाभावान्नैवं स्यात्—द्वादशशतं देयमिति न स्यादिति ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ १७ ॥

"हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं ददाति" इति सर्वस्वदानलिङ्गदर्शनाच्चाहर्गणे सर्वस्वं देयम् ॥

इत्यष्टममहीनगतविश्वजित्यपि सर्वस्वदानाधिकाराधिकरणम् ॥ ८ ॥

९

किं यस्य द्वादशशतान्न्यूनं धनं सोऽपि तावन्मात्रं दत्वा विश्वजित्यधिक्रियते ? उत यस्याधिकं स एव ? इति संशये, पूर्वपक्षयति—

## विकारस्सन्नुभयतोऽविशेषात् ॥ १८ ॥

सर्वस्वदानविधेस्तत्कालस्थितसर्वस्वमात्रविषयत्वात् तस्योभयत्रापि न्यूनधनेऽधिकधनेऽपि अविशेषात् न्यूनेऽपि धनेऽधिकारः ॥

सूत्रार्थस्तु—ज्योतिष्टोमविकारो विश्वजित् सन्नविकलः, तस्मादुभयोरप्यधिकारः ॥

अथ सिद्धान्तयति—

## अधिकं वा प्रतिप्रसवात् ॥ १९ ॥

यस्य द्वादशशतादधिकं धनं तस्यैवाधिकारः, प्रतिप्रसवात् । प्रकृतौ हि द्वादशशतं विधाय पश्चादुक्तं "यद्येतावतानमेयुरपि सर्वस्वेनानमयितव्याः" इति । तत्र द्वादशशताधिकमेव सर्वस्वमुक्तं तस्य चोदकेनानियमे प्राप्ते नियमशास्त्रेण निर्णीयते लाघवात् , न त्वपूर्वं सर्वस्वदानम् । अतोऽधिकधनस्यैवाधिकारः ॥

इतोऽप्येवमित्याह—

अ ग्रहाच्च पादवत् ॥ २० ॥

यथा कार्षापणे दत्ते माषोऽपि दत्तो भवतीति। एवमधिके दत्ते द्वादशशतमप्यनुगृहीतं भवतीत्यधिकमेव देयम् ॥

इति नवम विश्वजित्यधिकदानाधिकाराधिकरणम् ॥ ९ ॥

( इति विश्वजित्पेटिका )

१०

आधाने श्रूयते—"एका देया षड् देयाः द्वादश देयाः चतुर्विंशतिर्देया शतं देयं सहस्रं देयमपरिमित देयम्" इति। तत्र किं पूर्वोक्तैकादिपरिमाणविशिष्ट[१] परिमितशब्देनानूद्य नञा प्रतिषिध्यते ? किं वा सङ्ख्यान्तरविशिष्टं दानं विधीयते ? इति विशये, पूर्वपक्षयति—

अपरिमाणे शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥

अवयवव्युत्पत्त्या परिमाणशून्यमपरिमितशब्देनोच्यते। दीयमानस्यावश्यं परिमितत्वात् परिमितमिति प्रकृतमेकादिकमनूद्य नञा तस्य प्रतिषेधः क्रियते। न च परिमित [मदेय] मित्यन्वये असमर्थसमासस्यादिति वाच्यम्। अपरिमितदानाशक्तेरसमर्थसमासेऽप्यदोषात् ॥

सूत्रार्थस्तु—अपरिमाणे चोद्यमाने शिष्टस्यैकादेस्सङ्ख्यायाः प्रतिषेधस्स्यात्। तच्छ्रुतित्वात्—परिमितशब्दस्य प्रकृतैकादिपरत्वादिति ॥

अथ सिद्धान्तयति—

कल्पान्तरं वा तुल्यवत् प्रसङ्ख्यानात् ॥ २२ ॥

कल्पान्तरं—सङ्ख्यान्तरविशिष्टदानान्तरमेवात्र विधीयते। एका देयेत्यादिना तुल्यवदुक्तत्वात्। अपरिमितशब्देन हि रूढ्या बहुत्वसङ्ख्यैवाभिधीयते, न तु परिमाणशून्यम्। अवयवशक्त्यपेक्षया समुदायशक्तेर्बलीयस्त्वात्। न च समुदायशक्तिरलब्धात्मिका बहुष्वप्यज्ञेयपरिमाणरूपगुणयोगेन प्रयोगोपपत्तेः, परिपूर्वकमाधातोर्ज्ञानार्थत्वमिति वाच्यम्। [२]सुज्ञातपरिमाणेऽपि वस्तुनि बहुत्वमात्रेणापरि-

१. विशिष्टं द्रव्य. क. २. संज्ञात. क.

मितमस्य धनमित्यादौ प्रयोगात्। किञ्चावयवार्थानुगमेऽपि बहुष्वेव प्रयोगात् पङ्कजादिपदवद् बहुत्वे रूढिरेवेति दानान्तरविधिरेवायम् ॥

इति दशममाधानेऽपरिमितदानाधिकरणम् ॥ १० ॥

११

बहुत्ववचनोऽपरिमितशब्द इति स्थिते तत् सहस्रान् न्यूनं अधिकं वेत्यनियम ? किं वाधिकमेव ? इति विशये, पूर्वपक्षयति—

**अनियमोऽविशेषात् ॥ २३ ॥**

सहस्राधिके न्यूने च बहुत्वस्याविशेषादनियम ॥

अथ सिद्धान्तयति—

**अधिकं वा स्याद् बह्वर्थत्वादितरैस्सन्निधानात् ॥ २४ ॥**

आपेक्षिकमिह बहुत्वम्। यदेव बुद्धौ सन्निहितं तदपेक्षमवगम्यते, पूर्ववाक्यनिर्देशात्। सहस्रञ्च सन्निहितमिति तदपेक्षमेव बहुत्वम्। सूत्रार्थस्तु—सहस्रादधिकम्—अपरिमितं स्यात्, बह्वर्थत्वात्। आपेक्षिकबहुत्ववचनतयापरिमितशब्दस्य किञ्चिदपेक्षायाम् इतरैः—एकादिभिरसहस्रान्तैरसन्निधानात् सहस्रादेवाधिकमपरिमितन्न यूनमिति ॥

इतोऽप्येवमित्याह—

**अर्थवादश्च तदर्थवत् ॥ २५ ॥**

'क्षयिष्णु वैपरीत्यम्' इति सहस्रस्यापरिमितात् क्षयिष्णुत्वादर्थवादवाक्यञ्च तत्—तदा अपरिमितस्य सहस्रादधिकत्वेऽर्थवद् भवति ॥

इत्येकादशमाधाने सहस्राधिकदानाधिकरणम् ॥ ११ ॥

१२

वाजसनेयके दर्शपूर्णमासयोरसायमशन प्रकृत्य श्रूयते—"इति ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत" इत्यादिः [परकृति.]। तथा द्वादशा [ह] सत्रं प्रकृत्य पुराकल्पश्श्रूयते—"उल्मुकैर्ह स्म पूर्वे समाजग्मु.। तानसुरा रक्षांसि निजघ्नुः" इत्यादिः। एककर्तृकमुपाख्यान परकृति। अनेककर्तृकं पुराकल्प.। तत्र किमेतादृशा विधेया. ?

उतार्थवादाः ? विधित्वेऽपि किं वृष्णिसगोत्राणाम् ? उत सर्वपुंसामपि ? इति विशये, विधित्वमवलम्बते—

**परकृतिपुराकल्पं मनुष्यधर्मस्स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥**

परकृतौ पुराकल्पे च श्रुतो मनुष्यधर्मः विधिस्स्यात् । तथा सति हि अनुकीर्तनं प्रयोजनाय भवति । वादमात्रस्यानर्थकप्रायत्वात् । अत्र मनुष्यैरपि एवं कर्तव्यमिति विधिर्गम्यते—माषा' पक्तव्याः, उल्काहस्ताः पुरो गच्छेयुरिति ॥

अथ विधित्वे प्रथमपक्षमवलम्बते—

**निर्देशाद्वा [1]तद्धर्मस्स्यात् पञ्चावत्तवत् ॥ २७ ॥**

विधित्वेऽपि तद्धर्मस्स्यात्—वृष्णिगोत्राणामेव धर्मस्स्यात् । पञ्चावत्तवत्—"पञ्चावत्त जमदग्नीनाम्" इति निर्देशाज्जामदग्न्यानां पञ्चावत्तन्तद्वत् ॥

अथ विधित्वे द्वितीयपक्षमवलम्बते—

**विधौ तु वेदसंयोगादुपदेशस्स्यात् ॥ २८ ॥**

विधौ-सर्वेषां कर्मण्येव, उपदेश.—विधिस्स्यात् । वेदसंयोगात्—माषपाकोऽन्यत्र[2] श्रूयते । यतो वृष्णिकर्तृको माषपाक तत' प्रशस्तोऽयमिति । एव पुराकल्पसिद्धमपि उल्मुकेन पुरोगमनं सर्वधर्मस्स्यात् ॥ किञ्च—

**यज्ञुक्ते च प्रतिषेधात् ॥ २९ ॥**

वाजपेयप्रकरणे वाजसनेयशाखायां द्विविधौ पशुकल्पौ श्रुतौ—"पशुकाले आग्नेयमैन्द्राग्नमैन्द्रमिति त्रीन् क्रतुपशनुपाकृत्य मारुतीं वशामुपाकरोति, सारस्वतीञ्च मेषीं सारस्वत मेषमुपाकृत्य सप्तदश प्राजापत्यान् पशूनुपाकरोति । पर्यग्निकरणान्ते सारस्वत्यन्तान् पूर्वानालभन्ते । माध्यन्दिनस्य [3]सवनस्य मध्यम उक्थ्यपर्याये ब्रह्मसाम्न्युपाकृते सारस्वतप्रभृतीनुत्तरानालभते । तेषामनभिघारिताभिर्वपाभि प्रचरति । सारस्वतस्य वपया प्रचर्य पुरोडाश समवदाय प्राजापत्यवपाभिश्चरति, हार्योजनेन प्रचर्य सारस्वतप्रभृतीनां हृदयादिदैवतेन प्रचरति । तद्यत्रेष्टा अनूयाजा भवन्ति अव्यूढास्स्रुच तदेतै· पशुहविर्भिः प्रचरति, तदु तथा न कुर्यात् वदन्ति अपा एतद्यज्ञो

---

१ तद्धमत्वात्. २. ह्यत्र. क.

३, सवनस्य नास्ति. ग.

यदेव कुर्वन्ति तस्माद्यत्रैव पूर्वेषां वपाभिश्रेयुः तदितरेषां वपाभिश्रेयुः। यत्रैव पूर्वेषां हविर्भिश्रेयुः तत्रैव तेषां हविर्भिश्रेयु" इति। अत्र यच्छब्दयुक्ते वाक्ये श्रुतस्य पशुकल्पस्य प्रतिषेधो भवति। स च प्रसक्तस्यैव भवति। तस्मादप्येवञ्जातीया वि[धय एव] स्युः ॥

अथ सिद्धान्तयति—

**अर्थवादो वा विधिशेषत्वात् ॥ ३० ॥**

'इति ह स्मे'ति परकृतौ "तस्मादारण्यमेवाश्नीयात्" इति विधिश्रुतेः। पुराकल्पेऽप्युदाहृते "गृहपतेरेवाग्निषु सन्निवपेरन्" इति विधिः श्रुतः। एतदुभयशेषत्वाद् उभयमप्यर्थवाद एव। तदेतदौदुम्बराधिकरणसिद्धमपि अधिकारचिन्तापाठस्मारणाय पुनराकृष्य लिखितम् ॥

इति द्वादश परकृतिपुराकल्पानामर्थवादत्वाधिकरणम् ॥ १२ ॥

१३

"पञ्चपञ्चाशतस्त्रिवृतस्संवत्सराः" इत्यादि श्रुतम्। अत्र किं संवत्सरशब्दो मुख्यः? उत गौणः? मुख्यत्वे किं गन्धर्वादीनामधिकार? उत तदेतत्सत्रं कुर्वता [मनुष्याणां] सहस्रायुष्ट्वं भवति? अथवा कुलकल्पाधिकारः? आहोस्विद् गन्धर्वादीनामेव विद्वत्त्वकल्पनयाधिकार? यद्वा पञ्चाशदुत्तरद्विशतसङ्ख्याकानामधिकार? इति पञ्च पक्षा। यदा तु संवत्सरशब्दो गौण, तदा किं मासेषु? किं वा द्वादशरात्रिषु? आहोस्विद्दिवसेषु? इति त्रय. पक्षा'। तत्र संवत्सरशब्दस्य मुख्यत्वे प्रथमपक्षमवलम्बते—

**सहस्रसंवत्सरन्तदायुषामसम्भवान्मनुष्येषु ॥ ३१ ॥**

बाधकाभावान्मुख्य एव संवत्सरशब्द इति। सहस्रसंवत्सरं नाम सत्र तदायुषां सहस्रसंवत्सरजीविना गन्धर्वादीनामेव भवेत, मनुष्येषु तदसम्भवात्-सहस्रायुष्ट्वासम्भवात् ॥

तत्रैव द्वितीय पक्षमवलम्बते—

**अपि वा तदधिकारात् स मनुष्यधर्मस्स्यात् ॥ ३२ ॥**

उक्तो यागो मनुष्याधिकारस्स्यात, तदधिकारात्-मनुष्याधिकारात्। गन्धर्वादीनामग्निविद्याद्यभावेन तदुक्ता मनुष्याणामेव रसायनसिद्धसहस्रायुषा तत्राधिकारः ॥

तमिमं द्वितीयपक्षन्निराकुर्वन् चतुर्थपक्षमवलम्बते—

## ना मर्थ्यात्[1] ॥ ३३ ॥

रसायनस्य दीपनादिसम्पादकत्वेऽप्येतावदायुस्सम्पादनासामर्थ्यान्न मनुणामधिकारः। ननु सहस्रसंवत्सरसाध्यस्य कर्मणो मनुष्याधिकारेण विनाऽयोग्यत्वाभावाद् आगमबलेनैव सत्रारम्भादेवायुर्वृद्धिर्भवतीति कल्प्यतामिति [द्वितीय] पक्षोऽस्त्विति चेन्न; असामर्थ्यात्। "शतायुः पुरुषश्शतेन्द्रियः" इति श्रुतिविरोधात् न च शतान्यायूंषि अस्येति विग्रहसम्भवान्न विरोध इति वाच्यम्। प्रमाणान्तरमन्तरेण द्विवचनबहुवचनान्ताभ्यां समासाभावात्। अतो गन्धर्वादीनामेव विद्याद्विद्वत्त्वकल्पनया अग्निविद्यादिहानेन वाधिकारः ॥

अथ प्रथमे तृतीयं पक्षमवलम्बते—

## कुलकल्पस्स्यादिति कार्ष्णाजिनिरेकस्मिन्नसम्भवात् ॥ ३४ ॥

सहस्रायुषो गन्धर्वाः तेषां विप्रत्वमनुपादेयविद्यादिहानं वा गौरवान्न कल्पनार्हमिति मनुष्याधिकारित्वावश्यम्भावे एकस्मिन्नसम्भवात् स क्रतुः कुलकल्पस्स्यात्। पित्रादिभिरारब्धं तत् पुत्रपौत्रादयस्समापयेयुः भगीरथस्येव, पित्रादिगतफलार्थमपि पुत्रादीनां प्रवृत्तिसम्भवात् ॥

तमिमं तृतीयपक्ष निराकुर्वन् पञ्चम पक्षमवलम्बते—

## अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगस्स्यात् ॥ ३५ ॥

शास्त्रफलं साङ्गप्रधानकर्तरीति स्थितम्। अतो न कुलकल्पस्स्यात्। अकृत्स्नसंयोगात् कर्मणः केनापि कृत्स्नसम्बन्धाभावादफलत्वप्रसङ्गात्। तस्मादेकोऽपि त्रिवृत्स्तोमकयागयुक्तस्संवत्सरः पञ्चपञ्चाशत्सङ्ख्यैर्यजमानैः प्रत्येक कर्तृभूतैस्सम्बध्यमानस्तत्सङ्ख्याको भवति। तथा पञ्चदशादयोऽपीति कृत्स्नसंयोगाच्चतुस्संवत्सरमिद सत्रम्। अथवा बहुवचनात्तस्य सवत्सरशब्दस्य त्रिवृदादिभिश्चतुर्भिः प्रत्येकं सम्बन्धादिदं द्वादशवर्षैस्समाप्यत इत्यर्धतृतीयशताना मनुष्याणामधिकारः ॥

---

१. एतदनन्तर 'सम्बन्धादर्शनात्' इति सूत्र भाष्ये वर्तते। उपलब्धमातृकास्विद सूत्रमस्य वृत्तिश्च नोपलभ्यते।

न द्वादशरात्रयः । "संवत्सरप्रतिमा वै द्वादश रात्रयः" इत्यत्र संवत्सरशब्दस्य प्रतिमाविशेषणतया न रात्रिषु प्रयोगः । किञ्च त्रिवृदादिशब्दास्स्तोत्रीयासङ्ख्यावचनास्तत्सम्बन्धिनि अहनि शक्नुवन्ति लक्षणया वर्तितुम् । अहस्सङ्घे तु लक्षितलक्षणया वर्तेरन् । द्वादशाहे चाहस्सु ते दृष्टप्रयोगा । तस्मान्मुख्याना त्रिवृदादिशब्दानामहर्वाचित्वात्तदनुरोधेन जघन्यस्य सवत्सरशब्दस्य गुणवृत्या दिवसपरत्वमेव युक्तमित्यनवद्यम् ॥

इति त्रयोदशं सहस्रसवत्सराधिकरणम् ॥ १३ ॥

इति श्रीवासुदेवविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ
षष्ठस्याध्यायस्य सप्तमः पादः ॥



# अथाष्टमः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अथास्मिन्नष्टमपादे क्रत्वनङ्गकर्माधिकारश्चिन्त्यते । सन्ति चतुर्होतृसंज्ञका मन्त्राः । तानधिकृत्य श्रूयते—"चतुर्होत्रा प्रजाकामं याजयेत् पञ्चहोत्रा पशुकामम्" इत्यादि । तत्र किमाहिताग्नेरेवाधिकारः ? उतानाहिताग्नीनाम् ? इति संशये, पूर्वपक्षयति—

**इष्टिपूर्वत्वादक्रतुशेषो होमस्संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥**

संस्कृतेष्वग्निष्वक्रतुशेषोऽयं होमस्स्यात्, इष्टिपूर्वत्वात्–'दर्शपूर्णमासवत्तूष्णीम्' इति स्मृत्या तत्प्रकृतिकत्वात् । न च दर्विहोमतयायमपूर्व आहवनीयाद्यङ्गानि न गृह्णातीति कथं संस्कृतेष्वेवायमिति वाच्यम् । तथाप्याधानसाध्यस्याहवनीयस्य "यदाहवनीये जुहोति" इति अनारभ्यवादेन सर्वहोमशेषत्वात् । अत आहिताग्नेरेवाधिकारः ॥

अथ सिद्धान्तयति—

**इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥**

"एषा वा अनाहिताग्नेरिष्टिः" इति श्रुतम् । येयञ्चतुर्होतृहोमरूपेष्टिरेषा अनाहिताग्नेरिति वचनव्य[क्त्या] आहत्य विधानादनाहिताग्नेरेव चतुर्होतारः । ननु होमात्मकानान्तेषां कथमिष्टित्वेनानुवाद इति चेत्—आसेचनाधिकस्य यागस्यैव होमत्वेन लक्षणया तदुपपत्तेः । इष्टित्वेन संस्तवः–इष्टित्वेनानुवादः । 'एषा वा अनाहिताग्नेः' इति वचनमिति यावत् । चतुर्होतॄननाहिताग्नेर्विदधदसंस्कृतेषु तां दर्शयतीति सूत्रार्थः ॥

नन्वयमर्थवादोऽस्तु, नेत्याह—

**उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥**

उपदेश-विधिरेवायम्, अपूर्वत्वात्-अप्राप्तार्थत्वात् ॥

आशङ्कते—

**[1]सर्वे मविशेषात् ॥ ४ ॥**

सर्वेषां "पशुबन्धेन यक्ष्यमाणष्षड्ढोतारं जुहुयात्" इत्यादीनामपि विषये "एषा वा अनाहिताग्नेः" इति विधिस्स्याद्-अविशेषात् ॥

अथ परिहरति—

**अपि क्रत्वभ ादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥**

न हि क्रत्वङ्गं केवलं प्रयुज्यमानं फलायालमित्यनाहिताग्नेः क्रत्वभावात् 'एषा वा अनाहिताग्नेः' इत्ययं अशेषभूतस्य-अक्रत्वङ्गस्यैव निर्देश इत्यक्रत्वङ्गेष्वेवानाहिताग्नेरधिकार ॥

[ शङ्कते ]—

**जपो नग्निसंयोगात् ॥ ६ ॥**

अनाहिताग्नेरनग्निसंयोगात्-आहवनीयसयोगाभावात् जप एवानेन स्तूयते-येयमनाहिताग्नेः ( चतुर्होतृगोचरा जपादिका क्रिया सेष्टिरिति । ततोऽनाहिताग्नेर्न होमाः ॥

परिहरति—

**इष्टित्वेन तु संस्तुते हो यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥**

होमे तु सादृश्यादिष्टित्वेन उपचारो युक्तः, न त जपे; अत्यन्तवैसादृश्यात् । अतो नैषा वचनव्यक्तिः-येयमनाहिताग्नेर्जपात्मिका क्रिया सेष्टिरिति, किन्तु येयञ्चतुर्होतृहोम [रूपा क्रिया] इष्टिरेषानाहिताग्नेरित्येव वचनव्यक्तिः । एवं सति वादमात्रत्वाभावादानर्थक्यञ्च न भविष्यति । तस्मादनाहिताग्नेरेव) होमा इति न संस्कृते होमस्स्यात् । न चानाहिताग्नेर्होमाङ्गभूताहवनीयाभावात् कथं होम इति वाच्यम् ।

---

१. स सर्वेषा. ( ) गपुस्तके ग्रन्थपातः

अथ सिद्धान्तयति—

**स्थपतीष्टिवल्लौकिके वा स्याद्विद्य ानुपूर्व्यात् ॥ १२ ॥**

स्थपतीष्टिवल्लौकिकाग्नावेव माणवकहोमस्स्यात्। विद्याया आधानादि-कर्माङ्गत्वेन विद्याया आधानादिकर्मणाञ्चानुपूर्व्यवश्यम्भावेन विद्यार्थोपनया-त्प्रागाधानासम्भवात् ॥

**आधानञ्च भार्यासंयुक्तम् ॥ १३ ॥**

किञ्च "जायापती अग्नीनादधीयाताम्" इति भार्यायुक्तमाधानम्। दार-सङ्ग्रहश्च 'वेदमधीत्य स्नायात्' इति वचनाद्विद्याग्रहणोत्तरकाल इति न प्रागाधानम् ॥

ननु प्रागाधानादर्थादेकदारक्रिया। 'वेदमधीत्य स्नायात्' 'स्नात्वा भार्या-मधिगच्छेत्' इति वचनाच्चाधानादूर्ध्वमन्या दारक्रियास्त्विति चेदत्राह—

**अकर्म चोर्ध्वमाधानात् समवायो हि कर्मभिः ॥ १४ ॥**

आधानादूर्ध्वं दारक्रिया न सम्भवति, धर्मार्थं दारसङ्ग्रहात्। आधाने च कृते कर्मभिस्समवायः—सम्बन्धो जात इति न पुनर्दारक्रिया प्रयोजनाभावात् ॥

अत्राशङ्क्य परिहरति—

**श्राद्धवदिति चेन्न श्रुतिविप्रतिषेधात् ॥ १५ ॥**

यथा प्रागाधानादपि पितृयज्ञाख्यं श्राद्ध तद्वद्दारक्रिया च स्यात्। पदार्थस्या-हवनीयस्यानुग्रहाय स्नात्वा भार्यामधिगच्छेदिति क्रमं पदार्थधर्मं बाधित्वानुपनीत एवोपनयनाधिकारसिध्यर्थं दारानुपायम्यादधीतेति चेत्, नैवम्; 'स्नात्वा भार्यम-धिगच्छेत्' इति विरोधात्। क्रमबाधे हि स्नात्वा भार्यामधिगच्छेदिति वचनमेवा-प्रमाणं स्यात्। तच्चायुक्तम्। उक्तं हि श्रुतिलिङ्गाधिकरणे 'दुर्बलस्यापि प्रमाणस्य बाधे यदि किञ्चिदनर्थकं भवति ततो विपरीतो बाधो भवति' इति। तस्मादनवकाशवचन-प्राप्तं क्रममप्यनुगृह्य होमान्तरेषु सावकाशस्याहवनीयस्य पदार्थस्याप्युपनयार्थहोमेषु बाधो युक्त.।

ननु द्वे दारक्रिये स्तः, कर्मार्थं प्रजार्थञ्च। तत्र कर्मार्थं प्रागेवोपनयनाद् भवति। प्रजार्थस्य तु स्नात्वा भार्यामधिगच्छेदिति वचनं क्रमविधायकम्। अतो नैतदपि वचनमनवकाशमिति चेत्तत्राह—

**वार्थत्वाच्च पुत्रार्थां न प्रयोजयेत् ॥ १६ ॥**

'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मरणाद्वैव धर्मार्था सैव कर्मार्थापीति पुत्ररूपोऽर्थः पृथग्दारक्रियां न प्रयोजयेत्। अतो धर्मकामोभयार्थदारक्रियाया एव क्रमविधायकमित्युपनयनात्प्राङ् नाधानम् ॥

नन्वेवं पत्न्यर्थं शिष्टानामाहिताग्नीनां दारान्तरपरिग्रहो विरुद्ध इत्यत्राह—

**सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ १७ ॥**

सोमपानात् 'सोमपानेन द्वितीयाञ्जायामभ्यश्नुते' इत्यर्थवादात् आहिताग्नीनामपि द्वितीयस्य–दारकर्मणः प्रापणं–प्राप्तिः। तस्माद् द्वितीयामप्युपयच्छेत्। न चैवं 'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मृतिविरोध इति वाच्यम्। धर्मप्रजासम्पन्ने दारे नान्या कुर्वीतान्यतराभावे कार्यतीन्द्रियाद्यपाटवेन कर्मसम्पत्यभावे वन्ध्यात्वेन प्रजासम्पत्यभावेऽपि दारान्तरपरिग्रहस्याप्यभ्यनुज्ञानात्। न चैवमपि धर्मप्रजासम्पन्नस्याहिताग्नेर्द्वितीयजायापरिणयो न स्यादिति वाच्यम्। अधिकधर्मसम्पत्तये अधिकप्रजासम्पत्तये च दारान्तरपरिग्रहसम्भवाद् धर्माभिवृद्धिमिच्छेत्।

'एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः।
तेषां वै समवेताना यद्येकोऽपि गया व्रजेत् ॥'

इत्यधिकधर्मप्रजासम्पादनस्याप्यावश्यकत्वाद् अन्यतराभावे कार्या। 'प्रागग्न्याधेयादाधाने हि सति कर्मभिस्सम्बध्यते येषामेतदङ्गम्' इति स्मृतिस्तु प्रत्यक्षश्रुतिविरोधादप्रमाणमिति भाष्यकृत.। वस्तुतस्तु प्रागग्न्याधेयादिति निषेधः पूर्वजायापरित्यागविषयः।

'अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥'

इति वन्ध्यादीना कर्मानर्हत्वस्मरणं त्वनाहिताग्निविषय भविष्यति, 'आधाने हि सति कर्मभिस्सम्बध्यते' इति हेतुवादस्वारस्यात्। बोधायनभारद्वाजादिसूत्रेष्वेवंविधविषये आहिताग्नेर्दारान्तरसङ्ग्रहस्य पूर्वजायाग्निभिर्द्वितीयजायाग्निसंसर्गस्य च स्पष्टमेवाभिधानाच्चेत्यन्यत्र विस्तरः ॥

श्राद्धवदित्यत्राह—

**पितृयज्ञे तु दर्शनात् प्रागाधानात् प्रतीयेत ॥ १८ ॥**

'अप्यनाहिताग्निना कार्यः' इति पितृयज्ञे दर्शनात् प्रागाधानादपि पितृयज्ञः प्रतीयेत न त्विह तथा दर्शनमस्ति । तस्मात् स्नात्वैव दारक्रियेत्युपनयनहोमाः लौकिकाग्नौ स्युः ॥

इति द्वितीयमुपनयनहोमानां लौकिकाग्न्यधिकाराधिकरणम् ॥ २ ॥

३

"एतया निषादस्थपतिं याजयेत्" इति श्रुता स्थपतीष्टिः किं संस्कृते स्यात् ? उत लौकिके ? इति विशये, पूर्वपक्षयति—

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥१९॥**

चोदकादाहवनीयस्य प्राप्तेस्तस्य चाधानाधीनत्वात् सत्यपि स्थपतेराधानविधौ इयमेवेष्टिः प्रयाजाद्यङ्गान्तरमिवाधानमाहवनीयार्थं प्रयोजयेत् । ननु "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादिविधिप्रयुक्ताग्न्युपजीविनः क्रतुविधयो न स्वयमेवाग्न्यार्जनं प्रयुञ्जत इत्युक्तम्, तत् कथं स्थपतीष्टिराधानं प्रयुञ्ज्यादिति चेत्—सत्यम्; त्रैवर्णिकानां वसन्तादिविधिभिरेवाग्निसिद्धेस्त्रैवर्णिकाधिकारैः कर्मभिरग्न्यार्जनं परं प्रयुज्यते, अन्यथानुपपत्त्यभावात् न त्वशक्त्या । न चाधानविध्यन्तरसिद्धमपि प्रयाजादिकमिव क्रतुभिः प्रयुज्यतामिति वाच्यम् । द्वितीयाश्रुत्याधानस्याग्न्यर्थतया प्रयाजादिवत् क्रत्वर्थत्वाभावात् । ततश्च स्थपतीष्टिर्विध्यन्तरसिद्धाग्निमदधिकारिणोऽभावाद् अनुपपत्तेरपरिक्षयात् अग्नीन् प्रयुञ्जान प्रयुङ्क्तेऽप्याधानम् । न चैव स्थपतेरग्निमत्त्वे कर्मान्तरेष्वप्यधिकारस्स्यादिति वाच्यम्, तादर्थ्याच्चापवृज्येत—इदं ह्याधानं स्थपतीष्ट्यैव प्रयुक्तमिति तदर्थम्, न तु वसन्तादिविहिताधानवदग्निसिध्यर्थम् । अतस्तस्यामिष्टावप्रवृत्तायामाधानमप्यपव्रजेतेत्यग्निमत्त्वाभावाद् विद्याभावाच्च स्थपतेर्न कर्मान्तराधिकारः ॥

अथ सिद्धान्तयति—

**अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २० ॥**

लौकिक एवाग्नौ स्थपतीष्टिस्स्यात्, आधानस्य सर्वकर्मशेषत्वाभावेन दर्शपूर्णमासानङ्गतया चोदकेन तस्याप्राप्तेः स्थपतीष्ट्या तत्प्रयुक्त्यसम्भवात् । न चाङ्ग-

प्रसवः प्राण." इत्यनुक्रम्य "समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि चत्वार्यश्लीलानि" इति प्रपञ्चितत्वात्। समानस्यैकस्याह्नः पञ्च पुण्यानि नक्षत्राणि, कर्मयोग्या अयुग्मभागाः। चत्वारि अश्लीलानि, युग्मभागास्तु चत्वारः कर्मानर्हा इत्यर्थः। अह्नो नवमश्च भागः विंशतिविनाडिकोपेतघटिकात्रयात्मक। एतदधिककालसाध्यानि विशिष्टोपदिष्टकालान्तराणि चाग्निहोत्रदर्शपूर्णमासादीनि नात्रोदाहरणम्। उदगयनादीनि च यथासम्भव समुच्चीयन्ते। एवञ्चान्यतमस्य विशेषविधिना बाधेऽपि तदितरसमुच्चय.। पुण्याहग्रहणेनैव सिद्धे अहर्ग्रहणमुदगयनपूर्वपक्षाहरित्यर्थवादानुकरणाय। उदगयनस्य य' पूर्वपक्षः तस्य यदहः तस्य पुण्याहेष्विति षष्ठीसमासस्तु नाश्रितः, प्रथमादहन्शब्दाद् अच् प्रसङ्गात्॥

ननु यद्यन्ह. पञ्चसु भागेषु दैवानि तर्हि "पूर्वाह्णो वै देवानाम्" इति व्यर्थमित्यत आह--

## अहनि च कर्मसाकल्यम्॥ २३॥

अहन्यपि पूर्वाह्णस्याप्यादरे कर्मणोऽभ्युदयविशेष इत्यर्थः॥

इति पञ्चम श्रौतस्मार्तकर्मणामुदगयनादिकालनियमनाधिकरणम्॥ ५॥

६

पित्र्यकर्मसु कालानियमे प्राप्ते, सिद्धान्तयति--

## इतरेषु तु पित्र्याणि॥ २४॥

येषु पिण्डपितृयज्ञनित्यश्राद्धोपरागश्राद्धादिषु विशेषविधिस्तेषु न विवादः। सामान्यविहितन्तु पित्र्यादिकमुदगयनाद्यपेक्षया इतरेषु दक्षिणायनादिषु कर्तव्यम्। "एतद्वै देवाना रूपं यदुदगयनपूर्वपक्षाह" इत्युक्त्वा "अतोऽपरथा पितृणाम्" इत्युक्तत्वात् तेषु कालेषु दैवादिकर्माणि क्रियन्त इत्यनेन सम्बन्धेन तत्कालानां दैवादि रूपमिति ध्येयम्॥

इति षष्ठ पित्र्यकर्मणा कालनियमनाधिकरणम्॥ ६॥

७

ज्योतिष्टोमे श्रूयते-"द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत" इति याच्ञा, पिङ्गाक्ष्यैकहायन्या क्रीणाति" इति सोमक्रयश्च। तत्र यस्य द्रव्यं नास्ति सोमश्च, तस्येदं याचनाक्रयणम्? उत विद्यमानेऽपि? इति विशये, पूर्वपक्षयति—

## याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २५ ॥

यथा लोके याच्ञाक्रयणमविद्यमान एव भवति तद्वदिहाप्यविद्यमान एव वस्तुनि याच्ञाक्रयणम् ॥

अथ सिद्धान्तयति—

## नियतं वा अर्थवत्त्वात् स्यात् ॥ २६ ॥

विद्यमाने चाविद्यमाने च धने याच्ञाक्रयण (न्नियतमेव स्यात्, अर्थवत्वात्। अन्यथा ज्योतिष्टोमप्रकरणे नित्यवत् तदाम्नानमनर्थकं स्यात्। अतो ) याच्ञाक्रयणं नित्यमिति ॥

इति सप्तम याच्ञाक्रयणस्य नित्यत्वाधिकरणम् ॥ ७ ॥

८

'पयो व्रतं ब्राह्मणस्य'' इति भक्ष· किमविद्यमाने भक्षान्तरे, तथा ''अग्नीदग्नीन्विहर'' इति प्रैप· किमन्यतोऽनवगते प्रैषार्थे, तथा ''अहत वासः परिधत्ते'' इत्याच्छादनमाच्छादनान्तराभावे, तथा ''यत् पशुर्मायुमकृत इति संज्ञप्ते संज्ञप्तहोमञ्जुहोति'' इति होमो मायुकरणे, ''योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म'' इति मन्त्रो द्वेष्यसद्भावे ? किं वा सर्वमिदं नित्यम् ? इति संशये, भक्षप्रैषाच्छादनानां तृप्त्याद्यर्थतयान्यतोऽपि तत्सिद्धौ न नियमेनानुष्ठानम्। संज्ञप्तहोमस्य मन्त्रलिङ्गान्मायुकरणादिजनितदोषहानार्थत्वावगमात् तदभावे निष्प्रयोजनत्वान्नानुष्ठानम्। योऽस्मान्द्वेष्टीति मन्त्रोऽपि लिङ्गाद् भ्रातृव्योपद्रवनिवृत्यर्थ इत्यसति भ्रातृव्ये न प्रयोक्तव्य इति प्राप्ते, सिद्धान्तयति--

## तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २७ ॥

नित्यवच्छ्रुताना भक्षादीना नानित्यं द्वारमाश्रयितुं युक्तमिति तेपामपि याच्ञाक्रयणवत् नित्यमनुष्ठानम् ॥

तर्हि रोगार्तस्यापि पयोव्रत स्यादित्यत आह—

## अनर्थकन्त्वनित्यं स्यात् ॥ २८ ॥

अनर्थपर्यवसायि त्वनित्य स्यात्, यजमानविलोपे सति प्रधानविधिविरोधात् ॥

इत्यष्टमं पयोव्रतादीना नित्यताधिकरणम् ॥ ८ ॥

---

() चिन्हान्तर्गतो भाग खण्डित . अ.

९

"अग्नीषोमीयं पशुमालभेत" इति श्रुतः पशुः किं य कश्चित् पशुः ? किं वा "छागस्य वपाया मेदसः" इति मन्त्रवर्णे छागश्रवणादज एव ? इति विशये, पूर्वपक्षयति—

**प चोदनायामनियमोऽविशे त् ॥ २९ ॥**

पशुचोदनायामनियमः—य कश्चित् पशुरालभ्येत अविशेषात्। पशुशब्दो हि न व्यक्तिवचनः, येन व्यक्तिवचनानां सन्निहितविशेषपरत्वान्मन्त्रसन्निधापित-छागपरस्स्यात्। किन्तु जातिवचनः। ततश्च तावन्मात्रस्याङ्गत्वाद्व्यक्त्यन्तरेऽपि पशुत्वजातेरविकलत्वादनियमः॥

अथ सिद्धान्तयति—

**छागो वा मन्त्रवर्णात् ॥ ३० ॥**

यथा "अक्ताश्शर्करा उपदधाति" इति सामान्यविषयो विधि "तेजो वै घृतम्" इत्यर्थवादाद्विशेषविपय उक्तः, तथा सामान्यविषयापि पशुचोदना 'छागस्य वपाया.' इति मन्त्रवर्णाद् विशेषविषयैव वर्णनीयेति छाग एवालम्भनीयः॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**न चोदनाविरोधात् ॥ ३१ ॥**

युक्तं विध्यर्थवादयोरेकवाक्यत्वात् सामान्योपक्रान्तो विधि प्रागर्थवादाद-पर्यवस्यन् तदेकवाक्यत्ववशेन घृताञ्जन एव पर्यवस्यतीति। विधिमन्त्रयोस्तु भिन्नवाक्यत्वेन प्रथमं चोदनायां पशुत्वमात्र विधाय पर्यवसितायां तद्विरोधान्न मन्त्रवर्णेन छागमात्रस्यालम्भः॥

अथ सिद्धान्तिन शङ्कमानं प्रत्याचष्टे—

**आर्षेयवदिति चेन्न, तत्राप्यचोदितत्वात् ॥ ३२ ॥**

यथा "आर्षेयं वृणीते" इति विहितमार्षेयवरणं "त्रीन् वृणीते" इति ( वाक्या-न्तर्गतेनापि त्रित्वेन विशेष्यते तद्वन्मन्त्रगतेनापि छागत्वेन पशुर्विशेष्यतामिति चेत्, तन्न, तत्राप्यचोदितत्वात्–"आर्षेय वृणीते" इति विहिते वरणे "त्रीन् वृणीते" इति) त्रित्वविधानाद्युक्तस्त्रित्वनियमः, न त्विह सामान्यतो विहिते पशौ छागत्वं विधीयते।

() गपुस्तके ग्रन्थपात..

तत्रापि–मन्त्रवर्णेऽपि छागत्वस्याचोदतत्वात्–मन्त्रवर्णस्य विधायकत्वाभावात्। तस्मात् पशुमात्रोपादानम्। मन्त्रस्तु यदा छागस्तदा भविष्यति, चोदनानुरोधित्वात्तस्य। यद्वा [रूढि]परित्यज्य छदेर्गमेश्च छागशब्दं व्युत्पाद्य छन्नगमनयोगाद्विहितपुंस्त्वाश्वादिः छाग उच्यते। वस्तुतस्तु चोदनानुरोधाल्लक्षणया सामान्यपर एव वा छागशब्दोऽस्तु ॥

अथ कश्चिदेकदेशी शङ्कते—

**नियमो वैकार्थ्यं ह्यर्थभेदाद् भेदः पृथक्त्वेनाभिधानात् ॥ ३३ ॥**

पशुशब्दस्य छागे नियमः। कुतः? ऐकार्थ्यं हि–यतश्चोदनामन्त्रवर्णयोरेकार्थत्वम्। अत्र हि पशुशब्दो न जातिवचनः, व्यक्त्यतिरिक्तजातौ मानाभावात्। अनुगतप्रतीतिस्तु भूयोऽवयवसादृश्यनिबन्धना, ततश्च व्यक्तिवचनाना सन्निहितविशेषपरत्वनियमेन मन्त्रवर्णसन्निधापितच्छागपर एव पशुशब्द इति विधिमन्त्रयोरैकार्थ्यम्। अर्थभेदे हि विधिमन्त्रयोः पृथक्त्वेनाभिधानाद् भेदो विरोध स्यात्। न ह्यत्र पृथक्त्वेनाभिधानमस्ति, छाग पशुरिति सामानाधिकरण्येनाभिधानात्। अतोऽर्थभेदाभावाद् विधिमन्त्रयोर्न विरोधः ॥

अथ पूर्वपक्षी परिहरति—

**अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३४ ॥**

जातिरेव शब्दार्थो न व्यक्तिरित्युक्तमाकृत्यधिकरणे। ततश्च न व्यक्तिवचनत्वेन सन्निहितपरत्वाभावाद्विध्यर्थस्य मन्त्रार्थापेक्षया अर्थान्तरत्वादनियमः—कश्चित् पशुरालभ्येत। मन्त्रार्थापेक्षया विध्यर्थस्यान्यत्वञ्च व्यक्तेः छागशब्दार्थभिन्नेष्वश्वादिष्वपि [1]वृत्तेः, छाग. पशुरिति शब्दभेदाच्च ॥

तदेवं पूर्वपक्षिशङ्का स्थिता, ता सिद्धान्ती परिहरति—

***न वा प्रयोगसमवायित्वात् ॥ ३५ ॥**

अनियम इति न सम्भवति, मन्त्रवर्णस्यापि प्रयोगसमवायित्वात्। प्रयोगवचनेन हि नित्यवन्मन्त्र उपसह्रियते। अतः छाग एव नियम्यते। न हि मन्त्रस्य

१. प्रवृत्ते अ.

* इद सूत्र भाष्ये नोपलभ्यते। भाष्ये च 'रूपाल्लिङ्गाच्च' 'छागे न कर्माख्या रूपलिङ्गाभ्याम्' 'रूपान्यत्वान्न जातिशब्दस्स्यात्' 'विकारो नौत्पत्तिकत्वात्' 'स नैमित्तिक पशोर्गुणस्याचोदितत्वात्' 'जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम्' इति षट्सूत्राणि सन्ति। अमीषा वृत्तिर्मातृकासु नोपलभ्यते।

नित्यवदाम्नातस्य पाक्षिकत्वं छागपदस्य रूढिपरित्यागो वा नाकारणेन युज्यते। न च चोदनाविरोध एव कारणमित्युक्तमिति वाच्यम्। चोदनया हि पशुजातिरङ्गं बोध्यते। सा छागेनाप्युपादीयमानेन निरवशेषमुपात्ता भवत्येव, तस्याः प्रतिव्यक्ति समाप्तत्वात्। न च वाक्यद्वयगतयोर्विशेषणविशेष्यभावो न दृष्टचर इति वाच्यम्। न हि विशेषणविशेष्यभावस्सर्वत्रैकविधः। स हि क्वचिदेकपदोपात्तयोर्भवति, यथाश्व इत्यत्र प्रत्ययार्थस्य लिङ्गसङ्ख्यादेः प्रकृत्यर्थे। क्वचित् पदद्वयोपात्तयोर्भवति, यथा शुक्लः पट इति। क्वचिद्वाक्यद्वयस्थयोर्भवति, यथा[1]–"आर्षेयं वृणीते त्रीन्वृणीते" इत्यत्र। ततश्चैकप्रयोगवचनादपि भवन् विशेषणविशेष्यभावो युक्त इति छागेनैवाधिकारः। तदुक्तम्—

'विध्यन्तरानुपादाने चोदना न विरुध्यते।
सामान्यं हि विधत्ते सा छागेऽप्येतत्तु विद्यते॥
छागेनैवाधिकारोऽतः पशुबन्ध इति स्थितम्'॥ इति॥

इति नवम पशुशब्दस्य च्छागपरत्वाधिकरणम्॥ ९॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमान महाग्निविलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजिशरभजितुकोजिभोसलचोलमहीमहेन्द्रामात्यधुरन्धरश्रीमत आनन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषीपोष्येण बाल्य एव तद्यानिर्वर्तितापरिमितमहाग्निविजृम्भितवाजपेयाप्तोर्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन श्रीमहादेववाजपेययाजिसुतेनान्नपूर्णागर्भजातेनापारपदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन वासुदेवदीक्षितविदुषा विरचितायाम्

अध्वरमीमांसाकुतूहलवृत्तौ

षष्ठाध्यायस्याष्टम. पादः॥

षष्ठाध्यायः

---

१. एक वृणीते. क.

कर्तव्यतायाः करणानुग्राहकत्वस्यैव लोके दृष्टत्वात्। [1]अतः करणेनैव धर्मास्साक्षात सम्बध्यन्ताम् किं परम्परया? न च सिद्धरूपकरणस्याकर्तव्यत्वात्[2] कथं तेन कर्तव्यताप्रकाररूपेतिकर्तव्यतायास्सम्बन्ध इति वाच्यम्, 'नासाधितं करणं भवति' इति तस्याप्यर्थात् कर्तव्यत्वात्। तस्मादर्थप्राप्तयजिभावनोद्देशेन विधीयमाना धर्मा उपदेशेनैव [3]सर्वार्था इति सौर्यादीनामितिकर्तव्यताकाङ्क्षाभावादतिदेशविचारो[4] नारम्भणीयः। यद्यपि धर्मविधिषु यजिरुद्देश्यतया न निर्दिश्यते, तथापि धर्माणां [5]प्रयोजनाकाङ्क्षया करणस्य चेतिकर्तव्यताकाङ्क्षया कल्पितं यजेतेति पदमेव तदुद्देशकम्। नन्वाग्नेयादीनामितिकर्तव्यताकाङ्क्षया कल्पितं यजेतेति पद प्रकृतानेवाग्नेयादीन्, उद्दिशतीति तदुद्देशेनैव[6] विधीयमाना धर्माः कथं सर्वयजिसाधारणास्स्युरिति चेन्न; आग्नेयाद्याकाङ्क्षया [7]कल्पितं हि यजेतेति पदं स्वशक्त्यान्[8] सर्वान्यागानुपस्थापयतीति सर्वार्था धर्मा इत्येके। "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इति वाक्येनैव फलसम्बन्धसिद्धे[9], अनन्यार्थं "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्यमेवोद्देश्यसमर्पकमित्यन्ये। न च यज्यर्थत्वे धर्माणामानर्थक्यमिति वाच्यम्, यथाधानमग्निद्वारा[10] क्रतूनामुपकारकं तथा धर्माणामपि यजिद्वारापूर्वोपकारकत्वेनानर्थक्याभावात्। सूत्रार्थस्तु—उत्पद्यते अनेनापूर्वमित्युत्पत्तिर्यागः, अर्थः—अपूर्वं, तयोरविनाभावात् [11]यजतौ श्रूयमाणा धर्माः यजिमत्सु सर्वेष्वपूर्वेषु स्यु.। सत्त्ववत्—यथा गौर्न पदा स्प्रष्टव्य इति गोत्वे श्रूयमाणा धर्मास्तदविनाभूतासु सर्वासु व्यक्तिषु भवन्ति तद्वत्सर्वेषां यज्यपूर्वाणामैकधर्म्यम् ॥

अथ सिद्धान्ती परिहरति—

**चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥**

यागस्य निर्ज्ञातप्रकारतयेतिकर्तव्यताकाङ्क्षाविरहेण तदाकाङ्क्षालक्षणप्रकरणाभावाद्वाक्यकल्पनस्यैवासम्भव.[12]। अत एव दर्शपूर्णमासवाक्यस्थेन यजेतेत्य-

१. अत नास्ति. क.
२. इतिकर्तव्यत्वात् अ.
३. समर्थाः. क.
४. देव विचार. अ
५. प्रयोजक. क.
६. एव. नास्ति. अ, क.
७. विकल्पित यजेत. ग
८. स्वशक्त्या. अ, ख.
९. सम्बन्धेन. अ.
१०. द्वारेण. क, ख.
११. यजौ. अ, ग.
१२. असम्भवात्. अ.

कर्तव्यताया· करणानुग्राहकत्वस्यैव लोके दृष्टत्वात्। 'अतः करणेनैव धर्मास्साक्षात सम्बध्यन्ताम् किं परम्परया ? न च सिद्धरूपकरणस्याकर्तव्यत्वात्[२] कथ तेन कर्तव्यताप्रकाररूपेतिकर्तव्यतायास्सम्बन्ध इति वाच्यम्, 'नासाधितं करणं भवति' इति तस्याप्यर्थात् कर्तव्यत्वात्। तस्मादर्थप्राप्तयजिभावनोद्देशेन विधीयमाना धर्मा उपदेशेनैव [३]सर्वार्था इति सौर्यादीनामितिकर्तव्यताकाङ्क्षाभावादतिदेशविचारो[४] नारम्भणीयः। यद्यपि धर्मविधिषु यजिरुद्देश्यतया न निर्दिश्यते, तथापि धर्माणां [५]प्रयोजनाकाङ्क्षया करणस्य चेतिकर्तव्यताकाङ्क्षया कल्पितं यजेतेति पदमेव तदुद्देशकम्। नन्वाग्नेयादीनामितिकर्तव्यताकाङ्क्षया कल्पित यजेतेति पद प्रकृतानेवाग्नेयादीन्, उद्दिशतीति तदुद्देशेनैव[६] विधीयमाना धर्माः कथं सर्वयजिसाधारणास्स्युरिति चेन्न; आग्नेयाद्याकाङ्क्षया [७]कल्पितं हि यजेतेति पदं स्वशक्त्यान्[८] सर्वान्यागानुपस्थापयतीति सर्वार्था धर्मा इत्येके। "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इति वाक्येनैव फलसम्बन्धसिद्धेः[९], अनन्यार्थं "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्यमेवोद्देश्यसमर्पकमित्यन्ये। न च यज्यर्थत्वे धर्माणामानर्थक्यमिति वाच्यम्, यथाधानमग्निद्वारा[१०] क्रतूनामुपकारकं तथा धर्माणामपि यजिद्वारापूर्वोपकारकत्वेनानर्थक्याभावात्। सूत्रार्थस्तु—उत्पद्यते अनेनापूर्वमित्युत्पत्तिर्यागः, अर्थः—अपूर्वं, तयोरविनाभावात् [११]यजतौ श्रूयमाणा धर्माः यजिमत्सु सर्वेष्वपूर्वेषु स्युः। सत्त्ववत्—यथा गौर्न पदा स्प्रष्टव्य इति गोत्वे श्रूयमाणा धर्मास्तदविनाभूतासु सर्वासु व्यक्तिषु भवन्ति तद्वत्सर्वेषा यज्यपूर्वाणामैकधर्म्यम्॥

अथ सिद्धान्ती परिहरति—

**चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात्॥ ३॥**

यागस्य निर्ज्ञातप्रकारतयेतिकर्तव्यताकाङ्क्षाविरहेण तदाकाङ्क्षालक्षणप्रकरणाभावाद्वाक्यकल्पनस्यैवासम्भवः[१२]। अत एव दर्शपूर्णमासवाक्यस्थेन यजेतेत्य-

१. अत नास्ति. क.
२. इतिकर्तव्यत्वात् अ.
३. समर्थाः. क.
४. देव विचार. अ.
५. प्रयोजक. क.
६. एव. नास्ति. अ, क.
७. विकल्पित यजेत. ग
८. स्वशक्त्या. अ, ख.
९. सम्बन्धेन. अ.
१०. द्वारेण. क, ख.
११. यजौ. अ, ग.
१२. असम्भवात्. अ.

नेन[1] पदेनापि न तद्विधिः, अनपेक्षितविधानापत्तेः। दर्शपूर्णमासवाक्यस्य स्वर्गरूपफलभाव्यकभावनां प्रति यागोपादानपरत्वाच्च। न च सर्वकामवाक्येनैव स्वर्गफलकत्वस्यापि सिद्धिरिति वाच्यम्। विशेषविषयेणानेन वाक्येनैव प्रथमं स्वर्गफलकत्वसिद्धौ[2] सकलविषयस्य [3]सर्वकामवाक्यस्य गोबलीवर्दन्यायेन तदतिरिक्तफलपरत्वौचित्यात्। तस्मादपूर्वभावनार्था एव धर्माः। ननु च धर्मविधावपूर्वभावनाया उद्देश्यत्वेन दर्शपूर्णमासकरणकतया विशेषणासम्भवात् सर्वयजिकरणकभावनार्था धर्माः स्युरिति चेन्न; न हि वयं भावनोद्देशेन धर्मा विधीयन्त इति ब्रूमः, किन्तु विधीयमानैव भावना फलकरणेतिकर्तव्यताविशिष्टैव विधीयत इति ब्रूमः। तस्माद्यद्भावनाविशेषणतया ये धर्मा विधीयन्ते ते तदर्था एवेति न पारिप्लवा धर्माः। ननु भावनयैव सम्बन्धे धर्माणां करणानुग्राहकता (न स्यात्, तुल्यत्वादिति चेन्न; भावना हि किं मे फलं, किं तस्य करणं, तस्य च किमनुग्राहकमित्यंशत्रयं परस्परसंयुक्तमेवापेक्षते। यथापेक्षञ्च सम्बन्ध इति भावनान्वयेऽपि धर्माणां न करणानुग्राहकतानुपपत्तिः।) सूत्रार्थस्तु—चोद्यत इति चोदना—[4]भावना, तां प्रति धर्माणां शेषभूतत्वात्, तद्भेदाद् व्यवतिष्ठेरन्। ननु यज्युद्देशेन धर्माणां विधानात्, [5]यज्यर्थत्वमुक्तमित्यत आह—उत्पत्तेर्गुणभूतत्वात्—उत्पद्यत इति उत्पत्तिर्यागः, तस्यापि यागेनान्यत्कुर्यादिति अन्यप्रति गुणभूतत्वात् [6]यदन्यदपूर्वं तादर्थ्यमेव धर्माणां युक्तम्॥

सत्त्ववदित्यत्राह—

**सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत ॥ ४ ॥**

सत्त्वे—गोत्वाद्याकृतौ श्रूयमाणं धर्मजातं तत्रासम्भवात् सार्वत्रिकं—सर्वव्यक्तिगतं प्रतीयेत। कुतः? लक्षणसंयोगात्—सर्वासां व्यक्तीनां [7]लक्षणभूतेन तेन[8] गोत्वेन सम्बन्धात्। इह तु न यजौ धर्माणां श्रवणं यजेरितिकर्तव्यताकाङ्क्षाविरहात्॥

---

१. अनेन नास्ति. क.
२. सिद्धौ तु. ख.
३. स्वर्गकामविषयस्य. क.
४. भावो भावना. क.
५. यज्यर्थत्वमित्यत:. क.
() खपुस्तके ग्रन्थपातः.
६. यत्तदन्यत्. ख.
७. लक्षणीभूतेन. ग.
८. तेन नास्ति. ख.

अत्र शङ्कते—

**अविभागात्तु नैवं स्यात् ॥ ५ ॥**

यागशरीरप्रविष्टद्रव्य[1]प्रोक्षणावघातादीनां यज्यविभागाद् [2]यज्यर्थत्वमविवादम्। ततश्च तत्सामान्यात् प्रयाजादीनाम्—अप्येवमपूर्वार्थत्व न स्यात्, किन्तु यज्यर्थत्वमेव स्यात् ॥

इतोऽप्येवमित्याह—

**द्व्यर्थत्वञ्च विप्रतिषिद्धम् ॥ ६ ॥**

यदि [3]प्रयाजादीनामपि प्रोक्षणादिवद्यज्यर्थत्व न स्यात् [4]तर्हि तेषां साधारण्याभावात् सौर्यादावप्रवृत्तेः। सौर्ये "प्रयाजे प्रयाजे कृष्णलं जुहोति" इति [5]वाक्यस्य द्व्यर्थत्वम्—प्रयाजकृष्णलद्वयविधानार्थत्वं स्यात्। तच्च विप्रतिषिद्धं—गौरवग्रस्तम्। तेषामपि यज्यर्थत्वे तु साधारण्यात् तदनुवादेन कृष्णलमात्रविधानार्थत्वाल्लाघवम्। तस्मात्प्रयाजादयोऽपि यज्यर्थाः। न च तेषामपूर्वार्थत्वेऽपि सौर्यादावतिदेशतः प्राप्तेः तदनुवादेन कृष्णलमात्रविधिसम्भव इति वाच्यम्। सन्निपातिना यज्यर्थतया साधारण्यात्तैरेव निराकाङ्क्षतया सौर्यादावाकाङ्क्षामूलकातिदेशासम्भवेन प्रयाजादीनामपि विधेयत्वे विशिष्टविधिगौरवात् ॥

परिहरति—

**उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिस्स्यात् ततश्च [6]धर्मभेदस्स्यात् ॥ ७ ॥**

यद्यप्यवघातादयो देवतोद्देश्यकद्रव्यत्यागात्मकयागस्वरूपप्रविष्टेषु द्रव्येषु[7] श्रूयन्ते क्रियन्ते च, तथापि न ते तदर्थाः वैयर्थ्यात्[8], किन्त्वपूर्वार्थाः। यथा वासो रञ्जयेति[9] वाससि श्रुतः क्रियमाणोऽपि रागः, न वासोर्थः, किन्तु [10]कान्त्यर्थस्तद्वत्।

---

१. द्रव्यादि. क.
२. यज्यर्थकत्व अ, ग.
३. यदि नास्ति. अ.
४. तदा . अ, ग.
५. अस्य वाक्यस्य. क.
६. कर्मभेद .
७. द्रव्यादिषु. क. ग.
८. वैयर्थ्यात्. नास्ति. अ.
९. रञ्जयेत्. अ, क.
१०. कान्तार्थ . अ.

सूत्रार्थस्तु-उत्पत्तौ-यजौ, धर्माणां वैयर्थ्यभिया विध्यभावाच्चोदनायाम्--अपूर्वभावनायामेवैतेषां[1] प्रवृत्तिस्स्यात्। ततश्च भावनाभेदाद् धर्मभेदस्स्यादिति ॥

अथ[2] शङ्कते--

**यदि वाप्यभिधानवत् सामान्यात् र्वधर्मस्स्यात् ॥ ८ ॥**

[3]वाशब्दश्शङ्कायाम्। अपि शब्दो यदीत्यनन्तरं द्रष्टव्यः। यद्यपि प्रयाजादिभावनाविशेषान्वयी, तथापि सर्वधर्मस्स्यात्। भावनान्तराणामपि सामान्यात्—भावनात्वसामान्यात्, अभिधानवत्—यथा बाह्लीकोऽयं यवान्नेन परिवेष्टव्य इत्युक्ते, यद्यपि बाह्लीकविशेषं प्रति [4]यवान्नं श्रुतम्, तथाप्यन्येषामपि बाह्लीकानां यवान्नपरिवेषणं गम्यते, तद्वत् ॥

अथ परिहरति—

**अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात् प्रयोगस्य कर्मणश्शब्दभाव्यत्वात्तद्विभागाच्छेषाणामप्रवृत्तिः स्यात्॥९॥**

बाह्लीकाना यवान्नप्रियतायाः प्रमाणान्तरावधृतत्वात्, बाह्लीकविषये उपदेशस्य साधारण्येऽपि, [5]इह श्रुत्यादिगम्यत्वात् तादर्थ्यस्यैकत्रोपदिष्टा धर्मा नान्यत्र स्युः। सूत्रार्थस्तु-अभिधानेषु--बाह्लीकोऽयमित्याद्युपदेशेष्वर्थस्य--यवान्नप्रियत्वस्य अविभागात्—साधारण्यात्, तथा स्यात्--बाह्लीकान्तरेऽपि यवान्नपरिवेषण स्यात्। कुतः? प्रयोगस्य-बाह्लीकोऽयमिति प्रयोगस्य, पूर्ववत्वात्—यवान्नप्रियतावधारणपूर्वकत्वात्, कर्मणस्तु शब्दैकप्रमाणकत्वात्तद्विभागात्—कर्मभेदादन्यत्रोपादिष्टानां शेषाणामन्यत्राप्रवृत्तिस्स्यादिति ॥

अथाशङ्क्य, परिहरति—

**स्मृतिरिति चेन्न पूर्ववत्त्वात् ॥ १० ॥**

अरुणपराशरनाम्नां शाखिनां स्मृतौ ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनामग्नीषोमीयस्य च पशोरित्यारभ्य [6]यावत्यः प्रकृतयो विकृतयश्च तास्सर्वा अनुक्रान्ताः।

---

१. तेषा. क.
२. अत्र. ग.
३. वेति पक्षव्यावृत्तौ. अ, वाशब्द एवार्थे. क.
४. यवान्नश्रुतात्. ग.
५. इह. नास्ति. क.
६. यावत्यः नास्ति. अ, ग.

ततश्च सा स्मृतिरेव 'यदातिथ्याया बर्हिस्तदुपसदामग्नीषोमीयस्य च पशोः' इति श्रुतिर्यथा बर्हिस्साधारण्ये प्रमाणं तथा धर्मसाधारण्ये प्रमाणमिति चेत्तन्न; पूर्ववत्त्वात्-श्रुतिमूलकत्वात्[1] तस्यास्स्मृतेर्न धर्मसाधारण्ये प्रामाण्यम् ॥

**अर्थस्य शब्दभाव्यत्वात् [2]प्रतिप्रकरणं निबन्धनाच्छब्दादेवान्यत्र भावस्स्यात् ॥ ११ ॥**

निगमनसूत्रमिदम् । अर्थस्य-धर्मजातस्य, शब्दभाव्यत्वात्—शब्दैकप्रमाणकत्वात्[3] प्रतिप्रकरणञ्च—प्रकरणविशेषं प्रत्येव निबन्धनाद् व्यवस्था स्यात् । नन्वेवमग्नौ श्रुतानां राष्ट्रभृदादीनामुपनयनादौ प्रवृत्तिर्न स्यादित्यत आह—शब्दादिति । "राष्ट्रभृतो जुहोति, अभ्यातानान् जुहोति" इति [4]उपनयनादितत्तत्प्रकरणे विधानादन्यत्रापि भावस्स्यात् । यद्वा धर्माणां व्यवस्थितत्वे सौर्यादीनां धर्मा न स्युः, इत्यत आह—शब्दादिति । [5]प्रकृतिवच्छब्दादन्यत्रापि भावस्स्यादिति । ततश्च धर्माणां व्यवस्थितत्वाद् अनुपदिष्टधर्मकेषु सौर्यादिष्वतिदेशेन धर्मप्राप्तिः । तस्मादतिदेश आरम्भणीयः ॥

इति प्रथमं विध्यन्ताधिकरणम् ॥ १ ॥

२

अतिदेशो नाम—अन्यसम्बन्धिनो ब्राह्मणस्य पदार्थस्योपकारस्य वा तदतिक्रम्य, अन्यत्र देशन प्रापणं येन भवति, स उच्यते । स च द्विविधः—वचनं, नामधेयञ्चेति । वचनं द्विविधम्—[6]प्रत्यक्षश्रुतमानुमानिकञ्चेति । तत्र "समानमितरत् श्येनेन" इत्यादिकं वचनं प्रत्यक्षश्रुतम् । 'प्रकृतिवद्विकृतिः कर्तव्या' इति [7]वचनमानुमानिकम् । नामधेयञ्च द्विविधम्-आतिदेशिकं कर्मनामधेयं संस्कारनामधेयञ्चेति । तत्र प्रथमं तावत् सुगमत्वात् प्रत्यक्षवचननिमित्तोऽतिदेशश्चिन्त्यते । अस्तीषुर्नामैकाहः "इषुणाभिचरन्यजेत" इति । तत्र "वषट्कारनिधनं भवति"

---

१. श्रुतिमूलकत्वात्. नास्ति. अ, क २. प्रकरणनिबन्धनात्.
३. प्रमाणत्वात्. क. ४. उपनयनादि नास्ति. अ, क, प्रकरणविधानात्. अ.
५. प्रकृतिवच्छब्दस्य. अ. ६. प्रकृत्य श्रुतम्. क.
७. वचन नास्ति क.

"इषुर्विष्टुतिः" "सप्ताहं भवति" इति ज्योतिष्टोमादतिदेशप्राप्तस्य स्तोत्रसाम्नो वषट्कारनिधनत्वं वषट्कारलक्षणान्त्यभक्तिकत्वञ्चोदकप्राप्ताया एव[1] विष्टुतेरौदुम्बरशङ्कुविन्यासादिमिकाया इष्वाकारत्वं सप्ताहाख्यं साम च स्तोत्रस्य विधौ श्रूयन्ते, "समानमितरच्छ्येनेन" इति च । तत्र संशयः–किमयमनुवादः ? उत विधिः ? इति । तत्र पूर्वपक्षयति—

**समाने पूर्ववत्वादुत्पन्नाधिकारस्स्यात् ॥ १२ ॥**

समाने–"समानमितरत्" इति वाक्ये, उत्पन्नाधिकारस्स्यात्–चोदकेन सोमादुत्पन्नानतिदिष्टान्धर्मानधिकृत्यायमनुवादस्स्यात् । कुतः ? [पूर्ववत्वात्] इषोस्सोमप्रकृतिकत्वात् । इतरशब्दो हि सन्निहिते भवति । इतरः कम्बलो दीयतामित्यत्र सन्निहितस्यैव दानात् । सन्निहिताश्च [2]चोदकात्सौमिका धर्माः । ते च श्येने यथा सन्ति तथात्रापीत्यनुवादोऽयमिति ॥

अथाशङ्क्य निराकरोति—

**श्येनस्येति चेन्नासन्निधानात् ॥ १३ ॥**

श्येनस्य ये वैशेषिका धर्मा लोहितोष्णीषादयस्तेषामयं विधिः, अनुवादत्वे आनर्थक्यादिति चेन्न; असन्निधानात्–सन्निहितवचनोऽयमितरच्छब्द । अतः श्येनविशेषिकाणामसन्निहितत्वान्न तद्विधिः । न चानुवादस्यानर्थक्यं, सौमिकधर्माः श्येनेन समाना. वषट्कारनिधनत्वादयस्त्वधिकाः, तस्मादिषुरेवाभिचरता कर्तव्य इति स्तुत्यर्थत्वात् ॥

अथ सिद्धान्तयति—

**अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १४ ॥**

सत्यमितरच्छब्दस्सन्निहितमितरदभिधत्ते[3], न तु तन्मात्रम्, किन्तु पूर्वोक्तसदृशमपि । अत एव बाल्हीकाय कौशेयं दीयताम्, उविदशाय क्षौमम्, चैत्रायेतरत् इत्यत्र चैत्राय कौशेयसदृश वस्त्रमेव देयत्वेन प्रतीयते, न [illegible] ।

१. एव. नास्ति. क.
२. सन्निहितमभिधत्ते. ग.
३. [illegible]

तदिह यत्सन्निहितं चोदकप्राप्तं न तत्पूर्वोक्तसदृशम्। यत्पूर्वोक्तसदृशं श्येनवैशेषिकं न तत्सन्निहितमित्यवश्यं ह्यतन्यतरस्मिन् प्रवृत्तिविशेषलाभाय सन्निधिं हित्वा सादृश्यप्रतिग्रहेण श्येनवैशेषिकाणामयं विधिः। अत. श्येने विहितानां प्राकृतकार्याणां लोहितोष्णीषत्वादीनाम्, अप्राकृतकार्याणां कण्टकवितोदनादीनामपीषौ प्रवृत्तिः। सूत्रार्थस्तु-अपि वा यदीति यद्यपि वेति विपर्यस्य व्याख्येयम्। श्येनवैशेषिकाणां विधिरयमपूर्वत्वात्-अप्राप्तत्वात्, इतरत्पदन्तु ज्यौतिष्टोमिकाद्विधेयंप्राप्तं ततोऽधिकेऽर्थे—वैशेषिके वर्तते। अतस्तद्वाचकं—तद्विधायकं समानपदं स्यादिति।

वार्तिककृतस्तु-सत्यमितरत्पदं[1] सन्निहितं पूर्वोक्तसदृशञ्चाभिधत्ते, तथापि पूर्ववाक्ये सौमिक्या विष्टुतेर्विकारविध्यर्थमुक्तत्वात् तत्सदृशानां चोदकसन्निहितानां सौमिकानामितरच्छब्दो निर्देशकः। तस्माच्चोदकेन यत्सन्निहितं तत्र विष्टुतिरेवं कर्तव्या तदितरच्छयेनेन समानं कर्तव्यमिति [2]चोदकप्राप्तधर्मोद्देशेन विकारविधानादप्राकृतकार्याणा कण्टकवितोदनादीनामिषौ न प्राप्तिः। एवं सन्निहितसदृशपरत्वेऽप्यर्थवत्वसम्भवे सादृश्यमात्रपरिग्रहो न युक्तः। सूत्रार्थस्तु-ज्यौतिष्टोमिकाद्विधेयंप्राप्तं तत्र यदुपयुक्तं तत इतरदङ्गम् अधिकार्थे विकारविधानार्थमनूद्यते। कुतः? [अपूर्वत्वात्] अपूर्वार्थत्वलाभाय। ततश्च समानपदं तद्वाचक विकारविधायकमित्याहुः॥

इति द्वितीयं प्रत्यक्षवचनातिदेशाधिकरणम् ॥ २ ॥

३

चातुर्मास्येषु वैश्वदेवाख्ये प्रथमे पर्वण्यष्टौ हवींषि विहितानि—"अग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्" इत्यादिना। हविषामर्थवादश्चाम्नात.—"वात्रंघ्नानि वा एतानि हवींषि" इति। अङ्गविधयोऽप्याम्नाता—"नव प्रयाजा इज्यन्ते" इत्यादिना। एवं स्थिते, वरुणप्रघासाख्ये द्वितीयपर्वणि पूर्वोक्तान्याग्नेयादीनि पञ्चहवींष्याम्नाय श्रूयते—"एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि" इति। अत्रेतरच्छब्दो [3]वैश्वदेविकाग्नेयादिहविःपञ्चकं परामृशति। तत्र किमर्थवादमात्रस्यातिदेशः? उताङ्गविधीनाम्? इति संशये पूर्वपक्षयति—

---

१. तत्पद. क        २. चोदकप्राप्ता यत्तदुद्देशेन. अ.

३. वैश्वदेविकपञ्चहवि. क.

## पञ्चसञ्चरेष्वर्थवादातिदेशस्सन्निधानात् ॥ १५ ॥

हविषां ब्राह्मणमतिदिश्यते, ब्राह्मणञ्च विधायक वाक्यम्। अर्थवादश्च विध्येकवाक्यतया विधायकान्तर्गत इति स एवातिदिश्यते, नाङ्गविधयः, तेषां हविर्ब्राह्मणत्वाभावात्। न चार्थवादातिदेशानर्थक्यम्, विध्यपेक्षितप्रशंसार्थत्वात्। सूत्रार्थस्तु— चतुर्षु पर्वसु सञ्चरन्तीति पञ्चसञ्चराण्याग्नेयादीनि, तेषु पञ्चस्वर्थवादातिदेशस्स्यात्। तस्यैव विध्येकवाक्यतया तत्सन्निधानात् ॥

अथ सिद्धान्तयति—

## सर्वस्य वैकशब्द्यात्[1] ॥ १६ ॥

सर्वस्याङ्गविधेरप्यतिदेशस्स्यात्, ऐकशब्द्यात्—अङ्गविध्येकवाक्यतापन्नस्यैव प्रधानविधेस्साङ्गप्रधानविधायकत्वेनाङ्गविधीनामपि तदेकवाक्यत्वात् प्रवृत्तिविशेषलाभाच्च ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ १७ ॥

वरुणप्रघासेषु "वाजिनो यजत्याहुतीनां त्रिंशत्वाय" इति त्रिंशदाहुतिदर्शनं, नवप्रयाजाद्यनतिदेशेऽनुपपन्नम्। अङ्गविध्यतिदेशे तु उत्तरविहारे द्वावाज्यभागौ, अष्टौ हवींषि, नव प्रयाजाः, नवानूयाजाः, स्विष्टकृत्, वाजिनहोमश्चेति लिङ्गदर्शनमुपपन्नम् ॥

अत्राशङ्क्य निराकरोति—

## विहिताम्नानान्नेति चेन्नेतरार्थत्वात् ॥ १८ ॥

वैश्वदेवे विहितानाम् 'अग्निं मन्थति" इत्यादीनां वरुणप्रघासेषु पुनराम्नानान्नाङ्गविध्यतिदेश इति चेत्तन्न; पञ्चसञ्चरेभ्य इतरस्य दक्षिणवैहारिकस्य[2] हविषोऽग्निमन्थनाङ्गसिध्यर्थत्वात् पुनराम्नानस्य न वैयर्थ्यम्। अतोऽङ्गविधीनामप्यतिदेशः ॥

इति तृतीय पञ्चसञ्चराधिकरणम् ॥ ३ ॥

---

१. एकशब्दत्वात्.          २. दक्षिणस्य. ग.

४

**एककपालैन्द्राग्नौ च तद्वत् ॥ १९ ॥**

वैश्वदेवे पर्वणि द्यावापृथिव्य एककपालः, वरुणप्रघासेषु काय एककपालः, ऐन्द्राग्न एकादशकपालश्च, साकमेधेऽपि ऐन्द्राग्न एकादशकपालः, वैश्वकर्मण एककपालश्च विहितः। तत्र हि श्रूयते—"एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरश्चेतरश्च" इति। अत्र प्रथममितरत्पदमैन्द्राग्नपरम्, द्वितीयमेककपालपरम्। तत्र संशयपूर्वोत्तरपक्षा पूर्ववत्। उत्तरविवक्षया प्राप्तिसूत्रत्वादधिकाशङ्काभावेऽपि नातिदेशानर्थक्यम् ॥

इति चतुर्थमैन्द्राग्नैककपालाधिकरणम् ॥ ४ ॥

५

साकमेधेषु "एतद्ब्राह्मण एककपालः" इत्यत्र किं वैश्वदेविकैककपालस्य ब्राह्मणमतिदिश्यते ? किं वा[1] वारुणप्रघासिकस्य ? इति संशयः। (तत्र यथा पञ्चसञ्चरेषु भूरिफल) लाभायाङ्गविधीनामप्यतिदेशस्तथात्रापि भूरिधर्मलाभाय वैश्वदेविकैककपालब्राह्मणातिदेशोऽयम्। तत्र हि अभिघारयितव्यः[2], उपांशु यष्टव्यः, आविः पृष्ठ कार्य. इति धर्मभूयस्त्वं श्रुतम्। वारुणप्रघासिकेषु[3] 'शमीमय्यस्स्रुचो भवन्ति' इत्यादिधर्माल्पत्वम्। अतो न तद्ब्राह्मणातिदेश इति प्राप्ते, सिद्धान्तयति—

**एककपा नां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहो पर्यावृत्तिदर्शनादवभृथे च सकृद् द्व्यवदानस्य वचनात् ॥ २० ॥**

वैश्वदेविकैककपाले सर्वहोमापर्यावृत्तिस्सकृदवदानञ्च विहितम्। तच्च सर्वत्रैककपाले भवतीति लिङ्गाद् ज्ञायते। तथा हि—आग्रयणे द्यावापृथिव्यैककपालहविष्कं यागं विधाय तन्निन्दापूर्वक द्यावापृथिव्याज्यहविष्को यागो विहित, "यत्सर्वहुतं करोति सा त्वेका परिचक्षा हुतो न पर्यावर्तते सा द्वितीयाज्यस्यैव द्यावापृथिव्यौ यजेत" इति। तच्चाज्यद्रव्यकयागविधिपरं वाक्यमाग्रयणे द्यावापृथिव्यैककपाले सर्वहोममपर्यावृत्तिञ्च दर्शयति। तथावभृथैककपाले "इदमेवैककपालस्य द्विरवद्यति"

१. वा. नास्ति अ.
२. अभिपूर्य. क.
३. प्राधासिके तु. क.
( ) अपुस्तके ग्रन्थपात.

इत्यवधारणादन्यत्र सर्वत्रैककपाले सकृदवदानमिति ज्ञायते । सर्वत्रैतदेककपालानां वैश्वदेवप्रकृतिकत्व एव सम्भवति' वक्ष्यति च 'स्वरसामैककपालामिक्षम्' इत्यत्र वैश्वदेवप्रकृतिकमेककपालमिति । अतो न्यायादेव वैश्वदेविकधर्मप्राप्तेर्वचनार्थवत्वाय वारुणप्रघासिकब्राह्मणातिदेशः । एवञ्च 'एतद् ब्राह्मण ऐन्द्राग्न' इत्यैन्द्राग्नसमभिव्याहारोऽपि समञ्जसो भवति, वैश्वदेवे ऐन्द्राग्नाभावात् । सूत्रार्थस्तु—आग्रयणे सर्वहोमापर्यावृत्तिदर्शनाद् अवभृथे च सकृदवदानद्व्यवदानवचनादेककपालाना वैश्वदेविक एककपालः प्रकृतिः । अतस्तद्धर्मा न्यायादेव भवन्तीति वचनार्थवत्वाय वारुणप्रघासिकैककपालब्राह्मणातिदेश इति ॥

इति पञ्चमं साकमेधीयैककपाले वारुणप्रघासिकैककपालधर्मातिदेशाधिकरणम् ॥ ५ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ सप्तमाध्यायस्य प्रथमः पादः ॥



# अथ द्वितीयः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वत्र वचनातिदेशश्चिन्तितः । इह द्वितीयपाद आतिदेशिकवचनार्थश्चिन्त्यते । इदं श्रूयते—"कवतीषु रथन्तरं गायति" इति । कशब्दवतीषु "कयानश्चित्र आभुवत्" इत्यादिषु ऋक्षु "अभि त्वा शूर नोनुम" इत्यस्यामुत्पन्नं रथन्तराख्यं साम गायतीत्यर्थः । तत्र किं रथन्तरादिपदैर्गीतिविशिष्टा ऋचोऽभिधीयन्ते ? किं वा गीतय एव ? इति संशये, पूर्वपक्षयति—

**साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टम् ॥ १ ॥**

यद्यपि द्वितीये गीतिरेव सामेत्युक्तम्, तथापि तत्र मन्त्रत्रैविध्यसिध्यर्थं गीतिस्सामेति न्यायावष्टम्भेनोक्तम्, न तु साधितं, प्रयोजनाभावात् । इहातिदेशसिध्यर्थं गीतिरेव सामेत्याक्षेपसमाधानाभ्यां स्थूणानिखननन्यायेन द्रढीक्रियते । तत्र गीतिविशिष्टायाम् ऋच्येवाध्येतॄणा सामशब्दप्रयोगात्, गीतिविशिष्टर्गेव साम । सूत्रार्थस्तु-साम्नोऽभिधानशब्देन-रथन्तरादिशब्देन, प्रगीताया एव ऋचः प्रवृत्तिः-व्यवहारस्स्यात् । यथाशिष्टम्—अध्येतृभिश्शिष्येभ्योऽनुशासनमनतिक्रम्येति ॥

अथ सिद्धान्तयति—

**शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिस्स्यात् पृथग्भावात् क्रियायां ह्यभिसम्बन्धः ॥ २ ॥**

रथन्तरादिशब्दस्य गीतिविशिष्टर्ग्वाचकत्वे "कवतीषु रथन्तरं गायति" इत्यत्र किं कवतीकार्ये रथन्तरं विधीयत इत्यभिमतम् ? किं वा कवत्याधारतया ? नाद्य ; शब्दानामृचां हि कार्यमर्थाभिधानम् । ततश्च कवतीनां कार्ये चित्रत्वादिगुणाभिधाने रथन्तराधारभूतायाः शूरत्वादिगुणाभिधायिन्या "अभि त्वा शूर नोनुमः"

इत्यस्या ऋचो विधानासम्भवः। नान्त्यः, एकस्या ऋचः ऋगन्तराधारत्वासम्भवात्। गीतेर्वाच्यत्वे तु[1] रथन्तराख्यगीतेः कवतीष्वतिदेशो न विरुध्यत इति गीतिरेव साम। सूत्रार्थस्तु-तुशब्दः पक्षव्यावृत्त्यर्थः। अर्थविधित्वात्—शब्दानामर्थाभिधायकत्वात्[2]। विशिष्टार्थप्रतिपादकत्वादिति यावत्[3]। अर्थान्तरे-शब्दान्तरार्थे शब्दान्तरस्याप्रवृत्तिस्स्यात्। अतस्सामशब्दस्य गीतिविशिष्टवाचकत्वे रथन्तरस्य कवतीकार्ये विधिरनुपपन्नः। तथा कवत्याधारताविधिरप्यनुपपन्नः, पृथग्भावात्—ऋचोर्मिथो [4]भिन्नत्वेन ऋगन्तरस्य [5]ऋगन्तराधारत्वायोगात् क्रियायां-गीतिक्रियायां सामशब्दाभिधेयायां ह्यभिसम्बन्धो-रथन्तरगीतेः कवतीसम्बन्धो यतो न विरुद्धः, अतश्शब्दैः-रथन्तरादिशब्दैः गीतिरेव वाच्येति ॥

नन्वेवमप्यभि त्वेति ऋचः कवत्यङ्गत्वेन विधिसम्भवान्न गीतिमात्रं सामेत्यत आह—

**स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनातिदिश्येरन्[6] ॥ ३ ॥**

यदि स्वार्थ एव वर्तमाना अभि त्वेत्याद्या ऋचस्तदङ्गभावेन-कवत्याद्यङ्गभावेनातिदिश्येरन्, तदा क्रियायाः कवतीषु रथन्तरकरणकस्य प्रयोजनं दृष्टासम्भवाद् अदृष्टमेव स्यात्। तच्चायुक्तम्। गीतिवचनत्वे तु ऋगक्षराभिव्यक्तिः दृष्टमेव प्रयोजनमिति गीतिरेव वाच्या ॥

अत्राशङ्क्य परिहरति—

**शब्दमात्रमिति चेन्नौत्पत्तिकत्वात् ॥ ४ ॥**

रथन्तरशब्द कवतीषु प्रयुञ्जीतेति कवतीषु रथन्तरशब्दमात्रमतिदिश्यत इति चेत्तन्न; औत्पत्तिकत्वात्—संज्ञासंज्ञिसम्बन्धस्यौत्पत्तिकत्वादनादिसिद्धत्वात्, अन्यशब्दस्यान्यप्रत्यायनार्थत्वविधावशक्यार्थविध्यापत्तेः ॥

अस्तु को दोष इत्यत आह—

**शास्त्रञ्चैवमनर्थकं स्यात् ॥ ५ ॥**

तथा सति प्रवृत्तिनिवृत्त्यौपयिकत्वाभावाच्छास्त्रमनर्थकं स्यात् ॥

---

१. तु नास्ति अ, ग.
२. विधायकत्वात्. क.
३. यावत् नास्ति. अ, क.
४. विभिन्नत्वेन. अ, क.
५. ऋगन्तरत्वायोगात्. क.
६. उपदिश्येरन्.

अत्राशङ्क्य परिहरति—

**स्वरस्स्यादिति चेन्नार्थाभावाच्छ्रुतेरसम्बन्धः ॥ ६ ॥**

अभिवत्यक्षराभिव्यञ्जको यस्स्वरो घोषनादध्वनिशब्दाभिधेयः स कवतीष्वतिदिश्यते। ननु चात्र "रथन्तर गायति" इति श्रूयते, न स्वर गायतीति। तत्कथ स्वरोऽतिदिश्यत इत्युच्यत इति चेन्न;[1] सुषामा देवदत्त इति सुस्वरे सामशब्दप्रयोगात् सामवाचकस्य रथन्तरशब्दस्य स्वरवाचित्वाविरोधादिति चेत्-तन्न; [2]अभिवत्यक्षराभिव्यञ्जकः स्वरः कवतीषु कर्तुमशक्यः, अर्थाभावात्-अभिवतीगतानामक्षराणां कवतीष्वभावात्। अतः कवतीषु रथन्तरमिति श्रुतेरसम्बन्धः अर्थासम्बन्धस्स्यात् ॥

अत्र शङ्कते[3]—

**स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ७ ॥**

तु शब्दश्शङ्कायाम्। अभिवतीस्वर उत्पत्तिषु-कवतीनामुच्चारणेषु स्यात्। [4]अभिवत्या कवतीषु च बहूनां मात्राणा वर्णानाञ्चाविभक्तत्वात्-समत्वात्। तस्मात्कवतीषु साधारणवर्णाभिव्यञ्जकतया स्थितस्याभिवतीस्वरैकदेशस्य अनुवादोऽयम्, यत्कवतीषु रथन्तरं तद्गायतीति ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ८ ॥**

"रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे बृहदुत्तरयोः न पश्यामीति वसिष्ठः" इति रथन्तरादेरुत्तरयोर्विद्यमानतायां[5] लिङ्गञ्च दृश्यते। यदि विद्यमानं न दृश्येत तत्र [6]तद्दर्शनाय यत्नो भवति, तमसि घटदर्शनाय प्रदीपसम्पादनवत्। यत्र तु यन्नास्ति तत्र तद्दर्शनाय न यत्नो भवति, तमसि शशविषाणदर्शनाय यत्नादर्शनात्। तस्मादुत्तरयो रथन्तरादिदर्शनाय यत्नदर्शनादुत्तरयोरस्ति रथन्तरादिकमित्यस्यानुवादो "रथन्तरमुत्तरयोर्गायति" इत्यादिः। एवं कवतीषु रथन्तरमित्यप्यनुवादः ॥

---

१ चेत्तन्न. क.
२. अभिव्यक्त्यक्षर. अ.
३. आशङ्कते. क.
४. अभिवतीकवतीषु. अ, ग.
५. विद्यमानतायाः. क.
६. तत् नास्ति. अ.

अथ परिहरति—

**अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ९ ॥**

तु शब्दश्शङ्कानिवृत्त्यर्थः। यद्युत्तरासु रथन्तरादिस्वरा विधीयेरन् तदोत्तरासु 'विकारस्याश्रुतेरश्रवणात् यथाश्रुति—यथा स्वाध्यायकाले श्रुता उत्तराः, तथैव क्रतुष्वपि प्रयोक्तव्यास्स्युः ॥

इतोऽप्येवमित्याह—

**शब्दानाच्चासामञ्जस्यम् ॥ १० ॥**

सामशब्दस्य स्वरसामान्यवाचकत्वेऽपि रथन्तरादिशब्दाना न स्वरसामान्य-वाचिता, किन्त्वानुपूर्वीविशेषविशिष्टस्वरसमुदायवाचिता । तस्माद्रथन्तरादिशब्दा-नामभिन्नानुपूर्वीकस्वरैकदेशवाचिनायामसामञ्जस्यं स्यात् । तस्मान्न स्वरानुवादः ॥

नन्वेवमपि 'अग्नौ निश्चयवटे तिष्ठति' इत्यादाविव देशलक्षणया ऋचोर्द्वये रथन्तरं गायतीति विधीयते । अथवा यथा 'आचार्ये प्रोषिते आचार्याणी भवत्य-माचार्या' इत्यत्र च यच्छब्देनाचार्यधर्माः शुश्रूषादय आचार्याण्यामभिधीयन्ते, तथा धर्मलक्षणया रथन्तरधर्माः स्तोभकलादयः ऋक्षु तु रथन्तरशब्देनाभिधीयन्त इति ऋचामेव वाचकं सामशब्दमिति शङ्कायामाह—

**अपि तु कर्मशब्दः स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यैः ॥ ११ ॥**

न्यैः—यथावहननादिभिस्संस्कारकर्मभिः व्रीह्यादिगतस्तण्डुलीभावादिर्विकारो जन्यते, तथा ऋचि ह्रस्वानामक्षराणां दीर्घता दीर्घाणाञ्च ह्रस्वतेत्येवमादिविकारः साम्नां दृश्यते। तस्माद्यतोऽन्यैः संस्कारकर्मभिरविशिष्टो विकारः ततस्सामापि ऋगक्षरसंस्कारिका[1] गीतिरेवेति सामविशेषवाचकै रथन्तरादिपदैः गीतिरेवाभिधीयते ॥

इतोऽप्येवमित्याह—

**अद्रव्य ापि ते ॥ १२ ॥**

द्रव्यशब्दः छन्दोगप्रसिध्या ऋग्वचनः। अनृचमपि साम दृश्यते—'प्रजापतेर्हृदयमनृचं गायति" इति। यदि ऋच एव प्रगीतास्सामानि स्युः, तदा प्रजापतेर्हृदयाख्यस्य साम्नोऽनृचत्वविरोधः। तस्माद्गीतिरेव साम ॥

ननु साम्नः ऋक्संस्कारकत्वे[2] क्रतोर्बहिरवहननादिवत् प्रयोगो न स्यादित्यत आह—

**तस्य च क्रिया ग्रहणार्था ना र्थेषु विरूपितत्वादर्थोऽप्यासां न लौकिको विधानात् ॥ १३ ॥**

तस्य—गानस्याकर्मकाले क्रिया ग्रहणार्था—प्रयोगप्राशुभावाय झटिति कर्तुमभ्यासार्था। ननु तस्यैकरूपत्वात् किमभ्यासेनेत्यत म्—नानार्थेषु विरूपितत्वादिति। नानाभूतेष्वर्थेषु ऋग्रूपेष्वाश्रयेषु तस्य विविधरूपत्वान्नैक रूपम्। ननु वहननादयोऽपि किमित्यकर्मकाले न क्रियन्त इत्यत आह—अर्थोऽप्यासान्न लौकिक इति। आसा रथन्तरादिसंज्ञानामर्थोऽप्यवहननादिवन्न लौकिकव्यवहारसिद्धः, किन्तु विधानात्—एवं रूप [3]रथन्तरमित्युपाध्यायोपदेशादेव सिद्धः। तस्मात् संस्कारकर्मत्वेऽप्यकर्मकाले क्रिया न विरुद्धा ॥

ननु तथापि संस्कारकर्मत्वे बृहदिद रथन्तरमिदमिति संज्ञाभेदोऽनुपपन्नः। अवहननादेः व्रीह्याद्याश्रयभेदेन संज्ञाभेदादर्शनादित्यत आह—

**तस्मिन् संज्ञाभेदास्स्युर्वि रपृथक्त्वात् ॥ १४ ॥**

तस्मिन्संस्कारकर्मण्यपि बृहद्रथन्तरमिति संज्ञाभेदास्स्यु.। गानत्वेनैक्येऽपि विकारपृथक्त्वात्—लक्षणभेदात् ॥

---

१. सस्कारकारिका. क. २. कर्मत्वे. क.
३. रथन्तरमित्येव क, एवं अ.

इतोऽप्येवमित्याह—

**योनिशंस्या च तुल्यवदितराभिर्विधीयते ॥ १५ ॥**

योनिश्चासौ शंस्या च—योनिशंस्या। तादृशी ऋक्, इतराभिरयोनिशंस्याभिस्तुल्यवद्विधीयते। [1]यथा ह्ययोनिभूता ऋचः "शिपिविष्टवतीश्शंसति, प्रउगं शंसति" इत्येव शसतिशब्देन विधीयन्ते, तथा साम्नां योनिभूता ऋचश्च "रथन्तरस्य योनिमनुशसति, बृहतो योनिमनुशंसति" इति[2] विधीयन्ते। ततश्च यदि प्रगीता ऋक् साम स्यात्, तदा [3]प्रगीतमन्त्रकगुणार्थाभिधानस्य "आज्यैः स्तुवते" इत्यादाविव 'रथन्तरस्य योनिमनु स्तुवते' इत्येव [4]विधिस्स्यात्, न तु शंसतीति। अप्रगीतमन्त्रसाध्यगुणाभिधानस्यैव शंसतित्वात्। तस्माद्रथन्तरादियोनीनामृचां शंसतिशब्देन विधानादपि नर्च एव सामानि ॥

इतोऽप्येवमित्याह—

**अयोनौ चापि दृश्यते ॥ १६ ॥**

अयोनिः स्वयोनिभिन्ना सामान्तरयोनिः तस्यामपि साम्न ऊहं दर्शयति। यथा "यो वै छन्दसां सामोहति" इति। ऊहो नाम संस्कार्यान्तरसम्बध इति वक्ष्यते। स च गीतेरेव सम्भवति, न तु[5] ऋच इति, गीतिरेव साम ॥

अत्राशङ्क्य परिहरति—

**ऐकार्थ्ये नास्ति वैरूप्यमिति चेत्, स्यादर्थान्तरेषु निष्पत्तेर्यथा पाके ॥ १७ ॥**

यद्यपि बृहद्रथन्तरयोर्विलक्षणत्वात्[6] बृहद्गीतौ गृहीतायामपि रथन्तरगीतेरगृहीतत्वात् तद्ग्रहणार्थमकर्मकाले प्रयोगस्स्यात्, तथापि रथन्तरस्य ऐकार्थ्ये-एकरूपतो निर्विवादे वैरूप्यं नास्तीति तस्या [7]स्वयोनौ गृहीतायां पुनरुत्तरयो[र्नि]शिक्षयितव्येति

१ तथा हि. ख.

२. इत्येव. क.

३. प्रगीतमन्त्रसाध्यगुणनिष्ठगुणाभिधानस्य. अ, क.

४. विधिर्भवति. ग.

५. तु नास्ति. क.

६. भिन्नलक्षणत्वात्. क

७. स्व. नास्ति. ग.

संस्कारकर्मत्वे [1]तस्याकर्मकाले प्रयोगो न स्यादिति चेन्नैवम्[2]; यथा ओदनपाकेऽभ्यस्तेऽपि गुडपाकोऽभ्यस्यते, आश्रयभेदेनैकस्यापि पाकस्य वैरूप्यात्, एवमर्थान्तरेषु ऋगन्तरेषु निष्पत्तेर्वैरूप्याद् रथन्तरगीतेरप्युत्तरयोर्बहिः प्रयो     ात् ॥

इतोऽप्येवमित्याह—

## शब्दानाञ्चा मञ्जस्यम् ॥ १८ ॥

रथन्तरादिशब्दानां गीतिवाचकत्वे "कवतीषु रथन्तरं गायति" इत्यादौ कवत्वादिशब्दानामृग्वाचकत्वं, रथन्तरादिशब्दानाञ्च गीतिवाचकत्वमिति सामञ्जस्यं स्यात्। अन्यथा कवत्वादिशब्दानां देशलक्षकता, रथन्तरादिशब्दानां वा [3]धर्मलक्षकतेति शब्दानामसामञ्जस्यं स्यात्। तस्माद्गीतिरेव सामेत्यनवद्यम् ॥

इति प्रथमं रथन्तरादिशब्दाना गीतिवाचित्वाधिकरणम् ॥ १ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ सप्तमस्याध्यायस्य द्वितीय· पादः ॥



१. तस्य नास्ति. क.
२. मैवम्. क.
३. वा. नास्ति. ग.

## अथ तृतीयः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पादद्वयेन वचनातिदेशश्चिन्तितः। इह नामधेयातिदेशश्चिन्त्यते। [1]कुण्डपायिनामयने श्रूयते—"मासमग्निहोत्रं जुहुति" इति। (तत्र किमग्निहोत्रमिति नामधेयं नैयमिकादग्निहोत्राद् धर्मातिदेशकम्? उत न? इति विशये, सिद्धान्तयति—

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यात् ॥ १ ॥**

अग्निहोत्रमिदं क्रियाभिधानं) कर्मनामधेयमित्युक्तं तत्प्रख्याधिकरणे। अन्यत्र—[2]कुण्डपायिनामयनिकेऽस्मिन् होमे तच्छ्रुतौ-तस्य नाम्नश्श्रुतौ-श्रवणे विधिप्रदेशः—धर्मातिदेशस्स्यात्। अग्निर्माणवक इत्यादाविव परशब्दस्य परत्र तत्सादृश्यविधित्सया प्रवृत्ते। सादृश्यञ्चात्र तद्धर्मवत्तयेति नाम्ना तद्धर्मातिदेशः ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**अपूर्वे वापि भागित्वात् ॥ २ ॥**

वापीति अपिवेति [3]विपर्यस्तः पक्षव्यावृत्त्यर्थः। उभे अप्येते कर्मणी अपूर्वे [न] मिथः प्रकृतिविकृतिभावापन्ने, भागित्वात्-नैयमिकवदस्यापि जुहोतेरग्निहोत्रपदसामानाधिकरण्याविशेषेण तन्नामभागित्वात्। उभयत्र मुख्यत्वसम्भवे गौणत्वकल्पनमन्याय्यमिति [न] नामातिदेशः ॥

अथ सिद्धान्ती परिहरति—

**नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥**

तुशब्दः पक्षव्यावृत्त्यर्थः। नैव, नामिनो नाम्ना सम्बन्धस्यौत्पत्तिकत्वात्। अन्याय्यञ्चानेकार्थत्वमिति नैयमिकमेवेदं मुख्यम्, अन्यत्र तु गौणम् ॥

---

१. २. कौण्डपायिना. क. () अपुस्तके ग्रन्थपातः.

३. पर्यस्त.. ग., विपर्यस्य. क.

ननु वैपरीत्यं वा किं न स्यादित्यत[1] आह—

**प्रत्य ात् गुणसंयोगात्क्रि भिधानं स्यात् तदभवेऽप्रसिद्धं स्यात् ॥ ४ ॥**

नैयमिके होमे "यदग्नये च प्रजापतये च सायं जुहोति" इति प्रत्यक्षादग्निरूप-गुणसंयोगात्[2], तत्प्रख्यन्यायेनाग्निहोत्रपदं क्रियाभिधान स्यात्–नैयमिकहोमनामधेयं स्यात्। इह तदभावेन प्रवृत्तिनिमित्तालाभादप्रसिद्धमेव स्यात्। अतो नैयमिक एव मुख्यम्, इह तु गौणमित्येव युक्तम्। किञ्च निर्गुणस्य मुख्यत्वे नैयमिके कथं गौणं स्यात्। वाच्यगतगुणयोगेन हि वृत्तेर्गौणता, नैयमिके मुख्यत्वे तु तदीयद्रव्यदेवतादि-गुणातिदेशकतयात्र गौणता सम्भवतीति नैयमिके मुख्येनाग्निहोत्रनाम्नात्र धर्मातिदेश इति सिद्धम् ॥

इति प्रथमं नामातिदेशाधिकरणम् ॥ १ ॥

२

गवामयने श्रूयते—"वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति" इति। तत्र[3] किं द्वादशाहे "प्रायणीयोऽतिरात्रः प्रथममहः" इति श्रुतस्य प्रायणीयस्य धर्मा नाम्ना अतिदिश्यन्ते ? न वा ? इति विशये, [4]पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वः पक्षः।

अथ सिद्धान्तयति—

**अपि सत्र णि गुणार्थै तिस्स्यात् ॥ ५ ॥**

प्रपूर्वेण् धातुरम्भे। प्रारभन्तेऽनेनेति येनैव योगेन द्वादशाहे प्रथमे ऽहि प्रवृत्तेय संज्ञा तेनैव योगेनात्रापि प्रवृत्तिसम्भवेन मुख्यत्वे सम्भवति गौण्या धर्मातिदेशो[5] न युक्त.। चोदनालिङ्गाच्च धर्मप्राप्ते. नारूपत्वमपि। सूत्रार्थस्तु–सत्रकर्मणि–गावाम-यनिके, प्रथमेऽहि एषा–प्रायणीयश्रुतिर्गुणार्था–प्रारभन्तेऽनेनेति गुणेनैवार्थवती न तु गौणीति ॥

---

१. स्यादत॰. क.
२. योगात्. क.
३. तत्र नास्ति. अ.
४. पूर्वाधिकरणन्यायेन. क.
५. धर्मातिदेशोऽयम्. ग.

इतोऽप्येवमित्याह—

**वाक्यशेषे च ॥ ६ ॥**

"ज्योतिरेव पुरस्ताद् दधाति" इति वाक्यशेषः[१]। येन ज्योतिः प्रायणीयं भवति, तेन पुरस्तात्क्रियत इत्यर्थः। अतोऽपि न गौणतयातिदेशकः ॥

इयि द्वितीयं प्रायणीयनाम्नो धर्मानतिदेशकत्वाधिकरणम् ॥ २ ॥

३

"विश्वजित्सर्वपृष्ठो भवति" इति श्रूयते। तत्र किमयं सर्वपृष्ठशब्दः सोमाचोदकप्राप्तानां माहेन्द्रादीनां चतुर्णां स्तोत्राणामनुवादः[२] ? किं वा चोदकेन विकल्पेन प्राप्तयोः बृहद्रथन्तरसामसाधनकयोः पृष्ठस्तोत्रयोः समुच्चयविधनार्थः ? अहोस्वित् षाडहिकानां रथन्तरबृहद्वैरूपवैराजादीनां षण्णां पृष्ठसाम्नामतिदेशार्थं ? इति संशये, पूर्वपक्षयति—

**विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टोमिकानि(पृष्ठान्यस्ति च पृष्ठशब्दः ॥ ७ ॥**

विश्वजिति सर्वपृष्ठता न विधीयते, प्राप्तत्वात् किन्त्वनूद्यते। सूत्रार्थस्तु—सर्वपृष्ठे-सर्वपृष्ठत्वेन श्रुते विश्वजिति, तत्पूर्वकत्वात्—ज्योतिष्टोमप्रकृतिकत्वाच्चोदकप्राप्तानि ज्यौतिष्टोमिकानि पृष्ठान्यनूद्यन्ते। ननु)माहेन्द्रस्तोत्र एव शब्दव्यवहारो न मैत्रावरुणसामादिष्वपीत्यत आह—[३]अस्ति च शब्द इति। "सप्तदशानि पृष्ठानि" इति तेष्वप्यस्ति पृष्ठशब्द इति ॥

अथ सिद्धान्तयति—

**षडहाद्वा तत्र हि चोदना ॥ ८ ॥**

नायमनुवादः, प्रवृत्तिविशेषालाभात्। किन्तु बृहद्रथन्तरादीना स्तोत्रसाधनानां साम्नां षडहाद्[४] द्वादशाहिकादतिदेशकः। तत्र हि षडहे तेषां बृहद्रथन्तरादीनां चोदना ॥

---

१. वाक्यशेषात्. अ.

२. अर्थवादः. अ.

() अपुस्तके ग्रन्थपातः

३. अस्ति च. नास्ति अ.

४. षडहात्. नास्ति. अ.

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ९ ॥**

"पवमाने रथन्तरमार्भवे बृहन्मध्यत इतराणि" इति प्राकृतेषु स्तोत्रेषु षाडहिकसामनिवेशः ॥

अथ यदुक्तं ज्योतिष्टोमेऽप्यस्ति पृष्ठशब्द इति, तत्राह—

**उत्पन्नाधिकारो ज्योतिष्टोमे ॥ १० ॥**

यद्धि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इतिवत् फलवाक्ये, "अग्निहोत्रं जुहोति" इतिवदुत्पत्तिवाक्ये वा कर्मसमानाधिकरणं तदेव नामधेयम्। ततश्च "बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवति" इत्युपन्नयोः बृहद्रथन्तरसाम[1]साधनकस्तोत्रयोरन्यतरस्यैव ज्योतिष्टोमे पृष्ठत्वं न त्वन्येषामपि, तदुत्पत्तौ पृष्ठशब्दाश्रवणात्। "पृष्ठैस्स्तुवते" इति च नोत्पत्तिवाक्यम्। सप्तदशानि पृष्ठानि भवन्तीति पृष्ठशब्देन चतुर्णामनुवादश्छत्रिन्यायेन लक्षणया। न चेह लक्षणाकारणमस्तीति नानुवादः। सूत्रार्थस्तु—ज्योतिष्टोमे माहेन्द्रादिषु चतुर्षु पृष्ठशब्द उत्पन्नाधिकारः—उत्पन्नानि स्तोत्राण्यधिकृत्य प्रवृत्तः "पृष्ठैस्स्तुवते" इति, न तूत्पद्यमानान्यधिकृत्येति ॥

अत्राशङ्क्य निराकरोति—

**द्वयोरिति चेन्न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥**

द्वयोः [2]बृहद्रथन्तरपृष्ठयोर्विकल्पेन प्राप्तयोस्समुच्चयो विधीयत इति चेन्नैवम्[3] बह्वपेक्षस्य सर्वशब्दस्य व्यर्थत्वात्—अर्थशून्यत्वप्रसङ्गात्, षाडहिकानामतिदेशः ॥

इति तृतीय विश्वजिति षाडहिकपृष्ठातिदेशाधिकरणम् ॥ ३ ॥

४

वरुणप्रघासेषु श्रूयते—"वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति" इति। वारुण्या आमिक्षया, निष्कासेन स्थालीलग्नेन लेपेन, पुरोडाशार्थव्रीहितुषैश्चावभृथं यन्तीत्यर्थः। तत्र संशयः—किमयमवभृथशब्दः सौमिकावभृथाद् धर्मातिदेशकः? न वा? इति। तदर्थञ्च किमवभृथशब्देन दार्शपूर्णमासिकञ्चोदकप्राप्तमपां व्युत्सेक-

---

१. साधक. क.  २. बृहद्रथन्तरयोः क.

३. मैवम्. क.

मनूद्य; तुषनिष्कासद्रव्यं विधीयते ? किं वावभृथधर्मकं तुषनिष्कासविशिष्टं कर्मान्तरं विधीयते ? इति। तत्र सिद्धान्तयति—

**तथाऽवभृथस्सोमात् ॥ १२ ॥**

यथा सर्वपृष्ठशब्दष्षडहाद्तिदेशकः, तथाऽवभृथशब्दस्सोमाद्धर्मातिदेशकः। तस्मात्सौमिकावभृथधर्मकं कर्मान्तरं विधीयत इत्यवभृथशब्दोऽतिदेशकः ॥

अथ पूर्वपक्षिणं प्रत्यवतिष्ठमान निराचष्टे—

**प्रकृतिरिति चेन्न भक्तित्वात् ॥ १३ ॥**

दर्शपूर्णमासौ हि वरुणप्रघासानां प्रकृतिः। अतः "एष वै दर्शपूर्णमासयोरवभृथः" इत्युक्तमपा व्युत्सेकश्चोदकप्राप्तमनूद्य गुणमात्रविधिः, विशिष्टविध्यपेक्षया लाघवादिति चेत्—नैवम्;[१] अपा व्युत्सेकेऽप्सम्बन्धसामान्यादवभृथशब्दस्य भक्तिः—गौणवृत्तिः[२], न तु तन्नामत्वम्। अतो न तदनुवादकता। न च कर्मान्तरविधावप्यवभृथशब्दस्य गौणता तुल्येति वाच्यम्। सत्यं सिद्धान्तेऽपि गौणत्वम्, तत्तु प्रामाणिकं, यन्तीति प्रकरणान्तरन्यायात् कर्मान्तरविधिसिद्धौ परशब्दस्य परत्र प्रयोगस्य लोकसिद्धत्वात्। न चैवमपा [३]व्युत्सेकानुवादकत्वे प्रमाणमस्ति, अवभृथशब्दस्य तन्नामत्वाभावात्। अतो विशिष्टकर्मान्तरविधिरवभृथशब्दोऽतिदेशकः ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ १४ ॥**

"नायुदां जुहोति, न साम गायति" इति सौमिकावभृथधर्मप्रतिषेधरूपलिङ्गदर्शनाच्चाप्रतिषिद्धानां प्राप्तिरवसीयते। तस्मादप्यवभृथशब्दो धर्मातिदेशकः ॥

इति चतुर्थं वरुणघासेषु सौमिकावभृथधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

अवभृथकर्म वरुणप्रघासेषु किं पुरोडाशद्रव्यकम्? उत तुषनिष्कासद्रव्यकम्? इति विशये, अवभृथशब्देन प्रत्यक्षेण पुरोडाशस्य धर्मान्तरवदतिदेशात् तत्पुरो-

१. नैवम्. क. २. गौणीवृत्ति. क.

३. व्युत्सेकः. ख.

डाशद्रव्यकम्, तुषनिष्कासपदानर्थक्यप्रसङ्गात् काममस्तु तदपि द्रव्यमिति प्राप्ते, सिद्धान्तयति—

**द्रव्यादेशे तद्द्रव्यं श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १५ ॥**

तुषनिष्कासद्रव्य श्रुत्या गम्यते। पुरोडाशस्त्ववभृथशब्देन लक्षणया, श्रुतिश्च लक्षणातो बलीयसो। [1]किञ्च धर्मान्तरसाधारण्येन पुरोडाशः, तुषनिष्कासस्तु विशेषेण। तस्मादपि पुरोडाशबाधेन तुषनिष्कासमेव द्रव्यम्। सूत्रार्थस्तु—तुषनिष्कासरूपद्रव्योपदेशे तदेव द्रव्यं स्यात् श्रुतिसंयोगात्। द्रव्यानादेश एव सौमिकावभृथप्रकृतिकत्वादिह पुरोडाशस्स्यादिति ॥

इति पञ्चम वरुणप्रघासेष्ववभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

६

आतिथ्येष्टौ श्रुतम्—"वैष्णवो नवकपालः" इति। तत्र च "पत्नी शकटमन्वारभते" इत्यादयो धर्माश्श्रुता.। तथा राजसूये "वैष्णवस्त्रिकपालः" इति। तत्र किं वैष्णवशब्द [2]आतिथ्येष्टौ वैष्णवधर्मातिदेशक.? न वा? इति विशये, सधर्मके कर्मणि श्रुत शब्दोऽन्यत्राधर्मके श्रूयमाणोऽवभृथशब्दवद्धर्मातिदेशक इति प्राप्ते, सिद्धान्तयति--

**गुणविधिस्तु न गृह्णीयात् समत्वात् ॥ १६ ॥**

वैष्णवशब्दस्य विष्णुरूपगुणविधायकतया श्रुतिसम्भवे गौण्याश्रयणान्न धर्मातिदेशकता। सूत्रार्थस्तु-राजसूये वैष्णवशब्दो गुणविधिर्न तु गौणः, समत्वात्—आतिथ्यागतवैष्णवशब्दतुल्यत्वात्। अतस्त्रिकपालो वैष्णवयागो नवकपालधर्मान्न गृह्णीयादिति ॥

इति षष्ठमातिथ्यागतवैष्णवशब्दस्य धर्मानतिदेशकत्वाधिकरणम् ॥ ६ ॥

७

सोमेऽग्नीषोमीय[3]पशावर्धमन्थनशकलनिधानादिधर्मवान्निर्मन्थ्योऽग्निराम्नात'। तथाग्नौ श्रूयते—"निर्मन्थ्येनेष्टका पचन्ति" इति। तथा दर्शपूर्णमासयोर्ल-

१ किञ्च. नास्ति. अ. २. आतिथ्ये. अ, ग.
३. पशौ मन्थनशकल. ख, ग.

वनादिधर्मकं बर्हिः, विलापनादिधर्मकमाज्यं चाम्नातम्। पशौ "बर्हिषा यूपावटमवस्तृणाति" "आज्येन यूपमनक्ति" इति च श्रूयते। तत्र किं निर्मन्थ्यशब्दः [2]पाशुकनिर्मन्थ्यधर्माणां, बर्हिराज्यशब्दौ च दार्शपूर्णमासिकबर्हिराज्यधर्माणामतिदेशकः ? न वा ? इति विशये, वैष्णवशब्दस्यानतिदेशकत्वेऽपि चोदकादाग्नेयविध्यन्तप्राप्तेस्त्रिकपालस्य कथम्भावाकाङ्क्षा शाम्यति। निर्मन्थ्यादिशब्दानामनतिदेशकत्वे निर्मन्थ्यादीनां कथम्भावानुवृत्तेस्तथो मथिताग्नौ यौगिकस्यापि निर्मन्थ्यशब्दस्य[3], जातिवचनयोरपि बर्हिराज्यशब्दयोरतिदेशकत्वं स्यात्। अन्यथाकाङ्क्षाशान्त्यभावादिति प्राप्ते, सिद्धान्तयति—

**निर्मन्थ्यादिषु चैवम् ॥ १७ ॥**

एवमिति पूर्वाधिकरणातिदेशः। श्रुतिसम्भवे गौणमाश्रित्य नातिदेशकत्वं, लोकादेव [4]आकाङ्क्षाशान्तेरिति ॥

इति सप्तमं निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वाधिकरणम् ॥ ७ ॥

८

**सौमिकन्तु प्रणयनमवाच्यं हीतरत् ॥ १८ ॥**

सौमिकप्रणयनधर्मकं प्रणयनं विधीयते। हि यतः, इतरत्—प्राकृतं प्रणयनञ्चोदकप्राप्तत्वादवाच्यम्। न च प्रणयतिशब्दः प्राङ्नयनसामान्यवचनो न तु सौमिकप्रणयननामधेयं, येनान्यत्र प्रयुज्यमानस्तद्धर्मानतिदिशेदिति वाच्यम्। प्राकृतप्रणयनकीर्तनानर्थक्याद्वचनार्थवत्वाय सामान्यवचनत्यापि सौमिकप्रणयननामत्वमङ्गीकृत्य, तत्सदृशं प्रणयनमिह विधीयत इत्यभ्युपगन्तव्यम् ॥

इतोऽप्येवमित्याह—

**उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ १९ ॥**

यथा प्राकृतप्रणयनस्यावाच्यत्वं सौमिकधर्मकमिद प्रणयनमित्यवगमयति तथा "वैश्वदेवे नोत्तरवेदिमुपवपति, न शुनासीरीये" इत्युत्तरवेदिप्रतिषेधोऽप्यवगमयति[१]। प्रतिषेधो हि प्राप्तिपूर्वकः। उत्तरवेदिप्राप्तिश्च सौमिकधर्मप्रणयने भवति, न प्राकृत इत्युत्तरवेदिप्रतिषेधादपि सौमिकधर्मक प्रणयनान्तरमिदम् ॥

अत्र सिद्धान्ती प्रत्यवतिष्ठते—

**प्राकृतं वानामत्वात् ॥ २० ॥**

प्रणयतिशब्दस्यासुबन्तत्वात् क्रियासामानाधिकरण्याभावाच्च न सौमिकप्रणयननामत्वं, तन्नामत्वाभावाच्चात्र[२] न तद्धर्मकप्रणयनविधिः, किन्तु प्राकृतं प्रणयनमेव कीर्त्यते ॥

ननु कीर्तनमनर्थकमित्युक्तमित्यत आह—

**परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २१ ॥**

द्वयोरेव पर्वणोः प्रणयनं न चतुर्ष्विति परिसङ्ख्यार्थं पुनःश्रवणम्। यदि च परिसङ्ख्या त्रिदोषा, तदा गुणार्थ-गुणविधानार्थमनुवादः। यदि च गुणविधानार्थता न सम्भवति, तर्हि द्वाभ्यामेतीत्यर्थवादार्थं भविष्यति। अर्थवादस्य प्रयोजनमुत्तराधिकरणे वक्ष्यते ॥

इति भाष्यमतेनाष्टम चातुर्मास्येषु प्रणयनशब्दस्य सौमिकप्रणयनधर्मानतिदेशकत्वाधिकरणम् ॥ ८ ॥

---

१. अभ्युपगमयति. अ. २. नात्र तद्धर्मक. अ. ३. कीर्तनानर्थक्य. अ.

९

कतरयोर्द्वयोः पर्वणोः प्रणयनमिदमनुकीर्त्यत इति विशये, नियामकाभावादनियमे प्राप्ते, पूर्वपक्षान्तरमुपक्षिपति—

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २२ ॥**

प्रथमोत्तमयोरिदं[1] प्रणयनं तयोरेव "न वैश्वदेव उत्तरवेदिमुपवपति न शुनासीरीये" इत्युत्तरवेदिप्रतिषेधात्। प्रतिषेधो हि तत्प्रसक्तिपूर्वक इति तत्प्रतिषेधेन लिङ्गेन प्रथमोत्तमयोरुत्तरवेदिप्रसक्तिरनुमीयते। तस्याश्चाग्निसंस्कारिकाया अग्निं विना न प्रसक्तिरिति तत्प्रसक्त्याग्निरनुमीयते। प्रणयनं विना च नाग्निरित्यग्निप्रणयनमनुमीयते। तदेवमुत्तरवेदिप्रतिषेधेन लिङ्गेनानुमानपरम्परया प्रथमोत्तमयोः प्रणयनमिदमनुकीर्त्यत इत्यवधार्यते। ननु प्राकृतमेवेद प्रणयनमर्थवादार्थमनुकीर्त्यत इति पूर्वाधिकरणे स्थितम्। ततश्च प्राकृतप्रणयनस्योत्तरवेद्यभावात् कथमुत्तरवेदिप्रतिषेधलिङ्गेन प्रथमोत्तमयोरिदमनुकीर्त्यत इत्युच्यत[2] इति चेत्—सत्यम्; तथापि "द्वयोः प्रणयन्ति" इत्यतत्सन्निधौ हि उत्तरवेद्यामग्निं निदधाति" इति श्रुतम्। तत्रानुवादस्य सन्निहितविषयत्वादेतत्प्रणयनानुवादेनैवोत्तरवेदिविधिः। अतो यत्रेदं प्रणयन तत्रोत्तरवेदिः। यत्र च सा तत्र प्रतिषेधः, प्रसक्तिपूर्वकत्वात्। प्रतिषेधश्च प्रथमोत्तमयोरुपलभ्यत इति तयोरेव प्रणयनमनुकीर्त्यते। ततश्च प्रथमोत्तमयोर्विहितप्रतिषिद्धत्वाद् उत्तरवेदेर्विकल्पः॥

अथ सिद्धान्तयति—

**मध्यमयोर्वा गत्यर्थवादात् ॥ २३ ॥**

"तस्माद् द्वाभ्यामेति" इत्यर्थवादेन हि गतिसाधनयोरिदं प्रणयनमिति गम्यते। गतिसाधनत्वञ्च मध्यमयो. "ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाश्च साकमेधाश्च" इति मध्यमयोर्गतिसाधनभूतोरुत्वेन संस्तवात्[4]। इदमेवार्थवादस्य प्रयोजनम्, यत्तद्वशेन प्रणयनमिद[5] मध्यमयोर्व्यवतिष्ठते। ननु भवतु पुनश्श्रवणमर्थवादार्थम्, अर्थवादश्च मध्यमयो. प्रणयनव्यवस्थार्थः तद्व्यवस्थाया एव किं प्रयोजनमिति चेत्,

१. इह. अ.　　२. इत्युच्यते नास्ति. क.
३. उत्तरवेदि. अ.　　४. सस्तव. अ.
५. इद नास्ति. क.

उच्यते—मध्यमयो. प्रणयनव्यवस्थितौ "उत्तरवेद्यामग्निं निदधाति" इति विहिताप्युत्तरवेदिस्सन्निधानादेतत्प्रणयनार्था भवतीति मध्यमयोरेव सा व्यवतिष्ठते[1]। अन्यथा प्रकरणविशेषाच्चतुर्ष्वपि स्यात्। तदेवमर्थवादमुखेनोत्तरवेद्यामग्निनिधानस्य मध्यमयोरुपसंहारः पुनश्श्रवणप्रयोजनम् ॥

ननु यदि मध्यमयोरेवोत्तरवेदिस्तदा प्रसक्त्यभावात् प्रथमोत्तमयोस्तत्प्रतिषेधानुपपत्तिरित्युक्तमित्यत आह—

औत्तरवेदि ऽनारभ्यवादप्रतिषेधः ॥ २४ ॥

यद्यप्युत्तरवेदिर्मध्यमयोस्तथाप्यौत्तरवेदिकः-उत्तरवेदिसम्बधी प्रतिषेधोऽनारभ्यवादस्य-पर्वविशेषमनारभ्य 'उपात्र वपति' इति विहितोत्तरवेदिः प्रकरणाविशेषात् सर्वपर्वसु प्रसज्यमाना " न वैश्वदेवे" इत्यनेन प्रथमोत्तमयोः पर्युदस्यते, न तु "उत्तरवेद्यामग्निं निदधाति" इत्यनेन प्राप्ता प्रतिषिध्यते, विकल्पप्रसङ्गात्। ननु "उपात्र वपति" इति वाक्यविहितोत्तरवेदिरवान्तरप्रकरणान्महाप्रकरणापेक्षया प्रबलाद्वरुणप्रघासानामेवाङ्गम्। अतस्तस्यास्सर्वपर्वसु प्रसक्त्यभावान्न भवेत्पर्युदासः, किन्तु "उत्तरवेद्यामग्निं निदधाति" इति वाक्यविहितोत्तरवेदिप्रतिषेध एव न वैश्वदेव इति वाक्यम्। अतस्तत्प्रतिषेधवशात् प्रथमोत्तमविषयमेव "द्वयोः प्रणयन्ति" इत्येतदपि[2] इत्येव युक्तमिति चेत्तन्न; विध्येकवाक्यस्यार्थवादस्य प्रदेशान्तरश्रुतप्रतिषेधवाक्यापेक्षया बलीयस्त्वात्। अर्थवादवशेन द्वयोः प्रणयन्तीत्यस्य [3]मध्यमपर्वविषयत्वव्यवस्थितौ तदर्थतया विहितोत्तरवेदिर्नान्यत्र नेतुं शक्येति न वैश्वदेव इत्यस्य [न] तत्प्रतिषेधपरत्वमिति निश्चीयते। यदि "उपात्र वपति" इत्यवान्तरप्रकरणाद्वरुणप्रघासाङ्गं [4]स्यात्तदा प्रतिषेधोऽनर्थकस्स्यात्। आनर्थक्ये च विपरीतं बलाबलमित्यवान्तरप्रकरणबाधेन महाप्रकरणाच्चातुर्मास्यानामविशेषेणैवोपात्र वपतीत्यङ्गम्, तदेव च न वैश्वदेव इत्यनेन पर्युदस्यत इत्येव युक्तमिति दिक्॥

इति भाष्यमतेन नवमं चातुर्मास्येषु प्रणयनस्य मध्यमपर्वनिवेशित्वाधिकरणम्॥ ९ ॥

---

१. उपतिष्ठते. ग.
२. इत्यपीऽत्येव. क.
३. मध्यमपर्वव्यवस्थितौ. क.
४. स्यात्. नास्ति. क.

वाच्यम्। यद्यर्थवादवशाद्द्वयोः प्रणयन्तीत्येतन्मध्यमयोर्व्यवतिष्ठते, तदा तेनैव तयोरुत्तरवेदिसिद्धेः "उपात्र वपति" इति वारुणप्रघासिकावान्तरप्रकरणपठितस्य 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात् प्रथमोत्तमविषयत्वं स्यात्। तथा च तयोरेव प्रतिषेध इति विकल्पस्स्यात्। स च सति सम्भवे न न्याय्यः "ऊरू वा एतौ यज्ञस्य" इत्यूरुत्वेन स्तुतयोरपि मध्यमयोर्न गतिसाधनत्वं, पादयो ( रेव तत्साधनत्वात्। अत पादस्थानीयाभ्यां प्रथमोत्तमाभ्यामेव समाप्तिमेतीत्यर्थवादः कथञ्चिदन्यथोपवर्णनीयः। ततश्च प्रथमोत्तमयोरेवोत्तरवेदिवर्जं "द्वयोः प्रणयन्ति" इत्यनेन विधीयते। "उपात्र वपति" इत्यनेन त्ववान्तरप्रकरणेन वरुणप्रघासेषूत्तरवेदिविधिः। "उत्तरवेद्यामग्निं[1] निदधाति" इति चोत्पन्नाया उत्तरवेदेर्विनियोगार्थमिति सर्वेषामर्थवत्ता ॥

अथ सिद्धान्तयति--

## कृतं वानामत्वात् ॥

न ह्येतत्प्रणयनपदं सौमिकप्रणयनस्य नामधेय, येन मासाग्निहोत्रन्यायेनात्र तत्सदृशकर्मान्तरविधिस्स्यात्। तस्मादनामत्वान्न [2]सौमिकप्रणयनधर्मकं प्रणयनं विधीयते, किन्तु [3]प्राकृतम्। प्राकृतस्वाभाविकप्रणयतिशब्दात् प्रतीतं प्रणयनमात्रमिति यावत्। तच्च गार्हपत्यापादानकात् प्राकृतात् प्रणयनादन्यदाहवनीयापादानक [4]तत्प्रणयनं पशुबन्धवद् भवति। "आहवनीयाद् द्वावग्नी प्रणयतः" इति शाखान्तरीयवाक्यैकार्थ्यात्। न चाहवनीयाद् द्वावध्वर्युप्रतिप्रस्थातारावग्नी विहारद्वयार्थं प्रणयत इत्यर्थकस्य शाखान्तरवचनस्य वरुणप्रघासमात्रविषयत्वाद् "द्वयो· प्रणयन्ति" इत्यस्य तदेकार्थ्यासम्भव इति वाच्यम्, शाखान्तरवचनस्य वरुणप्रघासमात्रविषयत्वेऽपि[5] द्वयोरित्यस्य तदेकार्थत्वायाहवनीयापादानकप्रणयन[6]विषयत्वसिद्धावविशेषात् साकमेधेष्वपि तादृशप्रणयन[7]विधेरविरोधात्। तच्च गत्यर्थवादान्मध्यमयोर्भवति। न

---

() अपुस्तके ग्रन्थपात..
१. उत्तरवेद्यामासादयति अ
२. सौमिकधर्मप्रणयन अ.
३. प्राकृत. नास्ति, क, ग.
४. तत् नास्ति. अ क.
५. द्वयोरित्येतदेकार्थं. क.
६. प्रणयनविशेष, ग.
७. सिद्धेः, क, ग.

चार्थवादत्यान्यथानयनं युक्तम्, प्रथमोत्तमयोः पात्रत्वेन संस्तवाभावात् सत्त्वेन संस्तुतयोरेव गतिसाधनत्वकल्पनौचित्यात् ॥

अथ प्रथमपक्षस्य प्रयोजनमाह—

**परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥**

स्पष्टम् ॥

अथ द्वितीयपक्षप्रयोजनमाह—

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥**

उत्तरवेदिवर्जं सौमिकप्रणयनधर्मकं प्रणयनान्तरं कर्तव्यम् ॥

अथ सिद्धान्तस्य प्रयोजनमाह—

**मध्यमयोः गत्यर्थवादात् ॥**

गत्यर्थवादवशादाहवनीयापादानकमिदं प्रणयनं मध्यमयोर्भवति ॥

यदुक्तमुत्तरवेदिप्रतिषेधरूपलिङ्गादपि सौमिकमेवेदं प्रणयनमिति, तत्राह—

**औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥**

न हि "द्वयोः प्रणयन्ति" [1]इत्येतद्वाक्यविहितप्रणयनाङ्गत्वेन प्राप्तोत्तरवेदिः "न वैश्वदेवे" इत्यनेन निषिध्यते, येन [2]सौमिकधर्मकप्रणयनलिङ्गं स्यात्। किन्तु "उपात्र वपति" इति विहितोत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते। यथा च "उपात्र वपति" इति विहिताया उत्तरवेदेर्वरुणप्रघासावान्तरप्रकरणबाधेन महाप्रकरणेन [3]सर्वकर्मसु प्रसक्तिस्तथोपपादितमिति,[4] 'न वैश्वदेवे उपवपति'' इति तस्याः प्रथमोत्तमयोः [5]न पर्युदासानुपपत्तिः। तस्मादेकमिदमधिकरणं सप्तसूत्रकं [illegible]मिति दिक् ॥

( इति वार्तिकगतम् )

१०

गवामयने श्रूयते—"अभितो दिवाकीर्त्यमाधग्रयसवरसामानो भवन्ति" इति। तेषाञ्च "सप्तदशा भवन्ति" इत्यादिना सप्तदशस्तोमादयो धर्मा आम्नाताः। तथा-

१. इति वाक्य. अ.  २. सौमिकधर्मकप्रणयन. क
३. सर्वपर्वसु ग.  ४. तथोपपादित. अ.
५. न. नास्ति. क

ऽष्टरात्रे "पृष्ठ्यष्षडहो द्वौ स्वरसामानौ" इति श्रुतम्। किमयं स्वरसामशब्दो गावामयनिकस्वरसामधर्मातिदेशक ? उत न ? इति संशयः। तथा वैश्वदेवपर्वणि द्यावापृथिव्य एककपालः श्रुत। तद्धर्माश्च "सर्वहुतञ्जुहोति, अपर्यावर्तयञ्जुहोति" इत्यादयश्श्रुताः। तथा तत्रैव वैश्वदेव्यामिक्षेत्यामिक्षा श्रुता। तद्धर्मा वाजिनहोमादयश्च श्रुताः। तथाऽन्यत्रापि वारुण एककपालो मैत्रावरुण्यामिक्षा च श्रूयेते। किमिहाप्येककपालामिक्षाशब्दौ वैश्वदेविकैककपालामिक्षाधर्मातिदेशकौ ? न वा ? इति संशयः। तत्र स्वरनामकानि सामान्येषामिति स्वरसामशब्दो गवामयनेऽष्टरात्रे च तुल्यवद्गुणविधायक·, तथैककपालामिक्षाशब्दावप्युभयत्र गुणविधिपराविति वैश्वदेवशब्दवन्न धर्मातिदेशकौ नामत्वाभावादिति प्राप्ते, सिद्धान्तयति—

## स्वरसामैककपालामिक्षञ्च लिङ्गदर्शनात्॥ २५॥

अनन्यगतिकलिङ्गानुगृहीतात् स्वरसामत्वादिचोदनासामान्यादतिदेश·। तथा ह्यष्टरात्रे श्रुतम्—"यत्तृतीय सप्तदशमहस्तत्त्रयस्त्रिंशत्स्थानमभिपर्याहरन्ति षडुत्तराणां स्तोमानामव्यवायाय, त्रयाणां सप्तदशानामनूचीनताया" इति। अयमर्थः— पृष्ठ्ये षडहे त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशत्स्तोमकानि क्रमेण षडप्यहानि भवन्ति। अष्टरात्रे च यत्तृतीयं सप्तदशमहः तत्त्रयस्त्रिंशादूर्ध्वमुत्कृष्टव्यम्। तथा सति षट्सङ्ख्योत्तराणां स्तोमानामव्यवायो भवति। त्रिवृत्स्तोममारभ्य पञ्चदशस्य षट्सङ्ख्योत्तरत्वात्। एव [1]पञ्चदशमारभ्यैकविंशस्य षट्सङ्ख्योत्तरत्वात्। एवमुत्तरत्रापि। तत्र सप्तदशस्य त्रयस्त्रिंशादूर्ध्वमुत्कर्षे त्रयाणां सप्तदशानां नैरन्तर्यञ्च भवतीति। यद्यष्टरात्रे स्वरसामशब्दो गावामयनिकस्वरसामधर्मातिदेशकः, तदा तयोरपि गावामयनिकवत् सप्तदशता भवति। तयोस्सप्तदशत्वे च तृतीयस्य सप्तदशस्याह्न उत्कृष्टत्वात्त्रयाणां सप्तदशानां नैरन्तर्यं भवतीत्येतत् स्वरसामशब्दस्यातिदेशकत्वे लिङ्गम्। तथाग्रयणे द्यावापृथिव्यैककपालद्रव्यकं याग विधाय "यत्सर्वहुतं जुहोति, सा त्वेका परिचक्षा यद्धुतो न पर्यावर्तते सा द्वितीया" इति सर्वहुतत्वापर्यावृत्तिसम्भावनयैककपालयागस्य दोषमुपन्यस्य "आज्यस्यैव द्यावापृथिव्यौ यजेत" इत्याज्यहविष्को यागो विहित.। तत्र सर्वहोमापर्यावृत्तिसम्भावना वैश्वदेविकधर्मातिदेशकत्वे लिङ्गम्। तथा क्वचित् मैत्रावरुण्यामिक्षाया "वाजिनेन

---

१. पञ्चदशीमारभ्य क.

प्रचरन्ति" इत्येतद्वैश्वदेविकधर्मातिदेशकत्वे लिङ्गम्। अन्यथा वाजिनप्रसक्त्यभावेन निषेधानुपपत्तेरिति दिक् ॥

इति दशमं स्वरसामादिशब्दाना धर्मातिदेशकत्वाधिकरणम् ॥ १० ॥

११

"वासो ददाति, अनो ददाति" इत्यादौ वासोऽनःप्रभृतयश्शब्दाः किं वानतक्षणादिक्रियावाचकाः ? उत जातिवाचकाः ? इति विशये, पूर्वपक्षयति—

**कर्मजे कर्म यूपवत् ॥ २६ ॥**

जात्यभावेऽपि वानतक्षणाद्यवस्थायां वासो वयतीत्यादिप्रयोगात् क्रियावचना एते। ततश्च वानादि कृत्वा वासःप्रभृति निष्पाद्य दातव्यम्। सूत्रार्थस्तु—कर्मजे–क्रियानिष्पाद्ये वस्तुनि चोदिते कर्म–क्रियाऽनुष्ठेया यूपवत्। यथा "औदुम्बरो यूपो भवति" इति यूपशब्दे श्रुते तक्षणादि क्रियते, तद्वदिति ॥

अथ सिद्धान्तयति—

**यथासिद्धं वाशेषभूतत्वात् ॥ २७ ॥**

क्रियावचनत्वे विनष्टाया क्रियाया, वासो जीर्णमिति प्रयोगो न स्यात्। न चेह यूपवत् क्रियाजन्यमदृष्टमस्ति, यद्विनष्टायामपि[1] क्रियाया वाच्य स्यात्। वानाद्यवस्थायां प्रयोगस्तु [2]जात्यर्थतयोपपन्नः, वानात्प्राग्वासो वयेति [3]वयनार्हतयैवोपपादनीयत्वात्। तस्माज्जातिवचना एत इति यथासिद्धमेव देयम्। सूत्रार्थस्तु—यथासिद्धमेव वासःप्रभृति देयम्, न तु वयनादिक्रियापि कर्तव्या, अशेषभूतत्वात्—क्रियाया अनङ्गत्वादिति ॥

इत्येकादश वासप्रभृतिशब्दाना जातिवाचित्वाधिकरणम् ॥ ११ ॥

१२

गर्गत्रिरात्रे श्रूयते—"अग्निमुपनिधाय स्तुवीत" इति। अत्र किमग्निशब्दः संस्कृताग्निप्रापकः ? उत लौकिकाग्निप्रापकः ? इति विशयेऽग्निशब्दस्य सामान्य-

१. अपि-नास्ति. ग. २. जात्यर्हतया. ग, जात्यर्थतया. ज.

३. वानार्थतया. क, वानार्हतया. ज.

वचनत्वेऽप्याधानोत्पन्नानामग्नीनां प्रयोजनापेक्षित्वात्त एवोपनिधानाङ्गत्वेन विधीयन्त इति प्राप्ते, सिद्धान्तयति—

**विशये लौकिकं स्यात् सार्वार्थत्वान्न वैदिकमर्थनिर्देशात् ॥ २८ ॥**

"यदाहवनीये जुहोति" "गार्हपत्ये हवींषि श्रपयति" इति साक्षात्प्रयोजननिर्देशान्न तेषां प्रयोजनान्तरापेक्षेति लौकिक एवोपनिधातव्य.[1] । सूत्रार्थस्तु-लौकिको वैदिको वोपनिधेय इति विशये, लौकिकमुपनिदध्यात् , तस्य लिङ्गात् सर्वकार्यार्थत्वान्न वैदिकम् । यदाहवनीयादिवाक्यैः प्रयोजननिर्देशादाकाङ्क्षाशान्तेरन्यत्राविनियोगात् ॥

नन्वेमपि धैष्ण्या उपनिधीयन्तामित्यत आह—

**तथोत्पत्तिरितरेषां समत्वात् ॥ २९ ॥**

इतरेषां धैष्ण्यानामप्युत्पत्तिस्तथा-आहवनीयादिवन्न सर्वार्था । कुत ? समत्वात्—आहवनीयादीनामिव "धिष्ण्यान् [2]व्याघारयति" इति प्रयोजननिर्देशस्य समत्वात् । तस्माल्लौकिक उपनिधेयः ॥

इति द्वादश गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ॥ १२ ॥

१३

यूपैकादशिन्यां श्रूयते—"उपशयो यूपो भवति" इति । उप यूपानां समीपे शेते न तूच्छ्रीयत इत्युपशयः । तत्र संशयः-किमयं यूपशब्द उपशये यूपधर्मान् परिव्याणादीनतिदिशेत् ? न वा ? इति । तत्र पूर्वपक्षयति—

**संस्कृतस्स्यात् तच्छब्दत्वात् ॥ ३० ॥**

तक्षणादिसंस्कारं निमित्तीकृत्यान्यत्र[3] वर्तमानो यूपशब्द उपशये प्रयुज्यमानस्तद्धर्मानतिदिशेदग्निहोत्रादिशब्दवत् । सूत्रार्थस्तु-उपशयस्संस्कारविशिष्टस्स्यात् । तच्छब्दत्वात्-यूपशब्दस्य संस्कृतवाचित्वादिति ॥

---

१. उपधातव्यः क. २. आघारयति. क.

३. निमित्तीकृत्याग्रे. अ.

अथ सिद्धान्तयति—

**भक्त्या वा य शेषत्वाद् णानामभिधायकत्वात्[1] ॥ ३१ ॥**

विधिवाक्यगत एव परशब्दः परत्र प्रयुक्तो विध्याकाङ्क्षावशाद्धर्मातिदेशको भवति अग्निहोत्रादिशब्दवत्, न त्वर्थवादगतेऽपि दार्शपूर्णमासिके अपा व्युत्सेकेऽवभृथशब्दवत्, स्तुत्यर्थतयोपपत्तेः। इह च[2] वर्तमानापदेशतयार्थवादगतो हि यूपशब्दः। न च धर्मानतिदेशे कथं गौण्या वा तत्र प्रवृत्तिरिति वाच्यम्। अर्थसिद्धं छेदनादि निमित्तीकृत्य गौण्योपपत्तेः[3]। परिव्याणादयः पशुनियोजनद्वारा यज्ञार्था[4] भवन्ति उपशये च न पशुनियोजनमस्ति, "सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशु" इति (श्रवणात्। तस्मादुपशये यूपशब्दो न संस्कारातिदेशकः। सूत्रार्थस्तु–उपशये यूपशब्दो भक्त्या गौण्या प्रवृत्तो न धर्मातिदेशकः। तत्र क्रियमाणाना संस्काराणां द्वारभूलपशु)नियोजनाभावेनायज्ञाङ्गत्वात्। न चैव यूपसादृश्याभावाद् गौणी वा कथमिति वाच्यम्, [5]गुणानामर्थसिद्धानामभिधायकत्वात् तत्र यूपशब्दप्रवृत्तिरुपपन्नेति ॥

इति त्रयोदशमुपशये यूपधर्मानतिदेशताधिकरणम् ॥ १३ ॥

१४

अग्नौ श्रूयते–"पृष्ठैरुपतिष्ठते" इति। तत्र संशयः–किमय पृष्ठशब्दः पृष्ठधर्मातिदेशकः? न वा? इति। तदर्थञ्च किमग्निसमीपे स्थित्वा पृष्ठसदृशैः कर्मभिः भावयेदिति वाक्यार्थः? किं वा बृहद्रथन्तरादिपृष्ठस्तोत्रसाधनीभूतैः "अभि त्वा शूर नोनुमः" इत्यादिमन्त्रैरग्निमुपेत्य तिष्ठेत्? समीपे स्थित्वाऽग्निमभिष्टुयादिति यावत्। समीपस्थितिं प्रति करणत्वस्याभिधानद्वारैव वाच्यत्वात्। तत्र पूर्वपक्षयति–

**कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३२ ॥**

नामधेयपादे पृष्ठशब्दो गुणिनिष्ठगुणाभिधानात्सप्तानां रथन्तरादिसाम्नां स्तोत्राणा नामधेयमिति स्थितम्। स च कर्मान्तरे श्रूयमाणो मासाग्निहोत्रशब्दवत् साद-

१. अभिधानत्वाद्.
२. तु. क.
३. गौण्युपपत्तेः. अ, ग
४. भवन्ति. नास्ति. ग.
() अपुस्तके ग्रन्थपातः,
५. गौणानां. क.

स्यात् कर्मान्तरमभिधत्ते । न चैवं पृष्ठसदृशानां कर्मणामुपस्थाने करणत्वासम्भवात् तृतीयानुपपत्तिरिति वाच्यम् । यद्यपि तेषां धात्वर्थं प्रति करणत्वं न सम्भवति, तथापि प्रत्ययवाच्यभावनां प्रति सम्भवति । तदयमर्थः–अग्निसमीपे स्थित्वा पृष्ठसदृशैः कर्मभिर्भावयेदिति । न चैवमपि 'उपान्मन्त्रकरणे' इत्युपपूर्वान् मन्त्रकरणकेऽर्थे वर्तमानात्तिष्ठतेरात्मनेपदं भवतीति स्मृतेरिहात्मनेपदानुपपत्तिः । अत पृष्ठशब्दो मन्त्रवचन एव युक्त इति वाच्यम् । तथा सति स्तोत्रवचन पृष्ठशब्दस्तत्साधनगीत्याश्रयभूतामृचं लक्षयेत् । उपतिष्ठतिश्च समीपस्थितिवचनो [1]मन्त्रकरणकाभिधानक्रियामभिधत्ते । ततश्च स्तुतिसाधनगीत्याश्रयैः मन्त्रैरग्निमभिदध्यादिति पदद्वयलक्षणा स्यात , अस्मत्पक्षे तु पृष्ठशब्दमात्रे । आत्मनेपदन्तु 'व्यत्ययो बहुलम्' इत्युपपादनीयम् । तस्मात्पृष्ठशब्देन हिङ्कारादयस्सामान्यधर्माः, "रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्" इत्यदयो विशेषधर्माश्चातिदिश्येरन् । सूत्रार्थस्तु–पृष्ठशब्दः कर्मणः–पृष्ठसदृशकर्मणः प्रतिपादकः स्यात् । 'बृहत्पृष्ठं भवति' इत्यादिरुपदेशो यथाभूतस्तथाभूतत्वादस्योपदेशस्येति ॥

अथ सिद्धान्तयति—

**अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्द स्यात् ॥ ३३ ॥**

सत्यां गतौ व्यत्ययानुसारकथनमयुक्तम् । अतो मन्त्रकरणक एवेदमात्मनेपदमिति पृष्ठशब्दस्स्तोत्रसाधनमन्त्रलक्षक[2] एव युक्तः । लक्षणा च त्वन्मतेऽपि तुल्या । वस्तुतस्त्वन्मते पृष्ठशब्दे गौणी, मन्मते लक्षणेति मन्मतमेव ज्यायः । न चैवमुपतिष्ठतिरप्यभिधानं लक्षयेत्, मन्त्रस्याभिधानादन्यत्र करणत्वासम्भवादिति पदद्वयलक्षणा स्यादित्युक्तमिति वाच्यम् । उपतिष्ठतिस्समीपस्थितिवचन[3] एव, नाभिधानलक्षकः । आत्मनेपदानुमितश्चाभिधानं मन्त्रकरणकमिह विधीयते । न चैवमनुमिताभिधानशेष एव मन्त्रस्स्यान्नोपस्थानशेषः । ततश्च "पृष्ठैरुपतिष्ठते" इति समभिव्याहारानुपपत्तिः । उपपूर्वस्य तिष्ठतेर्मन्त्रकरणकत्वानुपपत्तिश्चेति वाच्यम् । यथा भावनाभाव्ये फले करणभूतोऽपि यागो भावनाया करण, तथा समीपस्थितिसाध्या-

१. मन्त्रकरणिका. अ. २. स्तोत्रसाधनफलक एव. अ.

३. लक्षण.. क.

भिधानकरणभूता मन्त्रास्समीपस्थितौ करणं भवन्तीति "पृष्ठैरुपतिष्ठते" इति समभिव्याहारः उपतिष्ठतेश्च[1] मन्त्रकरणकेऽर्थे वृत्तिश्चोपपद्यते। तस्मादभिधान-चोदनेयमिति न पृष्ठशब्दो धर्मातिदेशकः। सूत्रार्थस्तु-विप्रतिषेधात्-आत्मनेपद-विरोधादभिधानचोदनैवेयम्। अतः पृष्ठशब्दो द्रव्येषु-मन्त्रेषु स्यादिति ॥

इति चतुर्दशं पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम् ॥ १४ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ सप्तमस्याध्यायस्य तृतीयः पादः ॥



१. उपस्थानस्य च. अ. ग.

## अथ चतुर्थः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

वृत्तो नामातिदेशविचारः । अस्मिंश्चतुर्थपादे आनुमानिकवचनातिदेशश्चिन्त्यते । "सौर्यं चरुं निर्वपेत्" इत्यादौ कुतश्चिद्धर्माः प्राप्यन्ते न वेति संशयः । ये लौकिक[१]स्थालीपाकादौ धर्मा अग्निप्रतिष्ठापनादयः, ये च वैदिके दर्शपूर्णमासादौ प्रयाजादयः, ते तत्रैव भवेयुः, न सौर्यादौ, तदङ्गत्वबोधकश्रुत्यादिप्रमाणाभावादिति प्राप्ते, सिद्धान्तयति--

### इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

यागेन ब्रह्मवर्चसं भावयेदित्युक्ते, नानुपकृतं करणं फलं साधयतीति भवतीतिकर्तव्यताकाङ्क्षा । सत्यामपि तस्यां तदनुपदेशान्नूनमस्यान्यतस्सिध्यतीतिकर्तव्यतेति निश्चीयते । अस्ति च 'लौकिके स्थालीपाके वैदिके च दर्शपूर्णमासादावितिकर्तव्यतेति तयोरन्यतरस्थाया इतिकर्तव्यताया आकाङ्क्षावशादतिदेशः । सूत्रार्थस्तु--इतिकर्तव्यतायास्सौर्यादावविधानाद् यजतेः सौर्यादियागस्य पूर्ववत्त्वं--स्थालीपाकदर्शपूर्णमासाद्यन्यतरप्रकृतिकत्वमवश्यं[२]अभ्युपेयमिति ॥

इति प्रथम सौर्यादिष्वितिकर्तव्यताया अतिदेशाधिकरणम् ॥ १ ॥

२

सौर्यादौ किं लौकिकीतिकर्तव्यता प्राप्यते ? किं वा वैदिकी ? इति विशये, पूर्वपक्षयति--

---

१. लौकिकस्थाली. अ. २. अवश्यं. नास्ति. अ.

## लौकिकः स्याद् दृष्टप्रवृत्तित् ॥ २ ॥

इत्थम्भावो लौकिक[१] एव स्यात्। तस्याष्टकादिष्ववधर्मकेषु दृष्टप्रवृत्तित्वात् न वैदिकः। तस्य प्रकरणादिना व्यवस्थितत्वेनान्यत्र नयनायोगात् ॥

नन्वेवमाज्यभागयोः गृहमेधीये दर्शनं न स्यादित्यत आह—

## वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥

"आज्यभागौ यजति" इति वचनात्तत्र कथम्भावस्य ततो लौकिकादन्यत्वम्। वचनाभावे तु लौकिक एव स्यात् ॥

अत्र शङ्कते—

## लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥

सौर्यचरौ "प्रयाजे प्रयाजे कृष्णलं जुहोति" इति प्रयाजरूपलिङ्गेन, महापितृयज्ञे "नार्षेयं वृणीते" इत्यार्षेयवरणपर्युदासलिङ्गेन तत्प्रसक्तिं विनानुपपद्यमानेन, पशौ "पृषदाज्येनानूयाजान् यजति" इत्यनूयाजलिङ्गेन च तत्र वैदिकः कथम्भावो नियम्येत, लिङ्गस्य प्रयाजादेः तद्गुणत्वात्—वैदिकापूर्वं प्रत्येव गुणत्वादङ्गत्वात् ॥

परिहरति—

## अपि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥

वैदिको विध्यन्त एव लिङ्गेन नियम्यत इत्युक्तम्। वैदिकस्य प्रकरणादिना नियन्त्रितत्वेनान्यत्र नेतुमयुक्ततया लिङ्गस्य न्यायपूर्वत्वाभावात्। कथन्तर्ह्येतानि[२] लिङ्गानीति चेदुच्यते—यत्र प्रकृतौ प्रयाजास्तत्र तदनुवादेन कृष्णलविधिरिति प्रयाजवाक्यस्योत्कर्षः। नार्षेयमिति वचनन्तु "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" इतिवन्नित्यानुवादः। पृषदाज्यादिवाक्यानि तु पृषदाज्यविशिष्टानूयाजादिविधायकानि। न च प्रयाजवाक्यमपि कृष्णलविशिष्टप्रयाजविधिः किं न स्यादिति वाच्यम्। [३]उद्देशसमर्पकवीप्सावशेन प्रयाजानामुद्देश्यतावश्यम्भावात्। तस्माल्लिङ्गानामन्यथा सिद्धत्वाभावात्[४] लौकिकस्यैव प्राप्तिः।

---

१. लौकिकप्राकरणिक. अ. २. तस्यैतानि. क.

३. उद्देश्यता. अ, ग. ४. अनन्यथासिद्धत्वात्. अ.

यद्यपि नियन्त्रितत्वान्न वैदिकस्य प्रवृत्तिरित्युक्तम्, तथापि यदि कश्चिद् भ्रान्तो वैदिकोऽपि विध्यन्तो लौकिकेन सह प्रवर्ततामिति ब्रूयात्, तं प्रत्यप्याह—

**मिथो विप्रतिषेधाच्च गुणानां यथार्थं कल्पना स्यात् ॥ ६ ॥**

लौकिकवैदिकयोर्द्वयोरपि सह प्रवृत्तावेकेनैव कार्यनिर्वृत्तेरितरस्यादृष्टार्थता स्यात्। अतो मिथः प्रवृत्तेर्विप्रतिषिद्धत्वाद् गुणानाम्—अङ्गानां यथार्थं प्रकृतिक्लृप्तं प्रयोजनमनतिक्रम्य कल्पना स्यात्। एकस्यैवेत्थम्भावस्य प्रवृत्तिस्यादिति यावत् ॥

यदा एकस्य तदा लौकिकस्यैव दृष्टप्रवृत्तित्वादित्यत्र शङ्कते—

**भागित्वात्तु नियुज्येत गुणानामभिधानत्वात् सम्बन्धादभिधानवद्यथा धेनुः किशोरेण ॥ ७ ॥**

भागित्वात्—प्रयाजादीना, सौर्यादिषु दृष्टप्रवृत्तिकत्वाद् वैदिक एव कथम्भावो नियम्येत। ननु प्रयाजादिदर्शनमात्रेण कथमित्थम्भावस्य नियमनमित्यत उक्तम्—गुणानामभिधानत्वादिति। प्रयाजादिगुणानां वैदिककथम्भावाभिधायकत्वात्। [1]तत्साधकत्वादिति यावत्। कथं तेषां तत्साधकत्वम्? सम्बन्धात्-प्रयाजादीनां वैदिककथम्भावसम्बन्धात् तत्साधकत्वम्। अभिधानवत्-यथाग्निहोत्रनामधेयस्य [2]कौण्डपायिनामयनीये होमे सम्बन्धात् स्ववाच्यसम्बन्धिधर्मसाधकत्वं तद्वत्। ननु तथापि दृष्टप्रवृत्तित्वात् लौकिको वा विध्यन्तः किन्न [3]प्रवर्तेत? तत्राह— यथा धेनु किशोरेण—यथा गवाश्वसाधारणोऽपि धेनुशब्दः किशोरेणागता धेनुरित्यत्रासाधारणेन किशोरेण वडवायां नियम्यते, तथा लौकिकस्य दृष्टप्रवृत्तित्वेऽप्यसाधारणप्रयाजादिना वैदिक एव नियम्यते। न च लिङ्गानामन्यथासिद्धिरुक्तेति वाच्यम्, प्रयाजे प्रयाज इत्यस्योत्कर्षकल्पनस्यान्याय्यत्वात्। नार्षेयमित्यस्यापि निरर्थकानुवादत्वोक्त्ययोगात्। पृषदाज्येनेत्यत्रापि द्वितीययानूयाजानामुद्देश्यताप्रतीतेर्विधेयत्वायोगाच्च। तस्माल्लिङ्गबलाद् वैदिको विध्यन्तो नियम्यते ॥

---

१. तत्. नास्ति. ग.

२ कौण्डिपायनामयनिके. क.

३. प्रवतते. क.

विरुद्धा उभयेऽपि क्रियन्ते। विरुद्धेषु विचार्यते—[1]'किं द्वादशाहिका एकाहिका वा विकल्पेन कर्तव्याः? किं वा द्वादशाहिका एव? अथ वैकाहिका एव? इति विशयः। तदर्थञ्च किञ्चोदकनामधेययोस्तुल्यबलत्वम्? उत चोदकस्य बलीयस्त्वम्? अथवा नामधेयस्य? इति। तत्र परशब्दस्य परत्र प्रवृत्त्यन्यथाऽनुपपत्त्या [2]नाम्ना ऐकाहिकधर्मातिदेशकत्वमवश्यं वाच्यम्। नामधेयश्रवणरहितेन "प्रजाकामा गवामयनमुपयन्ति" इति फलवाक्येनाहर्गणस्य फले विनियोगात्, इतिकर्तव्यताकाङ्क्षायामहर्गणत्वसामान्यात् कल्पितस्य[3] चोदकस्यापि द्वादशाहिकधर्मातिदेशकत्वमावश्यकमिति नामधेयचोदकयोः बलाबलनियामकाभावादनियम इत्युत्सूत्रः प्रथमः पक्षः।

[4]द्वितीयपक्षमुपक्षिपति--

**द्वादशाहिकमहर्गणे तत्प्रकृतित्वाद् ऐकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत्॥ १२॥**

यद्यपि नाम्नः प्रत्यक्षत्वेनानुमानिकाच्चोदकादन्यत्र बलीयस्त्वं, तथाप्यत्र चोदक एव बलीयान्। तथाहि--ज्योतिरादयः भाव्यमासाद्य कथमिदं[5] भाव्यमिति कथम्भावमाकाङ्क्षन्ति, भाव्यसम्बन्धश्च "प्रजाकामा गवामयनमुपयन्ति" इति प्रयोगवाक्यात्। तत्र नाम्नामश्रवणान्न तन्निमित्ता धर्मप्राप्तिः, किन्त्वहर्गणत्वसामान्यात्[6] चोदकनिमित्तैव। यासु चोत्पत्तिचोदनासु नामानि श्रूयन्ते, तत्र फलसम्बन्धाभावान्नेतिकर्तव्यताकाङ्क्षेति नामधेयबाधेन चोदकस्यैवानुग्रहः। ननु फलसम्बन्धोत्तरकालं नामधेयमप्यतिदिशतु। ततश्चानियम इति चेन्न, फलसम्बन्धं प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं प्रथमावगत[7]गणधर्माविरोधेन वर्तेत[8]। ततश्च ये द्वादशाहिकधर्मैरविरुद्धा ऐकाहिका धर्माः, ते तु नाम्नातिदिश्यन्ते। अतएव तन्नामताप्येषामुप-

---

१. तत्र किं. क, ग.
२. नाम्न. अ.
३. वैदिकस्य. क.
४. अथ द्वितीय. अ, ग.
५. इदं. नास्ति. क.
६. श्रूयमाणत्वसामान्यात् चोदनानिमित्तैव. अ.
७. गौण. अ.
८. वर्तते. क.

अत्र शङ्कते—

**लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ १० ॥**

यदि वैदिकविध्यन्तप्राप्तिर्लिङ्गदर्शनहेतुका, तर्हि यत्रैन्द्राग्नादौ लिङ्गं नास्ति, तत्र लौकिकविध्यन्तस्स्यात् ॥

समाधत्ते—

**लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूच्येत यथा स्थालीपुलाकेन ॥ ११ ॥**

लिङ्गस्य[१] न्यायपूर्वकत्वात् न्यायस्य चालिङ्गेषु लिङ्गवत्सु च तुल्यत्वादलिङ्गेष्वपि वैदिकविध्यन्तः प्राप्नोति। ननु कथं न्यायतौल्यमिति चेत्, चोदनाशब्दसामान्यात्-वैदिकचोदनात्वसामान्याद्धि वैदिक एव सौर्यादौ प्राप्नोति। तच्च वैदिकत्वसामान्य[२] लिङ्गशून्यानामपि तुल्यम्। ततश्च यथा स्थालीगतेनैकेनापि पुलाकेन सिद्धेनान्येषामपि सिद्धता [३]निरुच्यते, तथा लिङ्गवतां वैदिकप्राप्त्या तच्छून्यानामपि वैदिक एव विध्यन्तः प्राप्नोतीत्यवसीयते। यद्यपि स्मार्तचोदनायामपि वेदमूलत्वात् वैदिकचोदनात्वसामान्यमविशिष्टम्, तथापि वैतानिककर्माधिकारेणैवात्र विधिप्रवृत्तिः। तन्मध्ये तु मलवद्वासोव्रतकलापवत् प्रसङ्गात् स्मार्तकर्माणि चोद्यन्ते। ततश्च स्वाधिकारप्रवृत्तवेदविहितत्वसामान्याद्वैदिकस्यैव सौसादृश्यमिति तस्यैव प्रवृत्तिरिति दिक् ॥

इति द्वितीय सौर्यादौ वैदिकविध्यन्तातिदेशाधिकरणम् ॥ २ ॥

३

गवामयने श्रूयते-"ज्योतिर्गौरायुरिति त्र्यहा भवन्ति" इति। सन्ति च ज्योतिराद्याख्या[४] एकाहा। तत्र गावामयनिकेषु ज्योतिरादिषु चोदकेन द्वादशाहिका धर्मा भवन्ति 'गणेषु द्वादशाहस्य' इति वक्ष्यमाणत्वात्। नामधेयैश्चैकाहिकाः। तत्रा

---

१ लिङ्गसामान्यस्य. अ.
२. वेदिकचोदनात्वसामान्य. क.
३. निरूप्यते. अ.
४. ज्योतिरादयः. क, ज्योतिराख्या. अ.

विरुद्धा उभयेऽपि क्रियन्ते। विरुद्धेषु विचार्यते—[1]'किं द्वादशाहिका एकाहिका वा विकल्पेन कर्तव्याः? किं वा द्वादशाहिका एव? अथ वैकाहिका एव? इति विशयः। तदर्थञ्च किञ्चोदकनामधेययोस्तुल्यबलत्वम्? उत चोदकस्य बलीयस्त्वम्? अथवा नामधेयस्य? इति। तत्र परशब्दस्य परत्र प्रवृत्त्यन्यथाऽनुपपत्त्या [2]नाम्ना ऐकाहिकधर्मातिदेशकत्वमवश्यं वाच्यम्। नामधेयश्रवणरहितेन "प्रजाकामा गवामयनमुपयन्ति" इति फलवाक्येनाहर्गणस्य फले विनियोगात्, इतिकर्तव्यताकाङ्क्षायामहर्गणत्वसामान्यात् कल्पितस्य[3] चोदकस्यापि द्वादशाहिकधर्मातिदेशकत्वमावश्यकमिति नामधेयचोदकयोः बलाबलनियामकाभावादनियम इत्युत्सूत्रः प्रथमः पक्षः।

[4]द्वितीयपक्षमुपक्षिपति—

**द्वादशाहिकमहर्गणे तत्प्रकृतित्वाद् ऐकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत्॥ १२॥**

यद्यपि नाम्नः प्रत्यक्षत्वेनानुमानिकाच्चोदकादन्यत्र बलीयस्त्वं, तथाप्यत्र चोदक एव बलीयान्। तथाहि—ज्योतिरादयः भाव्यमासाद्य कथमिद[5] भाव्यमिति कथम्भावमाकाङ्क्षन्ति, भाव्यसम्बन्धश्च "प्रजाकामा गवामयनमुपयन्ति" इति प्रयोगवाक्यात्। तत्र नाम्नामश्रवणान्न तन्निमित्ता धर्मप्राप्तिः, किन्त्वहर्गणत्वसामान्यात्[6] चोदकनिमित्तैव। यासु चोत्पत्तिचोदनासु नामानि श्रूयन्ते, तत्र फलसम्बन्धाभावान्नेतिकर्तव्यताकाङ्क्षेति नामधेयबाधेन चोदकस्यैवानुग्रहः। ननु फलसम्बन्धोत्तरकालं नामधेयमप्यतिदिशतु। ततश्चानियम इति चेन्न; फलसम्बन्धं प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं प्रथमावगत[7]गणधर्माविरोधेन वर्तते[8]। ततश्च ये द्वादशाहिकधर्मैरविरुद्धा ऐकाहिका धर्माः, ते तु नाम्नातिदिश्यन्ते। अत एव [illegible]-

---

१. तत्र किं. क, ग.          २. नाम्ना. ग.

३. वैदिकस्य. क.          ४. अथ द्वितीय. ख, ग.

५. इद. नास्ति. क.          ६. अहर्गणत्वसामान्यात् चोदकनिमित्तैव. ग.

७. गौण. ग.          ८. वर्तते. क.

पन्ना, तद्धर्मयोगात्। अतो नाम्ना न [1]सर्वधर्मातिदेश·। यद्वा ज्योतिरादिपदानि नैकाहिकानां नामधेयानि, येन तद्धर्माणां सर्वेषामतिदेशस्स्यात्। किन्तु तेषु ये ज्योतिष्टोमापेक्षयाऽधिकास्स्तोत्रशस्त्रादयो धर्माः तेषां वाचकानि, तेषु [2]सत्स्वेवैकाहेषु प्रयोगात्, असत्सु तेषु ज्योतिष्टोमादिष्वप्रयोगात्। ननु धर्मवचनत्वे ज्योतिरादिपदानां कथं क्रतौ प्रवृत्तिरिति चेत्—यथैकाहेषु लक्षणया प्रवृत्तिस्तथेहापीति ध्येयम्। सूत्रार्थस्तु—अहर्गणे-गवामयने ज्योतिरादिषु, द्वादशाहिक धर्मजातं स्यात्। गवामयनस्य तत्प्रकृतिकत्वात्-ऐकाहिकं गावामयनिकं ज्योतिरादिक ज्योतिष्टोमादधिकानां धर्माणा आगमात्तदाख्यं-ज्योतिरादिसंज्ञकं [3]स्यात्, एकाहवत्। यथैकाहभूतं ज्योतिरादिकमधिकधर्मयोगाल्लक्षणया तत्संज्ञकं [4]तद्वदिति ॥

इतोऽप्येवमित्याह—

लिङ्ग ॥ १३ ॥

"यद्द्वादशोपसदो भवन्ति" इति द्वादशोपसत्त्वलिङ्गादपि द्वादशाहिकविध्यन्त इति पूर्वपक्षः ॥

अथ सिद्धान्तयति—

न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १४ ॥

द्वादशाहधर्मैरविरुद्धा एव धर्मा भवेयुरिति नैव युज्यते, क्रत्वभिधानात्—सत्यां गतौ लक्षणाया अन्याय्यत्वात् यजिसामानाधिकरण्याच्च ज्योतिरादिपदैः क्रतोरेवाभिधानाद्। अग्निहोत्रादिपदैरिव सर्वधर्मातिदेशस्स्यात। अतोऽधिकानामेव धर्माणामशब्दत्वम्—न ज्योतिरादिपदवाच्यत्वम् ॥

[5]यदप्युत्पत्तौ नाम्नः श्रवणेऽपि आकाङ्क्षाविरहान्न नाम्ना धर्मातिदेश', प्रयोगवाक्ये च नाम्नोऽश्रवणाच्चोदकादेवातिदेश [6]इति, तदप्ययुक्तम्; उत्पत्तावपि प्रवर्तनात्मक[7]विध्यवरोधात्, भावनायास्सामान्यतस्समीहितभाव्यलाभेन कथ-

---

१. सर्वतद्धर्म० क.
२. सत्स्वैकाहेषु. अ.
३. सम्बन्धिकं. ग.
४. तत्स्यादिति. अ.
५. यदप्युत्पन्नान्नाम्न.. क.
६. इत्युक्त. क.
७. विध्यविरोधात्. क.

मित्याकाङ्क्षासम्भवात्[1] प्रयोगवाक्यमप्युत्पत्तिवाक्यावगतरूपाणि फलाकाङ्क्षाणि कर्माण्यालोच्य फले[2] विनियुङ्क्ते। तानि चालोच्यमानानि नामविशिष्टान्येवालोच्यन्त इति तन्निमित्तकोऽतिदेशः प्रत्यक्षत्वाच्छीघ्रं गम्यत इति सिद्धस्सर्वधर्मातिदेशः। एवं स्थिते लिङ्गदर्शनानुपपत्तिं कश्चित्परिहरति—

**लिङ्गं सङ्घातधर्मस्स्यात् तदर्थापत्तेर्द्रव्यवत् ॥ १५ ॥**

"द्वादशाहमृद्धिकामा उपेयु" इति द्वादशाहसङ्घातः फले चोदितः। ततश्च द्वादशोपसत्त्वं द्वादशाहे [3]फलवतोऽहस्सङ्घातस्यैव धर्मः। अतो [4]गवामयनरूपस्य सङ्घातान्तरस्य तदर्थापत्तेः—तत्कार्यापत्तेः तद्धर्मवत्त्वञ्चोदकं विनैव भवति, द्रव्यवत्। यथा गिरापदकार्यापन्नेरापदगीतिरतिदेशं विनैवोहेन भवति, तद्वत् ॥

तदेतत् परोक्तं परिहरन्दूषयति—

**न वाऽर्थगुणत्वात् [5]सङ्घातस्य गुणत्वात् ॥ १६ ॥**

"द्वादशाहमृद्धिकामाः" इत्यत्र विशेष्यभूतान्यहान्येव फले चोद्यन्ते, न तु द्वादशत्वरूपस्तत्सङ्घातः, तस्य गुणत्वात्। अतो द्वादशोपसत्त्वं न सङ्घातधर्मः, किन्तु अर्थस्य तत्तदहरपूर्वस्यैव धर्म इति चोदकादेव तत्प्राप्तिर्वक्तव्येति नामबलीयस्त्वान्न द्वादशोपसत्त्वलिङ्गोपपत्तिः। किञ्च गवामयनस्य फलान्तरार्थत्वान्न [6]द्वादशाहकार्यापत्तिः, येन तद्धर्मलाभस्स्यादिति न द्वादशोपसत्त्वलिङ्गोपपत्तिः ॥

तदेवं परोक्तं दूषयित्वा स्वयं लिङ्गं समर्थयते—

**प्रवृत्त्या तु नियतस्य लिङ्गदर्शनम्* ॥ १७ ॥**

गवामयने हि पृष्ठ्यषडहादीनां भूयसामह्नां द्वादशाहिको विध्यन्तः। कतिपया-

---

१. सद्भावात् क.    २. फले. नास्ति. क.
३. फलवतस्सङ्घातस्यैव. अ.    ४. अतो लिङ्गं अ.
५. अर्थधर्मत्वात्.    ६. द्वादशाहिक. क.

* 'विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात्' इति सूत्रस्य वृत्तिर्मातृकासु नोपलभ्यते।

नामेव ज्योतिरादीनामैकाहिको विध्यन्तः। ततश्च द्वादशे वक्ष्यमाणेन भूयोऽनुग्रह-न्यायेन () द्वादशाहे नियतस्य द्वादशोपसत्त्वस्य गवामयने चोदकात् प्रवृत्त्या लिङ्ग-दर्शनमुपपन्नमिति दिक्॥

इति तृतीयं गावामयनिकज्योतिरादिष्वैकाहिकज्योतिरादिधर्मानुष्ठाना-धिकरणम्॥ ३॥

इति श्रीमत्सन्तन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमानप्रौढा-परिमितमहाध्वरस्य श्रीशाहजी शरभजी तुक्कोजी भोसलचोल महीमहे-न्द्रत्रयामात्यधुरन्धरस्य श्रीमदानन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषी-पोष्येण बाल्य एव तद्दयानिर्वर्तितापरिमित महाग्निविजृम्भित सर्वपृष्ठाप्तोर्यामवाजपेयादिसन्तर्पित मख प्रमुख बर्हि-र्मुखेन महादेववाजपेययाजिसुतेनान्नपूर्णागर्भजाते-नाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्ध-विद्यावैशद्येन श्रीवासुदेवदीक्षितविदुषा विरचितायाम् अध्वरमीमांसा-कुतूहलवृत्तौ सप्तमाध्यायस्य चतुर्थः पादः॥

सप्तमाध्यायः



❀ श्रीः ❀

# अथाष्टमाध्यायस्य प्रथमः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

सामान्यतोऽतिदेशे चिन्तिते तद्विशेषोऽष्टमाध्याये चिन्त्यते । किमेकस्मिन्सौर्यादिकर्मणि दर्शपूर्णमासज्योतिष्टोमादिसकलधर्मातिदेश: ? उतैकधर्मातिदेशः ? इति । यद्यप्येकैकस्मात् कर्मणः [1]कथम्भावप्राप्त्याप्याकाङ्क्षाशान्तेरन्यतरस्मात्तदतिदेश इति विध्यन्ताधिकरण एवोक्तम्, तथापि समुच्चयासम्भवेऽपि विशेषाग्रहाद् विकल्पेन [2]सर्वधर्मातिदेशस्स्यादिति प्राप्ते, सिद्धान्तयति--

**अथ विशेषलक्षणम् ॥ १ ॥**

एकस्मादेवैकस्मिन्नियमेन प्रवर्तेत[3] । नियमाभावे ह्यव्यवस्थित शास्त्रार्थस्स्यादिति । सूत्रार्थस्तु--अथ सामान्यातिदेशचिन्तानन्तरं विशेषातिदेशलक्षणमारभ्यत इति [4]विशेषादेकस्मात्कर्मविशेषादेव लक्षणं-धर्मजातातिदेश इति ॥

इति प्रथमं विशेषातिदेशप्रतिज्ञाधिकरणम् ॥ १ ॥

२

कस्य धर्मः क्व प्रवर्तेत इत्याकाङ्क्षायामाह--

**यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥**

कर्मविशेपात् कर्मविशेपे धर्मा भवन्तीत्युक्तम् । तत्र चिह्नमात्रमिहोच्यत इति नात्र संशयेन प्रयोजनम् । "सौर्यञ्चरुं निर्वपेत्" इति वाक्येन सूर्यदेवताकेन चरुद्रव्य-

---

१. फलप्राप्त्याकाङ्क्षा. अ.

२. सर्वस्मात्. ग

३ प्रवृत्ते तन्नियमाभावे. क.

४. विशेपादेकैकस्मात्. अ.

केन यागेन ब्रह्मवर्चसं भावयेदित्यवगते, कथमित्याकाङ्क्षा जायते। तस्याश्चानुवर्तमानाया सन्निधावितिकर्तव्यतानाम्नानात् सौर्यवाक्यं स्वसदृशं [1]वाक्यं बुद्धौ सन्निधापयति। तत्सदृशञ्च तद्धितेन देवतानिर्देशस्यौषधद्रव्यकत्वस्यैकदेवताकत्वस्य च साम्यादाग्नेयवाक्यमेव[2]। तच्च वाक्यं स्वार्थमवबोधयति। तदर्थश्चांशत्रययुक्ता भावना। तत्र [3]च फलकरणांशयोस्सौर्येऽनपेक्षितत्वादसम्बन्धेऽपि कथम्भावांश आकाङ्क्षायोग्यतासक्तिभिस्सम्बध्यते। तद्विधायकं च शास्त्र सौर्यविधिवाक्यशेषतां प्रतिपद्यते। यथाग्नेयेन प्रयाजावघाताद्यदृष्टदृष्टोपकारसम्पादनेन स्वर्गः कृतस्तथा सौर्येण ब्रह्मवर्चसमिति। एवमनेकदेवताकेष्वग्नीषोमीयविध्यन्त। आज्यद्रव्यकेषूप याजविध्यन्तः। पशावग्नीषोमीये सान्नाय्यविध्यन्त इत्याद्यूह्यम्। एवञ्च विशेषातिदेशः कृत्स्नोऽप्यत्रैव संक्षिप्तः। उत्तरस्तु प्रपञ्चश्शिष्यबुद्धिवैशद्यार्थ[4] इत्यवधेयम्। सूत्रार्थस्तु यस्य–आग्नेयादेः लिङ्गम्–एकदेवत्यत्वादिक यत्र सौर्यादौ दृश्यते तदर्थसंयोगात्—तल्लिङ्गसंयोगाद् आग्नेयादीतिकर्तव्यतैव भवति, अभिधानवत्। यथा [5]कौण्डपायिनामयनीये होमे तत्सम्बन्धिनः प्रसिद्धाग्निहोत्रधर्मा. नाम्नातिदिश्यन्ते, तद्वदिति ॥

इति द्वितीय सादृश्यविशेषेण नियतप्रकृतितो धर्मातिदेशाधिकरणम् ॥ २ ॥

३

ज्योतिष्टोमे दर्शपूर्णमासधर्मा भवन्ति न वेति संशये, पूर्वपक्षयति—

**प्रवृत्तत्वादिष्टे ेस्मेऽपि प्रवृत्तिस्स्यात् ॥ ३ ॥**

यद्यपि सोमेऽभिषवादिसकलसन्निपत्योपकारकोपदेशेन निराकाङ्क्षे आकाङ्क्षामूलकातिदेशो न सम्भवति, तथापि तदीयदीक्षणीयादिष्ववभृथपर्यन्तेष्विष्टिषु प चेष्टेर्विध्यन्तस्य[6] प्रवृत्तत्वात् तन्मध्यवर्तिनि सोमेऽपि [7]तत्प्रवृत्तिस्स्यात् ॥

---

१. वाक्य बुद्धौ. नास्ति. ग
२. वाक्य स्वार्थमवबोधयति क.
३. च. नास्ति अ.
४. सौकर्यार्थः. क.
५. कौण्डपायिनामयनिके. क.
६. इष्टिविध्यन्तस्य. क.
७. तत्प्राप्ति . क.

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ४ ॥**

"तस्यैकशतं प्रयाजानूयाजा." इति प्रयाजादिलिङ्गदर्शनाच्च सोमे ऐष्टिकविध्यन्तप्राप्तिः ॥

अथ सिद्धान्तयति—

**कृत्स्नविधानाद्वापूर्वत्वम् ॥ ५ ॥**

अभिषवादिसकल[1]सन्निपत्योपकारकाङ्गविधानाद् अपूर्वत्वं नेष्टिप्रकृतिकस्सोमः॥

ननु "घृतं वै देवा यज्ञं कृत्वा सोममघ्नन्, स्रुचौ बाहू,तस्मात्स्रुचि सोमहविर्नासाद्यते[2] तस्मान्न सोममाज्येनाभिघारयति" इति स्रुचोरभिघारणस्य च निषेधः तत्प्रसक्तौ स्यात्। तत्प्रसक्तिश्च दर्शपूर्णमासविकारत्व एवेति सोमस्तत्प्रकृतिको वाच्य इत्यत आह —

**स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥**

स्रुगादिप्रतिषेधस्य नित्यानुवादत्वान्न सोमे दार्शिकधर्मप्रवृत्तिः ॥

अत्राशङ्क्य निराकरोति—

**विधिरिति चेन्न वाक्यशेषत्वात् ॥ ७ ॥**

दर्शपूर्णमासप्रकृतिकत्वेन प्राप्तस्रुगभिघारणविधिरेवायं नानुवादः, अनर्थकत्वादिति[3] चेत्-तन्न; वाक्यशेषत्वात् "अंशुरंशुस्ते देव सोमाप्यायताम्" इति मन्त्रविधिवाक्यशेषत्वेनायं न प्रतिषेधविधिः ॥

इतोऽप्येवमित्याह—

**शङ्क्ते चानुपोषणात्* ॥ ८ ॥**

दर्शपूर्णमासविकारत्वे बर्हिषो नियतमुपोषणं स्यात्। इह च "यदनुपोष्य- प्रयायाद् ग्रीवबद्धमेनममुष्मिन् लोके नेनीयरन्" इति बर्हिषोऽनुपोषणं शङ्क्ते। तस्मादप्यपूर्वस्सोमः ॥

इति तृतीय सोम ऐष्टिकधर्मानतिदेशाधिकरणम् ॥ ३ ॥

---

१. सन्निपात्यङ्ग. अ.　　२. गोमिक्षीराहुतीर्नादुवाति तस्मान्न सोमाय. अ.

३. इति तन्न. अ.　　* 'दर्शनमष्टिकाना स्यात्' इति सूत्र नोपलभ्यते ।

४

सौर्यादिविकृतिषु[1] किं दार्शिकस्सौमिको वा विध्यन्तो विकल्पेन भवति ? किं वा दार्शिक एव ? इति विशये, विशेषाग्रहादनियमे प्राप्ते, सिद्धान्तयति—

**इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात् ॥ ९ ॥**

विकृतिष्विष्टिषु दर्शपूर्णमासयोर्विध्यन्तस्य प्रवृत्तिस्स्यात्, तद्धितादिना देवतानिर्देशादिचोदनालिङ्गसामान्यात् ॥

इति चतुर्थमिष्टिषु दर्शपूर्णमासविध्यन्तातिदेशाधिकरणम् ॥ ४ ॥

५

"अग्नीषोमीयं पशुमालभेत' इति श्रुते दैक्षे पशौ[2] किमैष्टिकविध्यन्तोऽतिदिश्यते ? न वा ? इति संशये, दर्शादिवत् पशोरपि कृत्स्नविधानत्वेनाकाङ्क्षाभावान्नातिदेश इति प्राप्ते, सिद्धान्तयति—

**पशौ च लिङ्गदर्शनात् ॥ १० ॥**

पशोरप्यावाहनासादनादिसन्निपत्याङ्गानुपदेशादस्त्याकाङ्क्षा । तस्याञ्च सत्यां "एकादश प्रयाजान्यजति" इत्यादिलिङ्गानुगृहीतात्तद्धितेन देवतानिर्देशादिचोदनासामान्यादैष्टिकविध्यन्तप्राप्तिः ॥

इति पञ्चममग्नीषोमीयपशावैष्टिकविध्यन्तातिदेशाधिकरणम् ॥ ५ ॥

६

सवनीयादिपशुषु किमैष्टिकविध्यन्तः ? उताग्नीषोमीयविध्यन्तः ? इति विशये, 'न हि भिक्षुको भिक्षुकं याचते, सत्यभिक्षुकेऽन्यस्मिन्दातरि' इति न्यायेनेष्टित एव धर्मग्रहो युक्तः, न तद्विकृतेरग्नीषोमीयपशोरिति प्राप्ते, सिद्धान्तयति—

**दैक्षस्य चेतरेषु ॥ ११ ॥**

इतरेषु–सवनीयादिषु दैक्षस्य–दीक्षाकाले सोमक्रयसन्निधावुत्पन्नस्याग्नीषो-

१. सौर्यादिषु किं अ.

२. दैक्षपशौ, अ, ग.

मीयस्य विध्यन्तः प्राप्नोति, प्राणिद्रव्यकत्वरूपसादृश्यस्य[1] विशेषाद्विशसनादिद्रव्यसंस्कारलाभाच्च ॥

इति षष्ठं सनीयादिपशुषु दैक्षविध्यन्तातिदेशाधिकरणम् ॥ ६ ॥

७

सन्त्यैकादशिनाः पशव आग्नेयसारस्वतसौम्यादय । तेषु किं दैक्षस्य विध्यन्तः ? उत सवनीयस्य ? इति विशये विशेषलिङ्गाभावान्न हि भिक्षुक इति न्यायेन दैक्षविध्यन्त एकादशिनेषु स्यादिति प्राप्ते, सिद्धान्तयति—

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यदर्शनात् ॥ १२ ॥**

ऐकादशिनेषु सौत्यस्य–सुत्याकालकर्तव्यस्य सवनीयस्य विध्यन्तो भवति, द्वैरशन्यदर्शनात् । अस्ति हि सवनीये चोदकप्राप्तरशानातोऽन्या रशना "अश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति । अस्ति चैकादशिनेषु द्वैरशन्यं "द्विरशना यूपा भवन्ति" इति । तस्मात्तत्र सवनीयविध्यन्तः ॥

इति सप्तममैकादशिनेषु सवनीयविध्यन्तातिदेशाधिकरणम् ॥ ७ ॥

८

ऐकादशिनेषु सुत्याकालीनचोदनासामान्याधिक्यवत् पशुगणेषु चोदनासामान्याभावान्न हि भिक्षुक इति न्यायेन [2]दैक्षपशुविध्यन्त इति प्राप्ते सिद्धान्तयति—

**तत्प्रवृत्तिर्गणेषु स्यात् प्रतिप यूपदर्शनात् ॥ १३ ॥**

सौत्रामण्यां ह्येवमाम्नायते—"यस्त्रिषु यूपेष्वालभेत, बहिर्धास्मादिन्द्रियं वीर्यं दध्यात् भ्रातृव्यमस्मै जनयेत् यद्येकमेकस्मिन् यूप आलभेत एकधैवास्मिन् इन्द्रिय वीर्यं दधाति" इति । तत्र यूपत्रयप्रतिषेध[3] ऐकादशिनविध्यन्तप्राप्तावेव प्रतिपशु यूपप्राप्तेरवकल्पते, नाग्नीषोमीयविध्यन्तप्राप्ताविति पशुगणेष्वैकादशिनविध्यन्तः ॥

इत्यष्टम पशुगणेष्वैकादशिनविध्यन्तातिदेशाधिकरणम् ॥ ८ ॥

---

१. सादृश्यविशेषात् क. २ दै विध्य. क.

३. निषेधः. क.

९

विश्वजिदाद्येकाहेषु द्वादशाहे[१] च किमिष्टिसोमयोरन्यतरस्य विध्यन्तः ? उत सोमस्य ? इति विशये, अविशेषादनियमे प्राप्ते, सिद्धान्तयति—

**अव्यक्तासु तु सोमस्य ॥ १४ ॥**

उत्पत्त्यनवगतद्रव्यदेवताकत्वरूपविशेषलिङ्गात् सोमस्यैव विध्यन्तः ॥

इति नवममव्यक्तयागेषु सौमिकविध्यन्तातिदेशाधिकरणम् ॥ ९ ॥

१०

द्विरात्रादिषु किं सौमिकविध्यन्तः ? उत द्वादशाहिकविध्यन्तः ? इति विशयः । तत्राव्यक्तत्वसामान्यात् सौमिकविध्यन्त इति प्राप्ते, सिद्धान्तयति—

**गणेषु द्वादशाहस्य ॥ १५ ॥**

द्विरात्रादिष्वव्यक्तत्वे सत्यप्यहर्गणत्वसामान्याधिक्याद्[२] गणधर्मलाभाच्च द्वादशाहविध्यन्त इति तेषु 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इत्यादिद्वादशाहधर्मा भवन्ति ॥

इति दशममहर्गणेषु द्वादशाहिकविध्यन्तातिदेशाधिकरणम् ॥ १० ॥

११

द्विरात्रादिषु आदित्यानामयनादिष्वपि संवत्सरसत्रेष्वहर्गणत्वसामान्याद् द्वादशाहविध्यन्त इति प्राप्ते, सिद्धान्तयति—

**गव्यस्य च तदादिषु ॥ १६ ॥**

"गावो वा एतत्सत्रमासत" इति गोसम्बन्धाद् गवामयनं गव्यम् तस्य धर्माः, तदादिषु–आदित्यानामयनादिषु अयनशब्दवत्त्वरूपचोदनालिङ्गसामान्याधिक्यात्[३], संवत्सरसत्रत्वरूपार्थगतसामान्याधिक्यात्सांवत्सरिक[४] धर्मलाभाच्चातिदिश्यन्ते ॥

इत्येकादश सत्रेषु गावामयनिकविध्यन्तातिदेशाधिकरणम् ॥ ११ ॥

---

१. द्वादशाहेषु ग.    २. सामान्यस्य. क.

३. साम्याधिक्यात्. क.    ४. सांवत्सर. अ.

ब्रह्मवर्चसं भावयेदित्युक्ते यथा करणाकाङ्क्षा श्रुतेन यागेन निवर्तते, तथा फलाकाङ्क्षापि श्रुतेन ब्रह्मवर्चसादिनेति न विकृतेः फलाकाङ्क्षा। यावज्जीविकोऽभ्यासश्च न [1]क्रतुधर्म इत्युक्तं द्वितीये। ततश्च नियमस्यापि पुरुषार्थत्वादनपेक्षैव। तथा कर्तुः स्वर्गकामपदोपात्तस्याधिकारिणोऽपि प्रधानतया कर्मार्थत्वाभावादनपेक्षैव। यस्त्वाख्यातोपात्तो [2]निर्वर्तकतया गुणभूतः कर्ता[3] सोऽतिदिश्यत एव। तथा साहित्यरूपस्समुदायो यद्यपि गुणभूतस्तथापि तस्य प्रकृतौ करणपरिच्छेदकतयोपकारकत्वादेकत्वसङ्ख्याके सौर्यादावर्थलोपान्नातिदेशः। बहुसङ्ख्याकेष्वध्वरकल्पादिषु[4] श्रुतेन साहित्येन परिच्छेदान्न [5]परिच्छेदाकाङ्क्षेति नातिदेशः। न च विकृतिषु तर्हि प्रकृतिपरिच्छेदकतयैवान्वयोऽस्त्विति वाच्यम्, आग्नेयादीना समप्रधानत्वेन विकृतौ तदप्रवृत्तेः। साहित्यगुणानुरोधेन तत्प्रवृत्तिकथनञ्च[6] साहसमात्रम्। तस्मात्साहित्यस्यापि नातिदेशः॥

नन्‌ श्रुतफलेषु फलानतिदेशेऽपि विश्वजिदादिष्वश्रुतफलेषु तदतिदिश्यतामित्यत आह—

अश्रुतत्व ॥ १९ ॥

स्ववाक्ये[7] श्रुतया प्रकृत्यैवावरुद्धे फले विकृतेरश्रुतत्वेन विधानायोगाच्च। ननु विकृतिवाक्ये प्राकृतं फल न्यायेनाध्याहृत्य[8] विधीयतामिति चेत्—[9]कामं विधीयताम्। तस्मात्कथम्भावस्यैवाकाङ्क्षावशादतिदेशः॥

इति त्रयोदशं फलादीनामनतिदेशाधिकरणम्॥ १३ ॥

१४

"गोदोहनेन पशुकामस्यापः प्रणयेत्" इति श्रुतेषु फलेषु चिन्ता—किं गुणकामाः पश्वादयो विकृतिषु प्रवर्तन्ते ? न वा ? तदर्थञ्च किं दोहनादयो विकृतिषु प्रवर्तेरन्[10] ? न वा ? इति। तत्र पूर्वपक्षयति—

१. कर्मधर्मः क, कर्तृधर्म, अ
२. उपात्तनिर्वर्तकतया. अ.
३. कर्ता. नास्ति. ग.
४. कल्पेषु अ.
५. परिच्छेद्य. अ.
६. च. नास्ति. अ, क.
७. वाक्यश्रुतया. अ.
८. अध्याश्रित्य. क.
९. काम. नास्ति अ, क.
१०. प्रवर्तन्ते अ, क.

गुणकामेष्वाश्रितत्वात् प्रवृत्तिस्स्यात् ॥ २० ॥

विकृतिषु प्रणयनं तावदतिदिश्यत इत्यविवादम्। तस्मिन् प्रवर्तमाने तदाश्रितगोदोहनमपि प्रवर्तते, प्रवृत्तौ साधनत्वमात्रस्यैव तन्त्रत्वात्। तस्मिंश्च प्रवर्तमाने तत्साध्यं फलमपि प्रवर्तेत। सूत्रार्थस्तु—गुणकामेषु-[१]प्रणयनादिगुणाश्रितगोदोहनादिसाध्येषु पश्वादिषु प्रवृत्तिस्स्यात्। गुणकामा विकृतिषु प्रवर्तेरन्निति यावत्। कुत? आश्रितत्वात्—प्रवर्तमानगोदोहनादिसाध्यत्वादिति ॥

अथ सिद्धान्तयति—

निवृत्तिर्वा कर्मभेदात् ॥ २१ ॥

प्रणयनसाधनत्वेऽपि गोदोहनादेर्न प्रवृत्ति, किन्तु विकृतिषु निवृत्तिरेव। कुतः? कर्मभेदात्–तस्य पश्वादिरूपकार्यभेदेन क्रत्वनङ्गत्वात्। तदङ्गस्यैव तद्वच्छब्देनातिदेशात्। तदप्रवृत्त्या च तत्साध्यपश्वाद्यप्रवृत्तिः ॥

ननु तर्हि क्वचित्साधनप्रवृत्तौ गुणकामानामपि प्रवृत्तिस्स्यादित्याशङ्क्य इष्टापत्त्या परिहरति—

अपि वातद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिस्स्यात् ॥ २२ ॥

गोदोहनस्य क्रत्वर्थचमसविकारत्वेन स्वयं क्रत्वर्थत्वाभावाद् विकृतिष्वप्रवृत्तावपि "खादिरं वीर्यकामस्य" इति श्रुतस्य खादिरस्यातद्विकारत्वात्–क्रत्वर्थविकारत्वाभावात् "खादिरो यूपो भवति" इति स्वयमेव क्रत्वर्थत्वाच्च प्रवृत्तिस्स्यात्। प्रवृत्त्या च तत्फलस्य वीर्यस्यापि प्रवृत्तिस्स्यादिति भाष्यकृतः। यद्यपि क्रत्वर्थत्वात् खादिरः प्रवर्तते, तथापि तस्य सिद्धरूपस्य न स्वतः फलसाधनत्वं, किन्तु प्रकृतत्वादग्नीषोमीयापूर्वप्रयुक्तं नियोजनमाश्रित्य। न हि तादृश नियोजनं विकृतावस्तीति न फलस्य तत्र प्रवृत्तिरित्याचार्याः। अस्मिन्पक्षे विकृतिषु गोदोहनादेरप्रवृत्तावपि खादिरादे क्रत्वर्थत्वात् प्रवृत्तिस्स्यात्। वीर्यादिफलस्य तु न प्रवृत्तिः, प्राकृताश्रयालाभादिति सूत्रार्थः ॥

इति चतुर्दश गुणकामानां विकृतावनतिदेशाधिकरणम् ॥ १४ ॥

---

१. प्रणयनादिषु. क.

१५

दर्शपूर्णमासयो· श्रुतम् "चतुर्होत्रा पौर्णमासीमभिमृशेत्। पञ्चहोत्रामावास्याम्" इति। अत्र पौर्णमास्यमावास्याशब्दौ न कालवचनौ, सप्तम्यश्रवणात्। किन्तु द्वितीयाश्रवणात् कर्मवचनौ सन्तौ कर्मणामभिमर्शनायोग्यत्वात्[1] तत्सम्बन्धिनि हविषि लक्षणया[2] वर्तेते। यदि च मुख्यस्य प्रातिपदिकस्य न लक्षणा युक्तेति कालवचने एव प्रतिपदिके, द्वितीये तु सप्तम्यर्थे, तथापि हविरधिकारात् पौर्णमास्या यानि हवींषि तानि चतुर्होत्राभिमृशेदित्यर्थः पर्यवस्यति। एवमन्यत्राप्यूह्यम्। ततश्च पौर्णमासीहविषा चतुर्होताङ्गम्, अमावास्याहविषा पञ्चहोता। यदाग्नेयवाक्यात् कालद्वयसम्बन्धेनोत्पन्न आग्नेयश्च कालद्वयसम्बन्धीति मन्त्रद्वयमपि तदङ्गम्। सौर्यश्चाग्नेयविकार इत्युत्तराधिकरणे वक्ष्यते। ततश्च सौर्ये मन्त्रद्वयं चोदकेन प्राप्यते। तत्र संशयः— किमेतन्मन्त्रद्वय सौर्ये पौर्णमास्यमावास्याकालयोर्व्यवस्थया प्रयोक्तव्यम्? उताव्यवस्थया विकल्पेन ? इति। तत्र प्रकृतौ कालभेदेन मन्त्रयोः व्यवस्थादर्शनादिहापि चोदकानुग्रहाय व्यवस्थैव युक्तेति प्राप्ते, सिद्धान्तयति—

**एकस्मिन् कर्मणि विकल्पोऽविभागो हि चोदनैकत्वात्॥ २३॥**

प्रकृतौ पौर्णमास्यमावास्यासम्बन्धिनां हविषामन्यद्वारकमेव मन्त्रद्वयमङ्गं, न तु कालद्वारकं कालस्याप्रकृतत्वात्। यद्यपि पौर्णमास्यां यानि हवींषि तानि चतुर्होत्रेति पक्षे कालस्योपलक्षणत्व, तथापि न तस्य कार्यान्वय इति न कालकृता व्यवस्था शास्त्रार्थ इति न कालतो व्यवस्था। ननु चैव पौर्णमास्यामप्याग्नेयस्य पञ्चहोत्राभिमर्शन स्यादिति चेत्—सत्यम्; पौर्णमासिकैर्हविरन्तरैस्सहाभिमृश्यमानमाग्नेयं हविरन्तरानुरोधेन चतुर्होत्राभिमृश्यते। एवममावास्याया पञ्चहोत्रेति न दोषः। भवतु वा कालद्वारेण प्रकृतौ व्यवस्थयाङ्गम्, तथापि कतरस्याग्नेयस्य धर्मास्सौर्ये प्रवर्तन्त इति विशेषाग्रहाद्विकल्प एव मन्त्रयो, न कालतो व्यवस्था। सूत्रार्थस्तु— सौर्ये चोदनैक्याद् अविभाग –प्रकृतिवद्व्यवस्थाहेतुः कर्मभेदाभावो यतः, तस्माद् एकस्मिस्तत्र सौर्यकर्मणि मन्त्रयोर्विकल्प इति॥

इति पञ्चदशं सौर्ये विकल्पेनाग्नेयद्वयविध्यन्तातिदेशाधिकरणम्॥ १५॥

---

१. अयोगात्. क. २. लक्षणातः. क.

१६

सौर्ये दार्शपूर्णमासिको विध्यन्त इति पूर्वं [1]सामान्यत उक्तम्। तत्र किं यस्य कस्यचित्? उत आग्नेयस्यैव? इति विशये, पूर्वपक्षयति—

**लिङ्गसाधारण्याद्विकल्पस्स्यात् ॥ २४ ॥**

निर्वपतेस्तद्धितेन देवतानिर्देशस्य च लिङ्गस्याग्नेयाग्नीषोमादिसाधारण्याद्विकल्पस्स्यात् ॥

अथ सिद्धान्तयति—

**ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद् विकारो हि ॥ २५ ॥**

सौर्यो हि विकारः-विकृतिः पूर्ववत्वात्—सन्निपातिपौष्कल्याभावेन[2] प्रकृतिसापेक्षत्वात्, अत ऐकार्थ्यात्—एकदेवताकत्वौषधद्रव्यकत्वसामान्याधिक्यात् तत्राग्नेयविध्यन्तो नियम्येत ॥

अत्राशङ्क्य निराकरोति—

**अश्रुतत्वान्नेति चेत् स्याल्लिङ्गभावात् ॥ २६ ॥**

द्विवचनबहुवचनान्तादपि तद्धितोत्पत्तिदर्शनान्न तद्धितेनात्र प्रातिपदिकार्थे सङ्ख्याविशेषनिश्चय इत्येकदैवत्यत्वस्याश्रुतत्वान्नाग्नेयविकारस्सौर्य इति चेत्—प्रमाणान्तरे सत्येव द्विवचनबहुवचनान्तयोस्तद्धितोत्पत्ति। न चेह प्रमाणान्तरमस्तीत्येकवचनान्तादेव तद्धितोत्पत्तिरिति तद्धितस्य लिङ्गभावात्—एकदैवत्यत्वे लिङ्गत्वादाग्नेयविकारस्सौर्यस्स्यात् ॥

इतोऽप्येवमित्याह—

**तथा चान्यार्थदर्शनम् ॥ २७ ॥**

"अग्निर्मूर्धा दिव. ककुप्" इत्याग्नेये, "उदु त्य जातवेदस देवं वहन्ति" इति सौर्ये चानुवाक्यायामेकत्व[3]श्रवणरूपान्यार्थदर्शनाच्चैकवचनान्तादेव तद्धितोत्पत्तिरिति सौर्य आग्नेयविकारः ॥

इति षोडश सौर्ये आग्नेयविध्यन्तातिदेशाधिकरणम् ॥ १६ ॥

---

१. सामान्यम्. अ, ग. २. पुष्कलाभावेन. अ.

३. एकवचन. फ.

१७

इदं श्रूयते— 'ऐन्द्रमेकादशकपालं निर्वपेत्" इति । "तथाग्नेयं पय" इति च । तत्र किमैन्द्रपुरोडाशे देवतासामान्यात् सान्नाय्यविध्यन्तः ? किं वा हविस्सामान्यादाग्नेयविध्यन्तः ? तथाग्नेये पयसि देवतासामान्यादाग्नेयविध्यन्तः ? कि वा हविस्सामान्यात् सान्नाय्यविध्यन्तः ? इति विशयः[1] । तदर्थञ्च किं देवतासामान्यं बलीयः ? कि वा हविस्सामान्यम् ? इति । तत्र जघन्यतद्धितप्रत्ययार्थात् सूच्यान्मुख्यप्रातिपदिकार्थतया देवताया ज्यायस्त्वात् तत्सामान्यमेव बलीय इति । [2]ऐन्द्रपुरोडाशे सान्नाय्यविध्यन्तः, आग्नेये पयसि च सान्नाय्यविध्यन्त इति प्राप्ते, सिद्धान्तयति—

**विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वं ॥ २८ ॥**

यागो हि देवतोद्देश्यकद्रव्यत्यागः । तत्र त्यागः प्रधानं, उद्देशस्तु गुणभूत इति प्रधानान्वयिहविस्सामान्यमेव बलीयः, न गुणभूतोद्देशान्वयिदेवतासामान्यम् । तस्माद्धविस्सामान्यादेव विध्यन्तः । सूत्रार्थस्तु—देवताहविस्सामान्ययोः किं बलीय इति विप्रतिपत्तौ हविषा-[4]हविस्सामान्येन विध्यन्तो नियम्येत । कुतः ? कर्मणस्तदुपाख्यत्वात्—तस्मिन्हविषि उपाख्यायमानत्वात्—उपलभ्यमानत्वात् । साक्षात्तन्निरूप्यत्वादिति यावत् ॥

इतोऽप्येवमित्याह—

**तेन च कर्मसंयोगात् ॥ २९ ॥**

तेन-हविषा कर्मणस्संयोगाच्च हविरेव बलीयः । कर्म ह्यैन्द्रमाग्नेयमिति तद्धितार्थेन द्रव्येणैव सयुज्य चोद्यते । ततश्च हविःप्रधानेन तद्धितान्तेन शब्देन हविरेव बुद्धिस्थं भवति । यच्च बुद्धिस्थं तदेव लिङ्गमिति हविस्सामान्यमेव विशेषलिङ्गम् ॥

ननु प्रातिपदिकार्थतया देवतैव प्रथमं [5]बुद्धिस्थीभूय स्वसामान्याद्विध्यन्त नियच्छतीत्युक्तमित्यत आह—

१. सशयः. अ, क.
२. ऐन्द्रे. क.
३. उपास्यत्वात्.
४. हविषस्सामान्येन. अ.
५. बुद्धिस्था भूयस्त्वसामान्यात्. अ, क, ग.

## गुणत्वेन देवताश्रुतिः ॥ ३० ॥

गुणत्वेन-हविर्विशेषणत्वेन देवताश्रुतिः। ततश्च यद्यपि पदार्थज्ञानावस्थायां देवता प्रातिपदिकार्थतया प्रथम बुद्धिस्था, तथापि तस्याः दशाया कर्मणोऽनुपस्थितेर्नाकाङ्क्षेति उपस्थितापि देवता न विध्यन्तं नियच्छति। [1]वाक्यार्थवेलायान्तु यदाकाङ्क्षाविर्भवति तदा विशेषणीभूताया देवताया विशेष्यतावच्छेदकतया तिरोहितप्रायाया न विध्यन्तनियामकता, किन्तु विशेष्यतया प्रधानस्य हविष एव आविर्भूतरूपतया विध्यन्तनियामकता युक्ता। ननु "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इति कर्मणो देवताप्रसादार्थत्वावगमाद् देवतैव प्रधानमिति तयैव विध्यन्तनियम इति चेत्तत्रापीदमेवोत्तरम्—गुणत्वेन देवताश्रुतिरिति। देवता याग प्रति गुणभूतैव, [न]प्रधानम्। "तृप्त एवैनम्" इति च गुणभूतदेवताप्रशसनम्[2]। तदेतन्नवमे स्पष्टीभविष्यति। अपेक्षितधर्मावाप्तेश्च हविस्सामान्यमेव बलीयः। न ह्यैन्द्रे पुरोडाशे पयोधर्मैर्दोहनादिभिराग्नेये पयसि चौषधधर्मैरवघातादिभि. कश्चिदुपकारोऽस्ति। तस्माद्धविस्सामान्यं बलीय. ॥

इति सप्तदशं द्रव्यदेवताघटितसादृश्ययोर्द्रव्यघटितसादृश्यस्य प्राबल्याधिकरणम् ॥ १७ ॥

१८

"प्राजापत्यं घृते चरुन्निर्वपेच्छतकृष्णलमायुष्काम·" इति श्रुते कृष्णलचरौ किमाज्यधर्माः ? उतौषधधर्माः ? इति विशये, पूर्वपक्षयति—

## हिरण्यमाज्यधर्मं तेजस्त्वात् ॥ ३१ ॥

हिरण्यमुपांशुयाजार्थाज्यधर्मकं स्यात्, "हिरण्यमश्मना तेजः, तेजो वै घृतम्" इत्युभयोस्तेजस्त्वानुकीर्तनात्, उज्ज्वलत्वसामान्याच्च। आज्यस्य धर्मा यस्येति बहुव्रीहिः। 'धर्मादनिच् केवलात्' इत्यनिच् ॥

इतोऽप्येवमित्याह—

## धर्मानुग्रहाच्च ॥ ३२ ॥

औषधधर्मप्राप्तौ ह्यवहननफलीकरणादयो बहवो धर्मा बाध्येरन्। आज्यधर्म-

---

१. वाक्यार्थविधि. ग. २. प्रशंसा. अ, क.

प्राप्तौ तु विलापनमात्रबाधेऽप्यवेक्षणोत्पवनादीनां भूयसामनुग्रह हिरण्यमिति ॥

अथ सिद्धान्तयति—

[1]औषधाद्वा विशदत्वात् ॥ ३३ ॥

विशदत्वसामान्यादौषधादेव धर्मास्स्युः ॥

नन्वेवं बहुधर्मबाधस्स्यादित्युक्तमित्यत आह—

चरुशब्दाच्च ॥ ३४ ॥

प्राजापत्यं चरुमिति चरुशब्दाच्च । ततश्चार्थगतसामान्यतौल्ये चोदनागतचरुशब्दसामान्याधिक्यादौषधधर्मप्राप्तौ प्रामाणिकत्वाद् बाधोऽप्यदोषः ॥

इतोऽप्येवमित्याह—

तस्मिंश्च श्रपणश्रुतेः ॥ ३५ ॥

"घृते श्रपयति" इति श्रपणश्रुतेश्च[2] तस्मिन्नौषधधर्मास्स्युः । तथात्वे प्राप्तस्यार्थलोपान्निवर्तमानस्य श्रपणस्य प्रतिप्रसवार्थो विधिरिति लाघवम् । अ त्वत्यन्ताप्राप्तस्य श्रपणस्य विधिरिति गौरवम् । तस्मादौषधधर्मं हिरण्यम् ॥

इत्यष्टादशं कृष्णलचरावौषधधर्मातिदेशाधिकरणम् ॥ १८

१९

"दधि मधु घृतमुदकन्धानास्तण्डुलाः तत्संसृष्टं प्राजापत्यम्" इति श्रु किं मधूदके [3]पयसो विकारः ? उताज्यस्य[4] ? इति विशये, पूर्वपक्षयति—

मधूदके द्रवत्वसामान्यात् पयोविकारः स्यात् ॥ ३६

मधूदके स्वाभाविकद्रवत्वसामान्याधिक्यात् पयोविकार इति ॥

अथ सिद्धान्तयति—

आज्यं वर्णसामान्यात् ॥ ३७ ॥

वर्णसाम्यादुपांशुयाजाज्यमेव विकुर्यात् ॥

१. औषध.
२. विधेश्च अ, ग.
३. पयोविकार.. क.
४. आज्यविकार..

नन्वेवं विनिगमनाविरह इत्यत आह—

**धर्मानुग्रहाच्च ॥ ३८ ॥**

आज्यधर्मग्रहे उत्पवनादयो बहवो धर्मा अनुगृह्यन्ते[1]। तस्मादाज्यधर्म मधूदकम् ॥

यदुक्त स्वाभाविकद्रवत्वसामान्याधिक्यादिति, तत्राह—

**पूर्वस्य चाविशिष्टत्वात् ॥ ३९ ॥**

पूर्वोक्तस्य द्रवत्वस्याग्निसंयोगे सत्याज्येऽप्यविशिष्टत्वात् स्वाभाविकत्वमतन्त्रीत्य भूयोधर्मानुग्रहायाज्यधर्म मधूदकम्। प्रयोजनन्तु पूर्वपक्षे-मधूदकयोरपि दधिवत् सान्नाय्यविकारत्वेन भूयोऽनुग्रहन्यायाच्चित्रायागे दार्शिकविध्यन्तो न तु घृतानुरोधात् [2]पौर्णमासिकविध्यन्तः। सिद्धान्ते तु-मधूदकयोरप्याज्यधर्मत्वे भूयोऽनुग्रहन्यायादेव मुख्यमपि दध्याद्यनादृत्य पौर्णमासिकविध्यन्त इति ध्येयम् ॥

इत्येकोनविंशं मधूदकाधिकरणम् ॥ १९ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ अष्टमस्याध्यायस्य प्रथमः पादः ॥



---

१. अनुग्राह्यन्ते. अ.

२. पौर्णमासी. क.

# अथ द्वितीयः पादः ॥

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वत्र स्पष्टलिङ्गादतिदेश उक्तः[1], तद्धितनिर्देश्यदेवताकत्वादिलिङ्गस्य स्पष्टत्वात् । इह तु द्वितीये पादे[2]ऽस्पष्टलिङ्गातिदेशश्चिन्त्यते । चातुर्मास्ये "वाजिभ्यो वाजिनम्" इति श्रुतम् । सौत्रामण्याम् "आश्विनं गृह्णाति, सारस्वतमैन्द्रम्" इति सुराग्रहाः श्रुताः । तत्र किं वाजिनसुरयोस्सौमिको विध्यन्तः ? उतैष्टिकः ? इति विशये, पूर्वपक्षयति—

**वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥**

वाजिने सौत्रामण्याञ्चाश्विनग्रहादिषु सोमपूर्वत्वं-सोमविकारत्वं स्यात् । ताच्छब्द्यात्—"सोमो वै वाजिन सुरा सोमः" इति वाजिनसुरयोस्सोमशब्दवत्वात् । परशब्दो हि परत्राग्निहोत्रशब्दवत्तद्धर्मातिदेशार्थ इति वाजिनसुरयोस्सोमधर्मातिदेशः ॥

इतोऽप्येवमित्याह—

**अनुवषट्काराच्च ॥ २ ॥**

वाजिनस्य "अग्ने वीहीत्यनुवषट्करोति" इति, सुरायाः "सोमस्याग्ने वीहीत्यनुवषट्करोति" इति सोमधर्मस्यानुवषट्कारस्य वाजिनसुरयोर्दर्शनाच्च तयोस्सोमविध्यन्तः ॥

इतोऽप्येवमित्याह—

**समुपहूय भक्षणाच्च ॥ ३ ॥**

"शेषं समधा विभज्य समुपहूय भक्षयन्ति" इति सोमधर्मस्य समुपहूयभक्षणस्य दर्शनाच्च वाजिने सोमविध्यन्तः ॥

---

१. चिन्तितः. अ, क.    २. द्वितीयपादे. अ.

इतोऽप्येवमित्याह—

**क्रयणश्रयणपुरोरुगुपयामग्रहणासादनोपवासोपनहनञ्च तद्वत् ॥ ४ ॥**

"सीसेन क्लीबाच्छष्पाणि क्रीणाति" इति क्रयणम्, "कवलसक्तुभिराश्विनं श्रीणाति" इति श्रयणम्, "एका पुरोरुगेका याज्या" इति पुरोरुक्, "उपयामगृहीतोऽस्यश्विभ्यान्त्वा जुष्टं गृह्णामि" इति गृहीत्वा "एष ते योनिस्तेजसे त्वा इति सादयति" इत्युपयामग्रहणसादनानि, "तिस्रो रात्रीस्संसृष्टा वसति" इत्युपवासः, "क्षौमेण वाससोपनद्धानि तौक्मानि शष्पाणि भवन्ति" इत्युपनहनञ्च तद्वत्-वाजिने समुपहूय भक्षणवत् सुरायां दृश्यन्त इति सोमविकारस्सुरा ॥

अथ सिद्धान्तयति—

**हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥**

हविस्सामान्येनैष्टिको विध्यन्तो नियम्येत। कथं हविस्सामान्यम्? तद्विकारत्वात्–वाजिनस्य सान्नाय्यविकारत्वात्, सुरायाश्चौषधविकारत्वात् ॥

ननु कथं तर्हि तयोस्सोमशब्द इत्यत आह—

**प्रशंसा सोमशब्दः ॥ ६ ॥**

सोमवत्प्रशस्ते वाजिनसुरे इति प्रशंसार्थस्सोमशब्दः ॥

ननु तर्हि लिङ्गानां का गतिरित्यत आह—

**वाचनिकानीतराणि ॥ ७ ॥**

इतराणि-अनवषट्कारादीनि वाचनिकानि–वचनप्राप्तानि न चोदकप्राप्तानि ॥

इतोऽप्येवमित्याह—

**व्यपदेशश्च तद्वत् ॥ ८ ॥**

"शष्पैरेव दीक्षणीयामाप्नोति तोक्मैः प्रायणीयाम्" इत्यादिना दीक्षणीयादिप्राप्तिवचनं सोमविकारत्वेऽनुपपन्नम्, तथा सत्यतिदेशत एव दीक्षणीयादिप्राप्तेः। प्राप्तानञ्च प्राप्तिवचनानुपपत्तेः। अतः प्राप्तिव्यपदेशोऽपि तद्वत्—हविस्सामान्यवदैष्टिकविध्यन्तं प्रापयति ॥

इतोऽप्येवमित्याह—

प पुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥

सौत्रामण्या हि "नैतेषां पशूनां पुरोडाशा भवन्ति । ग्रहपुरोडाशा ह्येते पशवः" इत्याश्विनादिपशूनामाश्विनादिग्रहा एव पुरोडाशाः, न तु पश्वन्तरवदन्ये तद्दैवत्याः पुरोडाशा इति ग्रहेषु पुरोडाशशब्दस्य प्रयोगो ग्रहाणां पुरोडाशधर्मकत्वे लिङ्गदर्शनं भवतीत्यौषधविकारस्सुरा ॥

इति प्रथमं वाजिनसुरयोरैष्टिकविध्यन्तातिदेशाधिकरणम् ॥ १ ॥

२

सप्तमे सामान्यत ऐष्टिकविध्यन्त पशावुक्तः । तत्र किमग्नीषोमपुरोडाशविध्यन्तः ? उत सान्नाय्यविध्यन्तः ? इति विशये, पूर्वपक्षयति—

पशुः पुरोडाशविकारस्स्याद्देवतासामान्यात् ॥ १० ॥

प्रत्यक्षस्य हविस्सामान्यस्याभावात् पशुरग्नीषोमीयपुरोडाशविकारस्स्यात् । न चोपांशुयाजाज्यस्याप्यग्नीषोमीयत्वात्तद्विकारो वा किन्न स्यादिति वाच्यम्, घनत्वाधिक्यात् ॥

इतोऽप्येवमित्याह—

प्रोक्षणाच्च ॥ ११ ॥

"अभ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि इति पशुं प्रोक्षति" इति पुरोडाशधर्मप्रोक्षणदर्शनाच्च पशु पुरोडाशधर्मा ॥

इतोऽप्येवमित्याह—

पर्यग्निकरणाच्च ॥ १२ ॥

'आहवनीयादुल्मुकमादाय पशुं पर्यग्निकरोति' इति पुरोडाशधर्मपर्यग्निकरणदर्शनाच्च तथा[1] । प्रकृतौ हि पुरोडाशस्यैव पर्यग्निकरण विहित, तैत्तिरीये "यत्पुरोडाशः" इति प्रस्तुत्य तद्विधे । 'सर्वाणि हवींषि त्रिःपर्यग्निकृत्वा' इत्यापस्तम्बसूत्रन्तु शाखान्तरमूलकम् ॥

---

१. तथा. नास्ति. ग.

अथ सिद्धान्तयति—

**सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥**

पशुरपि पशुप्रभव । सान्नाय्यमपि पशुप्रभवम् । अतः पशुप्रभवत्वरूपहविस्सामान्याद्देवतासामान्यापेक्षया बलीयस्सान्नाय्यविधानमेव प्रवर्तते । न च घनत्वेन पुरोडाशसामान्यमप्यस्तीति वाच्यम । तथापि सम्बन्धित्वात्पशुसान्नाय्ययोः पशुप्रतीतस्सम्बन्ध्यन्तरं सान्नाय्यमेव झटित्युपस्थापयतीति तद्विध्यन्त एव पशौ प्राप्नोति ॥

इतोऽप्येवमित्याह—

**तस्य च पात्रदर्शनात् ॥ १४ ॥**

सान्नाय्य कुम्भ्यां श्रप्यते, पशुरपि । "पशूखां स्रवन्तीमभिमन्त्रयते" इति दर्शनात् । [1]अतोऽपि सान्नाय्यविध्यन्तः । प्रोक्षणादिकञ्च वाचनिकमपूर्वमिति[2] दिक् ॥

इति द्वितीयं पशोस्सान्नाय्यविकृतित्वाधिकरणम् ॥ २ ॥

३

पशुः किं दध्नो विकार ? उत पयस ? इति विशये पूर्वपक्षयति—

**दध्नस्स्यान्मूर्तिसामान्यात् ॥ १५ ॥**

घनत्वसामान्यात् दध्नो विकार इत्यर्थ. ॥

अथ सिद्धान्तयति—

**पयो वा कालसामान्यात् ॥ १६ ॥**

पशु पय एव विकुर्यात्, कालसामान्याद् [3]द्वयोरपि सद्यस्कालत्वसामान्यात् । न दधि, तस्य द्व्यहसाध्यत्वेनासादृश्यात् ॥

इतोऽप्येवमित्याह—

**पश्वानन्तर्यात् ॥ १७ ॥**

पयोवत्पशोः पश्वानन्तर्याद् अव्यवायात् । तेन पशुप्रभवत्वात् पयसो विकारः पशुः, न तु दध्न, तस्य पयसा व्यवधानेन पश्वानन्तर्याभावात् ॥

---

१. इतोऽपि. क.　　२. अपूर्वमिति. नास्ति. अ, क.

३. द्वयोरपि. नास्ति. अ, क.

इतोऽप्येवमित्याह—

**द्रवत्वञ्चाविशिष्टम् ॥ १८ ॥**

द्रुगतौ कर्तरि यत्। द्रवत्वं गतिमत्त्वं पशोः पयसाऽविशिष्ट तस्मादपि पयोविकारः पशुः ॥

इति तृतीय पशो. पयोविकृतित्वाधिकरणम् ॥ ३

४

चातुर्मास्येषु श्रूयते—"तप्ते पयसि दध्यानयति। सा वैश्वदे तत्र किमामिक्षा दधिपयसोर्विकारः ? उत दध्नः ? किं वा पय पूर्वपक्षयति—

**आमिक्षोभयभाव्यत्वादुभयविकार स्यात् ॥**

आमिक्षा पयोदध्युभयसाध्यत्वादुभयरसत्वाच्चोभयारि स्यात् ॥

अथ द्वितीयपक्षमुपक्षिपति—

**एकं वा चोदनैकत्वात् ॥ २० ॥**

दधिपयसोरन्यतरधर्मजातमेवामिक्षायां प्रवर्तेत। आमिक्षाचो नान्यतरविध्यन्तेनैव नैराकाङ्क्ष्यात् ॥

ननु न गृह्यते विशेष इत्युक्तमित्यत आह—

**दधिसङ्घातस न्यात् ॥ २१ ॥**

सहतत्वसामान्याधिक्याद्दध्येव विकुर्यादामिक्षा ॥

अथ सिद्धान्तयति—

**पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २**

पय एवामिक्षा विकुर्यात् तत्प्रधानत्वात्—पय. प्रधानकत्वात्। न निर्देशात्तत्र दध्न एव प्रधानत्वमिति वाच्यम्। "मैत्रावरुणाय दण्ड प्रयच्छ प्रदानक्रियाकर्मणा दण्डेन व्याप्यमानत्वान्मैत्रावरुणस्येवानयनक्रियाक व्याप्यमानस्य पयस एव प्राधान्यात् [ पय एव ] सा वैश्वदेवीत्य निर्दिश्यते। तत्सामानाधिकरण्याच्चामिक्षा पय एव। पयसीति सप्तमी च

त्वानुवादिनी। किञ्च लोक इव दध्नस्तदर्थत्वात्-पयोघनीभावार्थत्वान्न दध्येवामिक्षा, विनापि दध्ना लिकुचफलरसादिना घनीभूतेऽपि पयस्यामिक्षापदप्रयोगात्। दधिनियमस्तु नियमादृष्टार्थः। तस्मात्पय एवामिक्षेति तत्र पयोविध्यन्तः॥

इतोऽप्येवमित्याह—

**धर्मानुग्रहाच्च॥ २३॥**

"जुषन्तां युज्यं पयः" इति मन्त्रवर्णानुग्रहाच्च पय एवामिक्षा। यद्यपि चतुर्थे वाजिनमामिक्षा च दध्यानयनप्रयोजक, द्वयोरपि दध्यानयनसाध्यत्वाविशेषादिति प्रापय्य पय एवामिक्षा तदर्थमेव दध्यानयनमित्युक्तम्, तथाप्यत्रत्यन्यायमवलम्ब्य वस्तुगतिमनुरुध्य पय एवामिक्षेत्युक्तं तत्र॥

इति चतुर्थमामिक्षायाः पयोविकृतित्वाधिकरणम्॥ ४॥

५

द्वादशाहो द्वेधा-सत्रमहीनश्च। द्विरात्रप्रभृत्येकादशरात्रपर्यन्ता अहर्गणा अहीनाः। त्रयोदशरात्रप्रभृति शतरात्रादीनि सत्राणि। तत्रोभयविधेष्वप्यहर्गणेषु उभयविधस्यापि द्वादशाहस्य धर्माः किमनियमेन स्युः? उत नियमेन? इति विशये, पूर्वपक्षयति—

**सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात्॥ २४॥**

सत्राहीनात्मना द्विप्रकारस्यापि द्वादशाहस्यैककर्म्यात्-एककर्मत्वात्, उभयथा-उभयप्रकारेण सत्राहीनभेदेन स्थितेष्वहर्गणेषु प्रवृत्तिस्स्यात्, उभयप्रकारस्यापि द्वादशाहस्य धर्मा उभयप्रकारेष्वप्यहर्गणेषु अव्यवस्थया प्राप्यन्त इति यावत्॥

अथ सिद्धान्तयति—

**अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिस्स्यात् प्रकृत्या तुल्यशब्दत्वात्॥ २५॥**

द्विरात्रादिष्वेकादशरात्रपर्यन्तेष्वहीनेषु अहीनभूतद्वादशाहधर्मप्रवृत्तिस्स्यात्। यजतिश्रुतेः-द्विरात्रादीनां यजतिचोदनावत्त्वेन "द्वादशाहेन प्रजाकामं याजयेत्" इति यजतिचोदनावत्या आहीनद्वादशाहरूपया प्रकृत्यैव तुल्यशब्दत्वात्

पारिशेष्यादासनोपेयिचोदनावत्व[1]सामान्यात् त्रयोदशरात्रप्रभृतिषु सत्रद्वादशाहविध्यन्त[2]प्रवृत्तिरिति नाव्यवस्था। न च चोदनासामान्येऽपि द्वादशाहवदित्येव वाक्यशेषकल्पनात्तदीयविध्यन्तद्वयप्राप्तिरव्यवस्थया स्यादिति वाच्यम्, चोदनालिङ्गबलात् कल्प्यस्य प्रकृतिवच्छब्दस्य विशिष्यैव कल्पनौचित्यादिति दिक् ॥

ननु कथं द्विरात्रादीनामहीनत्वं येन तेष्वहीनद्वादशाहप्रवृत्तिस्स्यादित्यत आह—

**द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतीति चोदनात्* ॥ २६ ॥**

स्पष्टम् ॥

इतोऽप्येवमित्याह—

**लिङ्गाच्च ॥ २७ ॥**

("अग्निष्टोमः) प्रजापतिस्स उत्तरानेकाहानसृजत तमेतं द्विरात्रादयोऽहर्गणा ऊचुस्त्वमस्मान्माहासीरिति। तदेतेषामहीनत्वम्" इति लिङ्गाच्च द्विरात्रप्रभृतयोऽहीनाः। पारिशेष्यात्तु "त्रयोदशरात्रमृद्धिकामा उपेयुश्चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्" इत्यासनोपेयिचोदनावत्वात् त्रयोदशरात्रादयस्सत्रभूता इति ज्ञातुं शक्यत्वात् पृथक् ते न लक्षिता इति ध्येयम् ॥

इति पञ्चममहीनसत्रात्मकयागेषु द्वादशाहविध्यन्तातिदेशाधिकरणम् ॥ ५ ॥

६

"त्रिवृदग्निष्टदग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः" इति पञ्चदशरात्रः श्रुतः। कुण्डपायिनामयनमपि "मासमग्निहोत्रं जुह्वति" इत्यारभ्य "दशरात्रो महाव्रतमुदयनीयोऽतिरात्रः" इत्यन्तेन वाक्यसन्दर्भेण विहितम्। तत्र संशयः—किमनयोरहीनद्वादशाहधर्मप्रवृत्तिः ? उत सत्रद्वादशाहधर्मप्रवृत्तिः ? इति। तदर्थञ्च किमेते अहीनात्मके ? उत सत्रात्मके ? इति। तत्र पूर्वपक्षयति—

**अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वम्, कुण्डपायिन यनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २८ ॥**

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चान्यतरतोऽतिरात्रत्वाहीनत्वं तद्भूतेष्वन्यतरतोऽत्रिरात्रेषु द्विरात्रादिष्वहीनत्वदर्शनात् ॥

---

१. चोदनावाक्य. क. २ धर्मप्रवृत्ति.. अ, क.

* 'त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपेयिचोदनात्' इति सूत्रं तद्वृत्तिश्च मातृकासु नोपलभ्यते।

ननु सत्रलिङ्गमुपेयिचोदनावत्त्वादिकमप्यस्तीति कथमेकान्ततोऽहीनत्वनिश्चय इत्यत आह—

अहीनवचनाच्च ॥ २९ ॥

"यदन्यतरतोऽतिरात्रस्तेनाहीनः" इत्यन्यतरतोऽतिरात्रस्याहीनत्ववचनात् तयोरहीनत्वनित्यहीनद्वादशाहविध्यन्त[1] ॥

अथ सिद्धान्तयति—

सत्रे वोपेयिचोदनात् ॥ ३० ॥

उभे अप्येते सत्रे भवतः । "पञ्चदशरात्रमुपेयुः" "कुण्डपायिनामयनमुपेयुः" इति तयोरुपेयिचोदनावत्त्वात् । न चान्यतरतोऽतिरात्र (त्वमहीनलिङ्गमप्यस्तीति वाच्यम् । चोदनावाक्यगतत्वेन सत्रलिङ्गस्य बलवत्वात् । यदुक्तं वचनादहीन इति, तन्न ; न ह्येवं वचनमस्ति—'योऽन्यतरतोऽतिरात्रस्सोऽहीन इति । यत्त्विदं वचनं "यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति ) तत् त्वयं सत्रमप्ययं पञ्चदशरात्रोऽन्यतरतोऽतिरात्रत्वादहीनवत् प्रशस्त इति पञ्चदशरात्रस्तुतिपरम् । किञ्चास्मादेव वाक्यात् पञ्चदशरात्रस्य सत्रत्वं [2]तस्य स्वत एव । अहीनत्वे त्वहीनत्वस्तुत्यसामञ्जस्यं स्यात् ।

इतोऽप्येवमित्याह—

सत्रलिङ्गञ्च दर्शयति ॥ ३१ ॥

कुण्डपायिनामयनं सत्रम्, तत्र 'गृहपतिर्गृहपतिस्सुब्रह्मण्यस्सुब्रह्मण्यः" इति सत्रलिङ्गं गृहपतिं दर्शयति । तस्मात्तयोस्सत्रद्वादशाहविध्यन्तप्रवृत्तिरिति सिद्धम् ॥

इति षष्ठं पञ्चदशरात्रकुण्डपायिनामयनयोस्सत्रविध्यन्तातिदेशाधिकरणम् ॥ ६ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ अष्टमाध्यायस्य द्वितीय पादः ॥



---

1. येन. अ, क. () अपुस्तके ग्रन्थपातः.
2. तस्य नास्ति. अ, क.

# अथ तृतीयः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वत्र हविरादिपदार्थसामान्यातिदेशश्चिन्तितः । [1]तृतीये पादे पदार्थाश्रित-क्रमादिसामान्यादतिदेशश्चिन्त्यते । "आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरु" इति हविर्गणश्श्रूयते । प्रकृतौ च प्रथम आग्नेयो द्वितीय उपांशुयाजस्तृतीयोऽग्नीषोमीयः । तत्र किं प्रथमस्याग्नावैष्णवस्य प्राकृतप्राथमिकाग्नेयविध्यन्तः, चरमस्य बार्हस्पत्यस्य प्राकृतचरमाग्नीषोमीयविध्यन्तः? आहोस्विद् विपरीतम्? इति विशये, पूर्वपक्षयति—

**हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥**

हविर्गणे परं चरमं बार्हस्पत्यम् उत्तरस्य—चरमस्याग्नीषोमीयस्य विध्यन्तं प्राप्नोति देशसामान्यात्—स्थानसामान्यात् । एवं पूर्वमाग्नावैष्णवं पूर्वस्याग्नेयस्य विध्यन्तं प्राप्नोति ॥

अथ सिद्धान्तयति—

**देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥**

देवतासामान्यादेव विध्यन्तो नियम्येत, शब्दवत्त्वात्—देवतायाश्शब्दादेव [2]प्रथमप्रतीत्वेन बलीयस्त्वात्, इतरस्य स्थानसामान्यस्याश्रुतत्वेन [3]प्रधानागम्यतया दुर्बलत्वात् । अतः प्रथमस्याग्नीषोमीयविध्यन्तः, चरमस्याग्नेयविध्यन्तः ॥

इति प्रथममाग्नावैष्णवादौ देवतासामान्यादतिदेशाधिकरणम् ॥ १ ॥

२

जनकसप्तरात्रे श्रूयते—"चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि भवन्ति" इति । सन्ति च द्वादशाहे प्रकृतौ त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशस्तोमाना

---

१. तृतीयपादे अ क.
२. प्रथमतया. ग.
३. पचयागम्यतया. ग.

पृष्ठ्यानि षडहानि। तत्र संशय:-"चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि" इत्यत्र किं त्रिवृत प्रथमस्य द्वादशाहिकस्य पार्ष्ठिकस्यान्हो धर्माश्चतुर्ष्वपि प्रवर्तेरन ? उत द्वादशाहिकानां [1]त्रिवृदादीनां धर्माः क्रमेण चतुर्ष्वपि प्रवर्तेरन् ? इति विशये, पूर्वपक्षयति—

**गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥**

"चत्वारि त्रिवृन्ति" इति गणचोदनायां यस्य पार्ष्ठिकस्य [2]प्रथमस्याह्नो त्रिवृत्वरूप लिङ्गमस्ति, तदावृत्तिरेव चतुर्ष्वहस्सु प्रतीयेत, यथा "अग्नये पावकायाग्नये शुचये" इति गणचोदनाया देवतैक्यसामान्यादग्नये शुचय इत्यत्राप्याग्नेयप्रवृत्ति', न तु स्थानसामान्यादग्नीषोमीयप्रवृत्तिः तद्वत् ॥

अथ सिद्धान्तयति—

**नानाहानि वा [3]सङ्घातत्वप्रकृतिलिङ्गेन चोदनात् ॥ ४ ॥**

सङ्घातत्वरूपप्रकृतिलिङ्गेन चोदनान्नानाहानि पार्ष्ठिकानि चत्वार्यप्यहानि क्रमेण [4]चतुर्ष्वपि प्रवर्त्तेरन्। ननु त्रिवृत्त्वसामान्यं शाब्दत्वाद् बलीय इत्युक्तमिति चेन्न ; चत्वारीति सङ्घातस्यापि शाब्दत्वात्। न च तथापि विनिगमनाविरह इति वाच्यम्। [5]सङ्घातत्वं प्रधानगुणः, त्रिवृत्वन्तु स्तोत्रीयापरिमाणत्वादङ्गगुण इति दुर्बलम्। एवञ्च द्वितीयादिष्वहस्सु [6]वाचनिकेन त्रिवृत्त्वेन पञ्चदशादिमात्रबाधेऽपि तद्व्यतिरिक्तधर्मप्रवृत्तावविरोध.। किञ्च त्रिवृत एव चतुर्ष्वपि प्रवृत्तौ प्रकृतौ तस्याग्निष्टोमत्वाच्चतुर्णामप्यग्निष्टोमतापत्त्या अग्निष्टोममुखानीति वादोऽनुपपन्न.। चतुर्णां प्रवृत्तौ त्वाद्यस्यैव त्रिवृतोऽग्निष्टोमत्वाद् अग्निष्टोममुखानीति घटते। तस्मादपि चतुर्णां प्रवृत्तिरिति ॥

**तथा चान्यार्थदर्शनम् ॥ ५ ॥**

चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि" इत्यग्निष्टोम[7]मुखत्वोक्त्या इतरेषामग्निष्टोमत्व गम्यते ॥

इति द्वितीयं जनकसप्तरात्रे क्रमेण द्वादशाहिकविध्यन्तातिदेशाधिकरणम्॥२॥

---

१. त्रिवृदादीनां. नास्ति. अ.    २ प्रथमाह्न. क.
३. सङ्घातत्वाप्रवृत्तिलिङ्गेन.    ४. चतुर्ष्वपि. नास्ति. क.
५. सङ्घातः. ज, क.    ६ वाचिकेन. क.
७. मुखत्वेनेतरेषा. क.

३

षट्त्रिंशद्रात्रे श्रूयते—"षडहा भवन्ति, चत्वारो भवन्ति" इति। किमत्र चतुर्विंशतिसङ्ख्याकान्यहानि विधीयन्ते, तेषु च द्वादशाहिकस्य दशरात्रस्य दाशमिकन्यायेन प्रवृत्तिः ? किं वा पाष्ठिकस्याभिप्लविकस्य वा षडहस्य चतुरभ्यासः ? इति संशयः। तत्र पूर्वपक्षयति—

**कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥**

चत्वारष्षडहा इति षडहस्यैकस्य चतुरभ्यासो न विधीयते, तथा सति चतुष्षडह इति प्रयोगापत्तेः; किन्तु 'चतुर्विंशत्यहान्येवात्र विधीयन्ते। तथा हि—षडहा इति षट् सङ्ख्याकानि सौत्यानि कर्माणि प्रतीयन्ते, अहश्शब्दस्याहःपरमितसौत्यकर्मवचनत्वात्। तेषु च चत्वार इति प्रत्येकं चतुस्सङ्ख्यावगम्यते, पृथक्त्वनिवेशितत्वात् सङ्ख्यायाः। एवञ्च चतुर्विंशत्यहानि सम्पद्यन्ते[2]। तेषु च गणत्वसामान्याद् द्वादशाहिकस्य दशरात्रस्य चतुर्विंशतिसङ्ख्यापूरणार्थमभ्यासेन वृत्तिरिति बादरिमतम् ॥

अथ सिद्धान्तयति—

**तदावृत्तिन्तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यात्वात् ॥ ७ ॥**

चतुर्विंशतिसङ्ख्याको[3] गुणो न साक्षात् श्रूयते, किन्तु चतुर्भिः षडहैः श्रुतैरनुमातव्यः। ततश्च प्रत्यक्षश्रुतेन षडहशब्देन प्रसिद्धषडहप्रत्यभिज्ञानात् तस्यैव चतुरावृत्तिर्विधीयते। तस्मात्प्रथमप्रतीतषडहशब्दानुरोधेन प्रसिद्धषडहावृत्तिविधौ निश्चिते कथञ्चिदभ्यासाभिप्रायेण[4] सङ्ख्या समर्थनीयेति ॥

इति तृतीयं षट्त्रिंशद्रात्रे षडहविध्यन्तातिदेशाधिकरणम् ॥ ३ ॥

४

"शतोक्थ्य भवति, शतातिरात्र भवति" इति श्रूयते। तत्र किमुक्थ्यादिशब्देन प्रसिद्ध ज्योतिष्टोममनूद्य शतकृत्वोक्थ्याभ्यासो विधीयते ? अभ्यासस्य [5]मासादिव-

१ चतुर्विंशतिरहानि. अ, ग. २. विधीयन्ते. ग.

३ सङ्ख्यारूप . क ४. अभ्यासाश्रयणेन. अ.

५ मासवत्. क.

५

"शतोक्थ्यं भवति" इत्यत्र द्वादशाहिकदशरात्रप्रवृत्तिरित्युक्तम्। तत्र द्वादशाहात् प्रायणीयोदयनीयाख्ये आद्यन्ते अहनी वर्जयित्वा [1]मध्यवर्तिनो दशरात्रस्य विकृतिषु प्रवृत्तिरिति दशमे वक्ष्यते। तत्र दशरात्रे आद्यन्ते अहनी अग्निष्टोमसंस्थे, इतराण्युक्थ्यसंस्थानि। ततश्च शतोक्थ्ये द्वादशाहिके दशरात्रे दशकृत्व आवर्त्यमाने प्रतिदशकं द्वौ द्वावग्निष्टोमौ, तयोरन्तराले चाष्टावष्टौ उक्थ्याः। तेषाञ्चोक्थ्यस्तोत्राणां तत्र ज्योतिष्टोमिकेभ्य उक्थ्यस्तोत्रेभ्योऽधिकाः केचन धर्मा विहिताः। तत्रोक्थ्यास्तावद् द्वादशाहवदेवानुष्ठीयन्ते। ये च तत्राग्निष्टोमास्तेषु शतोक्थ्यमिति वचनाद् उक्थ्यस्तोत्राणि कर्तव्यानि। तत्र किं द्वादशाहिकान्युक्थ्यस्तोत्राणि कर्तव्यानि ? उत ज्यौतिष्टोमिकानि ? इति संशयः। तत्र पूर्वपक्षयति—

**गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥**

गणाद् द्वादशाहादुपचयः धर्मसङ्ग्रहः कर्तव्यः[2], शतोक्थ्यस्य तत्प्रकृतित्वात् ॥

अथ सिद्धान्तयति—

**एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥**

एकाहाद्—ज्योतिष्टोमादेवोपचयः, न द्वादशाहात्। तेषां—द्वादशाहिकानामन्हामपि शतोक्थ्यैरहोभिरुक्थ्यस्तोत्रोत्पत्तिरहितत्वेन[3] समत्वात्। उक्थ्यस्तोत्रतद्धर्माणां ज्योतिष्टोम एवोत्पत्तेः, द्वादशाहगतोक्थ्येष्वपि तत एव धर्मप्राप्तेः। अतो न द्वादशाहादुपचयः, न हि भिक्षुको भिक्षुकं याचितुमर्हतीति न्यायात् ॥

इति पञ्चमं शतोक्थ्यादौ ज्यौतिष्टोमिकोक्थ्यधर्मातिदेशाधिकरणम् ॥ ५ ॥

६

बृहस्पतिसवे श्रूयते—"गायत्रमेतदहर्भवति" इति। तत्र संशयः—किं प्राकृतीनां त्रिष्टुब्जगत्यादीनामक्षरलोपं कृत्वा गायत्रं तदहः कर्तव्यम् ? उत दाशतयीभ्य उत्पन्नगायत्रीणामागमं कृत्वा ? इति। तत्र पूर्वपक्षयति—

१. मध्यवृत्ते. क. २. कार्य. अ, क.

३. उत्पत्तेरभिहितत्वेन. ग.

गायत्रीशब्द । कुत. ? असर्वविषयत्वात् सङ्ख्यामात्रवाचित्वे घटादिगतसङ्ख्याया-मपि प्रयुज्येत ॥

ननु गायत्रीशब्दस्य ऋक्परत्वे कथं सङ्ख्याया उपादेयता ? तत्राह—

गोत्वच्च समन्वयः ॥ १६ ॥

आकृत्यधिकरणन्यायेन सङ्ख्याविशिष्टा ऋच उपादेया ॥

तर्हि सङ्ख्यैव शब्दार्थो भवतु, तत्राह—

सङ्ख्याया शब्दवत्वात् ॥ १७ ॥

सङ्ख्याविशेषस्य चतुर्विंशतिशब्दवाच्यत्वान्न गायत्रीशब्दवाच्यत्वम् । एक-स्यानेकशब्दताया अन्याय्यत्वात् ॥

ऋचान्तु तद्युज्यत इत्याह—

इतरस्य त्वश्रुतित्वात् ॥ १८ ॥

इतरस्य-ऋग्विशेषस्याश्रुतित्वात्-वाचकशब्दान्तररहितत्वात् । अत ऋग्विशेष एवाय शब्दो रूढः ॥

यदुक्तमग्निष्टोमवदिति, तत्राह—

द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥ १९ ॥

अग्निष्टोमस्तोत्रेण या सस्थासमाप्तिः[1], तद्वाचितयाऽग्निष्टोमशब्दस्य द्रव्यान्तरे उक्थ्यादिसस्थे[1] क्रतावनिवेशेन शताग्निष्टोम भवतीति विहितं कर्म उक्थ्यादिलोपविशिष्टं स्यात् । न ह्युक्थ्यसंस्थायामग्निष्टोमसंस्थता भवति । प्रकृते तु ऋग्विशेषत्ववचनो गायत्रीशब्दः । न चाक्षरलोपेन ऋग्विशेषस्सम्पद्यत इति विषमो दृष्टान्त· ॥

इतोऽप्येवमित्याह—

अशास्त्रलक्षणत्वाच्च ॥ २० ॥

शताग्निष्टोमे उक्थ्यसस्थता न शास्त्रप्रमाणकाग्निष्टोमसस्थता बाधते । इह तु गायत्र्यश्शास्त्रलक्षणाः, जगत्यादयस्त्वानुमानिक्यः । अतस्ता न शास्त्रप्रमाणकगायत्री-बाधक्षमा इति नाक्षरलोप कर्तव्य ॥

अथ यदुक्त, ये द्वे गायत्र्यौ सैका जगतीति सङ्ख्यायामेव गायत्रीशब्दो दृष्ट इति, तत्राह—

---

१. सस्थाकक्रतौ. क.

